श्रीगणेशाय नमः ।

# भाट्टदीपिका ।

पूर्वषट्कम् ।

## प्रथमोऽध्यायः ।



प्रेरणाविध्यपरपर्यायः, निषेधवाक्ये च निवर्त्तनानिवारणाभिधेयप्रतिषे-धापरपर्यायः। इयं च द्विविधाऽपि शाब्दी भावना। तस्याश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती। शाब्दभावनाज्ञानं करणम्। करण-त्वञ्च भावनाभाव्यनिष्पादकत्वम्। इतिकर्त्तव्यता च यथायोगं स्तुतिनिन्दे। स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकयत्न-कारित्वं रुच्यरुच्युत्पादनद्वारा लोकसिद्धम्। स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्व-रूपे। ते च यथायोगं विधिनिषेधापेक्षितत्वात्तत्समभिव्याहृतार्थ-वादैर्लक्षणया प्रतिपाद्येते।

तत्र वायुर्वै क्षेपिष्ठेत्यादौ स्वशक्यक्षेपिष्ठत्वादिगुणैरेव लक्षणा। यजमानः प्रस्तर इत्यादौ तु गौणीगम्यस्वकार्यकरत्वादिगुणैरिति* वक्ष्यते। अतः सिद्धं भावनाऽन्वितस्तुतिनिन्दाविषयकप्रमाजनक-त्वेनार्थवादानां धर्माधर्मयोः प्रामाण्यमिति। प्रयोजनं पूर्वपक्षे अर्थवादानुपस्थितप्राशस्त्यज्ञानादपि प्रवृत्तौ फलसिद्धिः। सिद्धान्ते तु मन्त्रवदर्थवादानामेव प्ररोचकत्वनियमात्तदुपस्थितप्राशस्त्यज्ञा-नादेव प्रवृत्तौ सेति द्रष्टव्यम्॥ १॥

विधिर्वा॥ औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जै-वास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै इत्याद्यर्थवादेषु न स्तुतिलक्षणा प्रत्येव पशुरूपफलसम्बन्धविधायकत्वेन प्रामाण्योपपत्तेः। पशूनिति द्वितीयया ऊर्जोऽवरुध्या इति चतुर्थ्या वा पशूनां साध्यत्वेऽवगते

---

* योगादिति,– इति ख० ग० पुस्तकयोः पाठः।

न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते । दृष्टे सम्भवत्य-दृष्टफलकल्पनाया अन्याय्यत्वात् * । नापि यथाश्रुतार्थज्ञानार्थम् । तथात्वे प्रत्यतावबोधकवाक्येनाध्ययनस्यावश्यकत्वादृष्टद्योतपदपदार्थ-प्रवृत्तिकस्य, स्थाणुरयं भारहारः किलायमधीत्य वेदं न विजानाति योऽर्थमित्यादि वचनाच्च ज्ञानस्याथावश्यकत्वेन यथाश्रुतार्थज्ञान-स्यानुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेना-ध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयो-जनवदर्थज्ञानाद्देशेन स्वाध्यायाध्ययनं विधीयते प्रयोजनवदर्थज्ञा-नादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमात्रम् । तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च स्वाध्यायार्थस्य प्रयोजनवत्त्व-सिद्धौ तात्पर्यग्राहकवशेन लक्षणा अर्थवादेषु । लक्षणीयस्तस्यार्थः सन्निहितविधिनिषेधापेक्षितत्वात् स्तुतिनिन्दारूपः ।

तथाहि । लिङाद्यर्थो लोके पुरुषाशयः । वेदे तदभावाल्लिङा-दिनिष्ठ एव कश्चिद्धर्मः । वाच्यतावच्छेदकश्च भयमेधोरूपं व्यापारत्वं न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि । तस्यानन्यलभ्यत्वात् । तत्र नञोऽभावे आख्यातार्थप्रवृत्तिप्रयोजकत्व तदन्वये तु तदर्थप्रवृत्त्य-भावप्रयोजकत्वं स्वसर्ग इति विशेष । प्रयोजकत्व चात्र प्रवृत्ति-तदभावकारणीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । अ-भावकारणता च योगक्षेमसाधारणी । तत्त्वं च प्रवृत्तिक्रियाकर्मणीविघ-टकत्वमित्यन्यत्र विस्तरः । स च लिङाद्यर्थोविधिवाक्ये प्रवर्त्तना-

---

त क॰ पुस्तके पाठ ।

तेन तेन होतव्यमिति व्याप्तिवचनं कल्पयति । ततश्च शूर्पादन्यस्यापि दर्विपिठरादेर्हीमसाधनत्वप्रतीतेर्विधौ शूर्पपदमुपलक्षणमवगत्यानुवादो वा। यद्वा तच्छब्देन शूर्पस्यैव परामर्शात्तत्तमेवाग्रकरणत्व हेतु। तेन विप्रियेव व्याप्तिकल्पनादग्नकरणासमर्थशूर्पव्यावृत्तावपि न विधित्वं शूर्पपदं अन्यथा नेयमिति पूर्वः पक्षः। सिद्धान्तस्तु क्रियत इति लडन्तनिर्देशाद्वर्त्तमानाग्नकरणत्वस्य हेतुत्वं वाच्यम्। न च होमकाले अन्नकरणत्वं सम्भवति। अतो घटा भूतभविष्यत्कालान्तरलक्षणा विधौ तवाप्यावश्यकी*। यद्यपि येन प्रागस्त्यलक्षणोपयोगिगुणघटकतया समाप्यावश्यकी, तथापि अनुवादस्थलात् प्राग्सत्वोपयकालाच्च† सा‡ न दोषः। वर्त्तमानत्वनिर्देशं विना तदप्रतीतेः। क्रियापेक्षितप्राशस्त्यपरत्वं सम्भवति साममपेक्षितहेतुपरत्वाङ्गीकारोऽयुक्तः। अतः सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रमाण्यम् ॥ ३ ॥

तदर्थशास्त्रात् ॥ मन्त्राणां धर्माधर्मयोः प्रमाण्यमस्ति न वेति§ चिन्तायां, स तावद्विधित्वेन प्रमाण्यम्। तत्र द्वितीये निराकरिष्यमाणत्वात्। नापि स्तावकत्वेनार्थवादवत्। तेषां हि सन्निहितेन विधिना पदैकवाक्यत्वादयुक्तं स्वसमर्पितप्राशस्त्यान्वितभावनाविषयकशाब्दप्रमाजनकत्वम्। मन्त्राणां तु दूरस्थत्वेन पदैकवाक्यता-

* इत्यमेव पाठ सर्वत्र। मम तु, तवावश्यकी,– इति पाठः प्रतिभाति।

† सोपयकालाच,– इति क॰ पुस्तके पाठ।

‡ सा,– इति नास्ति ख॰ ग॰ पुस्तकयोः।

§ प्रामाण्य न वेति,– ख॰ ग॰ पुस्तकयोः पाठ।

साधनापेक्षत्वादौदुम्बरत्वं साधनं सन्निधानात् । ऊर्जेति तृतीया-श्रवणाच्च । भवतीत्याख्यातेन च लक्षणया शक्त्यैव वा भावना-ऽभिधानाद्भूधातोश्च यूपोत्पादकच्छेदनाद्यनुवादकत्वाद्प्राप्तार्थत्वेन च लेट्त्वनिश्चयात्* उभयविशिष्टभावनाविधायकत्वोपपत्तिरित्याद्ये प्राप्ते । यूपकर्तृकभवनाऽऽक्षिप्तायां भावनायां यूपस्यैव भाव्यत्वौचित्यात् सन्निधानाच्च यूपोद्देशेनैवौदुम्बरत्वविधिर्न तु फलोद्देशेन कामशब्दाद्यभावेन फलत्वस्य तथाऽनुपस्थितेः । किञ्च भवन्मते गुणफलसम्बन्धोऽयम् । न चासौ सम्भवति, आश्रयाभावात् । सोमापौष्णं चैतमालभेत पशुकाम इति प्रकृतस्य यागस्याश्रयत्वे हि यूपग्रहणानुपपत्तिः । यूपस्य तु प्रमकृतत्वादेवाश्रयत्वानुपपत्तिः । अतिदेशेन तस्योपस्थितिस्तु जुह्वादिपात्रान्तरस्याप्यस्तीति तेषामप्याश्रयत्वे तथैव यूपग्रहणानर्थक्यम् । वाक्येनाश्रयदाने च वाक्यभेदः । तस्मादूर्ग्वा उदुम्बर इत्यादिरर्थवाद एवौदुम्बरत्वस्येति सिद्धम् । प्रयोजनं, यागफलात् फलान्तरकामनायामौदुम्बरो-यूप इतरथा खादिरः पूर्वपक्षे, सिद्धान्ते तु औदुम्बर एवेति ॥ २ ॥

हेतुर्वा । चातुर्मास्येषु शूर्पेण जुहोतीति शूर्पकरणक होमं विधाय श्रुतेन तेन ह्यन्नं क्रियते इत्यर्थवादेन स स्तुतिलक्षणा, अपि तु होमसाधनत्वे साध्ये अन्नकरणहेतुत्वं विधीयते । स चात्र पूर्ववत् भाव्यत्व इव किञ्चित् कल्पनीयमस्ति । हि शब्दश्रुत्यैव हेतुत्वाभिधानात् । हेतुश्च व्याप्तिसत्त्वेणानुपपत्त्योः दृष्टचक्रकरण

* निर्देशात्,– इति स० २० पुस्तकयोः पाठः ।

पाठवैयर्थ्यम्। तद्वलेन मन्त्रैरेव स्मर्त्तव्यमिति नियमकल्पनात्। तस्य चादृष्टफलकत्वेऽपि न दोषः। न चैव सामर्थ्यादेव तत्र तत्र मन्त्राणां विनियोगसिद्धौ पुनस्तेषां क्वचिद्विनियोगकरणं व्यर्थमिति वाच्यम्। गुणपरिसङ्ख्याद्यर्थत्वेन सार्थक्यात्। तथाहि। अर्थप्राप्ते अभ्यादाने विकल्पेन चतुर्णां मन्त्राणां * लिङ्गेन प्राप्यमानानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन, तां चतुर्भिरादत्ते इति वचनेन मन्त्रसङ्ख्योभय-विशिष्टादानभावनायां विहितायां एतद्वचनाभावेऽपि मन्त्राणा-मादानस्य च प्राप्तिसत्त्वे एतद्वचनप्रवृत्तिफलजिज्ञासायां समुच्चय-फलकचतुःसङ्ख्यारूपगुणप्राप्तिरिति निर्णीयते। तथा लिङ्गादेवा-श्वियनाङ्गभूताश्वरशनाऽऽदाने प्राप्यमानस्य मन्त्रस्य तत पूर्वप्रवृ-त्तेन, इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यनेन वचनेन† मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपांशेऽपिपरिसङ्ख्या फलम्।

न च फलतः परिसङ्ख्यायां स्वार्थहानि परार्थकल्पना प्राप्तबाध-इति चेद्दोषत्रयम्। अश्वाभिधानीसम्बन्धरूपस्वार्थस्यैव विधेयत्वात्। अन्यनिवृत्तिरूपपरार्थस्यार्थसिद्धत्वेनाकल्पनीयत्वात्। प्रापकप्रमाण-स्याप्रवृत्ततया प्राप्तबाधाभावाच्च। अतएव यत्र प्रापकप्रमाणप्रवृत्त्यु-त्तरमेव परिसङ्ख्याशास्त्रस्य प्रवृत्तिः, यथा पञ्च पञ्चनखा भक्ष्या-इत्यादौ रागप्राप्तपञ्चनखभक्षणे पञ्चातिरिक्तपरिसङ्ख्याकरणे, तत्रैव

* मन्त्राणां नियमे,– इति क० पुस्तके पाठः।

† वचनेन – इति नास्ति ख० ग० पुस्तकयोः।

‡ गर्दभरशनातोनिवृत्तिरूप – इति क० पुस्तके पाठः।

नुपपत्तेर्न तद्विधया प्रामाण्यसम्भवः। नापि प्राशस्त्यं स्वातन्त्र्येण वाक्यार्थः। पदार्थविधयोपस्थितत्वात्। नापि अर्थस्मारकत्वेन प्रामाण्यं अनधिगतार्थबोधकत्वाभावेन तदसम्भवात्[1]। साममन्त्राणामर्थाभावेन याथार्थ्यस्याप्यनुपपत्तेश्च[2]। न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमाचाङ्गीकारः। ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियतमन्त्राम्नानवैयर्थ्यात्। प्रयोगासमवेतार्थस्मारकेषु स्मृतिवैयर्थ्याच्च। अतोऽधिकाराख्यप्रकरणादिनाऽवगततत्तत्फलङ्गभावानां मन्त्राणामुच्चारणमात्रमदृष्टार्थं विधीयते। स्वाध्यायविधिस्तोच्चारणोपयोगिप्रयोगप्राड्भावफलकतयैवाध्ययनं विधत्ते* इति न कश्चिद्दोषः इति प्राप्तेऽभिधीयते†।

दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः प्रयोगसमवेतार्थस्मारकत्वेन सम्भवतां मन्त्राणां प्रयोजनम्। असम्भवतान्तु कामं भवत्वदृष्टं प्रयोजनम्। शक्यते तु तथापि मन्त्रा अर्थप्रकाशनार्थाः, प्रकाशनं परमदृष्टार्थमिति वक्तुम्। साम्नान्तु अक्षराभिव्यक्तिरेव दृष्टं प्रयोजनमर्थाभावेऽप्यव्याहतम्। अनूक्साम्नान्तु अदृष्टार्थत्वमेवेत्यन्यत्र विस्तरः। न त्वेतावता सर्वेषैवादृष्टार्थत्वम्। न च मन्त्राणां नियमेन

---

* विधीयते,— इति ख॰ ग॰ पुस्तकयोः पाठः।

† अभिधीयते,— इति नास्ति ख॰ ग॰ पुस्तकयोः।

---

(१) अनधिगताबाधितार्थविषयकं ज्ञानं प्रमा, तज्जनकत्वं प्रामाण्यम्,— इति ख॰ ग।

(२) बाबाधिता त्वं याथार्थ्यम्,— इति ख॰ ग॰ पुस्तकयो टी

मन्त्रादृष्टार्थत्वात् । अतएव नियमपरिसङ्ख्यातिरिक्तफलकविधित्व-मपूर्वविधित्वमिति तल्लक्षणमपि सुस्थम् । एतेषाञ्चोपाधीनां क्वचि-दुदाहरणे साङ्कर्य्येऽपि न दोष इति न विधिरत्यन्तमप्राप्ते इत्येतल्लक्षणदूष-णावकाशः । विस्तरेण चैतदस्मत्कृते मीमांसाकौस्तुभे द्रष्टव्यम् । तदेवं मन्त्राणामर्थस्मारकत्वेऽपि न विनियोगवैयर्थ्यम् । न चैवमपि प्रामाण्याभावः । याथार्थ्यलक्षणस्य तस्याविघातात् । अन्नादिसर्व-मन्त्रसाधारण्येन तु पदार्थविधया । यथा हि शाब्दबोधं प्रति-कारणीभूतज्ञानविषयत्वाच्छब्दः प्रमाणमिति सर्वदर्शनसम्मतं, तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि तथेति शक्यते वक्तुम् । अतश्च मन्त्रविनियोगविधौ मन्त्राणामपि पदार्थत्वादयुक्तं प्रामाण्य-मिति । *अस्तु वा प्रामाण्याभावेऽपि प्रयोजनवत्त्वमात्रम् । ताव-तैवाध्ययनविधेरुपपत्तेः । प्रयोजनमर्थवादवदेव स्पष्टम् ॥ ४ ॥

इति भाट्टदीपिकायां खण्डदेवकृतौ प्रथमाध्यायस्य
द्वितीयः पादः ।

---

* प्रामाण्याभावेऽपि प्रयोजनवत्त्वमात्रेण स्वाध्यायविध्युपपत्तेर्वा न कश्चिद्दोष,— इति क० पुस्तके पाठः ।

तत्। यत्रापि च श्रौती परिसङ्ख्या, यथा नानृतं वदेदित्यादौ, तत्रापि न तत्। अतएव शब्दतः फलतो वा यस्य शास्त्रस्यान्यनिवृत्तिर्विषयः स परिसङ्ख्याविधिः। अत्र चैतद्विध्यभावे प्राप्तश्चौत्सर्गिकी तत्र चान्यत्र च प्राप्तिर्न तु साऽपि लक्षणघटकेति ध्येयम्। अतएवैकस्मिन् कार्येऽनृतस्य सत्येन* सह पाक्षिकप्राप्तावपि नानृतं वदेदिति परिसङ्ख्यैवेयम्। स तु नियमविधिः। अतएव यस्य शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमः शास्त्रस्य विषयः स नियमविधिः। यथा सत्यमेव वदेत् व्रीहीनवहन्तीत्यादौ। अत्र नियमस्यैवायोगव्यावृत्त्यर्थकेन एवकारेण विधेयत्वात्। आक्षेपतः पूर्वोप्रवृत्तस्यावघातविधेर्नियमफलकत्वाच्च। नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तकोविध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तकस्तेत्यादिप्रकारेण बोध्यः। व्रीहीनवहन्ति उत्तरेद्यन्दिराश्वस्य गृह्णात इत्यादावाद्यः। एतद्विध्यभावे आक्षेपेणातिदेशेन चावघातस्य षोडशिग्रहणस्य च पक्षप्राप्तत्वात्। व्रीहिभिर्यजेतेत्यादौ द्वितीयः। यवविध्यभावसहितैतद्विध्यभावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात्। एवं विधभेदसत्त्वेऽपि चायोगव्यावृत्तिमात्रस्यैव लक्षणे प्रवेशान्न कोऽपि दोषः।

यत्तु दृष्टार्थत्व नियमविधिलक्षणं कैश्चिदुक्तम्। तदुत्तरेद्यन्दिराश्वस्य गृह्णात इत्यादावव्याप्तत्वादुपेक्षितम्। षोडशिग्रहयागाभ्या-

---

* सत्येन,— इति ख॰ ग॰ पुस्तकयोः पाठः।

पाठः।

क॰ पुस्तके पाठः।

स्मान्तरोपसंहारेणार्थवादोपोद्धारेण न्यायसिद्धार्थकथनेन च स्मृति-प्रणयनसार्थक्यात्। अतो मूलश्रुत्युपस्थापकतयैव धर्माधर्मप्रमाणयो-जकत्वं स्मृतीनामिति सिद्धम् ॥ १ ॥ ५ ॥

विरोधे ॥ श्रुतिविरुद्धानामपि औदुम्बरी सर्वा वेष्टितव्येत्यादि स्मृतीनां श्रुतिमूलकत्वाविशेषात् प्रामाण्यम्। न चौदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरोधात्तदनुपपत्तिः। परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशोदर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्। तदुदेव विकल्पेन विरोधस्य परिहर्त्तुं शक्यत्वाच। न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षा निवर्त्त्यते, येन कल्पनामूलोच्छेदाद्विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात्। न वा गैत्यौष्ण्ययोरिवात्र विषययोरत्यन्तविरोधः, येन औष्ण्यप्रत्यक्षेणेव गैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणोबाधः स्यात्। न लेतदस्ति, विकल्पेन द्वयोः प्रमावादिति प्राप्ते।

भाष्यकारेणैव सिद्धान्तितम्। सर्ववासानुमानेऽनुमेयजिज्ञासायाः कारणत्वात् प्रत्यक्षश्रुत्या च स्पर्शविधानेनावेष्टितत्वरूपेणौदुम्बर्याः परिच्छिन्नत्वाज्जिज्ञासाऽभावेन सौदुम्बरीवेष्टनविषयकश्रुत्यनुमान-मसम्भव। तथा, प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्र लोभादिदर्शन, यथा वैसर्जन* होमीयं वासो ऽध्वर्युः परिगृह्णातीत्यादौ†, तत्रापि न श्रुतिकल्पनं क्लृप्तहेतोरेव मूलत्वोपपत्तेरिति।

---

* वैसर्जनीय, — इति ख० ग० पुस्तकयो पाठ।

† प्रतिगृह्णात्यादौ, — इति ख० ग० पुस्तकयो पाठ।

धर्मस्य ॥ शिष्टैस्त्रैवर्णिकपरिगृहीतानां मन्वादिप्रणीतस्मृतीनां धर्माधर्मयोः प्रामाण्यं न वेति सन्देहे, तन्मूलत्वनिश्चायकाभावादप्रामाण्यम्। न ह्यत्र * प्रत्यक्षादि मूलं, तेषां धर्माधर्मयोरप्रवृत्तेः। वेदस्य च † प्रत्यक्षपठितस्यानुपलम्भात्। उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात्। प्रत्यक्ष ‡ पठितस्येदानीमुच्छेदस्य च वैदिकैर्यथापरिगणनं शाखानां मात्रामात्रापरित्यागेन[1] पाठ्यमानतया § कल्पयितुमशक्तेः। न च नित्यानुमेयो वेदो मूलम्। स्मृतेर्मूलसामान्यव्याप्तत्वेऽपि वेदव्याप्तत्वाभावेनानुमानानुपपत्ते ‖। मनोरप्यनुमेयत्वकल्पने अन्धपरम्परापत्तेश्च। अतश्च तन्मूलत्वासम्भवाद्भ्रान्त्यादिमूलत्वेनाप्रामाण्यमिति प्राप्ते।

शिष्टानामद्ययावदविगीतपरम्परया ज्योतिष्टोमादिष्विवाष्टकाकलञ्जभक्षणादिष्वपि धर्मत्वेनाधर्मत्वेन च परिग्रहान्मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसम्भवाच्च तन्मूलत्वमेव युक्तम्। न तु भ्रान्त्यादिमूलत्वम्। तत्कारणस्याद्ययावत्तदज्ञानस्य च कल्पने गौरवाच्च। श्रुतिश्च प्रत्यक्षपठितैव तन्मूलम् ¶। न च स्मृतिप्रणयनवैयर्थ्यं ** शा-

* न त्वत्र, — इति क॰ पुस्तके पाठः।
† वेदस्य, — इति ख॰ ग॰ पुस्तकयोः पाठः।
‡ प्रत्यक्षं, — इति क॰ पुस्तके पाठः।
§ पाठ्यमानतया, — इति क॰ पुस्तके पाठः।
‖ व्याप्तत्वाभावेनानुपपत्तेः, — इति क॰ पुस्तके पाठः।
¶ मूलम्, — इति क॰ पुस्तके पाठः।
** नास्त्येतत् ख॰ ग॰ पुस्तकयोः।

तीनामप्रामाण्यम्। न हि क्षुते आचामेदिति विहितस्य स्मार्त्तस्याचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने वेदं कृत्वा वेदिं करोतीति श्रुतिबोधितः क्रमोऽनुष्ठातुं शक्यते। स्मार्त्तपदार्थानाञ्च बहुत्वात् पूर्वाह्णादिः कालः प्रयोगविध्यवगतश्च परिमाणं न शक्यतेऽनुपरोद्धुम्। न च श्रौतत्वेऽपि क्रमादेः पदार्थधर्मत्वात् पदार्थभूतेभ्यः आचमनादिभ्यो दौर्बल्यं, प्रमाणपूर्वकत्वात् प्रमेयावगमस्य प्रथमावगतप्रमाणबलापेक्षया प्रमेयबलाबलस्य दौर्बल्यादिति प्राप्ते।

पदार्थप्राप्त्यपेक्षत्वात् क्रमादेरुत्तरकालिकस्य यावत्प्रमाणगम्यपदार्थाविरोधेनैव कल्पनीयत्वाच्च तावत्पदार्थविरोधित्वम्। परिमाणन्तु न कस्यचिच्छास्त्रस्यार्थ इति न तस्य श्रौतत्वम्। विरोधेऽपि आचमनादीनां पदार्थत्वात् प्राबल्यमेव। प्रमाणानां हि न स्वरूपतो विरोधोऽपि तु प्रमेयविरोधनिबन्धनः। तद्यदैव प्रमेयविरोध आलोच्यते तदैव तद्गतेन बलाबलेन निर्णीते शास्त्रार्थे न प्रमाण* बलाबलस्य नियामकत्वमिति प्रमाणमेव तत्स्मृतिः†।

यदा यच्छाक्यादिग्रन्थेषु वेदाविरुद्धं दानादिवचनं तस्य भवतु प्रमाणतेत्याशङ्का, स्वाध्यायोऽध्येतव्यः, वेदोऽखिलो धर्ममूलं, तद्विदाञ्च स्मृतिशीले।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥

---

* प्रामाण्य, — इति क॰ ग॰ पुस्तकयो पाठः।

† स्मृति, — ख॰ ग॰ पुस्तकयो पाठ।

वार्त्तिककारस्तु न जिज्ञासाया अनुमित्यङ्गत्वं अन्यार्थजिज्ञासायामपि तदुदयात्। सत्यपि वा तस्याः कारणत्वे अनुमितिविषयश्रुतेर्जिज्ञासितत्वाच्च। प्रत्यक्षश्रुतिविरोधाभावे वा *लोभादिमूलकत्वाङ्गीकारे† अष्टकादिस्मृतेरपि तदापत्तेः। अतश्च प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलत्वकल्पनोपपत्तेर्युक्तमेव प्रामाण्यम्। परन्तु यावच्छ्रुतिनिश्चयं वेष्टनं नानुष्ठेयम्। अर्थवादाद्युन्नीतविधिमूलकत्वस्यापि स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य सम्भावितत्वात्तस्य चोन्नयनस्य प्रत्यक्षश्रुतिविरोधे असम्भवात्। अतश्च यावच्छ्रुतिनिश्चयं अननुष्ठानलक्षणमप्रामाण्यमित्यभिप्रायं सूत्रमिति प्राह।

यद्वा शाक्यादीनामपि धर्मित्वप्रसिद्धेर्वेददर्शनसम्भवेन तत्प्रणीतस्मृतीनामपि वेदमूलत्वम्। तन्मूलो वेदश्चेदानीं प्रक्षीण इति प्राप्ते। शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् प्रत्युत अप्रमाणत्वेनैव तेषां स्मरणाद्वेदाप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकाराद्वेदमूलत्व‡ कल्पनानुपपत्तेरप्रामाण्यमिति§ सूत्रार्थः॥ ३ ॥ १ ॥

शिष्टाकोपे॥ क्रान्तानामाचमनादीनां श्रौतैः क्रमकालपरिमाणादिभिर्विरोधे श्रौतत्वात्क्रमादीनामेव प्राबल्यात् तद्विषयस्य-

---

* भावेऽपि, — इति क॰ पुस्तके पाठः।

† कारे च, — इति ख॰ ग॰ पुस्तकयोः पाठः।

‡ मूल, — इति ख॰ ग॰ पुस्तकयोः पाठः।

§ प्रामाण्यमेवेति, — इति ख॰ ग॰ पुस्तकयोः पाठः।

यथाकथञ्चिदपि सिद्धेः। अतस्तत्प्रसिद्धा वृत्तविशेषएव शक्तिः। गवप्रतीतिस्तु लक्षणया शक्तिभ्रमाद्वा। यत्र तु नियामकाभावस्तथागव्याऽऽदिशब्देषु उभयत्रापि शक्तिः। आर्याणामेवोभयत्र प्रयोगात्। तत्रापि क्वचिद्वाक्यशेषस्य* नियामकता। यथा यत्रान्या ओषधयो म्लायन्ते अथैते मोदमानाइवोत्तिष्ठन्तीत्यनेन यवशब्दस्य दीर्घशूकएव शक्तिः। प्रियङ्गुषु तु लक्षणादिनेति ॥ ५ ॥ ९ ॥

एवं वा ॥ यत्र मातुलकन्यापरिणयादौ स्मृत्याचारयोर्विरोधस्तत्रोभयोरपि श्रुतिकल्पकत्वात्तुल्यबलत्वमिति प्राप्ते। स्मृतीनां सम्प्रत्ययप्रणीतत्वात् स्मृतिषु कर्त्तव्यतावाचिविधिप्रत्ययश्रवणाच्च बलीयस्त्वम्। आचारेषु तु आचरितृणां जनानां मन्वाद्यपेक्षया तथा प्रत्ययितृतरत्वाभावादितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्यवगमस्याशक्यत्वात् परकीयाचारमात्रदर्शनेन कर्त्तव्यतावाचिविधिप्रत्ययस्यावश्यकल्पनीयत्वाच्च दौर्बल्यम्। अतएवेदानीन्तनाचारदर्शनेन श्रुतिद्रष्टुः स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा श्रुतिकल्पनं स्मृतीनान्तु साक्षादेवेति विशेषः। अतः स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शनं स्मृतिदर्शनं वा अननुष्ठानम् ॥ ६ ॥ १० ॥

एवं वा ॥ त्रिवृद्बर्हिर्वालादिशब्देषु यत्र लोकवाक्यशेषयोरर्थविप्रतिपत्तिस्थाने पदपदार्थसम्बन्धे लोकात् वेदस्याधिक्ये† प्रमाणाभावात्तुल्य‡ बलत्वमिति प्राप्ते। विषयैक्याभावे विधिस्तुत्योरेक-

* कदाचिद्वाक्यशेषस्य, — इति क॰ पुस्तके पाठः।

† लोकवेदयोरर्थाधिक्ये, — इति ख॰ ग॰ पुस्तकयोः पाठः।

‡ तेषु तुल्य, — इति ख॰ ग॰ पुस्तकयोः पाठः।

इत्यादिवचनैर्नियतप्रमाणप्रतिपाद्यानामेव धर्मत्वप्रमितेरन्यतः प्रमितस्य फलसाधनत्वाभावात् तेषामप्रामाण्यमिति ॥ ३ ॥ ७ ॥ –

अपि वा कारणाग्रहणे ॥ अनिबद्धानां वसन्तोत्सवाद्याचाराणां प्रामाण्यं न वेति सन्देहे, एतेषां वेदमूलत्वे अष्टकादिवन्मन्वादिभिर्निबन्धनापत्तेः, सामान्यतस्तद्विदाञ्च स्मृतिशीले इत्यादिना निबन्धनेऽपि च विशेषतोऽनिबन्धनेन तेषां श्रुतिदर्शनाभावनिश्चयादप्रमाणमिति प्राप्ते। धर्मबुद्धा वैदिकैरनुष्ठीयमानत्वात् स्मृतिवदेव वैदिकत्वम्। विशेषतोऽनिबन्धनं तु गौरवभिया न दोषः। व्यतिक्रमसाहसदर्शनं तु धर्मबुद्धाऽननुष्ठीयमानत्वात् न वैदिकम्। न चैतावता सर्वस्याप्यवैदिकत्वम्। अत आचाराणामपि धर्माधर्मयोः प्रामाण्यम् ॥ ४ ॥ ८ ॥

तेष्वदर्शनात् ॥ अत्र शब्दप्रयोगरूपस्याचारस्य यवार्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः, यथा पीलुशब्दस्य वृक्षविशेषे आर्याणां हस्तिन्यन्येषां, तत्र तयोस्तुल्यबलत्वम्। व्यवहारे आर्याणामिव म्लेच्छानामप्यभियुक्तत्वाविशेषात् *। अन्यतरस्याप्यनुभयथापि समानत्वेति प्राप्ते।

शक्यतावच्छेदकभेदेनानेकशक्तिकल्पनप्रसङ्गात् एकचैव शक्तिर्नोभयत्र। न च विनिगमनाविरहः। आर्यप्रसिद्धेरेव नियामकत्वात्। आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविस्मृतिलिप्सया शब्दार्थतत्त्वं विविच्य † परिपालयन्ति न म्लेच्छाः। दृष्टार्थव्यवहारस्य

---

* अभियुक्तत्वाविशेषो शक्तत्वाविशेषात्, – इति क० पुस्तके पाठः।

† विविच्य, – इति नास्ति ख० ग० पुस्तकयोः।

वा शाक्यादिग्रन्थानां वा वेदत्वं वेदतुल्यत्वं वा भवतु । श्रुत्यादिमूलकत्वे गौरवात् । नित्यग्रन्थाध्ययनविधिविषयत्वानुपपत्तेश्च । षड्ङ्गानां तु, षडङ्गमेके — इति स्मृतेरपि वेदत्वम् । वृद्धबोधायनप्रभृतिभिस्तु समाख्या काठादिवत्प्रवचननिमित्तत्वेनाप्युपपन्नेति प्राप्ते । दृढकर्तृस्मरणात्काठादिवत्प्रवचननिमित्तत्वानुपपत्तेर्नैषां* वेदत्वं वेदतुल्यत्वं वा । प्रतिमन्वन्तरश्चैवंविधानां ग्रन्थानां सत्त्वान्नित्यग्रन्थाध्ययनविधिविषयत्वोपपत्तिः । षडङ्गमेके इति तु परमतोपन्यासः । एकपदश्रवणात् । तस्मादेषां स्मृत्यधिकरणन्यायेन वेदमूलकत्वमेव । शाक्यादिग्रन्थानां तु तदसम्भवात् आभासत्वमेव ।

प्रयोजनं, कल्पादीनां वेदत्वे तत्तुल्यत्वे वा यत्र प्रत्यक्षश्रुतिविरोधस्तत्र विकल्पः । यत्र वा प्रत्यक्षश्रुतिविरोधाभावेऽपि न्यायाभासोपन्यासपूर्वकं वचनं, तत्रापि वचनत्वादेव तदनुष्ठानं, न्यायोपन्यासस्तु हेत्वधिकरणन्यायेनार्थवादः । सिद्धान्ते तु प्रत्यक्षश्रुतिविरोधे सन्न्यायविरोधे च यावन्मूलश्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यम्† । श्रुतिदर्शनोत्तरन्तु विकल्पः‡ । यत्र तु न्यायोपन्यासरहितं मीमांसान्यायविरुद्धञ्च स्मृतेर्वचनं§ तत्र श्रुतिमूलत्वसम्भवेन वचनविरोधे न्यायस्यैवाभासत्वात्तदर्थ एवानुष्ठेय इति । अत्र सर्वोदाहरणानि मूलोक्तोदाहरणदूषणानि चाऽस्मत्कृते कौस्तुभे द्रष्टव्यानि ॥ ८ ॥ १२ ॥

---

* नैषां, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

† यावन्मूलश्रुतिदर्शनमप्रामाण्यम्, — ख॰ ग॰ पुस्तकयोः पाठः ।

‡ विकल्पादि, — क॰ पुस्तके पाठः ।

§ स्मृतिवचनं, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

वाक्यताऽनुपपत्तेर्विधिर्वाक्यशेषस्यैव शक्तिग्राहकत्वमनुमन्यते। अतश्च लौकिकप्रमाणावगतेऽर्थे शक्ति*कल्पनाभिया न शक्तिरपि तु लक्षणादिनैव बोधः। अतएव यत्र वाक्यशेषोनास्ति तत्रापि चिरूढादिपदार्थोवैदिक एव ग्रहीतव्य इति वक्ष्यते। अतश्च चिरूढशब्दस्य श्लोचगतस्ट्इ्नवकं शक्य न तु तत्वैगुण्यम्। चरुशब्दस्योदनो न तु स्थाली। अश्ववालशब्दस्य काशाः अश्वकेशाः। वाक्यशेषाश्च कौस्तुभे द्रष्टव्याः॥ ७॥ ११॥

चोदितन्तु॥ यत्र पिकनेमशततामरसादिशब्दानां मार्याणामर्थविशेषप्रसिद्धिः, म्लेच्छेषु तु पिकः कोकिलः, नेमः अर्द्धं, शतं वृत्तपथं दारुमयं शतच्छिद्र परिमण्डलं, तामरसङ्कमलं, इत्येवं प्रसिद्धिः। तत्र तत्प्रसिद्धार्थस्यैव ग्रहणं न तु निगम† निरुक्तादिना तत्कल्पनम्। न च म्लेच्छेषु शब्दार्थयोर्विप्लुतिदर्शनेन तत्प्रसिद्धेरविश्वसनीयता। पिकादिशब्दानां वेदएव दृश्यमानत्वेनाविप्लुतत्वात्। अतश्च तेषां साध्याकाङ्क्षायां तत्प्रसिद्धेरपि क्लृप्ततया ग्राहकत्वम्। अतएव निगमादिप्रसिद्धेरपि तत्प्रसिद्धित्वेन प्रामाण्येऽपि कल्प्यत्वेन दौर्बल्यम्। म्लेच्छप्रसिद्धेश्च म्लेच्छप्रसिद्धित्वेन दौर्बल्येऽपि क्लृप्तत्वेन प्रामाण्यम्। प्रमाणबलाबलापेक्षया प्रमेयबलाबलमबलीयस्त्वस्य स्थापितत्वात्। अतएव नात्र विशेषतः पूर्वपक्षः कथितः॥ ८॥ १२॥

प्रयोगशास्त्रम्॥ सर्वस्मृतीनां कल्पसूत्राणां वा षड्ङ्गानामेव

---

* अनेकशक्ति, — इति क॰ पुस्तके पाठः।

† निगम, — इति नास्ति क॰ पुस्तके।

फलाभावे गवादिषु गौणत्वाद्यसम्भवाच्च। अतो वाचकत्वविशेषाय व्याकरणेन नियमः सम्भवति इति प्राप्ते।

प्रयोगप्रत्ययद्योः साधुशब्दापभ्रंशजानां गाव्यादिशब्दानां नष्टशब्दोपस्थापनद्वारोपपत्तेर्न वाचकत्वकल्पना। अनेकशक्तिकल्पनापत्तेः। इदानीन्तनानाञ्च शक्तिभ्रमात्तौ। न च घटकलशादिपदवदिनिगमनाविरहः। पाणिन्यादिप्रणीतव्याकरणस्यैव नियामकत्वात्। न च निर्मूलत्वम्। प्रयोगनियमे साधूनेव प्रयुञ्जीतेत्येवंविधायाः एकस्या एव श्रुतेर्मूलत्वात्। साधुत्वञ्चानादिवाचकत्वं, अनपभ्रष्टत्वं वा, व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्या जातिर्वा, प्रमितवृत्त्यार्थप्रतिपादकत्वं वेति कौस्तुभ एव स्फुटम्। तदभावश्चासाधुत्वम्। अस्यैव च श्रुतिर्न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्द इति मूलम्। अयञ्च निषेधः प्रकरणाज्ज्योतिष्टोमाङ्गम्। यज्ञमात्रेऽपि च निषेधोयाज्ञे कर्मणि नियमोऽन्यत्रानियम इति महाभाष्याद्यनुसारात्*। साधुप्रयोगनियमात् परं फलोदय इत्यपि, एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीति वचनात्।

अत्र हि प्रयोगाश्रितः साधुनियमः फलोद्देशेन विधीयते। रागप्राप्तस्यापि च साधुप्रयोगस्य, तस्माद्देवा व्याहृता वाग्यत इति वचनादाश्रयत्वसिद्धिरिति स्पष्टं कौस्तुभे। गवादय एव साधवो न गाव्यादय इति† साधुस्वरूपनियमस्य तु अनादिप्रयोगपरम्परैव मूलम्।

---

* महाभाष्यानुसारात्, — इति ख॰ ग॰ पुस्तकयोः पाठः।

† गवादय, एव, साधव इति, — इति ख॰ ग॰ पुस्तकयोः पाठः।

अनुमान॥ अथ यत्र स्मृतिषु पाठव्यवस्था यथा गौतमीया छन्दोगैरेव, तथाऽऽचारेषु कर्त्तव्यवस्था यथा होलाकादि प्राच्याद्यभिमानिभिरेव। तत्र तदनुमेयश्रुतिरपि अनुमापकस्य नियतविषयत्वाच्चियताधिकारिकैवेति नान्यैस्तदनुष्ठेयमिति प्राप्ते। यद्यपि अनुमापकं नियतविषयं, तथापि नानुमेयश्रुतौ विशेषणं प्राच्यत्वादि दातुं शक्यम्। न हि प्राच्यत्वं नाम सर्वाचरितचतुर्गतं जातिव्यक्तिगुणसंख्यानादिभिर्निर्वक्तुं शक्यम्। तत्तद्देशगतानामप्यनाचरणात् चिरविनिर्गतपुत्रपौत्राणामप्याचरणाच्च। अतो विशेषणाभावात् सर्वविषयत्वम्। गौतमीयादिस्मृतिषु तु न च्छन्दोगाधिकारिकत्वस्मरणं, येन श्रुतावपि तत्सम्भाव्यते। पाठमात्रन्तु तेषां, स्मृतिकर्त्तुः तच्छाखीयत्वादुपपन्नम्। कर्त्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वग्रन्थमध्यापयामास* तेऽप्यन्यान् इत्येवं पाठस्तन्मात्रे व्यवस्थितः इति तत्रापि सर्वविषयत्वमेव ॥१०॥१४॥

प्रयोग॥ स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणप्रामाण्यमाक्षिप्यते। नियमदृष्टार्थं हि तत्। साधूनेव प्रयुञ्जीत नासाधून् इत्येको गवादय एव साधवो न गाव्यादय इत्यपरः। न च नियमदयस्य मूलं सम्भवति। प्रतिगवादिशब्दमनेकश्रुतिवाक्यपाठासम्भवात्। साधुत्वस्य पूर्ववन्निर्वचनासम्भवेनानुगतैकश्रुतिकल्पनाऽनुपपत्तेश्च। न हि साधुत्वं नामार्थप्रत्यायकत्वम्, अनादित्वं सति वाचकत्वं वा। गाव्यादिष्वपशब्देष्वपि सत्त्वात्। अपशब्दानां क्वचिद्वाच-

---

* स्वग्रन्थमध्यापयामास, — इति क॰ पुस्तके पाठः।

शरीरस्य इति क्रमात्। ब्रह्मब्राह्मणेति न्यूनातिरिक्तत्वात्। स्थूलपृषतीत्यत्र कर्मधारयबहुव्रीह्योः स्वरात् अन्तोदात्तत्वाद्युदात्तत्वरूपात् *। पचते दक्षिणां देहि, भोजनार्थं पचते, इत्यत्र व्यधिकरणपदसन्निधिरूपाद्वाक्यात्। यात' पुनरायाति, यातो देवदत्तयज्ञदत्तौ, इत्यत्र समानाधिकरणपदसन्निधिरूपश्रुत्या। अश्व इति अगम इत्यर्थे—व्याकरणस्मृत्या तदभिज्ञस्य पदभेदानुभवात्। यत्र तु नार्थभेदप्रतीतिस्तत्र सत्यपि धर्मभेदे दृढतरप्रत्यभिज्ञाबलेनैकत्वावधारणान्न पदान्यत्वं लोकवेदयोरिति युक्ता आद्या चिन्ता।

तत्रावघातादिक्रियाणां लिङ्गकारकसङ्ख्यादीनां च जात्यन्वययोग्यत्वात् गौः शुक्ल इत्यादिसमानाधिकरणनिर्देशाच्च व्यक्तिवाचित्वमेव। न चैवं जातिबोधानापत्तिः। लक्षणया † तद्बोधोपपत्तेः। व्यक्तिशक्तिग्रहस्यैव ‡ कार्यतावच्छेदक जातिविशिष्टशाब्दबोधत्वम्। अतो न दोषः। न च विनिगमनाविरहः। लाघवस्यैव नियामकत्वात्। तथा हि, न शक्तिग्रहस्य स्वातन्त्र्येण कारणत्वं, अपि तु लाघवाच्छक्यत्वादिसम्बन्धेन घटपदवत्ताज्ञानस्यैव। ततश्चास्मन्मते घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्य घटो घटपदवानित्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबोधत्वावच्छिन्नं प्रति कारणत्वम्। भवन्मते तु घटत्वस्य धर्मितावच्छेदकीकृत्य तद्वाच्यम्। अतश्च घटत्वस्य घटेतरावृत्तित्वादि-

* अन्तोदात्तत्वाद्युदात्तत्वादिरूपात्, — इति ख० ग० पुस्तकयोः पाठः।

† लक्षणादिना, — इति क० पुस्तके पाठः।

‡ व्यक्तिशक्तिग्रहस्यैव वा, — इति भवितुमुचितम्।

अतः प्रमाणं व्याकरणम्। यत्तु न्यायमूलकं स्फोटादि तच्चोच्यते, श्रुतिविरुद्धञ्च, तन्न्यायश्रुतिविरोधे* कामं भवत्वप्रमाणम् ॥१।१।१५॥

प्रयोगचोदना ॥ वाचकशब्दप्रवृत्तिनिमित्तं किं घटत्वादिजातिः उत व्यक्तिरिति चिन्ता। तदर्थञ्च लोकवेदयोः शब्दानामन्यत्वमुत नेति चिन्तनीयम्। अन्यत्वे हि उपायाभावेन वैदिकशब्दशक्ति-परिच्छेदासम्भवान्नासौ चिन्ताऽऽरम्भणीया। एकत्वे तु लोके† वृद्धव्यव-हारानुसारेण गृहीता शक्तिर्वेदे फलिष्यतीति युक्ता चिन्ता। तत्र वर्णाभेदेऽपि स्वरच्छान्दसवर्णागमलोपविकारानध्यायादिधर्म-भेदात्स्वरोरश्च इत्यादिपदयोरिव लोकवेदयोः पदानामन्यत्वमिति प्राप्ते। यत्रार्थभेदप्रतिपत्त्यनुकूलो धर्मभेदस्तत्रैव पदभेदः।(१) यथा

* न्यायादिविरोधे, – इति ख॰ ग॰ पुस्तकयोः पाठः।
† लोके, – इति नास्ति ख॰ ग॰ पुस्तकयोः।

(१) पदावधारणोपायान् बहूनिच्छन्ति सूरयः। क्रमन्यूनातिरिक्तत्वस्वर-वाक्यश्रुतिस्मृतीरिति वार्त्तिककारिकामनुसृत्य पदभेदावधारणोपा-यान् क्रमेणोदाहरति, यथेति। क्रमोविलक्षणानुपूर्व्यरूपः। स्थूला-पृषतीत्यत्र कर्मधारयसमासे गौरेव स्थूलत्वं बिन्दुमत्त्वञ्च लभ्यते। यैव स्थूला सैव बिन्दुमतीत्यवगतेः। बहुव्रीहौ तु स्थूलबिन्दुयुक्तत्वं लभ्यते। एवञ्च स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र बहुव्रीहिस्वरपाठादर्थनिर्णयः। पचते दक्षिणा देहीत्यत्र देहीति योगात् पचते इति चतुर्थ्यन्तं पदं, भोजनार्थं पचते इत्यत्र भोजनार्थमित्युपादानात् पचते इति तिङन्तं पदम्। यातः पुनरायातीत्यत्र यात इति प्रथमान्तं पदम्। याती-

त्र पश्य इति भि-

प घोटकवाचकत्वाद-

वितार्थः।

विशिष्टव्यक्तिशाब्दत्वमेव कार्यतावच्छेदकत्वस्वीकारादनुपपत्तेः। वस्तुतस्तु जातिगुणशाब्दत्वमेव लाघवेन कार्यतावच्छेदकम्। अतिश्च तृतीयान्तस्थले* पशुना यजेत अरुणया क्रीणाति इत्यादौ नैव पदाद्भासते। जातिगुणयोरेव द्रव्यपरिच्छेदद्वारा करणत्वोपपत्तेः। लिङ्गसंख्ययोरपि पाशाधिकरणन्यायेन सामानाधिकरण्येन पार्ष्णिकी जातिगुणसंबन्धः[१]। अतः संबन्धविधयैव तत्र द्रव्यबोधः। द्वितीयान्तादिस्थले तु जातिगुणयोः कर्मत्वाद्यन्वयासम्भवाद्व्यक्तेर्लक्षणया बोधः। तस्या एव कर्मत्वाद्यन्वयः। लिङ्गसंख्याद्यन्वयस्य साक्षात्सम्बन्धेनैव, सामानाधिकरण्यस्य व्यक्तिद्वारकमिति सर्वं सुस्थम्। प्रयोजनं, पूर्वपक्षे रथन्तरादिशब्दानां ऋग्वाचित्वाद्रथन्तरमुत्तरयोर्गायति इत्यादौ उत्तरापदलक्षितोत्तराकार्ये योनिविधानं, सिद्धान्ते तु गीत्यतिदेशउत्तरास्विति वक्ष्यते॥१२॥१६॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

प्रथमस्य तृतीयः पादः॥०॥

---

* तृतीयादिस्थले, — इति क० पुस्तके पाठः।

(१) लिङ्गसंख्ययोरपि समानपदोपात्तत्वप्रत्यासत्त्या सामानाधिकरण्यसम्बन्धेन कारकत्वान्वय पार्ष्णिको जातिगुणसम्बन्ध,— इति भाट्टदीपिकाप्रभावली।

रूपस्यानेकपदार्थघटितस्य प्रवेशात् तव कार्यकारणभावे गौरवं, न मम। न च शक्यानन्त्यादिदोषः। तस्य फलमुखत्वात्। अतश्च लाघवात् व्यक्तावेव शक्तिर्जातिविशिष्टव्यक्तौ वा न तु जातावेवेति प्राप्ते।

घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्तानिश्चयस्य कारणत्वं, पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्तानिश्चयस्य वा घटपदं घटवदित्याकारस्य कारणत्वमित्यत्र विनिगमनाविरहेणानन्तकार्यकारणभावप्रसङ्गात्। अस्मन्मतेतु घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटत्ववत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनाल्लाघवम्। न च ममापि विपरीतमापादयितुं शक्यम्। तथा सति घटत्वस्य धर्मित्वेन स्वरूपेण तस्य धर्मित्वायोगाद्धर्मितावच्छेदकत्वेन घटत्वत्वप्रवेशे गौरवस्य त्वयैवोक्तत्वात्। अतो न घटत्वत्वावच्छिन्नं घटत्वं शक्यत्वसम्बन्धेन घटपदवदित्याकारकं ज्ञानं कारणं, अपि तु घटपदं शक्तत्वसम्बन्धेन घटत्ववदित्याकारकमेव। जातेः स्वरूपेणैव प्रकारत्वोपपत्तौ घटत्वत्वस्याप्रवेशात्।* न च समवायेनैव जातेः स्वरूपेण प्रकारता न संबन्धान्तरेणेत्यत्र प्रमाणमस्ति। परैरपि तथाऽनभ्युपगमाच्च*। अतश्च कार्यकारणभावेऽपि लाघवात् घटत्वएव शक्तिः। शक्यानन्त्यादि च नास्मन्मते। अतः प्रथमोपस्थितत्वाज्जातावेव शक्तिः।

एवमरुणादिशब्देष्वपि गुणएव गुणत्वे वा। न तु तद्विशिष्टद्रव्ये।

अपि वा नामधेयम् ॥ अतः परं क गुणविधित्वं क वा नामधेयत्वमिति कौण्डशोधनिकार्थमारम्भः। तदिह गुणे कर्मणि च तुल्यवद्वृत्तिकानामुद्भिदादिपदानां विधेयगुणसमर्पकत्वं नामधेयत्वं वेति चिन्तायां, भिदिर् विदारणे इति स्मृत्या विदारणसमर्थखनित्रादिवचनत्वप्रसिद्धेर्नामधेयत्वे वैयर्थ्यप्रसङ्गाच्च गुणविधित्वमेव युक्तम्। तत्र च गुणविशिष्टं कर्मैव फलोद्देशेन विधीयतइत्येकः पक्षः। * प्रकृतसोमयागानुवादेन गुणमात्रविधानमित्यपरः।

न च विनिगमनाविरहः। इतिकर्त्तव्यताख्यविधिविशेषस्यैव कर्मविधिनियामकत्वात्। न चैवं फलपदानर्थक्यं, सर्वेभ्यो ज्योतिष्टोम इति वचनेन तस्य सर्वफलार्थत्वावगतेर्यजिपदस्य पशुफलोपधायकयागलक्षणायां † तात्पर्य्यग्राहकत्वात्। अत एव न विशिष्टोद्देशे वाक्यभेदः। न चोत्पत्तिशिष्टसोमप्राबल्यं, पशुकामप्रयोगविशेषपुरस्कारेण विहितस्य खनित्रादेः सामान्यविहितसोमादिबाधकत्वात्। वस्तुतस्तु प्रकृतसोमयागाश्रितः खनित्रादिगुण एव फलोद्देशेन विधीयते इति तृतीयः पक्षः। काम्यत्वादेव च नित्यसोमबाध इति प्राप्ते भ्रमः ‡।

नायं गुणविधिर्गौरवात्। तथा हि, सर्वत्रैव तावच्छुद्धधात्वर्थकरणकभावनाविधानादाद्यो विधिप्रकारः। यथाऽग्निहोत्रं जुहो-

---

* अथवा, — इत्यधिकः पाठः क॰ पुस्तके।

† लक्षणया, — इति क॰ पुस्तके पाठः।

‡ भ्रम, — इति नास्ति ख॰ ग॰ पुस्तकयोः।

उक्तं ॥ इह गुणविधित्वेन नामधेयत्वेन वा संमतानां सर्वेषामेव फलपदातिरिक्तसुबन्तानां उद्भिज्ज्योमादिपदानां प्रामाण्यमप्रामाण्यं वेति संशये, प्रमाण्यप्रकारासम्भवादप्रामाण्यम् । तथा हि, उद्भिदा यजेत पशुकामः, सोमेन यजेतेत्यादावुद्भिदादिपदेभ्यः स्तुतिबुद्धेरनुत्पत्तेर्न तावदर्थवादत्वम् । मन्त्रत्वप्रसिद्ध्यभावान्न तत् । एतेषां प्रयोगकालोच्चारणे चैतत्प्रतिपाद्यार्थस्य यागाङ्गतावोधकप्रमाणाभावेनैतेषां प्रयोगसमवेतार्थस्मारकत्वानुपपत्तेश्च । न च विध्यन्तर्भावः । कामशब्दाद्यभावेन साध्यानभिधायकत्वात् । एकपदगतेन यजिनैव करणप्रतिपादने एतेषां तत्प्रतिपादकत्वायोगात् । सिद्धरूपाणां सोमादीनां व्यापारमन्तरेण* भावनेतिकर्त्तव्यतात्वानुपपत्तेश्च । नामधेयत्वे तु अभिन्नत्वादेव करणानुग्राहकत्वादिरूपेतिकर्त्तव्यतात्वानुपपत्तिः । न च कथमपि भावनाऽन्वयासम्भवेऽपि यागएव कारणत्वेनान्वयो भवत्विति वाच्यम् । कारकाणां परस्परान्वयासम्भवात् । अतः कथमपि क्रियाऽन्वयासम्भवादनाख्यातत्वेन च विधिभावनयोरनभिधानात् अन्यस्य च प्रकारस्य निर्वक्तुमशक्यत्वादप्रामाण्यमिति प्राप्ते । अध्ययनविध्यापितस्य अप्रमाण्यासम्भवात्, प्रकारान्तरासम्भवेऽपि विध्यन्तर्भावस्य स्पष्टत्वेन तत्रैव गुणविधित्वेन नामधेयत्वेन वा वक्ष्यमाणरीत्या सर्वानुपपत्तिपरिहारेण प्रामाण्यमिति सिद्धम् ॥ १ ॥ १७ ॥

---

तत्करणत्व प्रकारतया भावनायामन्वेति, तथैव सोमकरणत्वमपि यागनिरूपितम्। उभयत्र तत्तन्निरूपकत्वस्य पार्ष्ठिकबोधलभ्यत्वाच्च न कोऽपि विरोध इति नास्मिन्नपि पक्षे यद्यपि मत्वर्थलक्षणा, तथापि विशेषणविधिकृत * गुणयागोभयविशिष्टभावनाविधिगौरवमापद्यमान नापह्नोतु शक्यम्। यथा च प्राथमिकभावनासम्बन्धाङ्गीकारेऽपि द्वितीयबोधवेलायां मत्वर्थकल्पना तथोक्तं कौस्तुभे।

एवं द्वितीय तृतीययोरपि † जघन्यविधिप्रकाराङ्गीकरणदोषाच्च। अगत्या च दधिहोमादावेव तदङ्गीकृतम्। तेषां तत्र ‡ अत्यन्तरूढत्वेन नामधेयत्वासम्भवात्। प्रकृते तु येनैव योगेन खनित्रे प्रवृत्तिस्तेनैव योगेनोद्भिद्यते उत्पाद्यते फलमिति व्युत्पत्त्या कर्मण्यपीति नामत्वसम्भवेन द्वितीयविधिप्रकाराङ्गीकरणमालाघवम्। न च भिदो विदारणएव स्मृते शक्तिः। भिदित्येव धातुपाठात् विदारणे इत्यस्य शक्यार्थमात्रोपलक्षकत्वस्य वैयाकरणसिद्धत्वात्। अतो विदारण इवोत्पादनेऽपि प्रयोगात् तुल्यवद्वृत्तिकता। न च नामधेयानर्थक्यम्। मकृत्पादौ सार्थकत्वात्। क्वचित् फलोपबन्धस्य। यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। क्वचिच्च गुणोपबन्धः। यथा संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीति। प्रकृते च संज्ञया भेदसिद्धिरेव प्रयोजनम्। इतरथा हि प्रकृत एव

---

* विशेष्यविधिकल्पनादिकृत, — इति क॰ पुस्तके पाठः।

† द्वितीयतृतीयमूर्ध्वमन्त्रयोरपि — इति ग॰ पुस्तके पाठः।

‡ गुणे, — इति ख॰ ग॰ पुस्तकयोः पाठः।

तीति । अन्योद्देशेन तद्विधिरपरः । यथाऽग्निहोत्रं जुहुयात् स्वर्गकाम इति । एतस्य चोद्देश्यवाचकपदान्तरसापेक्षत्वाद्दौर्बल्यम् । धात्वर्थोद्देशेनान्यकरणकभावनाविधिस्तृतीयः । यथा दध्ना जुहोतीति । अत्र विधेयतायां धात्वर्थवृत्तित्वाभावात् पदान्तरार्थवृत्तित्वाच्च ततोऽपि दौर्बल्यम् । धातोः साधुत्वार्थत्वमङ्गीकृत्य अन्योद्देशेनान्यकरणकभावनाविधिश्चतुर्थः । यथा दध्नेन्द्रियकामस्य जुहुयादिति । अत्र धात्वर्थस्योद्देश्यत्वेनाप्यन्वयात्ततोऽपि दौर्बल्यम् । गुणविशिष्टधात्वर्थकरणकभावनाविधानात् पञ्चमः । यथा सोमेन यजेतेति । अत्र विशेषणविधिकल्पनादेराधिक्यात्ततोऽपि दौर्बल्यम् । अन्योद्देशेन पूर्वोक्तः षष्ठः । यथा सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति । अयन्तु सर्वदुर्बलः ।

तदेवं षड्विधगुणविशिष्टस्य यागस्य फलोद्देशेन विधाने षड्विधप्रकाराश्रयणाद्विनिर्गौरवम् । गुणस्य यागे अन्वयान्मत्वर्थलक्षणाच्च । न हि भावनायां समानपदोपात्तधात्वर्थकरणकत्वावरुद्धायां गुणस्य करणत्वं सम्भवति । अतस्तस्य यागान्वयावश्यकत्वे यागस्य कारकत्वात् कारकाणां च परस्परं सम्बन्धानुपपत्तेः, सोमेन यजेतेतिवद्विशिष्टता यागेनेति मत्वर्थलक्षणाऽऽवश्यकीति प्राञ्चः ।

वस्तुतस्तु दृष्टान्तेऽपि सोमस्य करणत्वेनैव भावनायामेवान्वयश्च* वक्ष्यते । युक्तञ्च, एककरणावरुद्धेऽपि करणान्तरस्य भिन्ननिरूपितस्य प्रकारतया भावनाऽन्वयोपपत्तेः । न हि यागकरणत्वं भावनानिरूपितम् । अपि तु स्वर्गनिरूपितम् । अतश्च यथैतान्यनिरूपितमपि

* तत्र तत्र, — इति क० पुस्तके पाठः ।

स्तोत्रशस्त्रपदेशे अदृष्टार्थं स्तावनेनैव स्तोत्रोपकारकता। उत्पत्तिवाक्ये तु आज्यादिपदं गुणवाक्यप्राप्तत्वादनुवादः। स्तोत्रमात्रन्तु विधीयते इति प्राप्ते।

प्राप्तकर्मानुवादेन त्रिवृत्त्वस्तोत्रत्वरूपानेकगुणविधाने वाक्यभेदात्। करणत्वस्यापि पराङ्गतस्य प्राप्तत्वेनाविधेयत्वोभयविशिष्ट कारकविध्ययोगात् अग्नेर्ज्योतिर्घोमीय इति वचनेन विहितप्राकरणिकप्रस्तावरोधेन स्तोत्रस्य विध्ययोगाच्च न गुणविधिः। अत प्रकृतानामेव यागानां विचित्रद्रव्यकत्वेन लक्षणया त्रिवृत्पदं नामधेयम्। दध्यभिप्रायेण च स्तोत्रप्रत्ययः। एवमाज्यादिपदेष्वपि असमस्तत्वेन विशिष्टव्युत्पन्नत्वात् प्राप्तस्तोत्रानुवादेन द्रव्यसङ्ख्यानेकगुणविधौ वाक्यभेदः। न चोत्पत्तिवाक्यएव द्रव्यविशिष्टस्तोत्रविधिरितरत्र तु सङ्ख्यामात्रविधिरस्त्विति वाच्यम्। एतादृशां स्तोत्रे करणत्वासम्भवेन विशिष्टविध्ययोगात्। पञ्चदशानीत्यादिश्रुतिगतत्वक्सङ्घातरूपस्तोमवाचि ड़प्रत्ययस्य गुणविधित्वेऽनुपपन्नेश्च। अत आज्यादिपदं वाक्यद्वयेऽपि अन्यत्वेव स्तोत्रनामधेयम्। आज्यादिपदाभिधेयस्तोत्रानुवादेन च गुणवाक्ये सर्वत्र सङ्ख्यामात्रविधिः। आज्योत्पत्तिवाक्ये च तत्सङ्ख्याकानि चत्वारि स्तोत्राणि समस्तमदृष्टत्वबहुवचनेन तावत्त्वावगमात्। एवं पृष्ठोत्पत्तिवाक्येऽपि षट्। अनुष्ठेयानि तु नियतानि चत्वारि। आद्ययोर्द्वयोरन्त्ययोर्द्वयोरन्ययोश्च नौधसश्यैतयोर्वचनेन विकल्पविधानात्। यथा चात्र तत्तद्दूषणानां निरासो मतान्तरदूषणानि च, तानि कौस्तुभे द्रष्टव्यानि ॥२।१।८॥

कर्मणि गुणफलसंबन्धापत्तेर्न कर्मान्तरत्वम्। न च योगस्य * फलो-त्पादकारित्वस्यातिप्रसक्तत्वादपूर्वे कर्मणि रूढिकल्पने सोमादिपदा-नामपि तदापत्तिः। सर्वत्र योगरूढिस्थले प्राचीनप्रयोगस्यैव का-रणतायाः क्लृप्तत्वेन प्रकृते तदकल्पनात्। प्रयोजनं स्पष्टम् ॥२॥१८॥

यस्मिन् ॥ अत्र गुण एव रूढानां, चित्रया यजेत पशुकामः, पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि, त्रिवृद्बहिष्पवमानः, इत्यादौ चित्राऽऽज्यपृष्ठबहिष्पवमानशब्दानां गुणविधित्वं कर्मनामत्वं वेति चिन्तायां, दध्यादिवद् रूढेषु कर्मनामत्वासम्भवाद् गुणविधित्वमे-वैषाम्। तत्र चित्रापदे तावत्प्रातिपदिकेन चित्रत्वं स्त्रीप्रत्ययेन च स्त्रीत्वं विधीयते। विधेययोश्च परस्परसाहित्यावगतेर्विधेय-सामर्थ्यानुरोधेन प्राणिद्रव्यकयागस्योद्देश्यत्वावगतेः प्रकृतानामपि दधि मधु घृतं पयोधाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमित्ये-तद्वाक्यविहितानां यागानामुद्देश्यत्वासम्भवेऽपि सर्वप्रकृतिभूताग्नीषो-मीययागोद्देशेन सर्वपशुयागोद्देशेन वा विधीयते। न चानेकगुण-विधाने वाक्यभेदः। धेनुर्दक्षिणेतिवदुभयविशिष्टैककारकविधानेना-वाक्यभेदात्। एवमाज्यपदेन घृत, पृष्ठपदेन शरीरावयवः। स च सङ्ख्याविशिष्टः प्रकरणादाज्यैः स्तुवते पृष्ठैः स्तुवते इत्येतद्वाक्यविहित-स्तोत्राङ्गतया यथाक्रमं विधीयते। एवं त्रिवृच्छब्दवाच्यं त्रिभिण्डि † द्रव्यं पवनक्रियाविशिष्टं तथैव तद्वाक्येन विधीयते। सर्वत्र द्रव्याणां

---

* यागस्य,—इति ख॰ ग॰ पुस्तकयोः पाठः।

† त्रिभिण्डी,—इति क॰ पुस्तके पाठः।

स्वाहेति सायं जुहोति सूर्य्योज्योतिर्ज्योतिः सूर्य्यः स्वाहेति प्रातर्जुहोतीति वचनविनियुक्तमन्त्रवर्णेनैव देवताप्राप्तेः। यदग्नये च प्रजापतये च सायं जुहोति यत् सूर्य्याय च प्रजापतये च प्रातरित्यत्र तु लाघवात् सायं प्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानम्। अतएव यथैव केवलदेवत्यमन्त्रलिङ्गवशेन केवलयोर्देवतात्वं, तथा अग्निर्ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति सायं जुहोति सूर्य्योज्योतिर्ज्योतिरग्निः स्वाहेति प्रातरिति मिश्रलिङ्गकमन्त्रवर्णान्मिश्रयोरपि तत्। अतश्च यदग्नये चेति वाक्यस्थाग्निसूर्य्यपदं सायंप्रातःकालीनदेवतापरकं सायंप्रातःपदं च तात्पर्य्यग्राहकम्। चशब्दोपस्थितसमुच्चयस्य च प्रजापत्यन्वयस्य निपातोपसर्गार्थत्वेन युगपल्लाभ विधेयानेकता। अतश्चाग्नेर्देवतात्वादिना अग्निहोत्रहोमे* प्राप्तत्वादग्निहोत्रपदं अग्नेर्होम इत्येवं व्युत्पत्त्या नामधेयम्।

एवमाघारेऽपि उपांशुयाजे सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमित्यनेनैव द्रव्यस्य† प्राप्तत्वात् यथाऽऽज्योद्देशेन संस्कारविधानेऽपि‡ द्वितीयविधिप्रकारापत्तेर्लाघवाद् भावव्युत्पत्त्याघारपदं नामधेयम्। विधेयश्च धातुमात्रो होम एव। इन्द्र ऊर्द्ध्वो अध्वर इत्याघारमाघारयतीति मान्त्रवर्णिकेन्द्रदेवतायामनुसंहितं वैश्यनेन द्रव्यस्य लाभात्। एवं समिदादिष्वपि वक्ष्यते। सर्वत्र द्वितीया करणत्वलक्षणार्थेति न विरोधः ॥४॥१॥०॥

* अग्निहोत्रविहोमे, — इति ख॰ ग॰ पुस्तकयोः पाठः।

† द्रव्यस्य, — इति ख॰ पुस्तके पाठः।

‡ संस्कारविधानेऽपि, — इति ख॰ ग॰ पुस्तकयोः पाठः।

तत्प्रख्यं ॥ इह रूढानां यौगिकानां च सम्भवत्प्राप्तिकानाम-ग्निहोत्रं जुहोति, आघारमाघारयति, समिधो यजति, इत्यादौ अग्निहोत्रादिपदानां गुणविधित्वं कर्मनामत्वं वेति चिन्तायां, प्रसिद्धेर्गुणविधित्वमेव युक्तम्। न चात्र वाक्यभेदः, विधेयानेकत्वा-भावात्। अतोऽग्निहोत्रपदे अग्नये होत्रमस्मिन्निति व्युत्पत्त्या उप-सर्जनार्थोऽग्निर्देवता होमे विधीयते। न च यदग्नये च प्रजापतये च सायं जुहोति इत्यनेन तस्याः प्राप्तत्वादविधानम्। तत्रानेकगुणो-पादानेन विशिष्टकर्मान्तरविधेरावश्यकतया एतद्वाक्यविहिते कर्मणि तत्प्राप्तेरभावात्। अतो यत्र दर्विहोमादावाग्नेयो मन्त्रः पठितः, तादृशदर्विहोमानुवादेन देवतामात्रमनेन विधीयते। वचनेन तत्प्राप्तिसम्भवे मान्त्रवर्णिकविधेरकल्पनीयत्वात्। विशिष्टकर्मान्तरं वा। आघारवाक्येऽपि द्वितीयान्ताघारपदेन चरणसमर्थमाज्यादि-द्रवद्रव्यमभिधीयते। धातुना च चरणाख्यः संस्कारस्तदुद्देशेन विधीयते। अविनियुक्तस्य च संस्कारायोगात् प्रकरणकल्पित-वाक्येनोपांशुयाजाङ्गतया द्रवद्रव्यं विधीयते। चतुर्गृहीतं वा एत-दभूत् तस्याघारमाघार्येत्यनेन वा प्रयाजाङ्गभूतचतुर्गृहीतरूपविशे-षसमर्पणम्। सर्वथाऽऽघारपदं द्रव्यपरं न नामधेयमिति प्राप्ते।

मन्त्रवर्णकल्प्यविधिनैव देवताप्राप्तिसम्भवे अस्य पूर्वप्रवृत्त्या विधि-कल्पकत्वे वैफल्यापत्ते* अभ्युदयग्निरस्त्वलस्य च सम्भवति प्रथम-विध्यापादकधात्वर्थविधावन्याय्यत्वात्स तावद्दर्विहोमानुवादेन दैवता-र्थविधिः। नापि विशिष्टकर्मान्तरविधिः। अग्निर्ज्योतिर्ज्योतिरग्निः

* वैयर्थ्यापत्ते, — इति ख० ग० पुस्तकयोः पाठः।

न विरुध्यते। भावना वा वैयाकरणवदतिरिक्ता नैवाङ्गीक्रियते। अतश्चोद्भिदादिष्वपि सर्वत्र गुणविधित्वमेव। वाजपेयोदाहरणन्तु मूले* गुणसूत्रानुरोधेनेति प्राप्ते।

पचतीत्यस्य पाकं करोति पाकेन करोतीति विवरणाद्धात्वर्थस्य कर्मत्वकरणत्वान्यतरकारकत्वेनैव भावनाऽन्वयः। भावना च यथाऽतिरिक्ता तथा वक्ष्यते। अतश्चेतरकारकाणां धात्वर्थान्वयानुपपत्तेरगत्योभयविशिष्टभावनाविधानं सोमादावङ्गीकृतम्। प्राचीनरीत्या वा मत्वर्थलक्षणा। अन्यथा श्रुत्यैव फलगुणयोर्योगान्वये फलान्वयार्थं यागस्योपादेयत्वविधेयत्वगुणत्वानि गुणान्वये चोद्देश्यत्वानुवादत्वप्राधान्यानीति विरुद्धत्रिकद्वयापत्तेः। उपादेयत्वादिनिरूपणादिकं च कौस्तुभे द्रष्टव्यम्। अतो मत्वर्थलक्षणादिभिया विशिष्टविध्यनुपपत्तेर्नामधेयत्वमेवोद्भिदादीनाम् ॥१॥२॥

तद्गुणास्तु॥ आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीत्यादौ आग्नेयशब्दो गुणविधिः कर्मनामधेयमिति चिन्तायां, अग्नेर्मन्त्रवर्णादेव प्राप्तत्वादाग्नेयपदं नामधेयम्। इति प्राप्ते। पुरोडाशकर्मिकायां भावनायां मन्त्रापेक्षाऽभावान्मन्त्रस्य च तथायोग्यत्वाच्चोपांशुयाजवत् मन्त्रस्य देवताकल्पकत्वम्। न चाघारवदाग्नेयीविनियोगो मन्त्रस्य येन तत्कल्पकत्वं सम्भाव्येत। न च मन्त्रस्याष्टाकपालकर्मकभावनाऽङ्गत्वे प्रमाणमस्ति। प्रकरणस्य उपांशुयाजादिष्वविशिष्टत्वात्। नापि क्रम†, ब्राह्मणपाठक्रमापेक्षया मन्त्रपाठ-

* मूले, — इति नास्ति ख॰ ग॰ पुस्तकयोः।

† क्रमात् — इति क॰ पुस्तके पाठः।

तद्व्यपदेशश्च ॥ श्येनेनाभिचरन् यजेतेत्यादौ पूर्वोक्तबाधकाभावात् प्रसिद्धेः श्येनादिपदानां गुणविधित्वमेव। प्रकृतसोमयागाश्रितो-गुणः फलोद्देशेन विधीयते। विशिष्टकर्मान्तरं वा। न चैवं यथा वै श्येनो निपत्यादत्ते एवमयं भ्रातृव्यं निपत्यादत्ते इत्यर्थवादे स्वस्येव स्वोपमानानुपपत्तिः। उपक्रमनिर्णीतविध्यनुरोधेनोपमालङ्कारस्यार्थवाद-स्यान्यथा नेयत्वात्। ते तद्विनाया इव तद्विनाया इत्यादिवदनन्व-याऽलङ्कारस्याभेदे अनुगुणत्वाचेति प्राप्ते।

नायमनन्वयालङ्कारस्तथात्वे सर्वेषामर्थवादपदानामुपमानान्तरा-भावलक्षकत्वापत्तेः। तद्वरं भूयोऽनुग्रहस्य न्याय्यत्वात् उपक्रमस्थ-एवैकस्मिन् पदे रूपकविधया लुप्तोपमाविधया वा गौणी वृत्ति-मङ्गीकृत्य नामधेयत्वं द्वितीयविधिप्रकारापादकं युक्तमाश्रयितुम्। अर्थवादस्तु रूपकाद्यपेक्षितसादृश्योपपादनार्थः, स च* विनैव लक्षणां पूर्णोपमालङ्कारविधया विधेययागस्तुत्यर्थो न विरुध्यते। तस्मिद्धं चतुर्भिरेव प्रकारैः सर्वत्र नामत्वमिति ॥४॥२१॥

नामधेये ॥ पूर्वमुभयत्र विशिष्टविधिपूर्वपक्षे यानि दूषणानि मत्वर्थलक्षणादीनि दत्तानि, तानि इह आक्षिप्यन्ते। यदि हि यागस्य कारकत्वं स्यात्, ततः सोमादीनां कारकान्तराणां तदन्व-यानुपपत्तेर्भवेन्मत्वर्थलक्षणा, उभयविशिष्टभावनाविधानं वा। न त्वेत-दस्ति। यागस्य क्रियारूपत्वाङ्गीकारात्। अतश्च तस्मिन् सर्वकार-काणां भावनावदेव विनैव मत्वर्थलक्षणां विनैव च वैरूप्यं सम्बन्धो-पपत्तिः। यागस्य च क्रियात्वेऽपि सम्बन्धसामान्येन भावनाऽन्वयो-

* सादृश्योपपादनार्थ सन्, — इति ख॰ ग॰ पुस्तकयो पाठः।

कल्पनाऽनुपपत्तिः। अनुशासनबलेन तत्कल्पनात्। कर्तृत्वस्वरूपयोग्यत्वाद्यावर्त्तकत्वेन वर्णेषु रथकारस्येत्यस्य वैयर्थ्यापत्तेश्च। प्रोक्षणीशब्दे तु रूढिकल्पने प्रमाणाभावाद् यौगिकत्वमेव। प्रयोजनं, विकृतौ एत प्रोक्षणमित्यादौ प्रोक्षणीरासादयेत्यविकृत प्रयोगसंस्कारवाचित्वपक्षे, एतमासादयेति जातिवाचित्वे, प्रोक्षणमासादयेति यौगिकत्वे द्रष्टव्यम् ॥८॥२५॥

तथा निर्मन्थ्ये॥ निर्मन्थ्येनेष्टका पचन्तीत्यत्र निर्मन्थ्यशब्दस्य पूर्ववत् संस्कारवाचित्वे निर्मन्थ्यमाग्नेय पच्यास इति लौकिकप्रयोगेण निरस्तः, मथनकर्मत्वस्य पाकसाधनीभूतेऽग्नावभावेन मथनप्रयोज्यस्य च पाकमवनीतादावपि सत्वेनातिप्रसङ्गादरणिप्रयोज्याग्नित्वावान्तरव्याप्यजातिवाचित्वे प्राप्ते। मथनप्रयोज्यत्वयोगेनैवोपपत्तौ जातिरूढिकल्पने प्रमाणाभावादतिप्रसङ्गस्य च पाकादौ प्राचीनप्रयोगाभावेनैवाबोधकत्वोपपत्तेर्निराकर्त्तुं शक्यत्वान्नवनीते च वाच्यत्वस्यापि वक्तुं शक्यत्वाद् यौगिक एव निर्मन्थ्यशब्दः। एवञ्च निर्मन्थ्येष्टका इत्यत्राग्नेः पाकसामर्थ्यादेव प्राप्तत्वान्मन्थनमात्रविधिरिति तस्यापि प्रयोगमध्ये करण सिद्धान्तप्रयोजनम् ॥१०।२६॥

वैश्वदेव॥ चातुर्मास्येषु वैश्वदेवे प्रथमे पर्वणि आग्नेयादीनष्टौ यागान् विधाय वैश्वदेवेन यजेतेति श्रुतम्। तत्र वैश्वदेवशब्दो गुणविधिः कर्मनामधेयं वेति चिन्तायां, नामत्वे समस्तवाक्यवैयर्थ्यप्रसङ्गादगत्या* आग्नेयादिषु सत्सु देवताविधिः, आमिक्षायागे

* वैयर्थ्यापत्तेरगत्या—इति ख॰ ग॰ पुस्तकयोः पाठः।

क्रमवैपरीत्यस्य पञ्चमे वक्ष्यमाणत्वात्। अतस्तत्सम्बन्धाभावात्तन्मन्त्रानुपपत्तेर्द्रव्यदेवतोभयविशिष्टभावनाविधिप्रतीतिस्तस्य च यागमन्तरेणानुपपत्तेर्भूधातुना तल्लक्षणात् सकलविशेषणविशिष्टयागभावनाविधानेन अर्थादिशेषणानामपि विधिकल्पनात् गुणविधिरेवाग्नेयशब्दः। प्रयोजनं, आग्नेय पय इत्यादौ नामातिदेशेनाग्नेयविध्यन्त' पूर्वपक्षे, सिद्धान्ते तु साम्नाय्यविध्यन्तः ॥७॥१३॥

बर्हि॥ बर्हिराज्यपुरोडाशादिशब्दानां संस्कृतेषु कुशादिषु शास्त्रस्थैः प्रयुज्यमानत्वाद्यूपादिशब्दवत्संस्कारमात्रवाचित्वे संस्कारविशिष्टकुशादिवाचित्वे वा प्राप्ते। जातिं विहाय कैरप्यप्रयुज्यमानत्वात्, संस्कारं विनाऽपि च लोके, बर्हिरादाय गावो गताः, आज्यं क्रय्य, पुरोडाशेन मे माता प्रहेलकं ददातीत्यादौ प्रयुज्यमानत्वाद्व्यभिचाराल्लाघवाच्च कुशत्वादिजातिवाचित्वमेव। प्रयोजनं, यूपावटस्तरणार्थबर्हिरादौ पूर्वपक्षे संस्कारकरणं, सिद्धान्ते नेति ॥८॥१४॥

प्रोक्षणीषु॥ प्रोक्षणीशब्दस्यापि पूर्ववत्संस्कारवाचित्वे प्रोक्षणीभिरद्देजिताः स्म इति लोके संस्कारं विहायापि जातिमात्रे प्रयोगदर्शनात्, रूढ्या जलत्वजातिवाचित्वे वा प्राप्ते। क्लृप्तावयवयोगेनोपपत्तौ रूढिकल्पने प्रमाणाभाव'। अतएवाश्वकर्णादिशब्दे योगबाधे एव तत्कल्पनम्। न चाशामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वरूपयोगाभाव', फलोपधानासम्भवेऽपि लक्षणस्वरूपयोग्यत्वस्य सम्भवात्। न चैव रथकारपदेऽपि रथकर्तृत्वरूप*योगसम्भवेन जातिविशेषे शक्ति-

* स्वरूप, — इति क॰ पुस्तके पाठ।

नां फलान्यनुधावेत्, यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीति श्रुतम्। तत्र द्वादशत्वे अष्टत्वादेः प्राप्तत्वादष्टाकपालादिशब्दा वैश्वानरयागनामधेयमित्याद्यः* पक्षः। स्वरूपेण प्राप्तावपि परिच्छेदकत्वेन प्राप्त्यभावाद्गुणविधय एव एते। अष्टत्वमष्टाकपालद्रव्यं वा पूर्वयागे विधीयते। उपक्रमोपसंहारैक्येन चैकवाक्यत्वप्रतीतेर्न द्वादशकपालस्योत्पत्तिशिष्टता। अथवा, अस्तु वाक्यनानात्वं, तथापि यद् द्वादशकपालो भवतीत्यनेनैव तद्विधिः। वैश्वानरवाक्ये तत्पदमनुवाद एवेति द्वितीयः। ब्रह्मवर्चसादिरूपफलोद्देशेन प्रकृतयागाश्रितगुणा एवाष्टाकपालादयो विधीयन्ते इति तृतीयः।

सिद्धान्तस्तु, सम्भवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वात् प्रकृतयागस्यैवेयं सर्वा† स्तुतिः। यदङ्गभूतद्वादशकपालस्यावयवोऽष्टाकपालादिरप्येकैकफलसाधनं, तत्र सर्वावयवोपेतद्वादशकपालस्य सर्वफलप्रयोजकत्वे कः सन्देह इति यागस्तुतिः। अष्टाकपालपदं चाग्नेयाष्टाकपाले शक्तं गौण्या वृत्त्या अष्टत्वाश्रयकपालश्रपितत्वसादृश्येन द्वादशकपालावयवे गौणम्। तेन चावयवद्वाराऽवयवी द्वादशकपालो लक्ष्यते। तेन लक्षणया यागस्तुतिरिति। इदं चाधिकरणं चौदुम्बराधिकरणन्यायेन गतार्थमपि‡ शिष्यशिक्षार्थमुक्तमिति ध्येयम् ॥१२॥१८॥

---

* मित्येक – इति क॰ पुस्तके पाठः।

† सर्वापि, – इति ख॰ ग॰ पुस्तकयो पाठः।

‡ पुनरुक्तमपि, – इति क॰ पुस्तके पाठः।

विश्वेदेवदेवताया: माम्नानात् । देवताविशिष्टकर्मान्तरविधानं वा गुणात् । एतस्मिन्नेव वा कर्मणि आमिचावाक्येन द्रव्यमात्रविधानम् । एवञ्चाष्टौ हवींषि इति लिङ्गदर्शनस्याप्युपपत्तिरिति प्राप्ते । नाग्नेयादिषु गुणविधि । उत्पत्तिशिष्टदेवताऽवरोधात् । नापि कर्मान्तरविधि. । भेदबोधकप्रमाणाभा नामत्वेनोपपत्तौ विधिगौरवापादकभेदबोधकत्वानुपपत्ते । अतएव नामिचावाक्येऽपि द्रव्यमात्रविधानम् । आग्नेयमष्टाकपालं निर्वपेदित्याग्नेयादिवाक्ये * निर्वपेदित्यस्य विशिष्टविधायकस्यामिचावाक्येऽनुषङ्गस्य द्रव्यमात्रविधायित्वे वैरूप्यापत्तेश्च । अत आग्नेयादीनामष्टानामपि यागानां नामधेयं वैश्वदेवशब्दः । उत्पत्तिशिष्टदेवताऽवरोधसद्भावतत्प्रख्यन्यायात् । प्रवृत्तिनिमित्तञ्च विश्वदेवदेवताकत्वामिचायागघटितसमुदायाश्रयत्वरूपम् । वाक्यञ्च समुदायसिद्ध्यर्थं समुदायिनामनुवादकम् । तत्प्रयोजनञ्चाष्टानामपि यागानां वसन्ते वैश्वदेवेन यजेतेति वसन्तादिसम्बन्धद्वारा चातुर्मास्यप्रकरणलाभेन फलसम्बन्धसिद्धि । इतरथा आमिचायागस्यैव विश्वेदेवदेवताकत्वाद् वसन्तादिसम्बन्धद्वारा चातुर्मास्यप्रकरणलाभेन फलसम्बन्धापत्तेरितरेषामङ्गत्वापत्तिरिति कौस्तुभे स्पष्टम् ॥१।४।१३॥

पूर्ववत् ॥ वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इत्यनेन याग विधाय यदष्टाकपालो भवति गायत्र्यैवेनं ब्रह्मवर्चसेन पुनाति इत्यादिनाऽष्टाकपालनवकपालद्वादशकपालैकादशकपालद्वादशकपालाः-

---

* वाक्यस्य, – इति क• पुस्तके पाठ ।

पस्थितिरिति प्राञ्चः। वस्तुतस्तु एकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणमिति स्मारकविधयैव तदुपस्थितिः। गौणीज्ञानकार्य्यतावच्छेदकञ्च निरुक्तोभयविधसम्बन्धान्यतरसम्बन्धेन स्वप्रकाश्यसमवेतधर्म्मप्रकारकदेवदत्तविशेष्यकशाब्दत्वमिति न क्रूरत्वादीनामशाब्दत्वप्रसङ्गः। न च गौण्या लक्षणातो न भेदः, स्वप्रकाश्यवृत्तिगुणानामेव यत्र सम्बन्धित्वेन रूपेण बोधस्तत्र लक्षणा, क्रूरत्वादिना बोधे तु गौणीति तयोर्भेदात्। ते च गुणाः षड्विधाः। क्वचित्तल्लिङ्गिः तत्कार्य्यकारित्वम्* यथा यजमानपदे। यजमानो यथा स्वकार्य्यकर्त्ता, तथा प्रस्तरोऽपीति। एवञ्च गौणीगर्भलक्षणया प्रस्तरस्तुतिः। एवमन्येऽपि पञ्च गुणा अग्रिमसूत्रैर्द्रष्टव्याः ॥१३॥२९॥

जातिः॥ अग्निर्वै ब्राह्मण इत्यत्र पूर्ववदेवाग्निशब्दो ब्राह्मणे गौणः, द्वयोरप्यग्निब्राह्मणयोरेकमुखप्रभवत्वात्, अग्निजननसमानजातीयजननमेवात्र गुणः ॥१४॥३०॥

सारूप्यम्॥ आदित्यो यूप इत्यादौ तु सारूप्यं गौणीनिमित्तम्। न च सर्वत्र तदेव निमित्तं, कोऽत्र विशेषः। चक्षुर्ग्राह्यतेजस्त्वाद्यत्र निमित्तमिति प्राञ्चः। वस्तुतस्त्वन्यत्र प्रकाश्यनिष्ठगुणस्यैव स्वसमानजातीयगुणवत्तासंसर्गेण प्रकारत्वान्निमित्तता। न तु सारूप्यस्य, तस्य संसर्गत्वात्। इह तु प्रकाश्यनिष्ठगुणसजातीयगुणवत्त्वरूपस्य सारूप्यस्यैव समवायादिसंसर्गेण प्रकारत्वात्तदेव निमित्तमिति विशेषः ॥१५॥३१॥

---

* कार्य्यकारित्वं, — इति ख॰ ग॰ पुस्तकयोः पाठः।

तत्सिद्धिः ॥ यजमानः प्रस्तर इत्यादावपि सामानाधिकरण्या-द्देकमितरस्य नामधेय, रूढ़त्वेन तदसम्भवाद्वा जघन्यप्रस्तरपदलक्षित-प्रस्तरकार्यस्रुग्धारणोद्देशेन यजमानोऽधिकरणत्वेन विधीयते इति प्राप्ते । प्रत्यक्षविध्यश्रवणात् प्रस्तरमुत्तरं बर्हिषः सादयतीति विध्य-न्तरैकवाक्यत्वाच्च तदर्थवादत्वमौदुम्बराधिकरणन्यायेन सिद्धमेव । यजमानपदन्तु गौण्या वृत्त्या प्रस्तरस्तावकम् ।

ननु अध्यारोपितार्थवृत्तित्वे गौणत्वं लोके प्रसिद्धम्। सिंहत्वस्य देवदत्ते आहार्य्यारोपात् । न च तद्वेदे * सम्भवति, आरोपकपुरुषा-भावादिति चेत् । विनाऽध्यारोपं सिंहशब्दस्य सादृश्यमात्रविवक्षया-देवदत्ते काव्यलोकयोः प्रयोगदर्शनात् स्वशक्यगुणसमानजातीयगुण-योगनिमित्तत्वं गौणत्वम् । सिंहनिष्ठक्रूरत्वसमानजातीयक्रूरत्वयोगाच्च सिंहपदस्य देवदत्ते प्रवृत्तेः सिंहो देवदत्त इत्यत्र लक्षणसमन्वयः । पुष्पादौ खसम्बन्धित्वाध्यारोपेण चारोपितं खपुष्पशब्दार्थमङ्गीकृत्य तद्वृत्तिगुणानामसत्त्वादीनां सिद्धान्ते सत्त्वाच्च न खपुष्पं भवत्यपि-द्धान्त इत्यादावव्याप्तिः। अतएवैतादृशगौणत्वस्य वेदेऽप्यस्त्येव सम्भवः।

यद्यपि च रूपकादिस्थले सौन्दर्य्यस्य तरङ्गिणीत्यादौ आरोपे-णापि गौणी वृत्तिर्दृष्टा, तथापि सादृश्यमात्रेणापि उपमालङ्कारस्थले साऽनुभूयमाना नापह्नोतुं शक्या । अतश्चोभयसाधारणेन स्वशक्य-समवेतवत्ता गौणी वृत्तिः । समवेतत्वञ्च क्वचिदारोपितत्वसम्बन्धेन क्वचिच्च स्वसमानजातीयगुणवत्तासम्बन्धेनेति भेदः।

अत्र च सिंहपदेन शक्या सिंहोपस्थित्यनन्तरं लक्षणया क्रूरत्वो-

* तद्वेदे, – इति ख० ग० पुस्तकयो पाठ ।

यते। तत्रोपधानविधिफलन्तु पूर्ववत्। मन्त्रविधिफलन्तु उपधाने तन्नियमः। मन्त्रा हि इष्टकामात्रप्रकाशकास्तद्ग्रहणादिष्वपि प्राप्तिसम्भवात्रोपधाने नियमेन प्राप्नुवन्ति। अतस्तन्नियमो ग्रहणादिपरिसङ्ख्या वा* फलम्। मध्यमचितिसम्बन्धश्च, यां वै काञ्चनब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादिति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिसम्बन्धस्य विधानात्। अन्यथा तत्तच्चित्यवान्तरप्रकरणपाठरहितानां मन्त्राणां चयनमहाप्रकरणेन सर्वचितिषु अन्तिमायामेव वा निवेशापत्तेः। अतो मध्यमचितिसम्बन्धार्थं मन्त्रविधिः। इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं चेष्टकावाचिप्रत्यक्षब्राह्मणपठितपदविधेयमन्त्रकत्वम्। स्तृतिपदं हि स्तृतिप्रकाशकमन्त्रोपधेयेष्टकापरम्। तत्र च विशेषणांशस्य मन्त्रस्य विधेयत्वात्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः। इतिकरणविनियुक्तत्वोर्कक्षणमन्त्रस्यापि मध्यमचितिमात्रसम्बन्धापत्तेरिष्टकावाचीतिपदविशेषणम्। अतश्च मन्त्रविशिष्टोपाधानमत्र विधीयते। स्तृतिपदं परं गौण्या वृत्त्या सप्तदशसङ्ख्याकस्तृत्यस्तृतिमन्त्रपरम्। यत् सप्तदशेष्टका उपदधातीत्यर्थवादानुसारात्। तत्र चतुर्दश स्तृतिमन्त्रास्त्रयोऽस्तृतिमन्त्रा इति स्तृतिशाकल्यम्। गुणो गौणीवृत्तिनिमित्तम् ॥१७॥३३॥

लिङ्गसमवायात् ॥ प्राणभृत उपदधातीत्यादौ तु अल्पत्व निमित्तम्। शेषं पूर्ववत्। एवं षट् गौणीवृत्तिप्रकाराः ॥१८॥३४॥

---

* परिसङ्ख्या वा, — इति ख॰ ग॰ पुस्तकयोर्न पाठः।

प्रशंसा ॥ अपशवो वा अन्ये गो अश्वेभ्यः पशवो गोऽश्वा इत्य-जाजादीनां तत्र तत्र विहितत्वात्पशुकार्य्ये प्रतिषेधस्य पर्य्युदासस्य वाऽनुपपत्तेरर्थवादत्वम् । अपशुशब्दो घटादौ मुख्यो गवाश्वगत-प्राशस्त्याभावरूपगुणयोगादजादौ गौणः सन् लक्षणया गवाश्वस्तुत्यर्थः । प्राचां मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतं प्राशस्त्यं लक्षयित्वा नञा तदभावरूपो गुण उपस्थाप्यत इति विशेषः । सर्वथा प्रशंसा गौणीनिमित्तघटिकेति सिद्धम् ॥१६॥२२॥

भूमा ॥ सृष्टीरुपदधातीत्यत्र विध्यन्तरैकवाक्यत्वाभावात् प्रत्यक्ष-विधिश्रवणाच्च विधित्वम् । तत्र सोपधानमेवेष्टकासंस्कारार्थत्वेन* विधीयते । यद्यपि चेष्टकानां चयनाङ्गत्वान्यथानुपपत्त्यैवोपधान प्राप्तेन, तथापि तत' पूर्वमेव प्रत्यक्षविधिना विधीयते । तत्फलञ्च प्रत्येकोपाधानसिद्धिश्चयनसमानकर्तृकत्वसिद्धिश्च । अन्यथा समुदितोपधानमपि कदाचित् प्राप्नुयात् । आर्थिकत्वाच्च चयनभिन्नकर्तृकत्वमपि । सति त्वस्मिन्निष्टकासंस्कारद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्तिन्यायादङ्गप्रधानयोरेककर्तृकत्वाच्च फलद्वयसिद्धिः । सृष्टिपदन्तु लिङ्गप्रकरणप्राप्तसृष्टिमन्त्रमात्रस्य गौण्याऽनुवाद-इति भाष्यकारः ।

वार्त्तिककारस्तु, सोपधानमात्रविधिः । तथा सति प्राणभृत-उपदधातीत्याद्यनेकोपधानविधिवैयर्थ्यापत्तेः । अतो मन्त्रमात्रमुप-धानानुवादेन, मन्त्रविशिष्ट वोपधानमिष्टकासंस्कारार्थत्वेन विधी-

---

* संस्कारत्वेन, — इति क॰ पुस्तके पाठ ।

# अथ द्वितीयोऽध्यायः ।

श्रीगणेशाय नमः ।

भावार्था ॥ एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते । यद्यपि च तदपि एतावत्प्रमाणप्रतिपाद्यत्वेन रूपेण बुद्धमेव, तथापि एकत्वानेकत्वादिरूपेणाबुद्धत्वादिह तेन रूपेण निरूप्यते । अत्र च शब्दान्तरादिषट्प्रमाणकभावनाभेद एवाध्यायार्थः । धात्वर्थभेदस्तु तत्सिद्ध्यर्थं क्वाचित्को निरूप्यते, अपूर्वभेदोऽपि फलत्वेनेति न तावध्यायार्थौ ।

फलीभूतापूर्वभेदोऽपि अपूर्वसाधनभेदाधीन इति तत्साधनजिज्ञासायां स्वर्गादिसाधनस्यैवावान्तरव्यापाररूपापूर्वं * प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वमुतोपपदार्थस्य सोमादेरपीति चिन्तायां प्राथमिकभावनान्वयस्य तावत् सिद्धान्तिनोऽपि सम्मतत्वादौत्तरकालिकफलान्वयोऽपि सर्वेषामेवेति प्राप्ते। सर्वेषां करणत्वे अनेकादृष्टकल्पनाप्रसङ्गादेकस्यैव फलनिरूपिता करणता, अन्येषां तु दृष्टविधयैव करणार्थत्वम् । तदत्र धात्वर्थस्यैव करणत्वे सोमादीनां तज्जनकत्वेनैव दृष्टार्थता । सोमादीनां करणत्वे च धात्वर्थस्याश्रयविधयैव दृष्टार्थतेति नानेकादृष्टकल्पना ।

---

* व्यापारापूर्वं – इति ख० ग० पुस्तकयोः पाठः ।

सन्दिग्धेषु ॥ अक्ताः शर्करा उपदधातीत्यत्र अक्ता इत्यनेनाविशेषाद् यत्किञ्चिदञ्जनसाधनद्रव्यस्य विधिना निर्णीतत्वादुपसंहारस्थेन तेजो वै घृतमित्यर्थवादेन सङ्कोचानुपपत्तेः नार्थवादस्य सन्दिग्धार्थनिर्णये प्रामाण्यमिति प्राप्ते। विधेरविशेषप्रवृत्तत्वेनेव घृतमात्रग्रहणेनाप्युपपत्तेरितराक्षेपकले प्रमाणाभावादुपक्रमस्याविरोधेनोपपत्तौ च उपसंहारस्यस्यार्थवादस्योपलक्षणत्वे प्रमाणाभावाद्विध्यर्थवादयोरेकवाक्यत्वेनैकविषयकत्वस्यावश्यकत्वाच्च युक्तं वाक्यशेषस्य सन्दिग्धार्थनिर्णयेऽपि प्रामाण्यमिति घृतेनैवाञ्जनम् ॥१८॥२५॥

अर्थाद्वा ॥ स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति इत्यादौ विधेरवदेयद्रव्यविषये सन्दिग्धस्य सामर्थ्यान्निर्णयः। स्रुवेण द्रवमेवाज्यादि। स्वधितिना मांसादि। हस्तेन संहतं* पुरोडाशादि। अतश्च सामर्थ्यसहकृतावद्यतिपदेनैव लक्षणया द्रवाद्यवदानस्य उद्देश्यत्वात्तदनुवादेन स्रुवादिविधौ न किञ्चिद्बाधकम्। एवं अञ्जलिना सक्तून् जुहोतीत्यादावपि न संपुटाकारोऽञ्जलिः, अपि तु व्याकोशात्मक एव। सामर्थ्यात्। तदेवं विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि। अतः परं भेदादिना तत्स्वरूपं निरूपयिष्यते ॥ २०॥२६॥ ग्रन्थसङ्ख्या ६५०॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
प्रथमाध्यायस्य चतुर्थपादः ॥०॥

---

* हस्तेनासंहतं, — इति ख० ग० पुस्तकयोः पाठः।

नन्विद् धात्वर्थातिरिक्तभावनामस्ति* भवेन्न तु तस्यां प्रमाण-मस्ति, धात्वनामेव विक्लित्यादिफल इव† तत्प्रयोजकव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वात् । अतो यत्नादिरूपभावनाया अपि धातुवाच्यत्वाद्धात्वर्थ एव क्रियारूपे सकलकारकान्वयो न तु यागस्य पदश्रुत्या फलकरणत्वमिति चेत् ।

पचति, पाकं करोति पाके यतत इति पाकात् पृथक् विशेष्य-माणयत्नादेः पच्यर्थत्वानुपपत्तेः । न च घटन्तपाकशब्दस्य फल एव शक्तत्वात् पृथक् विवरणोपपत्तिः । व्यापारविगमेऽपि फलदशाया पाको विद्यते इति प्रयोगापत्तेस्तस्यापि व्यापारवाचित्वावश्यकत्वा-वात् । अतो भावमानो यत्नादिर्लिङ्वाच्य एव । अतएव धातु-वाच्यमपि साक्षात् फलजनकफूत्कारादिव्यापारहत्तिपाकत्वादिक-मेव । तच्च जातिरखण्डोपाधिर्वेत्यन्यदेतत् ।

तज्जनकयत्नादिकन्तु आख्यातवाच्यमेव । तत्र शक्ततावच्छेद-कन्तु करोतिविशेष्यमाणतिष्ठादिकं, लाघवात् निष्ठादिकमेव वा । न तु स्थानित्वं, तदुपस्थापकादेशविशेषाणां पदज्ञाननिष्ठकारण-तावच्छेदककोटौ प्रवेशे गुरुभूतकारणतावच्छेदकघटितानन्तकार्य-कारणभावकल्पनापत्तेः । अप्रवेशे यथाकथञ्चिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः । शक्यतावच्छेदकन्तु फलोद्देश्यकधात्वर्थाति-रिक्तव्यापारत्वम् । फलञ्च क्वचिद्धात्वर्थं क्वचिच्च स्वर्गादीति यथा-विवचम् ।

---

* सत्वेऽव, — इति ख॰ ग॰ पुस्तकयो पाठ ।

† विक्रियादिफलइव, — इति क॰ पुस्तके पाठ ।

एवं स्थिते विशिष्टजिज्ञासायां सोमादेरेव फलकरणत्वं * तस्य सिद्धत्वेन योग्यतारूपलिङ्गात्। तृतीयायाः करणत्वे प्रकृत्वेन कारकश्रुतेरेकपदोपात्तत्वरूपपदश्रुत्यपेक्षया बलीयस्त्वाच्च। फलान्वये पदश्रुतेरप्यभावाच्च। अतएव यागादिभावार्थः सोमाद्यर्थ एव। न च तदर्थत्वे अदृष्टकल्पना। अग्निहोत्रहोमेन दधिनिष्ठकरणता† सम्पादनवद्यागेनादृष्टमन्तरेणैव सोमनिष्ठकरणतासम्पादनेन यागस्य सोमाङ्गत्वोपपत्तेरिति प्राप्ते।

पदश्रुत्या यागस्यैव फलकरणत्वम् *। यद्यपि च फलान्वयेन सा, तथापि प्राथमिकभावनाऽन्वये तस्य यत् प्रमाणं तद्गतबलवत्त्वस्य तस्यामवस्थायामकिञ्चित्करत्वेऽपि पाष्ठिकफलान्वये तस्य निर्णायकत्वात्। अतश्च प्राथमिकभावनाऽन्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका। न च तस्याः कारकश्रुत्यपेक्षया दौर्बल्यम्। लाचणिकत्वेऽपि यागकरणत्वस्य सोमकरणत्वान्वयात् प्रागभावनायामन्वितत्वेन तदन्वयस्य प्राथम्यात्। अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः। परिपूर्णं पदं पदान्तरेणान्वेतीति‡ न्यायात्। न च प्रथमावगतस्यापि करणस्य चरमकालिकेन बाधः उपजीव्यत्वादिति यागः फलसाधनं सोमोयागार्थ इति सिद्धम्। प्रयोजनं, सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे, सिद्धान्ते तु तत्॥

---

* करणत्वं, — इति ख॰ ग॰ पुस्तकयोः पाठः।

† दधिकरणता, — इति ख॰ ग॰ पुस्तकयोः पाठः।

‡ पदार्थान्तरेणान्वेतीति, — इति ख॰ ग॰ पुस्तकयोः पाठः।

पार्ष्टिकान्वयबोधवेलायामवगम्यमाना कौस्तुभ एव द्रष्टव्या। तस्मात् सिद्धमाख्यातवाच्या आर्थी भावना, तस्याश्च स्वर्गादि भाव्यम्, धात्वर्थश्च करणम्, सोमादिकन्तु करणानुग्राहकत्वादितिकर्त्तव्यतेति ॥१॥

चोदना ॥ धात्वर्थादेवापूर्वमिति स्थिते ऽपूर्वमेवास्ति न वेति चिन्तायां, क्रमयागध्वंसद्वारेणैव क्षणिकस्यापि यागस्य स्वर्गसाधनत्वोपपत्तौ नापूर्वकल्पने गौरवापत्तेः। न च नित्यत्वाद्ध्वंसस्य,

——————धर्मं क्षरति कीर्त्तनात्।
प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि॥

इति कीर्त्तनप्रायश्चित्तनाश्यत्वानुपपत्तिः। कीर्त्तनादेः फलोत्पत्तिप्रतिबन्धकत्वाङ्गीकारेण तदनाश्यत्वात्। कीर्त्तनात्यन्ताभावविशिष्टज्योतिष्टोमध्वंसत्वेन कारणत्वकल्पनाद्वा न कश्चिद्दोषः। अतो नापूर्वं किञ्चित् प्रमाणमस्ति इति प्राप्ते।

क्षरतिनश्यत्योर्नाशवाचित्वाभ्युपगमे लक्षणापत्तेर्नाशयोग्यमपूर्वमेव कल्प्यते। गौरवस्य फलमुखत्वेनादोषत्वात्। अतश्च प्रधानेन स्वर्गादिफले जननीये अपूर्वं तदवान्तरव्यापारः*। न च फलवत्तादात्मनिष्ठ। अवान्तरव्यापारत्वादेव च न यागादेरन्यथासिद्धिः।

तत्र† यद्येकमेव प्रधानं, तत्र पूर्वोत्तराङ्गसहितात् तस्मादपूर्वोत्पत्तेः प्रधानाव्यवहितमेकमुत्पद्यपूर्वं, तेन च सर्वाङ्गान्ते परमापूर्व-

* अपूर्वमवान्तरव्यापारः — इति ख॰ पुस्तके पाठः।

† तदत्र, — इति ख॰ ग॰ पुस्तकयोः पाठः।

एवञ्च रथो गच्छतीत्यादौ न लक्षणा, गमनानुकूलव्यापारस्यै-वाख्यातार्थत्वात् इति पार्थसारथिः। वस्तुतस्तु यत्नत्वमेव शक्यता-वच्छेदकं, लाघवात्। तद्बाधे तु सर्वत्राश्रयत्वे लक्षणा। यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्मसाकाङ्क्षत्वं, करोतिपर्यायत्वादेककर्मकत्वं, फलभावनानुकूलत्वाच्च अर्थभावनात्वं द्रष्टव्यम्।

इयञ्चाख्यातोपात्ता भावनैव मुख्यविशेष्या। तद्व्यतिरेकेणेतरपदा-र्थान्वयापर्यवसानात्। तस्यामेव चाख्यातोपात्तायां क्तप्रत्ययाद्युपा-त्तायां वा योग्यताद्यनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्द-गम्यो यः सुबुपात्तलिङ्गसङ्ख्यातिरिक्तोऽर्थस्तस्य सर्वस्यापि प्रकारतया अन्वयः। निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति तथाऽन्वयो-ऽन्यसमभिव्याहारादावन्येनापि। प्रातिपदिकार्थोऽपि सुबर्थे करण-त्वादौ। तद्धितसमासादिसखण्डप्रातिपदिकावयवार्थानान्तु यत्र कार-कतासम्बन्धेन तद्धितसमासादिवृत्तिर्यथा आग्नेय इत्यादौ, तत्राग्नेर्दे-वतात्वाद्भावनायामेवान्वयो न तु तद्धितोपात्ते द्रव्ये। स तु पार्ष्ठिक-एव। यत्र तु कारकातिरिक्तसम्बन्धेन सा, तत्र परस्परान्वयोऽपि। यथाऽश्वाभिधानीमित्यादौ। एवं सुबुपात्तलिङ्गसङ्ख्ययोः समानाभि-धानश्रुत्या सुबर्थे करणत्वादावेवान्वयः। तद्व्यतिरिक्तपदार्थमात्रस्य तु सुबर्थकरणत्वादेर्धात्वर्थस्य कर्तृत्वादेकत्वादेश्च कालादेर्लडाद्यर्थस्य विध्यादेर्लिङाद्यर्थस्य च सर्वस्यैव लिङ्गानन्वयिभावनावाचिपदोप-स्थाप्यायां भावनायामेवान्वयः। अतएव भावनादिपदोपस्थापितायां तस्यां नान्वयः। आख्यातेन क्तादिना वोपस्थितायान्तु भवत्ये-वान्वयः प्रकारतया। प्रकारताघटकाः सम्बन्धास्तु सर्वे यथायथं

पक्षे दलनादेरप्यर्थप्राप्तत्वेन तण्डुलनिष्पत्तिफलको नियमः । तथापि वैफल्यात् । न च तस्यादृष्टार्थत्वम् । अदृष्टस्यावश्यकल्पनीयत्वे शास्त्रावघातादेव तत्कल्पनौचित्यात् । अतोऽदृष्टार्थमेवावघातः । तदपि चादृष्टं न व्रीहिनिष्ठम् । तत्तावच्छिन्नं प्रति प्रत्यासत्त्या समवायिकारणत्वात् । अतः पूर्ववदेव व्रीह्य एवावघातार्था इति व्रीहिविशिष्टावघात एवादृष्टार्थमारादुपकारकत्वेन विधीयते इति प्राप्ते ।

दृष्टसम्भवे अदृष्टस्यान्याय्यत्वादितुषीभाव एवावघातफलम् । न च तस्याक्षेपादेव प्राप्तत्वेन विधिवैयर्थ्यम् । दलनाद्युपायान्तरव्यावृत्तिफलकनियमस्यैवावघाताश्रितस्यादृष्टार्थं विधेयत्वात् । अतएव कृष्णलचरौ अवघाताभावेन* तस्य लोपः । वस्तुतस्तु श्रौतस्यावघातस्यैवाक्षेपतः पूर्वप्रवृत्त्या वितुषीभावार्थं विधेयत्वम् । अतस्त्वाक्षेपप्रतिबन्धाद्दलनादिव्यावृत्तिफलको नियमः फलम् । वैतुष्यस्य च दलनेनापि जायमानत्वादैयर्थ्यशङ्का तु, अवघातादेव व्रीहिनिष्ठादृष्टस्योत्पत्तिकल्पनानिराकर्त्तव्या । तददृष्टस्य च जन्यत्वमात्र लाघवात् कल्प्यते न प्रयोजकत्वमपि । दृष्टरूपे वैतुष्य एव तत्कल्पनात् । अतः कृष्णलचरौ वैतुष्याभावेऽपि तल्लोपः । आर्थिकविध्यन्तरकल्पनाच्च नानेकोद्देश्यता । तत्तददृष्टस्य च द्वितीयादिश्रियापकप्रमाणेन व्रीह्यादिनिष्ठत्वस्यैवावगतेस्तत्त्वेनैव समवायिकारणता नासत्त्वेन । अतस्त्ववघातस्यादृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूतव्रीह्युद्देशेन विधानात् सिद्धं संस्कारकर्मत्वम् । प्रयोजनं, यागार्थव्रीह्यपेक्षया व्रीह्यन्तरमवघातार्थमुपादेयं पूर्वपक्षे, सिद्धान्ते नेति ॥ ३॥

---

* अवघाताभावे, – इति क० पुस्तके पाठ ।

मपरमिति द्वे अपूर्वे। एवं प्रधानभेदेऽपि प्रतिप्रधानं उत्पत्त्यपूर्वभेदः परमापूर्वं त्वेकमिति ज्ञेयम्*। दर्शपूर्णमासयोस्तु पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति वाक्यद्वयेन यागत्रयकरणतानां त्रिकाम्मरनिरपेक्षाणां साहित्यावगतेः साहित्यस्य चैककार्यनिरूपितत्वं विनाऽनुपपत्तेः प्रतिसमुदायं समुदायापूर्वमपरं तेन च परमापूर्वमिति† मवापूर्वसिद्धिः। एवमन्यत्रापि चातुर्मास्यद्वादशाहादिषु अपूर्वकल्पना ज्ञेया।

अङ्गेषु तु सन्निपत्योपकारकाङ्गजन्यापूर्वाणां प्रधान एवोत्पत्त्यपूर्वजननानुकूलयोग्यताजनने उपयोगः। अन्तिमप्रधानगतयोग्यतया च नाशः। आरादुपकारकजन्यानां तु उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजनने उपयोगः। अव्यवहितञ्च कार्यं समुदायापूर्वसत्त्वे तदेव, तदभावे परमापूर्वं स्वर्गादेव वेति ज्ञेयम्। अन्तिमयोग्यतोत्पत्तौ च नाशः। यदि तु परमापूर्वं न तथा किञ्चित्प्रमाणमित्याशङ्क्येत, तर्हि माऽस्तु तत्। अङ्गानां तु आरादुपकारकाणामुत्पत्त्यपूर्वं एव समुदायापूर्वाभावे फलानुकूलयोग्यताजननमेव कार्यमस्तु। सर्वथा सिद्धमपूर्वम् ॥९॥

तानि द्वैधम् ॥ प्रोक्षणीरवहन्तीत्यादौ पूर्ववदेवावघातस्य फलभावनाकरणत्वमविवादम्। तत्र फलं न प्रोक्षयः। अजन्यत्वात्। नापि वैतुष्यम्। तज्जनकत्वस्य लोकसिद्धत्वेनाविधेयत्वात्। नापि

* स्थितम्, — इति ख॰ ग॰ पुस्तकयोः पाठः।

† प्रतिसमुदायं परमापूर्वमपरं तेन च परमापूर्वमपरमिति, — इति ख॰ ग॰ पुस्तकयोः पाठः।

स्तशस्त्रयो ॥ प्राञ्ये स्तुवते, प्रउग शंसतीत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतयाऽन्यमन्त्रवदेव दृष्टार्थत्वादवघातादिवदेव सन्निपत्योपकारकत्वमिति प्राप्ते। लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात् प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्य च स्तोत्रशस्त्रपदवाच्यत्वात् तेषां गुणिप्रकाशनतात्पर्यकत्वाभावेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम्। अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारकत्वमेव। स च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम्। लिङ्गादेव तादृकत्वोपपत्तौ विधिर्वैयर्थ्यात्। एवञ्च माहेन्द्रयागसन्निधौ ऐन्द्री स्तुतिरुपपन्ना भवति। इतरथा शब्दसमवायिनी देवता विधिगतशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम्। अतो यचेन्द्र एव देवता तत्रोत्कर्षापत्तिः। सामान्यसम्बन्धबोधकप्रमाणाभावेन वा मनोताच्चाग्निशब्दवल्लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः। तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ॥५॥

विधिमन्त्रयो ॥ गुणकर्मप्रधानकर्मविधायकाख्यातद्वये निरूपिते प्रसङ्गादभिधायक तृतीयमाख्यात निरूप्यते। मन्त्रगताना ब्राह्मणगतानाञ्च यत्तच्छब्दादिसमभिव्याहृतानामाख्यातानामपि विधायकत्वम्। सत्यामपि च प्रमाणान्तरेण प्राप्तौ अभ्यासात् कर्मभेद इति प्राप्ते। देवाश्च यामिर्यजते, यस्योभय हविरार्त्तिमार्च्छेदित्यादौ यच्छब्दस्य* प्रासिद्धोनकत्वेन स्वविषये अज्ञातज्ञापनरूप-

* यत्तच्छब्दस्य,—इति ख॰ ग॰ पुस्तकयो पाठ।

धर्ममात्रे ॥ व्रीहीन् प्रोक्षति, स्रुचः सम्मार्ष्टीत्यादौ दृष्टोपकारकत्वासम्भवात् द्वितीयायाश्च साध्यत्ववत्करणत्वेऽपि सक्तून् जुहोति, वत्सज्ञान् शिखण्डकान् कुर्वित्यादौ प्रयोगदर्शनात् पूर्वाधिकरणपूर्वपक्षवदर्थकर्मत्वमेव । वत्सज्ञानां हि करोतेर्द्विकर्मकत्वापत्तेर्न* साध्यत्वम् । अतः करणत्वमपि द्वितीयार्थः । अतश्च व्रीहिकरणक प्रोक्षणमेवादृष्टार्थत्वेन विधीयते इति प्राप्ते ।

कर्मणि द्वितीयेत्यनुशासनाद् घटं करोतीत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थो न करणत्वम् । अनेकशक्तिकल्पनप्रसङ्गात् । कर्मत्वञ्च कर्तुरीप्सिततमं कर्मेतिसूत्रोक्तेप्सिततत्वरूपमेव । अपि तु तथायुक्तञ्चानीप्सितमिति सूत्रादीप्सितानीप्सितसाधारणं साध्यत्वमेव । यथा चैवं सति न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभ एव प्रदर्शितम् । अतश्च व्रीहीणां द्वितीयया साध्यत्वाभिधानात् यागाङ्गत्वावगमेन चेप्सितत्वप्रतीतेस्तदुद्देशेन प्रोक्षणं विधीयते । दृष्टद्वारासम्भवेऽपि चादृष्टमेव द्वारं व्रीहिनिष्ठं कल्प्यते । अतएव यत्र नोपयोगः क्लृप्तः, न वा कल्पयितुं शक्यः, यथा सक्तुषु, तत्र द्वितीयया करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमस्यैव अदृष्टार्थं विधानम् । न चानीप्सितकर्मत्वेनाप्यन्वयोपपत्तेर्न करणत्वलक्षणेति वाच्यम् । तथा सति अदृष्टोपकारस्यापि भावनायां कर्मत्वेनान्वयावश्यम्भावे तस्य द्विकर्मकत्वापत्त्योद्देश्यानेकत्वनिमित्तकवाक्यभेदापत्तेः । अतः सक्तुकरणकहोमस्यारादुपकारकत्वेऽपि प्रोक्षणादेः सन्निपत्योपकारकत्वमेव । प्रयोजनं पूर्ववत् ॥४॥

---

* करोतेर्द्विकर्मकत्वावगतेर्न, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

शेषे ॥ ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम्। लोभाचरेष्वपि तथा-त्वातिव्याप्तिः ॥ १२ ॥

निगदो वा ॥ निगदसंज्ञकानां मन्त्राणां मन्त्रभेदादुपांशु यजुषा उच्चैर्निगदेनेति विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्य इति प्राप्ते। अत्र सामानि यजूंषीति वेदे पठ्यमानानामेव मन्त्रभेदानां सङ्कीर्तनान्मन्त्र एव खल्वयं निगदभूतो भवति। तस्माद्यजुरिति च शिष्टानिगदाना यजुष्ट्वमेव। मन्त्रा तु ब्राह्मणपरित्राजकन्याये-नाभेदेऽप्युपपन्ना।

निगदत्वञ्च यजुष्ट्वावान्तरधर्मो न तु नितरां उपांशुस्वराति-रिक्तस्वरेण पठ्यमानत्वम्। मम प्रवर्त्ते इत्यादिनिगदेषु उपांशु पठ्यमानेष्वव्याप्तेः। न च धर्मभेदाद्भेदः। विशेषविहितेनोच्चैष्ट्वेन सामान्यविहितस्योपांशुत्वस्यान्यपरत्वावगमात्। उपांशु यजुषेत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन भवन्मतेऽपि सङ्कोचस्यावश्यकत्वाच्च। न चैवमुपक्रम-वशेन यजुःपदे वेदलक्षणावन्निगदपदेऽपि यजुर्वेदलक्षणापत्ते-रेकस्मिन् कर्मणि धर्मद्वयविकल्पापत्तिः। वायोर्यजुर्वेद इत्युपक्रमस्य यजुःपद एव लक्षणातात्पर्यग्राहकत्वात्। अन्यथा वायोर्निगदवेद इत्यपि किंनावक्ष्यत्? अतस्त्वोच्चैर्निगदेनेति स्वतन्त्र एव निर्यवाद-कोऽयमुच्चैष्ट्वनियमविधिर्विशेषविहितातिरिक्तनिगदोद्देशेन। तेषु हि परप्रत्यायनरूपकार्यवशेनोपांशुत्वनिवृत्तावपि मन्द्रादिनेकस्वर-प्राप्तौ उच्चैष्ट्वनियमो नानुपपन्नः। अतो निगदभेदे यजुर्भेद-प्रायश्चित्तम्, आग्निनादौ पारिप्लवशंसनं वा ॥ १३ ॥

विधिप्रतिबन्धकत्वं स्पष्टम् । एवं अग्नीदग्नीन् विहरेत्यादौ सम्बोधन-विभक्तेरभिमुखश्रोतृमात्रविषयाया अभिमुखानभिमुखसाधारणविधि-विरोधित्वम् । दामीत्यादेरुत्तमपुरुषस्य च परप्रवर्त्तनारूपविधि-विरोधित्वम् । अतो विधायकत्वासम्भवात् मन्त्रगतानां स्मारकत्वं, ब्राह्मणगतानां निमित्तप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ॥६॥

तच्चोदकेषु ॥ मन्त्रप्रसङ्गादेवेषुधिव मन्त्रं मे गोपायेति वेद-प्रयुक्तमन्त्रशब्दार्थनिर्णयाय तल्लक्षणमुच्यते । यत्राभियुक्तानां मन्त्र-पदवाच्यत्वप्रकारिकोपस्थितिर्विशेष्यतासम्बन्धेन, स मन्त्रः । वाच्यता-वच्छेदकञ्च मन्त्रत्वमखण्डोपाधिर्वेत्यन्यदेतत् ॥७॥

शेषे ॥ एतद्ब्राह्मणानि पञ्च हवींषीति वेदप्रयुक्तब्राह्मणश-ब्दार्थपरिज्ञानार्थं *तल्लक्षणमपि प्रसङ्गादेव । मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणत्वम् ॥८॥

अनाम्नातेषु ॥ ऊहप्रवरनामधेयानां सत्यपि प्रयोगकाले अर्थस्मरणार्थमुच्चार्यत्वे मन्त्रपदैकवाच्यत्वे च स्वरूपेण वेदे ऽपठितत्वा-दभियुक्तप्रसिद्धिविरहत्वेन नैषां मन्त्रत्वम् । अतश्च नैषां भ्रेषे मन्त्र-भ्रेषनिमित्तं प्रायश्चित्तम् । अपि तु अङ्गभ्रेषनिमित्तकमेव ॥९॥

तेषामृक् ॥ मन्त्रत्वादौ व्यापकधर्मे निरूपिते तत्प्रसङ्गादेव तदवान्तरधर्मो ऋक्त्वादिः, ऋचः सामानि यजूंषीति वेदप्रयुक्त-ऋगादिपदार्थपरिज्ञानार्थं निरूप्यते । पादव्यवस्थावन्मन्त्रत्व ऋक्-त्वम् ॥१०॥

गीतिषु ॥ मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम् ॥११॥

---

* ब्राह्मणपदार्थनिर्णयाय, — इति ख० ग० पुस्तकयो पाठ ।

वाचयतीति बहुवचनात् क्रतुभेदावगमेनार्थभेदः। अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ॥१५॥

अनुषङ्गे ॥ यत्र बहूनां शेषापेक्षिणामाद्यस्यानन्तरं शेषः समाम्नायते, यथा याते अग्ने अयाशयेत्यस्यानन्तरं तनूर्वर्षिष्ठेत्यादिः शेषः। उत्तरौ मन्त्रौ, याते अग्ने रजाशया, याते अग्ने हराशयेति। तत्रोत्तरयोः शेषापेक्षिणोरयमेव शेषोऽनुषज्यते, न तु लौकिकोऽध्याह्रियते, अक्लृप्तत्वात्।

न चासावेकत्र निबद्धोऽन्यत्र नेतुं न शक्यः। सर्वार्थत्वेनाम्नानात्। न चाद्यस्यानन्तरमपेक्षितदेशे पठितत्वात् तदर्थमाम्नानं शक्यम्। आकाङ्क्षायोग्यतयोरविशिष्टत्वादासत्तेरपि असम्बन्धिपदाव्यवधानरूपायाः सर्वत्राविशिष्टत्वात्। न हि आनन्तर्यमेव सम्बन्धकारणं, तदभावेऽपि शाब्दबोधस्यासम्बन्धिपदव्यवधानाभावे आनुभविकत्वात्। सर्वाव्यवधानस्य सकृत् पाठे अशक्यतया आकाङ्क्षादित्रयेणैव च सर्वार्थत्वज्ञानोपपत्तेरावृत्तपाठस्य सर्वान्तपाठस्य चापादयितुमशक्यत्वादपेक्षितदेशपाठस्य च लिङ्गेनैव ज्ञातुं शक्यत्वादाम्नानस्य सर्वार्थत्वावगतेरनुपपन्न एव। न चैव अव्यवधानस्याकारणत्वे पदश्रुत्या वाक्यस्यैव करणत्वानुपपत्तिः*। तस्याकारणत्वेऽपि सन्देहे नियामकत्वमात्राङ्गीकारात्। प्रकृते तु आकाङ्क्षादिवशेन सर्वार्थत्वस्यैव प्रतीतेर्नियामकाकाङ्क्षाऽभावेनानुषङ्ग एव युक्तः। अतश्च तद्भ्रेषेऽपि यजुर्भ्रेषप्रायश्चित्तम् ॥

---

* करणत्वानापत्ति, — इति ख० ग० पुस्तकयोः पाठः।

अर्थैकत्वात् ॥ यदुक्तं यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तं* न तु वाक्यधर्मकं, तच्च विनियोगानर्हत्वात्। वाक्यत्वञ्च यथार्थैकत्वं विभज्यमानसाकाङ्क्षत्वञ्च तावत्सु। अर्थैकत्वञ्च भिन्नप्रतीतिविषयाऽनेकमुख्यविशेष्यराहित्यम्†। अन्यस्य दुर्वचत्वात्। अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया भावनाया एकत्वात्। दर्शपूर्णमासाभ्यामनहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात्, सौद्दियववाक्ययोर्भगोवां विभजन्तित्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्याया भावनाया एकत्वादर्थैकत्वम्। अतस्त्वेकवाक्यत्वभ्रान्त्यर्थं द्वितीयं अन्वीयमानयोः पदार्थयोरन्वये अनिवृत्ताकाङ्क्षत्वरूपं विशेषणम्। स्योनं ते सदनं कृणोमि, तस्मिन् सीदेत्यचानन्वये साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम् ॥१४॥

समेषु ॥ यत्र तु सौक्तविधं विभज्यमानसाकाङ्क्षत्वं, यथेषे त्वा ऊर्जे त्वेत्यनयोः, यथा वा आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामित्यादौ, तत्र सत्यर्थैकत्वे भगोवामित्यादिवन्मन्त्रभेदः। किमुत यदा विनियोगानुसारेणार्थभेद एव प्रमाणवान्, तदा मन्त्रैकत्वे प्रमाणाभाव एव। अत्र हि इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्युन्मार्ष्टीति विनियोगभेदादिषे त्वा छिनद्मीति क्रियापदाध्याहारेण भिन्नमेव मुख्यविशेष्यम्। एवमूर्जे त्वोन्मार्ज्मीति। एवं कृष्णी-

---

* पर्याप्तं, — इति नास्ति ख॰ ग॰ पुस्तकयोः।

† विशेषराहित्यम्, — इति ख॰ ग॰ पुस्तकोः पाठः।

शब्दान्तरे ॥ भावनाभेदफलीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्तेऽधुना शब्दान्तराद्भेदोऽभिधीयते। ज्योतिष्टोमादिप्रकरणस्थाना, सोमेन यजेत, हिरण्यमात्रेयाय ददाति, दाक्षिणानि जुहोतीत्यादीनां विभिन्नधात्वर्थानां भावनाभेदबोधकत्वमस्ति न वेति चिन्तायां, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन स्वर्गकर्मकभावनामात्रे लाघवाद् विहिते तदनुवादेन सोमादिवाक्ये सोमादिविशिष्टयागादिविधानात् सर्वेषां चोत्पन्नशिष्टत्वेन गुणन्यायाभावात्र भावनाभेद।

न चानेकधात्वर्थानामेकजातीययत्नजन्यत्वासम्भव। बाधकाभावात्। न च प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात् प्रत्ययानां फलवाक्यस्थेनाख्यातेन धात्वर्थानवच्छिन्नशुद्धभावनाविधानानुपपत्तिः आख्यातेन धात्वर्थावच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभावात्। अतएव गुणफलसम्बन्धस्थले धात्वर्थानुवादेऽपि भावनामात्रविधानम्। अतएव च फलवाक्ये यजि प्रकृतसर्वधात्वर्थोपलक्षणम्। ज्योतिष्टोमपदञ्च क्वचिन्न्यायेन सर्वनामधेयमिति प्राप्ते।

कार्य्यमात्रवृत्तिधर्मस्य विजातीययागत्वादे किञ्चित् प्रति कार्य्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति उपस्थितस्य यत्नस्यैव वैजात्यपरिकल्पनया विजातीययत्नत्वेनैव कारणत्वम्। अतश्च प्रतिधात्वर्थवैजात्य भावनावैजात्यसिद्धि। विभिन्नधात्वर्थकत्वमेव च शब्दान्तरत्वम्। अतएव तिस्र आहुतीर्जुहोतीत्यत्र सङ्ख्यया होमभेदे सिद्धे शब्दान्तरादेवोक्तविधाद्भावनाभेद। न तु सूत्रोक्तादिति ध्येयम्।

एव यत्र निराकाङ्क्षाणामेव शेषिणां यह्वनामन्तौ सापेक्ष शेषः समाम्नातो यथा चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वित्येतेषामन्ते, अच्छिद्रेण पवित्रेणेति। तत्रापि सन्निधियोग्यत्वयोरविशेषात् सर्वत्रानुषङ्ग । न चोत्थाप्याकाङ्क्षया- एकमन्त्रेणैव चरितार्थत्वादानन्तर्यस्य नियामकत्वोपपत्ति । शेषा- काङ्क्षया आकाङ्क्षोत्थापनेऽपि प्रधानत्वाच्छेषिणां विनिगमना- विरहेण सर्वेषामेव शेषसाकाङ्क्षत्वावगतेरानन्तर्यस्यानियामकत्वात् । अतएव अनेकद्रव्यविषयविहितसन्निधिपठितोपहोमाना सर्वार्थत्वमेव । अतश्च मुखनासिकगुल्फप्रदेशपावनार्थेषु एतेषु मन्त्रेषु शेषोऽनुषज्यते प्रतिप्रधानावृत्तिन्यायात् ॥१६॥

व्यवायात्॥ यत्र तु असम्बन्धिपदव्यवधान, यथा स ते वायुर्वातेन गच्छतां स यजत्रैरङ्गानि स यज्ञपतिराशिषेति। अत्र गच्छतामि- त्यस्याशिषेत्यत्र नानुषङ्ग । अङ्गानीत्यत्र एकवचनान्तस्यानन्वयेन बहुवचनान्तस्यैव गच्छन्तामित्यस्याध्याहारावश्यम्भावात् । वस्तुतस्तु बहुवचनस्यैवाध्याहारेण सम्बिधातोरनुषङ्ग एवेति एकवचनस्यैवानु- षङ्गप्रत्युदाहरणमिदम् ॥१७॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां द्वितीय- स्याध्यायस्य प्रथम पाद ॥०॥

---

देवताप्राप्तिवक्षयेनैतेषां नियमविधित्वोपपत्तेः। अतश्चान्यपरपुनः-श्रवणाभावाच्च कर्मभेद इति प्राप्ते।

उभयाकाङ्क्षावलक्षभ्ययाज्यामन्त्राणामेव देवताकल्पकत्वस्य पुरःस्फूर्त्तिकत्वेनान्यतराकाङ्क्षावलक्षभ्यानुमन्त्रणमन्त्रेभ्यो देवताकल्पनानुपपत्तेर्न समिदादिपदानां देवतानियामकत्वम्। अतश्चोपपदार्थस्य सम्भवत्प्रासिकत्वात् यदग्न्यादिना विधेर्यात्त्वर्थभावनाविषयत्वप्रतीतेर्विहितविधानायोगाद्विधेयतावच्छेदकतया वैजात्यसिद्धिः। न चैवं तत्प्रख्यन्यायेन समिदादिपदानां नामधेयत्वात् सञ्ज्ञयैव भेदसिद्धिः। तत्प्रख्यन्यायेन गुणविधित्वनिराकरणेऽपि नामधेयत्वस्यैकेनैवैकस्मिन् कर्मणि सिद्धेरन्येषां नामधेयानां वैयर्थ्यप्रसङ्गेन समिदादिपदानां गुणानुवादकत्वेनैवोपपत्तेर्नामत्वानिर्णयात्। सिद्धे तु अभ्यासेन कर्मभेदे एकैकस्य कर्मण एकैकं नामधेयं सार्थकमिति नामत्वनिर्णयः। प्रयोजनमुत्तराधिकरणप्रयोजनम्। प्रयोजनान्तराणि कौस्तुभे स्पष्टानि ॥२।२।८॥

प्रकरणान्तु ॥ तत्रैव एव य एवं विद्वान् पौर्णमासीं यजते स यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते स यावदतिरात्रेणेत्यादिवाक्येऽपि अभ्यासात् कर्मभेदः। न चायं यत्, लेट्त्वेऽपि वा यच्छब्देन विधिप्रतिबन्धाद्विधिपुनःश्रुत्यभावः। समिधो यजतीतिवल्लेट्त्वावगतेर्यच्छब्दस्य योदीचित इति वदेदनक्रियामात्रविधिप्रतिबन्धकत्वात्। अतएव पौर्णमास्यमावास्यापदमपि नामधेयम्। पौर्णमास्यां पौर्णमास्येति वाक्यद्वयेनैतद्वाक्यविहितकर्मणोरेव कालविधानात्। न च रूपाभावः। सांनाय्य

किञ्च प्राप्तभावनाऽनुवादेन सोमयागाद्यनेकविधाने वाक्यभेदा-पत्तेस्तत्तद्गुणधात्वर्थोभयविशिष्टभावनाविधानमेव तत्तद्वाक्ये स्वीकर्त्तव्यम् ।

तत्र च चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसम्बन्धोऽन्येषान्तु तदङ्गत्वम् । न च स्वर्गवाक्य एव यागभावनोत्पत्तिपूर्वकं फलसम्बन्धः सोमवाक्येन च सोममात्रविधानमिति वाच्यम् । स्वर्गवाक्ये राजसूयन्यायेनेष्टिपशुयागानामेव फलसम्बन्धापत्तौ यागान्तरविधने प्रमाणाभावात् । ततश्च पश्चाद्रुद्धे सोमविध्यनुपपत्तेः सोमवाक्ये कर्मान्तरविध्यवश्यम्भावः । प्रयोजनं सोमयागमात्रप्राधान्यम् ॥१॥१८॥

एकस्येवम् ॥ दर्शपूर्णमासप्रकरणस्थे, समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति, इत्यादौ यागस्यापि प्रत्यभिज्ञायमानत्वेनाभेदाच्च भावनाभेदः । न चाभ्यासाद्भेदः, यागस्याभ्यासस्यैकत्वसाधकत्वेन विरुद्धत्वात् । न च विधिपुनःश्रवणरूपस्याभ्यासस्य विधेययागादिभेदकत्वम् । दध्ना जुहोतीतिवद्विधेर्देवताद्यपगुणमङ्गान्तशक्तिकत्वेन यागविधयत्वाभावात् । न च यागोत्पत्तिवाक्यस्यानुपन्नरोधात्सोत्पन्नवाक्येन गुणविधिः । अगत्या प्राथमिकवाक्यस्यमितिपदस्य तत्प्रख्यन्यायेन नामधेयत्वाङ्गीकारात् ।

वस्तुतस्तु यदि याज्यामन्त्रवर्णात् समिदादिस्तदा सा तनूनपादादीनामप्यविशिष्टा । अत उपांशुयाजानुवादेन विरुद्धवाक्यविहितकर्मानुवादेन वा पञ्चस्वपि देवताविधि । न च सम्भवत्प्राप्तिकता, याज्यामन्त्रवर्णवदनुमन्त्रणमन्त्रेभ्योऽपि विकल्पेन सम्भवादि-

चितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गतावोधकत्वम्। अतएव च कारकद्वारेण कर्मद्वारेण वा व्यवस्थापरत्वमेव तदिति वक्ष्यते। अतश्च न तावद्गनेन देवतावाप्तिः। नाप्याग्नेयादिवाक्येन। प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदात्। विधिफलस्य हि अज्ञातज्ञापनस्यैकविषयत्वमेव सर्वत्र क्लृप्तम्। तस्यानेकविषयत्वे बाधप्रसङ्ग। न च विशिष्टविधानादवाक्यभेद, विशिष्टस्याव्युत्पन्नत्वात्। उक्तं ह्येतत्। कारकतासम्बन्धेन यत्र तद्धितादिवृत्तिर्न तत्र परस्पराम्बयोऽपि तु यत्रास्याभिधानीमित्यादौ तदतिरिक्तसम्बन्धेन वृत्तित्वमेव स इति। अतश्च प्रकृते देवतात्वस्य सम्प्रदानकारकत्वात् परस्परसम्बन्धानुपपत्तेरुभयविशिष्टकर्मान्तरविधानमेवावश्यकम्। अतश्च रूपाभावस्तद्वस्थ एव।

अस्तु वा कथञ्चिद्रूपलाभस्तथापि न विद्वद्वाक्ये कर्मविधिः। यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनः श्रवणस्येवाभावात्। न च तस्य वेटनक्रियामात्रविधिप्रतिबन्धकत्वम्। यच्छब्दादिवृत्तच्छब्दावधिकप्रतिबन्धकत्वस्यैव युक्त्यभिसिद्धत्वात्। किञ्च अन्यपरत्वादपि नाभ्यासस्वरूपसिद्धिः। तथाहि तत्तद्विद्वद्वाक्यघलङ्गत्वयजिना प्रकृतत्वादाग्नेयाद्यनुवाद एव तत्तत्कालयोगिनस्तत्तन्नामधेयवशादुच्यन्ते। तत्प्रयोजनञ्च तन्त्रेण यजिनाऽनेकोपादानात् समुदायद्वयसिद्धिः। तस्या अपि प्रयोजनं फलवाक्ये प्रत्यासत्त्या फलसम्बन्धसिद्धिः। प्रातिपदिकस्य षट्सु कालयोगेन प्रसिद्धत्वात्। द्विवचनश्च यागत्रयात्मकसमुदायघटकसमुदायि द्वित्वसम्बन्धेन यजनस्य वाच्यत्वात्। लक्षणातात्पर्यग्राहकमेव च प्रकारसम्बन्धघटकसमुदाय

पौर्णमास्यामनूच्येते इृधन्वतीममावास्यायामिति वचनेन आज्यभागक्रमाम्नातानामपि ऋचां क्रमं बाधित्वा एतद्वाक्यविहितकर्माङ्गत्वेन विधानान्मान्त्रवर्णिकाग्नीषोमदेवताया: सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमितिवचनेन च द्रव्यस्य प्राप्तत्वात्।

अथवा, आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिपदोपस्थापितैतद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानाद्रूपलाभोपपत्तिः। न चानेकविधानाद्वाक्यभेदः। तद्धितेन देवताविशिष्टद्रव्यवाचिना परस्परान्वयस्य व्युत्पन्नत्वेन विशिष्टविध्युपपत्तेः। प्रकारान्तरेण रूपलाभस्तु कौस्तुभ एव द्रष्टव्यः। सर्वथा विद्वद्वाक्ये कर्मान्तरविधिः।

एवं च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलवाक्येन प्रयाजादिव्यावर्तकत्वेन सर्वेषामाग्नेयादीनां एतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसम्बन्धो द्वितीये तु तन्नाधारत्वेन तयोरेव। दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात्। आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धेः। अतो राजसूयन्यायेन नामः सङ्कोचकत्वानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः। पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसम्बन्धः। न तु षण्णामेवाग्नेयादीनामिति प्राप्ते।

लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानामपेक्षितव्यवस्थाविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ मानपे-

उपक्रमोपसंहारयोरेकविषयत्वेनैकवाक्यत्वप्रतीतेर्मे तद्धप्रत्यया-न्तवाक्यैः कर्मविधिः। अन्तरावाक्यएव तु कालोपांशुत्वविशिष्टैक-कर्मविधिः। तदर्थवादत्वायं पूर्वोत्तरभावेन सर्वोऽपि। अन्यथा वाक्यभेदापत्तेः। अतएव तद्धप्रत्ययान्तैर्देवतामात्रविधिरन्तरालवा-क्यस्यकर्मफलत्वमप्यपास्तम्। न च तत्र देवताऽलाभः। शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां*मेतद्यागक्रमे समा-म्नातानां विकल्पेन तत्तद्देवताकल्पकत्वोपपत्तेः। तस्य च ताव-भूतामित्यनेन कालसम्बन्धात् फलसम्बन्धः।

न चोत्पत्तिशिष्टकालसम्बन्धानामेवाग्नेयादीनां प्रकृतिपरि-सत्वेन फलसम्बन्धापत्तेरुत्पन्नशिष्टकालसम्बन्धस्योपांशुयाजस्य फल-सम्बन्धानापत्तिः। अन्यथा पुरोडाशान्तरालकालसम्बन्धान्यथानुप-पत्त्यैव पौर्णमास्यादिकालसम्बन्धेनोपांशुयाजस्य फलसम्बन्धापत्तौ ताव-भूतेत्यस्यापि तत्फलत्वानुपपत्तेरिति वाच्यम्। तावभूतामित्येत-दनन्तरमेवोपांशुयाजमन्तरा यजतीति पठितमिति वार्त्तिकदर्श-नादस्यापि कालस्योत्पत्तिवाक्येनैव विधेयतया भिन्नवाक्यत्वाभावेन तुल्यबलत्वात्‡ फलसम्बन्धोपपत्तेः। अतो नायं समुदायानुवाद इति सिद्धम्†। प्रयोजनं स्पष्टम् ॥४॥२१॥

आघारा॥ तथैवाघारमाघारयतीति श्रुते अग्निहोत्रं जुहो-तीत्यत्र च पूर्ववद्वाक्यभेदस्य दूषकत्वाभावादृजुमाघारयति, सन्त-

* पुरोडाशाभ्यां, — इति क॰ पुस्तके पाठः।

† सिद्धं, — इति ख॰ ग॰ पुस्तकयो पाठः।

‡ तुल्यत्वात्, — इति क॰ पुस्तके पाठः।

सिद्धिद्वारा विद्वद्वाक्यद्वयम्। अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैवैकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलसम्बन्धापत्तिः। यथा च यदाग्नेयोऽष्टाकपाल इत्याद्याग्नेयद्वयसिद्धिस्तथा कौस्तुभ एव प्रपञ्चितम्। अतः षण्णां फलसम्बन्धसिद्धिरेवोक्तविधया विद्वद्वाक्यप्रयोजनमित्यन्यपरत्वादपि न वैश्वदेवेन यजेतेतिवदभ्यासरूपसिद्धिः। न चैव पौर्णमास्यां पौर्णमास्येति वाक्यद्वयवैयर्थ्यापत्तिः। तस्य समुदितयागत्रिकप्रयोगविधित्वेन सार्थक्यस्यैकादशे वक्ष्यमाणत्वात्। अन्यथा ह्युत्पत्तिवाक्येषु प्रत्येककालयोगात् प्रत्येकमेव पूर्वोत्तराङ्गसहितैकैकप्रधानप्रयोगाभवेयुः। एवञ्चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थयजिपद*सङ्कोचार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकत्वेनैतौ न कर्मान्तरविधिः—इति सिद्धम्॥२॥२०॥

पौर्णमासीवत्॥ तत्रैव, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वायेति श्रुते अन्तरावाक्ये पूर्ववदेव न कर्मान्तरविधिः। अपि तु तत्प्रत्याम्नानवाक्यैर्विहितानां देवतोपांशुत्वविशिष्टयागानां समुदायसिद्ध्यर्थमनुवाद एव तत्प्रयोजनञ्चान्तरालकालविधिः। तथाचैतेषां त्रयाणामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति कालसम्बन्धात् तात्पर्यपदद्वाराफलसम्बन्धसिद्धिर्वा। अन्यथा ह्यग्नीषोमदेवत्यस्यैव कालसम्बन्धात् फलसम्बन्धः स्यादिति प्राप्ते।

* यदिमद, — इति ख० ग० पुस्तकयो पाठ।

विजातीयहोमत्वावच्छिन्नस्य विधानेऽवगते वाक्यान्तरेण रूपलाभेऽपि न काचित् क्षतिः । प्रयोजनं दध्यादिद्रव्यसमुच्चयविकल्पाभ्यां स्पष्टम् ॥५॥२१॥

द्रव्यसंयोगात् ॥ अग्नीषोमीयं पशुमालभेतेति श्रुतम् । तथा, सोमेन यजेतेति च । तत्राद्यविधिप्रकारस्यासम्भवाच पूर्ववत् कर्मविधित्वम् । अपि तु समुदायानुवादत्वमेव । कर्मप्राप्तिस्तु पशौ हृदयस्याग्रेऽवद्यति अथ जिह्वाया इत्यादिभिः । उत्पत्तिशिष्टपशुसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेर्न तदुद्देशेनावदानाख्यसंस्कारविधिः । अतो विहितानां हृदयाद्यवदानानां पशुप्रभवद्रव्यद्व्यवदानत्वसादृश्यात् सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यवदेव हृदयादीनां यागसाधनत्वस्य पूतीकवदनुमानाद्धृदयादियागा एव विधीयन्ते । तत्र लक्षणया आलभतिना अग्नीषोमौ देवता विधीयते । पशुपदञ्च हृदयादीनां छागप्रकृतिकत्वस्य मन्त्रवर्णप्राप्तत्वाल्लक्षणया हृदयादिपरम् ।

अथवा, हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शनेवालभतिना* प्राप्त्यैवानूद्य पशुपदोपलक्षितहृदयादीनां प्रत्येकं देवतासम्बन्धे कृते तावन्तो यागा देवतासम्बन्धकल्पितास्तेनैव विधिना विधीयन्ते । सर्वथा पशुपदं समुदायानुवादः ।

तथा सोमेऽपि, ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णातीत्यादिवाक्यैर्द्रव्यदेवतासम्बन्धानुमितयागविधानम् । ग्रहणे देवतान्वयानुप-

* स्पर्शमेवालभतिना, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

† पशुशब्द, — इति क॰ पुस्तके पाठः ।

समाघारयति, दध्ना जुहोति, पयसा जुहोतीत्यादि*वाक्यविहित-कर्मणां यथायोगं समुदायानुवादकत्वोपपत्तिः। दध्यादिवाक्यानां निर्व्यापारे गुणमात्रे विध्यन्वयासम्भवेनावश्यं गुणविशिष्टकर्मविधायकत्वात्। अतश्च रूपाभावाद्वेदकप्रमाणाभावाच्चाग्निहोत्रवाक्ये आघारवाक्ये वा न कर्मान्तरम्। अपि तु तेषामेव समुदायसिद्ध्यर्थमनुवादः। तत्प्रयोजनञ्च सर्वेषामेवाग्निहोत्रसञ्ज्ञकत्वेन फलसम्बन्धसिद्धिः। इतरथा अग्निदेवत्यहोमस्यैव तदापत्तिः। आघारवाक्ये समुदायानुवादप्रयोजनन्तु कौस्तुभे द्रष्टव्यम्। न च दध्यादिहोमेषु देवताद्यभावः। समुदायानुवादवशेनैकप्रयोगविधिपरिग्रहाऽवगतेः सकृदनुष्ठानेनाग्न्यादिहोमाङ्गभूतदेवतायाः प्रसङ्गेन दध्यादिहोमोपकारकत्वोपपत्तेरिति प्राप्ते।

सर्वत्र गुणमात्रविधानेन तृतीयविधिप्रकारोपपत्तौ पञ्चमविधिप्रकाराङ्गीकरणस्यान्याय्यत्वान्न दध्यादिवाक्येषु विशिष्टकर्मविधानम्। न च गुणे विध्यन्वयानुपपत्तिः। होमकर्मकगुणकरणकभावनाया-मेव विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन विधिफलस्याज्ञातज्ञापनरूपस्य भावनायाः स्वरूपेण प्राप्ततया गुणमात्रविषयत्वोपपत्तेः। अतएव सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षड्विधि-प्रकाराणां चोत्तरोत्तरस्य दौर्बल्यं पूर्वमुक्तम्। अतश्च प्राप्तभावादेव समुदायानुवादत्वासम्भवादाद्यविधिविधेया कर्मविधौ एवाघाराग्निहोत्रवाक्ये। न च रूपज्ञानाभावात्कर्मविध्यनुपपत्तिः। तस्यानुष्ठानं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात्। अतश्च

* दध्ना जुहोतीत्यादि, — इति ख॰ ग॰ पुस्तकयोः पाठः।

सोमेऽपि नैन्द्रवायवादिवाक्यैर्यागविधिर्गौरवात् । किन्तु देवता-विशिष्टग्रहणस्यैव तद्धितोपात्तद्रव्योद्देशेन विधिः । सम्भवति च देव-तायास्त्र निरूपकतासम्बन्धेन ग्रहणे वैशिष्ट्याद्योगेऽपि ग्रहणकालीनो-च्चारणकर्मीभूतहविस्त्वसम्बन्धेन ग्रहणे वैशिष्ट्यम् । अतश्च देवताया ग्रहणाङ्गभूताया अपि यागापेक्षाया सोमवाक्यविहितयागस्यैव देवतापेक्षयोपपादकत्वमाचकल्पनालाघवम् । सोमवदन्त संस्कार-विध्यन्यथानुपपत्त्या समावत् प्राप्तिकत्वेऽपि सकृद्व्यावृत्तिफलकसोमनिय-मार्थे न विरुध्यते । यथा चैव सति ग्रहणानां समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिस्तथा सर्वं कौस्तुभ एव निरूपितम् । प्रयोजनं पशुविकारे घदयादियागेष्वन्यतमप्रकृतिकत्वाल्लेकादशावदानगण-प्राप्तिः पूर्वपक्षे । सिद्धान्ते तु नेति द्रष्टव्यम् । सोमे चाव्यक्तत्वसिद्धि-रेव ॥६॥२३॥

पृथक्त्वनिवेशात् ॥ आमनमस्यामनमस्य देवा इति तिस्र आ-हुतीर्जुहोति, आज्यभागौ यजतीत्यादौ एकत्वातिरिक्तसङ्ख्याया स्वाश्रयप्रतियोगिक-स्वाश्रयवृत्तिभेदव्याप्यत्वेन न तावत् साक्षाद्भावना-भेदबोधकत्वम् । तस्या उक्तसङ्ख्याश्रयत्वाप्रतीतेः * । नापि धात्वर्थ-भेदबोधकत्वम् । तस्य पूर्वमसिद्धत्वसङ्ख्याऽवरुद्धत्वेनैकादश प्रयाजान् यजति विराट्सम्पन्नमग्निहोत्रं जुहोतीत्यादिवत्सङ्ख्यान्तरसम्बन्धानुप-पत्तेरेतत्सङ्ख्याया अभ्यासविषयत्वप्रतीतेरकर्मान्तरत्वमिति प्राप्ते ।

नात्र सङ्ख्यान्तरावरोधः । स हि न तावत्तिङुपात्तः । तस्य

* तस्या उक्तसङ्ख्याश्रयत्वातिरिक्तसङ्ख्याया प्रतीतेः, — इति क० पुस्तके पाठः ।

पत्तेः । द्रव्यं धारापथा धारया गृह्णातीति प्रकृतं धारासमर्थं द्रव तद्विनोपात्तम् । सोमवाक्ये तु तत्प्रकृतित्वेन सोमलताविधिर्नी-हिविधिवत् । सोमं अभिषुणोतीत्यादिसंस्कारविध्यन्यथानुपपत्त्यैव वा अध्वर्युं वृणीत इतिवत्सोमप्राप्तेः सोमपदं नामधेयम् । सर्वथा यजिः समुदायानुवादः । तत्प्रयोजनं चास्मिन् पक्षे सोमद्रव्यकयाग-मात्रानुवादादस्तुतशस्त्राणामपि फलसम्बन्धः । ज्योतिष्टोमपदस्य वैश्व-देववद्गौणम् । समुदायानुवादाभावे हि तद्बलात् स्तुतशस्त्राणामेव यागानां फलसम्बन्धापत्तिः । तेषामेव ज्योतीरूपस्तोमसम्बन्धात् । सिद्धान्ते तु यागस्यैकत्वात् फलवाक्यस्थयजिनाऽभ्यासलक्षणापत्तेर्वि-जातीययागत्वावच्छिन्नस्यैव फलसम्बन्धः । ज्योतिष्टोमपदे यज्ञमौच्च-र्थस्तु स्वसम्बन्ध्याश्रयघटितसमुदायाश्रयत्वरूपः । अतः समुदानु-वादावेव ताविति प्राप्ते ।

पशुपदे हृदयादित्वलक्षणायां प्रमाणाभावात् तत्रैव विशिष्टयाग-विधिः । हृदयादिवाक्येषु हृदयाद्युद्देशेन संस्कारमात्रम् । पशोश्च न साक्षाद्विशिष्टेन विधानम् । किन्तु विशसनावदानादिविधिरूप-तात्पर्यग्राहकानुरोधेन हृदयादिप्रकृतित्वेनैव । करणत्वस्य* साक्षा-दिव परम्परयाऽपि तात्पर्यग्राहके सत्युपपत्तेः । अतएवातिदेशप्राप्ता-वदानसम्बन्धोऽपि हृदयादीनां हविष्ट्वसिद्ध्यर्थस्त्वहितरांगानां हविष्ट्व-परिसङ्ख्यार्थस्तेत्यादि कौस्तुभे द्रष्टव्यम् ।

---

* कारणत्वस्य, — इति क० पुस्तके पाठः ।

† सिद्ध्यर्थं सन्, — इति ख० ग० पुस्तकयोः पाठः ।

अतो लाघवाद् देवतालाभ्वयात् पूर्वमेव मन्त्राभ्वय । तदा हि यक्तत्वावच्छिन्न एवैकदेवतासम्बन्धादेकयागादिकल्पनालाघवम्।

न च प्रकृतिप्रासैकपशुनिष्पन्नैकादशावदानगणैकत्वानुरोधेन मन्त्रयो देवतालाम्बर्थोत्तरमन्वय । पशुगतैकत्वस्य श्रुतसप्रकृत्वेन बाधात्। अवदानगणैकत्वस्य च प्रकृतावार्थिकत्वेनेहानतिदेशात्। अतो देवतासम्बन्धभेदे प्रमाणाभावाच्च यागभेद ।

अस्तु वा समासाभिधानशुत्या यक्तलाभ्वयात् प्राग् देवतालाभ्वयेन सम्बन्धभेदस्तथापि लाघवाद् यागैकत्वम्। यथैव हि सिद्धान्तेऽनेके यागा मकृदनुष्ठानेनोपपाद्यन्ते, तथा मन्मतेऽप्येकेन यागेनानेके देवतासम्बन्धा इति प्राप्ते ।

समासाभिधानशुत्या देवतालभ्यात्वात्त्द्द्भावात् मन्त्राभ्वयात् पूर्वाभ्वयित्वम्। पशूनां प्रत्येक स्वत्वाश्रयत्वेन स्वत्वध्वंसानुकूलव्यापारात्मकयागकरणत्वरूपहविष्ट्वस्य प्रत्येकवृत्तितया सूक्तहविषोरित्यादिन्यायानुसारेण हविरवच्छेदकपशुत्वावच्छेदेनैव देवतासम्बन्धौचित्याच्च। अतश्च यक्तत्वावच्छिन्नस्यैव प्रतिसम्बन्धित्वात् प्रतिसम्बन्धितावच्छेदकस्य प्रत्येकवृत्तित्वेन प्रतिसम्बन्धिभेदप्रयोजकत्वेन सम्बन्धभेदसिद्धिः। न च सम्बन्धभेदेऽपि यागैकत्वम्। सम्बन्धानां यागैकत्वानेकत्वाभ्यामुभयथाप्युपपत्तौ लाघवापेक्षया प्रत्येकस्यानपिक्षोटकस्य प्राप्ततया बलवत्त्वेन नियामकत्वात्। अतस्तदनुरोधेनैव यथैव यागभेदो भावनाभेदश्चेति सिद्धम्। प्रयोजनं, यागैकत्वे पशुप्रतिनिधिरूपयुपि तस्य जातमात्र पुनर्यागकरण, सिद्धान्ते तु नेति ॥७॥९॥

कर्तृवृत्तित्वात्। न चानवच्छिन्नस्यान्वयानुपपत्तेः प्रथमातिक्रमे च कारणाभावाद्वात्वर्थे एकत्वसङ्ख्यानुमानमिति वाच्यम्। श्रुतसङ्ख्यासत्त्वे कारणाभावस्यासिद्धत्वेनानुमानाप्रसरात्। अतएव प्रयाजैकादशत्व-स्थले यत्र प्रकृतौ अनुमानप्रसरस्तत्राभ्यासविषयत्वम्। न चैवं विराट्सम्पत्तिवाक्यादावपि उत्पत्तिवाक्ये एकत्वानुमानापत्तिः। तादृशस्थले स्वोपजीव्योत्पत्तिवाक्यजन्यशाब्दबोधनिर्वाहार्थं पूर्व्वप्रवृत्तस्यनुमानस्योत्तरकालिकेन सङ्ख्याश्रवणेन बाधायोगात्तस्याभ्यास-विषयत्वप्रतीतेः। प्रकृते तु शाब्दबोधात् पूर्व्वमेवेतरपदार्थवत्सङ्ख्याया-अपि प्रतीतेर्युक्तः शाब्दबोधोत्तरकालीनानुमानप्रतिबन्ध इति कौस्तुभे विस्तरः। अतश्च सिद्धमुत्पत्तिवाक्यगतकर्म्मसमानाधिकरण-विशेषणसङ्ख्यायाः कर्म्मभेदकत्वम्। भावनाभेदस्तु शब्दान्तरादेव। प्रयोजनं, वेदिप्रोक्षणमन्त्रवत् पूर्व्वपक्षे सकृत्सम्बन्धः, सिद्धान्ते तु तदावृत्तिरिति।

भाष्यकारेण तु पञ्चदश प्राजापत्यान् पशूनालभेतेति वाक्ये यागभेदाभेदचिन्ता कृता। तत्र यद्यपि देवतात्वविशिष्टद्रव्यविशेष-वाची तद्धितः, यद्यपि च प्राजापत्यपदं एवैकशेषस्तथापि तदुत्तर-विभक्त्युपात्तायाः सङ्ख्यायाः प्रकृत्यर्थे विशेष्यएवान्वयः* न तु विशिष्टे, दौ चप इत्यादौ तथैव व्युत्पत्तेरिति तावदविवादम्। सोऽपि च स द्रव्ये देवतात्वाभ्युपगमम्। तथा सति देवतात्वप्रतिसम्बन्धिनि द्रव्ये चाविशेषसमवेतस्य प्रत्येकवृत्तित्वावच्छेदेन यत्र तत्सम्बन्ध-प्रतीतिरनेकत्वावगमात् सम्बन्धभेदेनानेकयागादिकल्पनागौरवापत्तेः।

* प्रकृत्यर्थविशेष्यएवान्वयः, — इति क॰ पुस्तके पाठः।

तदनुवादेन वाजिभ्यो वाजिनमित्यत्र न गुणमात्रविधिः। प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेः। न च वाजमन्नमामिचारूपं विद्यते येषामिति व्युत्पत्त्या विश्वदेवान् तद्विशिष्टयागं चोद्दिश्य वाजिनमात्रस्य विकल्पेन समुच्चयेन वा विधिरस्त्विति वाच्यम्। वाजिशब्दस्य रूढत्वेन विश्वदेवानुवादानुपपत्तेः। उत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरस्य निवेशानुपपत्तेश्च। एतेनामिक्षाऽनुनिष्पन्नवाजिनसम्बन्धप्राप्त्या वाजिनपद* आमिक्षायागनामधेयमङ्गीकृत्य तदुद्देशेन वाजिदेवताविधिरित्यप्यपास्तम्। उत्पत्तिशिष्टदेवताऽवरोधे देवतान्तरस्य निवेशानुपपत्तेः। किञ्चामिक्षायाः पाष्ठिको देवतासम्बन्धः पदश्रुत्या, वाजिनस्य तु वाक्येनेति दौर्बल्यम्। तद्धितस्य हि देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः आमिक्षापदञ्च तात्पर्यग्राहकमिति प्राञ्चः।

आमिक्षादौ द्रव्ये देवतात्वे च भिन्ना शक्तिर्निरूपकत्वन्तु संसर्गः। देवतात्व एव वा शक्तिर्द्रव्ये लक्षणा। द्रव्यविशेष एव वा शक्तिर्देवतात्वे लक्षणा। द्रव्यसामान्य एव वा शक्तिरामिक्षापदेन तु विशेषनिर्णयः। इत्येते पक्षाः कौस्तुभ एवोपपादिताः। सर्वथा आमिक्षाद्रव्यस्य देवतासम्बन्धः पदश्रुत्येति सिद्धम्।

किञ्च विश्वेषां देवानां तद्धितेन देवतात्व शक्तोक्तम्। अनुप्रासङ्गसत्त्वात्। वाजिनान्तु सम्प्रदानत्ववाचिन्या चतुर्थ्या साम्प्रतिकलक्षणया। त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतियोगित्वरूपसम्प्रदानत्वे-

* वाजिनपदे, — इति ख॰ ग॰ पुस्तकयोः पाठः।

संज्ञा च ॥ ज्योतिष्टोम सहस्यायैव ज्योतिरथैव विश्वज्योति-रथैव सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति श्रुतेषु ज्योतिरादि-पदानां गुणविशेषे प्रसिद्ध्यभावात् द्योतनात्मकत्वेन प्रसिद्ध्युपपादने कर्मण्यपि तदापत्तेरेतच्छब्देन च तद्विधाने वाक्यभेदाद्यापत्तेश्चैषां नामत्वं तावदविवादम्। तच्च न प्रकृतस्य यागस्य। ज्योतिष्टोम-संज्ञावरोधात्। संज्ञाकार्यस्य व्यवहारस्यैकेनैव सिद्धेरितरवैयर्थ्याच्च। न च विनिगमकाभावाद्विकल्पः। अथ शब्दस्य पूर्वकर्माधिकार-विच्छेदकस्य नियमवत्त्वात्। अतएव वसन्ते वसन्ते ज्योतिषेतिवत्वा-ख्याविकारत्वाशङ्का। तस्याविच्छिन्नेऽधिकारे समाम्नानेन तथाऽङ्गी-कारात्। न चैवमधिकारविच्छेदाभावे उद्भिदादिसंज्ञानां भेदा-भावापत्तिः, ज्योतिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावेन द्वयोरपि विकल्पो वैपरीत्यं वा किं न स्यादिति वाच्यम्। सोमयागे प्रत्यक्षसिद्धनिमित्तकज्योतिष्टोमसंज्ञाऽवरुद्धे उद्भित्संज्ञाया कथ-मपि निवेशानुपपत्तेस्तस्या भेदकत्वात्। अतएव यत्र न किञ्चिद्वि-धायकमस्ति तत्र सङ्ख्यादौ संज्ञयोर्विकल्प एव। प्रकृते तु अथशब्देन विच्छेदाद्भेदकत्वमेव संज्ञायाः। सहस्रदक्षिणेन यजे-तेत्येतावतैव प्रकृतयागानुवादेन गुणविध्युपपत्तौ एतच्छब्दाम्नात-ज्योतिरादिवाक्यस्य वैयर्थ्यप्रसङ्गाच्च। अतो द्योतनादियोगेन ज्योति-रादिसंज्ञा कर्मान्तरं सोमयागप्रकृतिकं तत्प्रत्याम्नायं सहस्रदक्षि-णाकं, य एतेन ऋद्धिकामो यजेतेति वाक्येन फले विधीयते इति संज्ञया कर्मभेदः ॥८॥७५॥

गुणश्च ॥ वैश्वदेव्यामिक्षेत्यत्र द्रव्यदेवताविशिष्टे यागे विहिते

उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधि फलविशिष्टविनि-योगविधिश्चेति वैशिष्ट्याभावाद्वाक्यभेद । अतो गुणात् कर्मभेद । दधिविशिष्टश्च तत् फलोद्देशेन विधीयते । न दधिमात्रम्। भावार्थाधिकरणविरोधापत्ते । यद्यपि दर्विहोमत्वे दधिद्रव्यकहोमत्व-सादृश्याच * अग्निहोत्रहोमातिदेशेन रूपलाभ ।

विद्वान्नस्तु यत्र दयोरपि धात्वर्थगुणयोरप्राप्तिः प्राप्तवत्प्राप्ति प्राप्तिरेव वा धात्वर्थस्यैव वा अप्राप्ति यथा सोमेन यजेत, उरु-प्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णी-यात् कामयेत यथा पूर्वं प्रजा कल्पेरन्, अग्निहोत्रं जुहोती-त्यादौ, तत्र भावार्थाधिकरणन्याय । यत्र तु गुणस्यैवाप्राप्तत्वा-द्विधेयत्व, तत्र तस्यैव फलसम्बन्ध । न च दध्नोऽपि नियता प्राप्तिरपि तु विकल्पेन । अत पक्षिकानुवादत्वपरिहाराय तस्यैव विधेयत्वात् फलसम्बन्ध । कारणीभूतगुणवत्त्वेन वचनं विनाऽपि फलोत्पत्ति-सम्भवाद्वचनवैयर्थ्यप्रसङ्गेन स्वप्रकृतिसाध्यधात्वर्थस्य दृष्टविधया गुण-सन्निधि आश्रयस्यापेक्षायां प्रकरणाद्धोमस्याश्रयत्वलाभाज्जुहोति साधुत्वार्थमनुवाद । दधिकरणक भावनान्तरमेव तु फलोद्देशेन वि-धीयते । प्राप्तभावनानुवादेनोभयकरणे वाक्यभेदात् ।

केचित्तु करणत्वविशिष्टं दधि, दधिकरणत्वं वा तृतीयोपात्तं फलकरणत्वेन विधीयते । तृतीयार्थकरणत्वस्य निरूपकापेक्षैव चा-श्रयापेक्षेत्याहु । तन्न यागवैषम्ये प्रमाणाभावात् । सर्वथा सिद्धो-

* दधिद्रव्यकहोमत्वसाधर्म्यात् – इति ख॰ ग॰ पुस्तकयो पाठ ।

कदेशत्वाद्देवतात्वस्य । तस्याः प्रतिग्रहीतृत्वाभावात् । निरूढधर्म-समनियतसम्प्रदानत्वव्यापकदेवतात्वरूपाखण्डोपाधिस्वीकारे * तु सुतरां लक्षणा । अतोऽपि दुर्बलत्वम् । तस्मादाजिनवाक्येऽपि गुणात् द्रव्यदेवताविशिष्ट कर्मान्तरमेव वाजिनप्रतिपत्त्यर्थमामिक्षायागाङ्गत्वेन विधीयते । गुणस्य च पूर्वचानिविश्यमानत्वेन भेदकता । सा च क्वचिद्वाक्यभेदापत्त्या क्वचित् प्रकृतगुणावरोधात् क्वचिदेकप्रसरताभङ्गादित्यनेकप्रकारिकेति ध्येयम् ॥८॥९॥

अगुणे तु ॥ यत्र तु नोत्पत्तौ गुणश्रवणं, यथाऽग्निहोत्रं जुहोतीति । तत्र तदनुवादेन दध्ना जुहोति, पयसा जुहोतीत्यादिभिः सर्वैरेव गुणविधानं विकल्पेन । तत्र खलेकपोतन्यायेन सर्वेषामेव युगपत् प्रवृत्तेरेकावच्छेदत्वाभावादिति प्रत्युदाहरणमात्रम् ॥ १० ॥ ॥२७॥

फलश्रुतेः ॥ अग्निहोत्रं प्रकृत्य दध्नेन्द्रियकामस्य जुहुयादिति श्रुते, स एव होमो दधिविशिष्टः फलोद्देशेन विधीयते । न च प्राप्तकर्मानुवादेन गुणसम्बन्ध फलसम्बन्धश्चेति वाक्यभेदः । प्राप्तानामपि कर्मणां राजकर्तृविशिष्टाना फलोद्देशेन राजसूयवाक्ये विधानवदिहापि तदुपपत्तेरिति प्रथमः पक्ष. ।

द्वितीयस्तु नाम राजसूयन्याय । कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वादुत्पन्नस्यापि कर्मण प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तिः । प्रकृते तु दध्न-

* देवतात्वरूपाखण्डधर्मस्वीकारे, – इति ख॰ ग॰ पुस्तकयो पाठ ।

तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि दाशायणयज्ञन्यायेनाप्राप्तरेवतीमात्रस्यैव फलसम्बन्धोपपत्तेः। अतो दधिन्यायेन गुणफलसम्बन्ध एव युक्तः।

सिद्धान्तस्तु नाचाश्रयलाभः शक्यते वक्तुम्। यागस्य तावत्प्रकृतत्वेऽपि अग्निष्टोमसामेत्यनुवादानुपपत्तेर्न साक्षादाश्रयत्वम्। अग्निष्टोमस्तोत्रद्वारा तस्यैव वा साक्षादाश्रयत्वं तु अग्निष्टोमस्तोत्रस्यातिदेशतः स्तोत्रान्तरसाधारण्येनोपस्थितत्वादनाशङ्क्यम्। न च वायव्यवाक्येन तस्यौपदेशिकी विशिष्योपस्थितिः। आतिदेशिकत्वबाधसम्भवे औपदेशिकत्वाद्बाधस्यान्याय्यत्वेन विशिष्योपस्थितेराश्रयत्वाबाधकत्वात्। न च साम्नो गायतिधातुवाच्यत्वेन क्रियारूपत्वादाश्रयालाभेऽपि न क्षतिः। साम्नोध्वन्यात्मकस्वरसमाहाररूपत्वेन वाक्यशेषादौ प्रसिद्धस्य सिद्धरूपतया धातुवाच्यत्वस्याप्रयोजकत्वात्। अन्यथा सौभरस्यापि स्तोत्राश्रयत्वानुपपत्तेः। वारवन्तीयमात्र आश्रयानपेक्षत्वे अग्निष्टोमसामेत्याद्यनुवादानुपपत्तेश्च।

अतः साम्न आश्रयसापेक्षत्वाच्च तावत्प्रकरणेनाश्रयलाभः। न च वारवन्तीयमग्निष्टोमसाम कार्यमिति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वाविधानादाश्रयसमर्पणमिति वाच्यम्। साम्नो गुणत्वपक्षे तल्लाभोपपत्तावपि रेवतीमात्रस्य गुणत्वे तद्योगात्। साम्नोऽगुणत्वे तु विधेरप्राप्तरेवतीमात्रपक्षमादेवासम्भवि। फलपदाभावे हि विधिर्यद्विषये अप्राप्ततया व्याप्रियते तस्यैव प्रयोजनाकाङ्क्षया फलसम्बन्धो यथा गोदोहनादेः।

तदत्र फलपदाभावे वारवन्तीयस्य प्राकरणिकवाक्येनैव प्राप्त-

गुणफलसम्बन्धः। प्रयोजनं, दृष्टो न प्रतिनिधिरुक्तेखविशेषो वा सिद्धान्ते द्रष्टव्यम् ॥११॥२८॥

समेषु ॥ त्रिवृदग्निष्टुदग्निष्टोम इत्यनेन विहितस्याग्निष्टुद्यागस्य फलसम्बन्धे, तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामोऽनेन यजेतेत्यनेन कृते पश्चादाम्नातम्। एतस्यैव रैवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामोऽनेन यजेतेति।

तत्रापि पूर्ववदाद्यः पूर्वपक्षः। राजसूयन्यायेन सकारकविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टकामत्वयार्थभूतकालकर्त्रादिरूपप्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसम्भवात्। इष्यते चायमेव प्रकारो वायव्यवाक्ये* सिद्धान्तिनाऽपि।

द्वितीयस्तु नात्र राजसूयन्यायः। प्रयोगस्य अग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यवाक्येनैव प्राप्ततया तदनुवादेन रैवतीविधिः फलोद्देशेन अग्निष्टुद्विनियोगविधिश्चेति वाक्यभेदात्। वायव्यवाक्ये हि अतिदेशेन सम्भवत्प्राप्तिकमप्यग्निष्टोमस्तोत्रोत्तरकालत्वादि ततः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विहितम्। न त्वत्र। वायव्यवाक्यस्यापि कृत्स्नेनास्य पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः। न च विनिगमनाविरहः। प्राथम्यस्यैव नियामकत्वात्। अतोलाघवाद्गुणएव रैवत्यधिकरणकवारवन्तीयाख्यो रैवत्याख्य एव वा अप्राप्तत्वात् फलोद्देशेन विधीयते। वारवन्तीयमग्निष्टोमसाम कार्यमिति प्राकरणिकेन वाक्येन वारवन्तीयस्यापि प्राप्तत्वात्। न चान्यपक्षे तृतीयान्तेनैतच्छब्देन विलिङ्गसङ्ख्याद्रैवतीमात्रनिर्देशानुपपत्तिः।

* वायव्यावाक्ये, — इति क॰ पुस्तक पाठ।

विकारि*त्वेनैतस्याग्निष्टुद्यागविकारत्वादारवन्तीयं प्राप्तमेवानूद्यते । केवलं रैवतीविशिष्टस्तोत्रभावनोत्तरकालताविशिष्टयागान्तरभावनैव फलोद्देशेन विधीयते । यद्यप्येतच्छब्दः प्रकृतिविकारभावानुवादकः । तृतीयान्तैतच्छब्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति । उत्तरकालत्वलक्षणो गुणस्य प्रयोगान्वयित्वाद्वैशिष्ट्ययद्यपि तद्भेदमेवापादयेत्, तथापि कालस्याच समभ्वग्राश्रिकतया वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या यागे परम्परासम्बन्धेन विधेयस्य रैवत्याख्यस्य गुणस्योत्पत्त्यन्वयित्वात्क्रमभेदबोधकत्वाविधानं ॥१२॥२८॥

सौभरे ॥ ब्रह्मसामाख्यस्तोत्रं प्रकृत्य समाम्नातैर्यो वृष्टिकामो यो-ऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेत्येतैर्वाक्यैरेकस्तोत्राश्रितं सौभरं साम फलत्रयोद्देशेन विधीयते । उद्देश्यानेकत्वेन स्तुवीतेत्यस्यानुषङ्गेण वाक्यभेदप्रतीतेः । सौभरे च शाखाभेदेन निधनाख्यान्तिमसामावयवाधारतया हीष् ऊ ऊर्क् इत्यादीन्यक्षराण्याम्नातानि ।

तदेव सौभरं प्रकृत्य हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊ इति स्वर्गकामाय, ऊर्गित्यन्नाद्यकामायेति श्रुतम् । तत्र वृष्टि-कामादिशब्दानां फलपरत्वात्तदुद्देशेनैव हीषादयो गुणा विधीयन्ते । सौभरस्य प्रकृतत्वाद्यूपादिवदाश्रय । निधनाधारतया हीषादिपाठस्यैव नियामकत्वाद्भागान्तरे लोभाद्यक्षरान्तरबाधापत्तेश्च न निधनातिरिक्तभागस्याश्रयत्वापत्तिः । न च लाघवाद्वृष्टिसाधनसौभरी-

---

* निकारि, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

त्वादिधिरप्राप्तरेवतीमात्रविषयः सम्पद्यत इति तत्रैव फलसम्बन्धोवाच्यः। न चाप्याश्रयः केनापि प्रकारेण लब्धुं शक्यः। न च प्रकारान्तरेणालाभेऽपि अनेनैव वाक्येन आश्रयविशिष्टगुणविधानादाश्रयगुणोभयविशिष्टभावनाविधानाद्वा तल्लाभोपपत्तिः, क्रतुप्रयोजनत्वाल्लाघवेनाश्रयताम्बन्धेनैव वैशिष्ट्याङ्गीकाराच्च न गुणान्तरतापत्तिरिति वाच्यम्। आश्रयस्य गुणान्वयाव्युत्पत्तेः। कर्मत्वातिरिक्तस्याश्रयत्वस्य दुर्वचत्वेन भावनायाः फलाश्रयरूपोभयकर्मकत्वाङ्गीकारे एककर्मकत्वभङ्गापत्तेश्च।

न च तत्वाशब्दोक्तायामाश्रयस्य अग्निष्टोमस्तोत्रस्य कर्मत्वात्तदुत्तरकालताविशिष्टगुणभावनाया आख्यातोपात्तायाः पशुकर्मकत्वादेकस्याभावनायादिकर्मकतापत्तिरिति वाच्यम्। गुणभावनायावच्छेदकीभूतधात्वर्थापेक्षायां यागस्यावच्छेदकत्वाङ्गीकारे रेवतीनां यागकरणत्वापत्त्या स्तोत्रं प्रति करणत्वानापत्तेः। स्तोत्रस्यैवावच्छेदकत्वाङ्गीकारे तु धात्वर्थद्वयावच्छिन्नभावनाद्वयाभावात् तत्प्रमत्यानुपपत्तिः।

न च रेवतीविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागाश्रयिकभावनैव फलोद्देशेन विधीयतामिति वाच्यम्। आख्यातोपात्तभावनायादिकर्मकत्वापत्तेस्तदवस्थत्वात्। न च प्रकरणाद्यागस्याश्रयतोपपत्तेर्न दिकर्मकत्वम्। तथात्वेऽपि तृतीयान्तपदद्वयस्य धातुपारार्थ्यभयेन यागपरामर्शित्वस्यैवापत्तौ रेवत्यादिपरामर्शकत्व एव प्रमाणाभावात्।

अतस्तदपेक्षया लघुभूतकर्मान्तरविधानमेव न्याय्यः। तदा हि

# अथ तृतीयः पादः।

श्रीगणेशाय नमः।

गुणस्तु॥ ज्योतिष्टोमे, यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रानिति श्रुतम्। तत्र यदि-शब्दोपात्तस्य निमित्तत्वस्य न तावद्रथन्तरे इहति वाऽन्वयः। तस्य विशेषणत्वेन गुणत्वात्। नाप्यन्यपदार्थे, तस्य कादाचित्कत्वाभावात्। नापि विशिष्टे ज्योतिष्टोमे, सामान्तराणामपि नियतत्वेन बृहद्रथन्तरयोरन्ययोगव्यावृत्त्या विशेषणत्वासम्भवात्। ज्योतिष्टोमत्वावच्छेदेनायोगस्यापि व्यावर्त्तयितुमशक्यत्वात्। अतः समासार्थस्य केवलरथन्तरसामकत्वस्य प्रकृते कर्मणि ग्रहाग्रतानिमित्तत्वेन निवेशायोगादुभयविशिष्टं कर्मान्तरमेव विधीयते। यदि-शब्दस्त्वविवक्षितार्थ इति प्राप्ते।

बृहद्रथन्तरयोर्ज्योतिष्टोमे पाक्षिकत्वात्तस्यायोगव्यावृत्त्या परस्परयोगव्यावृत्त्या वा विशेषणत्वोपपत्तिः। न च ज्योतिष्टोमत्वावच्छेदेन तदभावः। स्वावान्तरकार्यं पृष्ठस्तोत्रत्वावच्छेदेन तदुपपत्तेः। अन्यथा, तत्रापि साद्याद्यागे प्रोक्षणावघातादौ तदसम्भवावश्यम्भावात्। अतोऽत्रैव रथन्तरविशिष्टस्य क्रतोर्निमित्तता।

वस्तुतस्तु न क्रतोर्निमित्तान्तर्भावः। प्रयोजनाभावात्। प्रकरणावगतकलङ्कत्ववर्जेनान्यपदार्थसम्बन्धस्यानुवादत्वात्। अन्यथा ज्यो-

• यन्निधने अनियमेन प्राप्तानां हीषादीनां नियममाचकरणाद्गुणत्वार्थत्वं गङ्कम् । तथात्वे वृद्धिकामादिपदैः तत्तत्साधनीभूतगौभरलक्षणापत्तेः *। तस्य च निधनविशेषणत्वे विशिष्टोद्देशापत्तेश्च । अत गौभरफलात् फलान्तरार्थानि हीषादीनीति प्राप्ते ।

नियमविधित्वावचनानुरोधाद्वृद्धिकामादिपदैर्वृद्धिसाधनगौभरलक्षणमङ्गीकृत्यापि हीषादिर्नियमविधिरेवाश्रीयते । पक्षप्राप्तिश्च पाठान्निधनस्थान एवेति नियमस्यापि तत्स्थानकत्वलाभः । वस्तुतस्तु नियमविधित्वावचनानुरोधेन हीषादेर्वृध्याद्यर्थतैव स्वसाधनगौभराधारत्वसम्बन्धेनाश्रीयत इति न लक्षणाऽपि । सम्बन्धघटकीभूतञ्च गौभरं न गौभरत्वावच्छिन्नम् । अपि तु गौभरविशेष एव । शाखाभेदेन हि कचिद्विजातीयानि गौभराणि निधनान्तरयुक्तानि समाम्नातानि । तत्र च हीष. पक्षेऽप्यप्राप्तत्वान्न तस्य गौभरस्य सम्बन्धघटकत्वम् । अपि तु यज्जातीयगौभरे हीषादीन्यनियमेन समाम्नातानि तज्जातीयस्यैव तत् । अतश्च वृध्यर्थं निरुक्तसम्बन्धेन हीषेवेति नियमकरणात् सम्बन्धघटकीभूतगौभरे निधनान्तरव्यावृत्तिवद्विजातीयगौभरान्तरस्यापि वृध्याद्यर्थत्वव्यावृत्तिसिद्धिः । अतश्च तन्नित्यप्रयोगविषयमेव सम्पद्यते इति विवेकः ॥१।२।२०॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वितीयस्य द्वितीयः पादः ॥०॥

---

* तत्तत्साधनीभूतलक्षणापत्ते, – इति ख० ग० पुस्तकयो पाठ ।

प्रत्येकप्रयोगाश्च पश्वानुलोमविषया* इति बोध्यम् । एतयाऽन्नाद्य-कामं याजयेदित्यनेन चोभयोरपि नित्यनैमित्तिकप्रयोगयोः फलार्थं बहिःक्रत्वनुष्ठानमिति न ब्राह्मणादिगुणस्य भेदकत्वमिति प्राप्ते ।

राजानमभिषिञ्चेदिति श्रुतौ† राजोद्देशेनाभिषेकविधानादभि-षेकाधिकारिकराज्ययोगात् प्रागेव राजशब्दस्य क्षत्रियवाचित्व-प्रतीतेस्तस्य कर्मणीत्यधिकृत्य पत्यन्तपुरोहितादिभ्यो यक् इति स्मृत्या पुरोहितादिगणपठिताद्राजशब्दाद्यगादिविधानेन च रा-ज्यशब्दस्य राजशब्दप्रसिद्धिपूर्वकत्वावगतेः द्रविडप्रयोगानुसारेण राजशब्दः क्षत्रियवचन एव ।

अत्रापेष्टौ ब्राह्मणादीनां प्राप्तभावाद्विधेयत्वावगतेः कर्तृक-पाद्गुणाद्वैष्टिप्रयोगान्तरमेव पशुवत्विष्केष्टिरूपं समस्तगुणविशिष्टं बहिःक्रतु विधीयते । तस्य चोक्तवचनेनान्नाद्यं फलम् । अतः क्रतुप्रत्येकं षट् प्रयोगा एव । यद्यपि च पूर्वपक्षसिद्धान्तयोः पशु-वत्विष्केष्टिप्रयोगस्तुल्यस्तथापि ब्राह्मणादिगुणस्य पूर्वपक्षे न भेदकत्वं सिद्धान्ते तु तदिति विशेषः । तत्प्रयोजनञ्च, पक्षद्वयोपपादनेनै-वोक्तम् ।

न चैवं राजन्यवाक्ये तस्य प्राप्तत्वाद्विधेयत्वाभावेन भेदकत्वाना-पत्तिः । राजन्यपदस्याभिषिक्तक्षत्रियमात्रवाचित्वेन राजसूये अप्राप्त-स्यैव तस्य विधेयतया भेदकत्वोपपत्तेः । राजसूये हि राजपदस्य क्षत्रियमात्रपरकस्यापि, राजैवैतेनाभिषिक्तानायजत इति निरूढत्व-

* विषया एव, — इति ख॰ ग॰ पुस्तकयोः पाठः ।
† कृतौ, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

तिष्टोमक्लृप्तान्यपदार्थस्य विकृतावभावेन शुक्लापत्तादेरनापत्ते । अतो-ऽवगत्याऽपि स्वनन्तरमेव निमित्तम् । नैमित्तिकन्तु अपतावित्येष प्रकृतापूर्वसाधनीभूतयज्ञोद्देशेन विधीयते । न च पाठादेवैन्द्रवाय-वाग्रत्वनियमस्य प्राप्तेरादिधिवैयर्थ्यम् । तत्त पूर्वमेव नैमित्तिकतया विधानात् । तत्प्रयोजनञ्च, निमित्ताभावे प्रकृतौ विकृतौ च लोप । यद्यपि च सर्वत्र निमित्तस्य सत्त्वे नैमित्तिकावश्यकत्वमात्र प्रमेय, तथापि तस्याच पाठादेव सिद्धेस्तदभावे तदभाव एव प्रमेय बोध्यम्* । तस्मान्न कर्मान्तरविधि ॥१॥२१॥

अवेष्टौ ॥ राजसूये राजकर्तृके प्रत्येकदक्षिणाम्नानादवेष्टिसञ्ज्ञका यत्नेष्टय पृथक्प्रयोगा समाम्नाता । तदवान्तरप्रकरणे, यदि ब्राह्मणो यजेत बार्हस्पत्य मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघार-येत्, यदि राजन्य ऐन्द्र, यदि वैश्यो वैश्वदेवमिति श्रुतम् ।

तत्रापि पूर्ववद् ब्राह्मणकर्तृकत्वादि निमित्तमेव, यदि-शब्द-श्रुते । राजसूयस्य त्रैवर्णिककर्तृकत्वेन ब्राह्मणादे प्राप्तत्वाच्च । राज-शब्दस्य प्रजापालनकर्त्तरि सर्वलोकप्रसिद्धे । क्षत्रियमात्रे द्रविड† प्रसिद्धेस्तु म्लेच्छदेशस्य प्रसिद्धित्वेनासाधकत्वात् । व्याकरणप्रसिद्धे-स्तन्मूलकत्वेनानियामकत्वाच्च । सर्वलोकप्रसिद्धे श्रौत यदि शब्दमूल-कत्वाच्च ।

अतो ब्राह्मणादिकर्तृकत्वे निमित्ते मध्येनिधानपूर्वकप्रत्याहु-त्यभिघारणविशिष्टपश्चविध्ययेष्टिप्रयोगोराजसूयान्तर्गतोविधीयते ।

* बोध, — इति क० पुस्तके पाठ ।

† द्रमिड, — इति क० पुस्तके पाठ । एव परत्र ।

पुत्रवाक्ये वयोऽवस्थाविशेषलक्षणाऽपि नापद्यते । सर्वथा आधान-प्राप्तेर्निमित्तार्थानि ब्राह्मणादिश्रवणानि न भेदकानि । तथा विद्यासाधनतया अध्ययन तत्साधनत्वेनोपनयनञ्चार्थप्राप्तम् । अध्ययनस्य तु स्वाध्यायोऽध्येतव्य इत्यनेन नियमोऽपि । अत सर्वसाधारण्येन * प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्त कालोविधीयत इति प्राप्ते ।

सर्वकर्तृकत्वस्य सर्वकालकत्वस्यापि आधानादौ प्राप्तिसम्भवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधि काले वा निमित्ते कर्तृविधिरित्युभ्य विनिगमनाविरहादुभयविशिष्टाधानादिविधिरेव । उपनयनस्य च पक्षे सम्भवत्प्राप्तिकत्वेन सुतरा विध्युपपत्ति । अतएव विनिगमनाविरहात् कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविधापादकत्वासम्भावे एतद्विधिविहितप्रयोगातुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधि । आत्मनेपदार्थस्य चोत्पत्त्याद्यन्वयिनो गुणस्य अवणादुत्पत्त्यादिकमप्येव, न तु जातपुत्रादिवाक्ये वाक्यभेदापत्ते । प्राथम्याद्वा ब्राह्मणवाक्ये एवोत्पत्त्यादि, इतरयोस्तु प्रयोगमात्रम् । तेन सिद्धोऽत्रापि गुणात्प्रयोगभेद । एतयोश्चाधानोपनयनयोरग्निविद्याफलत्वेऽपि अकरणे प्रत्यवायादिश्रवणान्नित्यत्वमपि । एवञ्च स्वविधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे क्रतुविधयोनाग्निविद्ये तदुपायान्वा प्रयुञ्जत इति तद्रहितस्य शूद्रादेरनधिकार इति प्रयोजन षष्ठे वक्ष्यते ॥१॥२१॥

अयनेषु ॥ दर्शपूर्णमासयोर्दाक्षायणयज्ञेन स्वर्गकामो यजेतेति

* साधारण्येन, — इति ख० ग० पुस्तकयो पाठ ।

घृणातात्पर्यग्राहकालिङ्गादभिघिकत्वनियमाच्चैवाधिकारः । अतः सिद्धं त्रिष्वपि वाक्येषु कर्तृरूपस्य गुणस्य प्रयोगभेदकत्वम् । यदि- शब्दश्चाभिधारयेदिति लिङः प्रयोज्यत्वापरपर्यायहेतुमदर्थकत्वे आख्यातद्वयैकवाक्यत्वे च तात्पर्यग्राहकः । तेन मध्ये निधानपूर्वक- मवाङ्गत्वभिघारणप्रयोजकीभूतैर्ब्राह्मणादिकर्तृकैर्यागैरिष्टं भावये- दिति वाक्यार्थो बोध्यः ॥२॥३१॥

आधाने ॥ वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति श्रुतम् । तथा, वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति च । तत्र सर्ववर्णसाधारणानां क्रतूनामग्निविद्या- साध्यत्वादग्नेश्च उपायभूतस्याधानस्य, स एव विद्वानग्निसाधक इत्यनेनानन्याचिप्तशक्तिकेनाग्न्युद्देशेनाधानविधायिना प्राप्तत्वादाधाने ब्राह्मणादीनां प्राप्तेर्निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः काल आधानाङ्गत्वेन विधीयते । अथ वा ऽस्त्वेतस्याथ सम्भारान् सम्भरतीति विध्यन्तरशेषस्य वर्तमानापदेशता, तथापि सम्भारैरग्निमादधातीत्ययमाधानप्रापकोविधिः । अत्र हि न सम्भा- राविधेयाः, प्रमाणान्तरप्राप्तत्वात् । नापि तदधिकरणत्व, तस्मि- न्नाधीयतामयमिति मन्त्रवर्णादेव प्राप्तत्वात् । अत आधानमात्र- विधिरयम् ।

अथ वा, प्राप्ताधानानुवादेन कालविधिरात्मनेपदार्थस्याराधा- नुरादवनीयत्वाभावरूपस्य च विधिरिति वाक्यभेदापत्तेः जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्ययमाधानप्रापकोविधिः । उक्तवाक्ये तु अभ्यु- दयशिरस्कतया मन्त्रवर्णात् पूर्वमेवाधिकरणत्वविधिः । एवञ्च जात-

रभ्याधीताभ्यां, वायव्यं श्वेतमालभेत भूतिकाम', सौर्यं चरुं निर्वपेद्-ब्रह्मवर्चसकाम इत्येताभ्यां श्वेतचरू गुणौ विधीयेते । आलम्भकर्मीभूता ईषा श्वेता कर्त्तव्येति । निर्वापश्च चरुशब्दलक्ष्याख्यां कर्त्तव्य-इति । सर्वदृष्टत्वाणाञ्च वायुसम्बन्धादायव्यमित्यनुवादः । सौर्यमिति चाग्नेयवदेव । तेजोदेवत्वत्वसामान्यात् । न तु देवताविधिर्योगा-श्रवणात् । उभयत्रापि फलपदं सार्वकाम्यवाक्यप्राप्तफल*प्रयोजक-त्वानुवाद इति प्रथमः पक्ष । द्वितीयस्तु फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन च गुणफलसम्बन्धानुपपत्तेः गुणविशिष्टं यावदुक्तं आलम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयते इति ।

सिद्धान्तस्तु । वायव्यं सौर्यमित्यादितद्धितान्तपदवैयर्थ्या-पत्तेर्द्रव्यदेवतासम्बन्धानुमितोयागएवालभति-निर्वपति-धातुलक्षितो-द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयत इति । अतिदेशप्राप्तौ चालम्भनिर्वापौ न विधीयेते ॥५॥२४॥

विशये ॥ यत्र तु न देवताश्रवणं तत्र न यागकल्पना, अपि तु संस्कारमात्रविधानम् । यथाऽग्निहोत्रे वत्समालभेतेत्यत्राल-म्भमात्रं वत्ससंस्कारकत्वेन विधीयते । आलभतेः स्पर्शमात्रवाचि-त्वात् ॥६॥२५॥

मधुकास्तु ॥ अग्नौ श्रुते चरुमुपदधाति इत्यत्रैतेर्वा एतदन्नं यदीवारा इत्यत्र यजमानस्याम् इत्यत्रैतेः कथं स्याद् यदि न इत्यत्रतिर्देवतेत्यर्थाद् इत्यत्रतेर्देवतात्वगतेस्तैत्तिरीयशाखायां वा-र्हस्पत्यो भवतीति तद्धितपदयुक्तवाक्यशेषश्रवणाच्च द्रव्यदेवतासम-

* फल, — इति ख० ग० पुस्तकयो पाठ ।

श्रुतम्। तथा शाकं प्रस्थायीयेन यजेत पशुकाम इति श्रुतम्। लोके अप्रसिद्धत्वादुद्भिदादिवन्नामधेयत्वावगतेः सञ्ज्ञया आभ्यासाद्वा कर्मान्तरं विधीयते। फलसम्बन्धश्चापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेनान्यपरत्वाभावादिति प्राप्ते।

यद्यपि लोके गुणो न प्रसिद्धस्तथापि दक्षस्य यजमानस्येमे दाक्षा ऋत्विजस्तत्कर्तृकमयनं प्रयोगावृत्तिर्यस्य यज्ञस्येति व्युत्पत्त्या-ऽऽवृत्तिपरत्वावगतेः शाकं सह प्रस्थानं यस्येति व्युत्पत्त्या च सहत्वपरत्वावगतेर्नातिरिक्तशक्तिकल्पनया नामधेयपरत्वाध्यवसानम्। अतोऽप्राप्त आवृत्तिरूपः सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते। आवृत्तिश्च कियतीत्यपेक्षायां द्वे पौर्णमास्यौ द्वे अमावास्ये यजेतेति वाक्येन विशेषविधानाद्द्विरावृत्तिरेव। सहत्वञ्च प्रस्थाने केनेत्यपेक्षायां सह कुम्भीभिरभिक्रामेदिति वचनात् कुम्भीभ्याम्। अनेनैव च वचनेन सहत्वाश्रयत्व अभिक्रमणस्य विदधता अत्रान्तर-प्रकरणाभावेऽपि तस्याश्रयत्वसिद्धिः। आवृत्तेस्तु प्रकरणाद्दर्शपूर्ण-मासावेवाश्रयः। अतोऽत्र सञ्ज्ञात्वाभावात् फलसम्बन्धपरत्वेन चा-भ्यासाभावाच्च कर्मान्तरम्। वस्तुतस्तु पूर्वपदात् सञ्ज्ञायामग इति णत्वात् सञ्ज्ञात्वाभावे णत्वानापत्तेर्दाक्षायणपदे सञ्ज्ञात्वावश्यम्भावेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकारादवयवार्थरूपावृत्तिरप्राप्तत्वात् फलोद्देशेन विधीयत इति न विरोधः।४।२३॥

संस्कारस्य॥ ईषामालभेत, चतुरोमुष्टीन्निर्वपतीत्येताभ्यां विहि-तयोर्दर्शपूर्णमासिकयो*रीषालम्भचतुर्मुष्टिनिर्वापयोरनुवादेन सना-

* विहितयोर्दर्शपूर्णमासयोः — इति ख॰ ग॰ पुस्तकयोः पाठः।

भावः । वृत्तपर्यग्निकरणस्यैव क्रमप्रत्ययान्तार्थस्य विधेयत्वात् । तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैवातिदेशतः पूर्वप्रवृत्त्या विधेयत्वात् कॢप्तोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यादतिदेशकल्पनेनोत्तराङ्गानामर्थादेव निवृत्तौ चैदोषानापत्तेः । वृत्तपर्यग्निकरणत्वस्य च पूर्वाङ्गेष्वकृतेष्वसम्भवात्तान्यप्याक्षिप्यन्ते । न च क्रमप्रत्ययवत्त्वेन प्रमाणान्तरप्रमितत्वावगमादतिदेशाप्रतिबन्धकत्वम् । प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादाविव प्रमाणान्तराभावेऽपि एतद्विधिविधेयस्यापि क्रमप्रत्ययोपात्तत्वेन बाधकाभावात् ॥ ८ । २ । ७ ॥

अद्रव्यत्वात् ॥ अनारभ्य श्रुतं, एष वै हविषा हविर्यजति योदाभ्यं गृहीत्वा सोमाय यजते इति । तथा, परा वा एतस्यायुः प्राण एति योऽंशुं गृह्णातीति । अत्र हविः सोमः स एव देवता स एव द्रव्यमिति प्रथमार्थवादस्यार्थः । प्राण आयुर्मर्यादामभिवर्द्धत इति द्वितीयस्य । तत्र न तावदत्र ग्रहणमेव ज्योतिष्टोमे विधीयते । संस्काररूपस्य ग्रहणस्यावघातादिवदंशदाभ्यनामकत्वानुपपत्तेः । द्वितीयान्तयोस्तयोः संस्कार्यद्रव्यनामत्वाङ्गीकारे तु व्यभिचरितक्रतुसम्बन्धाभावाच्च द्रव्यनामोद्देशेन ग्रहणविधिसम्भवः । अतो द्रव्यदेवताविशिष्टयागान्तरविधानमेवेदम् । अदाभ्यपदेन हिंसाऽनर्हसोमात्यद्रव्यांशुपदेन च निर्यासद्रव्यस्याभिधानात् । द्वितीया चोभयत्र सक्तुन्यायेन । देवता त्वेकत्र सोमोऽन्यत्र प्रजापतये स्वाहेति मन्त्रवर्णात् प्रजापतिः । गृह्णातियागेऽनुवादो द्वितीये यागलक्षकः । तयोश्च यागयोः प्राकरणिकैककर्मसमाम्नातीयतैत्तिरीयशाखास्थत्वाज्ज्योतिष्टोमाङ्गत्वमिति प्राप्ते ।

स्यानुमितयागविधानमेवेदम्। तस्य चौषधद्रव्यकत्वेनाग्नेयातिदेशतः खिष्टकृदादिप्रतिपत्तिप्राप्तौ चरुमुपदधातीत्यनेनोपधानं प्रतिपत्तित्वेन विधीयत इति प्राप्ते।

यद्यपि तैत्तिरीयशाखायान्तद्धितश्रवणं, तथापि विध्यभावाद्भिन्नत्वैकवाक्यत्वभङ्गापत्तेश्च नायं देवतातद्धितः। चरुमुपदधातीत्यनेन च स्थण्डिलनिष्पादकचरुसंस्कारकतयोपधानविधानात् देवतानाकाङ्क्षतया नार्थवादोन्नीतस्यापि देवताविधेः कल्पनम्। अतएव चर्वपेक्षितप्रकृतिद्रव्यस्यैव नीवाररूपस्य विधिकल्पनम्। अतश्च इहस्पतेर्ब्राह्मणस्यान्नं नीवारा इत्येवं स्तुत्युपपत्तेर्न इहस्पतेर्वा द्रव्यं देवताकल्पनद्वारा यागकल्पक इति सिद्धम्॥७॥२६॥

पात्नीवते॥ त्वाष्ट्रं पात्नीवतमालभेतेत्यनेन द्रव्यदेवताविशिष्टं यागं विधाय पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति श्रुतम्। तत्रोभयदैवत्यस्य पूर्वयागस्य आग्नेयं चतुर्धा करोतीतिवत् केवलपात्नीवतपदेनानुवादायोगात्पर्यग्निकरणदिश्च विधेयस्य गुणस्यातिदेशेनैव प्राप्तत्वादितराङ्गपरिसङ्ख्यायाश्च दोषत्रयापत्तेः पर्यग्निकृतपदस्यानुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायमिति प्राप्ते।

प्रत्यभिज्ञानाच्च कर्मान्तरम्। न चानुवादानुपपत्तिः। मत्वर्थीषोमादिवत्तद्धितपत्नीवतोर्व्यासज्यवृत्तिदेवतात्वे मनोतायामग्निशब्दवल्लक्षणयाऽभिधानोपपत्तेः। वस्तुतस्तु पृथक्तद्धितश्रवणाद्देवताद्वयमेवेदम्। एकवाक्योपादानाच्च समुच्चयः। अतो डित्थडवित्थयोर्माता डित्थस्य मातेतिवल्लक्ष्यत एव केवलेन पात्नीवतपदेनानुवादः। अत पूर्वकर्मानुवादेन गुण एव विधीयते। न च विधेया-

पञ्चकमनुशुङ्क्ते इत्यादौ तुल्यक्रियायोगाभावेऽप्यनुशब्ददर्शनाच्च तदनुरोधेनाग्निशब्दस्य चयनशब्दस्य च यागपरत्वकल्पना युक्ता । अतोविदद्वाक्ये चयनमेवाग्निसंस्कारार्थं विधीयते । अग्निशब्देन च यद्यपि शक्त्या ज्वलन एवाभिधीयते, तथापि तदर्थत्वे वैयर्थ्यापत्ते-र्निरूढलक्षणया आहवनीयादिपरत्वावसायात्तदुद्देशेनैव चयनं संस्का-रकतया विधीयते । *संस्कारश्च सामर्थ्याच्चयननिष्पादितस्थण्डिल-स्थापनरूपः । स्थापितस्याग्नेरुपयोगापेक्षायामयात इति वाक्येन तस्य ज्योतिष्टोमाङ्गत्वेन विधानम् । तत्र हि अग्निशब्देन चयन-निष्पादितस्थण्डिलस्थापितोऽग्निश्चयनमेव वा लक्षणयाऽभिधीयते* । अग्निष्टोमशब्दश्च जातिन्यायेन संस्थावचनोऽपि व्यक्तिन्यायेन ज्योति-ष्टोममेव प्रचुरप्रयोगादभिधत्ते । पार्थशब्द इवार्जुनम् । अतश्च ज्योतिष्टोमत्वमेव लाघवादुद्देश्यतावच्छेदकं न त्वग्निष्टोमसंस्थावत्त्व-मपि ।

यद्यपि च चयनस्य ज्योतिष्टोमप्रयोगसम्बलितत्वादनुष्ठानसा-देश्यादेव तदङ्गत्वसिद्धिस्तथापि पशुकामश्चिन्वीतेत्यादिवाक्यैरग्नेः काम्यत्वावगमात् क्रत्वङ्गत्वप्रतिपत्त्यर्थं तन्न विरुध्यते । अयञ्चाग्निः महतौ भूमि सोमाग्नं चेच्छतामित्यादिवचनाद्वैकल्पिकः । अग्निपक्षे चोत्तरवेद्यां ह्यग्निश्चीयत इति वचनादुत्तरवेद्याः समुच्चयः । तद-

* * एतच्चिह्नान्तर्वर्तिपाठस्थले, संस्कारश्च सामर्थ्याच्चयननिष्पादितस्थ-ण्डिलस्थापितोऽग्निश्चयनमेव वा लक्षणयाऽभिधीयते, — इति ख० ग० पुस्तकयोः पाठः ।

ग्रहानौ यागलक्षणायां प्रमाणाभावादाद्यवाक्ये गुणसङ्क्रान्तग्रा-त्रिना विधिना ग्रहणस्यैव विधेयत्वावगमात्तोभयत्रापि ग्रहणमेवोत्त-मज्जकं उक्तग्रज्ञकद्रव्यसंस्कारकत्वेन वा विधीयते । एवं च विनि-योगभङ्गोऽपि द्वितीयाया न कश्चितोभवति । देवता तु सोमरूपा आद्यवाक्ये ग्रहणे एवान्वेतीति देवताविशिष्टं ग्रहणमेव तत्र विधी-यते । द्वितीये तु उपयाम गृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णा-मीतिमन्त्रवर्णाद् ग्रहणाङ्गतया देवताप्राप्तिर्द्रष्टव्या । होममन्त्रस्तूत्त-रभाविधागोपकारकत्वमादाय नेयः । देवताविशिष्टग्रहणद्वये च प्राकरणिकवाक्येन ज्योतिष्टोमाङ्गत्वस्य तदुपपाद्यत्वस्य च बोधोप-पत्तेर्न कश्चिद्विरोधः । प्रयोजनं, पूर्वपक्षे यागस्याङ्गत्वादृग्रयाग्रजि-न्यायविषयत्वं, सिद्धान्ते प्रधानत्वात्तेति ॥८॥२८॥

अग्निस्तु ॥ अनारभ्यैवं श्रुतम् । य एवं विद्वानग्निं चिनोतीति । तत्र चिनोतिना नाग्निसंस्कारार्थत्वेन चयनविधिरपि तु अग्निसञ्ज्ञ-कस्य यागस्यैव विधिः । अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्ये न, तमतिरात्रेण, तं द्विरात्रेणेत्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञा-नामग्न्यनुयजनत्वरूपगुणाम्नानात् । न हि अग्न्यनुयजनत्वमग्नेरया-गत्वेऽवकल्पते । देवदत्तमनुगच्छति यज्ञदत्त इत्यादौ तुल्यक्रिया-योगे एवानुशब्ददर्शनात् । अतश्चाग्निसञ्ज्ञकस्य यागस्य तस्मिन्नेव वाक्ये विधौ गौरवापत्तेर्विहिताग्नेय एव चिनोतिना लक्षणया तद्वि-धानम् । स चायमलाज् ज्योतिष्टोमविकारः । उत्तरवाक्येषु तस्य कत्वङ्गत्वसिद्धिः । इष्टकाभिरग्निं चिनुते इत्यनेन चयनस्य प्राप्तत्वा-च्चिनोतिर्निर्वपतिवदनुवादश्चयनस्येति प्राप्ते ।

कर्मणि च प्राप्तेऽप्युपादेयत्वमिति वैयधिकरण्यमप्याश्रीयेत। न त्वेतदस्ति। न च सन्निध्याद्यभावेऽपि नाम्न एव पूर्वकर्मोपस्थापकता। अग्निहोत्रं जुहोतीत्यनेन जुहोतिना हि यादृशी विजातीयहोमत्वप्रकारिका होमोपस्थितिस्तादृश्येव सन्निधिनोपनीता। युक्तं चस्मात् जुहोतीत्येतद्वाक्यस्थजुहोतेरपि स्वविषयविषयत्वमापादयन्ती भवति तद्गतविधेयार्थैकत्वप्रतिबन्धिका।

अग्निहोत्रादि नाम तु अग्निदेवताकहोमत्वप्रकारकहोमविशेष्यकबोधं जनयत् जुहोतेर्न पूर्वकर्मोपस्थापकत्वमापादयितुं क्षमम्। न हि अग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति। विजातीयहोमत्वस्य नाम्नाऽनुपस्थितेः। अन्यथा पर्यायत्वेन सह प्रयोगानापत्तेः। अतिप्रसङ्गनिराकरणस्य प्राचीनप्रयोगाभावेनैवोद्भिदधिकरणे स्थापितत्वेन योगरूढ्यनङ्गीकाराच्च। अन्यथा मत्वर्थलक्षणादिभिया अतिप्रसङ्गभङ्गार्थमपि रूढ्यङ्गीकारे सोमादावपि तदापत्तेः। अतो न नाम्ना तदुपस्थितिः। अतएव यत्र नाम्नैवानुपादेयगुणयोगेन श्रुतं न तु धातुः यथा सर्वेभ्यो दर्शपूर्णमासावित्यादौ, तत्र नामार्थस्यैवोपादेयत्वसामानाधिकरण्येन विधेयत्वप्रसक्तौ नामजन्योपस्थित्या तत्प्रतिबन्धान्न कर्मान्तरम्। अस्तु वा तद्वाक्यस्य प्राकरणिकत्वात्कर्मान्तरत्वम्। अतः प्रकृते नाम्ना विधेयार्थैकत्वस्य जुहोतौ प्रतिबन्धायोगादनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात् सिद्धं कर्मान्तरत्वम्।

अथ चानुपादेयगुणयोगस्य स्वसम्बन्ध्युपादेयताजननद्वारा पारिशेष्याद्भावार्थस्याप्युपादेयत्वापादनं व्यापारः। अनुपस्थितेरुपादेयत्वसामानाधिकरण्येन विधेयत्वाप्रतिबन्धः सः। अतएव स प्राची-

भावे चोत्तरवेदिमाचम् । उत्तरवेद्यामग्निं निदधातीति वचनात् । अतश्च तमुकृत्येनेत्यादिवाक्यानि वैकल्पिकत्वात् विकृतिविशेषे तन्नियमार्थानि, चयनाश्रितश्येनाकारत्वादिफलार्थगुणानां प्राप्त्यर्थानि चेति दशमे वक्ष्यते ॥ १०॥३८॥

प्रकरणान्तरे ॥ कौण्डपायिनामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यामित्यादि श्रुतम्। तत्र जुहोतिना अग्निहोत्रादिपदैश्च दूरस्थस्यापि कर्मण उपस्थितत्वात् तदनुवादेन यदाहवनीये जुहोतीतिवत्मासादिरूपगुणविधिः। उपादेयवदनुपादेयस्यापि दूरस्थकर्मानुवादेन विधाने बाधकाभावात् । कर्त्तव्यत्वकालादिरूपानेकगुणविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । अतो न कर्मान्तरविधिः इति प्राप्ते ।

सर्वत्र प्रवर्त्तकस्य विधेः कृतिविषयत्वापरपर्य्याय उपादेयत्वं प्रमाणत्वाच्चाज्ञातज्ञापकत्वाख्यं विधेयत्व च प्रमेयम् । तदुभयमप्येकवृत्ति । समानाभिधानश्रुत्यादिना च धात्वर्थभावनान्वयौत्सर्गिकः । योग्योपपदसत्त्वे तु विशिष्टविधिगौरवभिया तन्नानावृत्ति । यथायदाहवनीये जुहोतीत्यत्राहवनीयस्योपादेयत्वविधेयत्वोभयाश्रयत्वाद् योग्यत्वम् । अतएव तत्र धात्वर्थानुवादापेक्षायां दूरस्थनामपि सर्वहोमानां कथञ्चिदनुवादः ।

प्रकृते तु मासस्यानुपादेयत्वादुपादेयत्वं धात्वर्थ एव वाच्यम् । अतस्तत्सामानाधिकरण्येन विधेयत्वमपि तत्रैवेति विहितस्य विधानायोगाद्भेदः । एवं सत्यपि, यदि मासजुहोतीत्यादिवत् प्रत्यभिज्ञापक सन्निध्यादि प्रमाणं भवेत्ततोऽगत्या कालादा विधेयत्वं

स्यैव कर्मणः कालदेशविशिष्टप्रयोगविधिमात्रं विधिर्लाघवायानु-मन्यते न तु कर्मोत्पत्तिमपि विधत्ते। यत्र तु प्रयोगोऽपि प्राप्तो-यथा य दृश्येत्यादौ, तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिः। सम्भवति देशकालयोरुपादेयत्वासम्भवेऽपि यागाङ्गत्वेन विनियोग-विधिः। निमित्तस्थले तु मिथोनिमित्तनैमित्तिकयोरङ्गाङ्गित्वा-सम्भवात् प्राप्तस्यापि कर्मणोनिमित्तसम्बन्धानुमितपापक्षयार्थत्वेन विनियोगविधिरिति वक्ष्यते। फलसंस्कार्ययोस्तु तदुद्देशेन प्राप्त-कर्मविनियोगविधिः स्पष्ट एव। अतो न सन्निधिमात्रेऽनुपादेय-गुणयोगेऽपि कर्मान्तरम्॥१।२।४२॥

आग्नेयस्तु* ॥ कालद्वययोगेनाग्नेयं विधाय, यदाग्नेयोऽष्टाकपा-लोऽमावास्यायां भवतीति श्रुतम्। तत्र कालाद्वययुक्तादाग्ने-यात् कर्मान्तरविधानमिदम्। प्रकरणान्तराद्भ्यासाद्वा भेदोपपत्तेः। अनेनैव विहितस्येतरेण पौर्णमासीमात्रविधिस्तु उत्पत्तिशिष्टका-लावरोधान्निराकर्त्तव्य। न चैकस्यैव कर्मणोऽभ्युदयशिरस्कतया विधिद्वयेन विधानं पिङ्गाक्ष्यैकहायनीशब्दाभ्यामिव द्रव्यविशेषस्येति वाच्यम्। पिङ्गाक्ष्यैकहायनीशब्दाभ्यामुपस्थितस्याप्येकस्यैकेन विधिना विधाने बाधकाभावात्। प्रकृते तु एकेन विहितस्य नेतरेण विधि-सम्भव इति कर्मान्तरमेव। अतएवामावास्यायामाग्नेयद्वयकरणं पूर्वपक्षप्रयोजनमिति प्राप्ते।

---

* आग्नेयस्तु इति भवितुं युक्तम्। आग्नेयस्तुक्तैतुत्वादभ्यासेन प्रतीयेत इति चेद् सूत्रम्।

मोत्या * अनुपादेयगुणयोग एव प्रयोजकोऽपि तु उपादेयगुण-सामान्याभाव एवेति ध्येयम् । अत सिद्ध कालविशिष्टकर्मान्तर-विधानमेवेदम् । एवं सत्यत्र दक्षिणेन सौरेणाग्नेयोऽष्टाकपाल-इति देशरूपानुपादेयस्य आग्नेयपदस्य साधारणत्वेन पूर्वकर्मोपस्था-पकत्वाभावात् । निमित्तस्य तु सहायागरूपं विश्वजिता यजेतेति । आगूरण सद्दस्य । तदुत्तर सत्रमकुर्वतोऽप्य विश्वजित्, विश्वजिता यजेतेत्यस्मात्कर्मान्तरम् । न चानेन विनियुक्तस्य प्रयुक्तस्य वा तेनोत्पत्तिः । विनियोगादिसामानाधिकरण्येनावगताया उत्पत्ते सन्निधि विना बाधे प्रमाणाभावात् ॥२१॥४०॥

फलस्य ॥ फलस्याग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति । संस्कारस्य तु औदुम्बरीं सोक्षतीति सौक्षिप्रोक्षणात् कर्मान्तरम् । यथैव यथाऽनुपादेयानि † तथा वाजपेयाधिकरणे कौस्तुभे प्रपञ्चितम् ॥ १०॥४१॥

सन्निधौ ॥ यज्ञानामनुपादेयानां सन्निधौ प्रायुदाहरणानि । दर्शपूर्णमासप्रकरणे पौर्णमास्यां पौर्णमास्या यजेत, अमे दर्शपूर्णमासाभ्यां यजेत, दाक्षायन दर्शपूर्णमासाभ्यां यजेत, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति चतुर्णाम् । त्रिवृद्धत्र सहस्य इत्यात् त्रिवृत्कर्म यजतीति वैश्वदेवस्यार्थस्य ।

अत्र सर्वत्र सन्निधिना क्वचिदपदृष्टविधित्वनियत्यात् साक्ष-

* मात्येनैव, — इति ग० पुस्तके पाठः ।

† यथानुपदेया, — इति ग० ग० पुस्तकयोः पाठः ।

## अथ चतुर्थः पादः।



यावज्जीविकः॥ यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यत्र काम्ये एव स्वर्गाद्यर्थे दर्शपूर्णमासकर्मणि जीवनपर्याप्तकालविधिः। न च पौर्णमास्यादिकालविरोधः। व्याप्यव्यापकभावेन अमावास्यापराह्णादिवदुभयोरप्युपपत्तेः। अतएव विनिगमनाविरहात् काम्यद्वयविधावपि प्रयोगद्वयविधिः। जीवनपर्याप्तकालविधिसामर्थ्यादेव च पौर्णमास्याद्यर्थाद्दर्शपूर्णमासावृत्तिः। अतश्च तावद्व्याप्यप्रयोगव्यापकव्यापकैकप्रयोगादेव स्वर्गादिफलमिति प्राप्ते।

काललक्षणापत्तेर्नायत्कालविधिः। अतोधातुसम्बन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य कर्मसम्बन्धावगतेः, स्वावच्छिन्नकालकत्वादिरूपसम्बन्धाश्रयणे च गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्यायलभ्यत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेर्लाघवान्निमित्तत्वमेव सम्बन्धः प्रतीयते। तदा हि प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्यायलभ्यत्वाद्यावच्छब्दार्थोऽनुवादः। निमित्तत्वं च स्वान्वयव्यतिरेकानुविधायावश्यानुष्ठानकत्वम्। यथा राहूपरागान्वयव्यतिरेकानुविधायि अवश्यानुष्ठानं यस्य स्नानस्य तद्धि राहूपरागे।

अत्र च व्यतिरेकानुविधानस्य सर्वत्र प्रापकप्रमाणाभावादेव सिद्धेरन्वयानुविधान एव विधेस्तात्पर्यम्। अतश्च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठानबोधनादकरणे प्रत्यवायोऽनुमीयते। करणे

एतच्चैन्द्राग्नविधिशेषत्वान्न स्वातन्त्र्येण विधायकत्वम्। प्रशस्ताग्ने-यप्राशित्वेन चैन्द्राग्नप्रशंसा। अतो न कर्मान्तरम् ॥१४॥४७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

द्वितीयस्य तृतीयपादः ॥



विरुद्धानां नानाशाखागताङ्गानां विकल्पः। स च न तत्तत्पुरुष-भेदेन व्यवस्थितः। तत्तदङ्गानां तत्तदर्थेषर्थत्वे प्रमाणाभावेन प्रकरणाच्चक्रतुकार्थत्वावगतेः। अविरुद्धाङ्गेषु तु समुच्चयः। शाखा-न्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम्। यत्तु वङ्क्ल्यं वा खरद्योक्तमित्यादि वचनं, तत्सर्वाङ्गोपसंहारासम्भवेऽनुकल्पविधा-नार्थमिति कौस्तुभे द्रष्टव्यम्। तदेवं शब्दान्तराभ्याससङ्ख्यासञ्ज्ञा-गुणप्रकरणान्तरैर्निरूपितः कर्मणां भेदः। अतः परं तेषां विनि-योगो निरूपयिष्यते॥२॥४॥५॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वितीयाध्यायस्य चतुर्थः पादः॥

---

वं धर्मेण पापमपनुदतीत्यादिवाक्यशेषाद्राचिषवन्यायेन पापक्षय-एवानुषङ्गिको नित्यनैमित्तिकस्थले फलम् ।

यत्र तु रथन्तरसामत्वादिनिमित्तस्थले नैमित्तिकस्य पाठादेव प्राप्तिस्तत्रैवान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिस्तत्र व्यतिरेकानु-विधान एव विधेस्तात्पर्यम् । अतएव रथन्तराभावे ऐन्द्रवायवाग्र-त्वस्याभावः । अतश्च यावज्जीवपदे लाघवाद्यनुरोधेन जीवनस्य निमित्तत्वावगतेस्तदनुरोधेन पापक्षयार्थे विनियोगान्तरमेवेदमिति सिद्धम् ॥१॥४४॥

नामरूप ॥ शाखाभेदेनाम्नातेऽग्निहोत्रादौ सत्स्वपि भेदकप्रमा-णेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्ववाक्यस्य कर्मोत्पत्तिपरत्वावगति-स्तत्रस्योत्पत्त्ययोगात् कर्मान्तरत्वसिद्धिः । प्रकृते तु उक्तप्रमाणैः उत्पत्तिपरत्वावगमेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येक-स्यैव कर्मणः सर्वत्रोत्पत्तिसम्भवान्न कर्मभेदः । न हि सर्वाः शाखाः सर्व-पुरुषैरध्येयाः । स्वाध्यायविधावध्ययं वृणीत इतिवत् स्वीयत्वैकत्वयो-र्विवक्षितत्वेऽनेकशाखाऽध्ययनानुपपत्तेः । न चैवं वेदान्तरस्य*शाखा-ध्ययनस्याप्यनापत्तिः । वेदानधीत्येत्यादिवचनान्तरानुरोधेन वेदत्रय-गतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः ।

अतएव वेदभेदे पुरुषाभेदादेकत्रैवोत्पत्तिरपरत्र गुणार्थं श्रवण-मित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्स्वपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अतएवैकस्मिन् कर्मणि

* वेदान्तरस्य, – इति क॰ पुस्तके पाठ॰ ।

प्रयाजादेः कारकत्वेन विध्यन्वयाच्च प्रयाजादावपि स। द्रव्यगुणकालकर्त्रुद्देशादौ च यागाद्युद्देश्य यागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वाद्यागाङ्गत्वाविघात। षष्ठीस्थले च सम्बन्धसामान्याभिधानेऽपि कारकत्व एव पर्यवसानान्नाव्याप्ति। निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वाभावान्नाङ्गत्वापत्ति। निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम्। लक्षणे तादृश्या एवोद्देश्यताया विवक्षितत्वात्। उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदन्तदतिरिक्तपरम्। क्रय्यादेरपि यागकृतिकारकत्वादङ्गत्वप्रसक्तौ विधेयत्वान्तम्*। यथा चास्य न चाव्याप्त्यतिव्याप्ती, तथा कौस्तुभे विस्तर।

एवं च यत्रेदं न लक्षणं, यथा यागादेर्भावनादि प्रति, तत्र भाक्तोऽङ्गत्वव्यवहार शास्त्रे। यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं, कारकत्वमात्राभिधायित्वात् तृतीयादे। तथापि यत्पदार्थं स्वर्गादिपदात्, तदुद्देश्यकत्वं सप्तम्यादिना, कृतिराख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात्। विधिर्हि विशिष्टभावनां विदधत्तदर्थादिविशेषणान्यपि विधत्त इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वय। अतएवाङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहार ॥३॥२॥

---

* इत्यमेव पाठः सर्वत्र। विहितत्वान्तमिति तु भवितुमुचितम्।

श्रीगणेशाय नमः ।

# तृतीयोऽध्यायः ।

## प्रथम पादः ।

अथातः ॥ तदेवं षट्प्रमाणके कर्मभेदे निरूपिते सम्प्रति शेषविनिरूपित शेषत्वापरपर्यायमङ्गत्वं निरूप्यते । भिन्नानां हि तत् सम्भवति नाभिन्नानामिति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता । तथापि अङ्गत्वसामानाधिकरण्येन हेतुतामादायैव सङ्गत्युपपत्तावच्छेदकावच्छेदेन तदसत्त्वेऽपि न कश्चिद्विरोधः । अत एव हेतुत्वं, अनन्तरस्य तु तत्प्रसङ्गान्निरूपणमित्यपि बोध्यम् । अङ्गत्वमेव चाऽध्यायार्थोऽङ्गित्व त्यागात् । तदपि च श्रुत्यादिषट्प्रमाणकं, अतिदेशप्रमाणकस्येहाविषयत्वात् । तच्चानेकप्रकारकं विचार्यते । अङ्गत्वलक्षणम्, शेषपदशक्यतावच्छेदकम्, अङ्गाङ्गित्वयोरवच्छेदकम्, श्रुत्यादीनि च षट् अङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलम्, विरोधश्च क्वास्ति क नास्तीत्यादि ॥१॥१॥

शेषः ॥ इत्यत्र प्रकारद्वयं निरूप्यते । यदेव हि अङ्गलक्षणं तदेव शेषपदशक्यतावच्छेदकं मान्यम् । तथाङ्गत्वं नाम पारार्थ्यम् । तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत्तत्त्वं तदङ्गत्वम् । स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलायां कारकत्वेन विधानाद्यागे तत्सम्बन्धः । प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां

स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः। एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम्। भोक्ता चोत्सर्गतो विधिवशात्कामनावशाद्वात्मनेपदवशाच्च कर्तैव। प्रमाणत्वे त्वन्वय.। अत्राङ्गत्वव्यवहारो भाक्त इति तु ध्येयम्। पुरुषः पुन कर्तृत्वादिना यागाद्युद्देश्यत्वतिकारकत्वावाक्यादेव तदङ्ग इत्यविवादमेव॥३॥३॥

तेषाम्॥ तदेवमङ्गत्वे निरूपितेऽङ्गत्वे श्रुत्यादीनि षट् प्रमाणानीत्युक्तम्। तत्र श्रुतिर्नामाङ्गत्वघटकीभूतोद्देश्यता-तत्तिकारकत्वयोरन्यतरस्य प्राधान्येन वाचक शब्दः। स च द्वितीयातृतीयादिविभक्तिरूप। क्वचिद्वाक्यादिनाप्यन्यथं प्राधान्येनेति। तस्य कारकत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्ववाचित्वाभावात्। अतएव प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, वारणे यज्ञावचर इत्यादौ वाक्यीय एव विनियोगो न तु श्रौतः।

तच द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतु। वस्तुतस्तु। ईप्सितत्वाख्याया उद्देश्यताया साध्यतामात्रवाचिद्वितीयावाच्यत्वाभावात्तत्रापि न मुख्या श्रुति। अपि तु भाक्त एव श्रुतिव्यवहारः। ईप्सितत्वांशे लक्षणाऽङ्गीकारात्। अतश्चोद्देश्यतापदमपि नैव लक्षणे देयम्। एव षष्ठ्यादावपि कारकत्वशक्त्यभावात् श्रुतिव्यवहारोभाक्त एव। एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तरप्रतिपादन, तत्रापि वाक्यीय एव विनियोगो न श्रौतः। एवं समासपदश्रुत्यादिष्वपि द्रष्टव्यम्।

तदेव श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धेऽधुना गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्यङ्गाङ्गित्वयोरवच्छेदकविचारः

द्रव्यगुणः॥ यद्यपि पारार्थ्यमङ्गत्वं तथापि न यागादेर्लक्ष्यता। समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गादिशेषेण विधितत्वाभावात्। विधेः स्वरूपयोग्यत्वेनैव लिङर्थतया इष्टसाधनत्वानाक्षेपकत्वात्। आक्षेपकत्वेऽपि भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतयेष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च। स्वर्गकामपदस्य तु स्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् कर्तृपरत्वादिनाऽप्युपपत्तेर्न भाव्यपरत्वावश्यकता। अतो न यागादेर्लक्ष्यत्वम्। वस्तुतस्तु। उपकारकत्वमेव शेषत्वम्। तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात्। तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयगम्यमेव। अतएव व्रीह्यादेर्द्रव्यस्यारुण्यादेर्गुणस्यावघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम्। प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वासम्भवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेस्तद्बलेनैव उपकारकत्वकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वमिति प्राञ्चः।

नोपकारकत्वं शेषत्वं, गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः। अपि तु पारार्थ्यमेव। अपकारकत्वस्थले तु तदपकारस्यैवेष्टत्वेनोद्देश्यता न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः। तदपि श्रुत्यादिषट्प्रमाणगम्यमिति वक्ष्यते। अतश्च वाक्याद्यागोऽपि फलम्। तथाहि। यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङाऽवगम्यते, तथापि कदाचित् प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेरवश्यं कदाचित्तया भवितव्यम्। तदा चेष्टसाधनताज्ञानं विना तदसम्भवात्तस्य च बाधकाभावे भ्रमत्वायोगादिष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते, इष्टविशेषसाधनत्वं च

प्रसङ्ग । अत्र च पूर्वत्रयस्यैकानुगमकाभावेऽपि एकपदोपादानादवाक्यभेद । तत्तद्व्यापारकसाधनता एव च विवक्ष्यन्ते न तु साधनतावच्छेदकादीन्यपि। तेन यागत्वपुरोडाशत्वव्रीहित्वाद्यभावेऽपि न क्षति । यथा च व्रीहियवयो कारणताभेदेऽपि यवसाधारण्य तथा कौस्तुभे विस्तर । तत्र तत्र नवमादौ चोपपादयिष्यते । ३। ४॥

द्रव्यम् ॥ दर्शपूर्णमासयो, स्फ्यश्च कपालानि चेति दश द्रव्याण्युक्रम्यैतानि वै दश यज्ञायुधानीति श्रुतेन वाक्येन दशानामपि द्रव्याणां यज्ञसाधनत्वेन विधानादुत्पत्तिशिष्टपुरोडाशाद्यवरोधेन च साक्षाद्यागसाधनत्वायोगादङ्गत्वेऽवतारात् प्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षप्रकृतक्रियामात्रावच्छिन्नोद्देशेन द्रव्याणि विधीयन्ते। स्फ्येनोद्धन्तीत्यादिविशेषविनियोगास्त्वनुवादा इति प्राप्ते ।

तेन तेन प्रत्यक्षविधिना तृतीयाश्रुतिसहकृतेन स्फ्यादीनां विशिष्य विनियोगाद् यज्ञायुधवाक्यमेवैकमश्रुतविधिक वै-शब्दोपबद्धमनुवादकम्। बहूनामनुवादानां वैयर्थ्यात् । अस्य च यज्ञायुधानि यजमानीयेत्यर्थवादत्वेन सार्थकत्वात् । तस्माद्दूननमात्रजन्यव्यापारकप्रकृतापूर्वसाधनत्वमेवोद्धननपदेन लक्षयित्वा तदुद्देशेनैव स्फ्यादिविधि ॥३॥५॥

अर्थैकत्वे ॥ ज्योतिष्टोमे, अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति श्रुतम्। तत्रारुणशब्दोऽरुणवचनोऽरुणत्वजातिवचनो वा न तु विशिष्टव्यक्तिवचन । तृतीयया च शक्यस्यैव करणत्वमुच्यते, न तु तदर्थं द्रव्यलक्षणा । टावाद्यर्थोऽपि तत्रैव सामानाधिकरण्येनान्वीयते। न तु तदर्थमपि व्यक्तिलक्षणा । अव्युत्पत्त्यापत्ते ।

क्रियते । दर्शपूर्णमासयोर्व्रीहीनवहन्ति, आज्यमुत्पुनाति, गां दोग्धीत्यादय आज्यौषधसान्नाय्यसम्बन्धिन संस्काराः श्रुताः । तेषु किं सर्वसाधारणमवघातविधावुद्देश्यतावच्छेदक उताज्यादिव्यावृत्तं, एवमन्यत्रापीति विचारः । तत्र न तावच्छ्रुतं व्रीहित्वादिकमेवोद्देश्यतावच्छेदकम् । आनर्थक्यापत्तेः । अवघातप्रोक्षणादिव्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्जायमानत्वात् । यवेष्वनापत्तेश्च । अतो नवमाधिकरणन्यायेन व्रीहित्वविवक्षयाऽपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्तत्र फलभव्यासन्नत्वादेकत्वाद्द्वाराद्युपकारकेषु कृप्तप्रयोजकशक्तिमत्त्वाच्च परमापूर्वस्य तत्साधनत्वमेव प्रदेयघटकत्वसम्बन्धेन लक्ष्यते । अस्ति चाग्नेयादेस्तत् प्रत्यपि साधनता । अतएव न वाङ्नियमन्यायोऽपि । अतस्तोद्देश्यतावच्छेदकस्य सर्वसाधारणत्वादाज्यादिष्वप्यवघातादेः सङ्करः । न च प्रतिनियतनिर्देशाद्व्यवस्था । तथात्वे व्रीहित्वादिविवक्षाया आवश्यकत्वे नीवारादिष्वनापत्तेरिति प्राप्ते ।

यद्यपि विधिरविशेषप्रवृत्तः स्यात्, तथापि दृष्टार्थत्वनियमविधित्वलाघवानुरोधेन विशेषे व्यवस्थाप्येत, किमुत यदा सोऽपि विशेषप्रवृत्त एव । व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात् । तस्याप्यनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेरानर्थक्याभावेन तदतिक्रमकारणाभावात् । परम्परया फलवत्त्वाच्च । अतो व्रीहिपदेन व्रीहिसाध्यानि यानि आग्नेयाग्नीषोमीयैन्द्राग्न्युत्पत्त्यपूर्वाणि तन्निष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुलरूपव्यापारकसाधनतासामान्याश्रयत्वस्यैव चोद्देश्यतावच्छेदकत्वेन विवक्षितत्वादाज्यादिषु

क्रयारुण्यादिमकत्ककारकविशिष्टभावनाविधानोत्तरं क्रयस्य सोम-सम्बन्धवेलायामारुण्यादिविकस्य मत्वर्थलक्षणया क्रयसम्बन्धावगतौ पशादिविशेषणविधिविषयकल्पनया तेषां क्रयाङ्गत्वावगमे जाते पश्चात्परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्ठिकोऽरुणैकहायन्योः परस्परं विशेषणविशेष्यभावमात्रेण सम्बन्धोद्रव्यविशेषसम्बन्धश्चेति द्रष्टव्यम् । ततश्च युक्तं क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य, न तु वासःप्रभृतिषु क्रयद्रव्यान्तरेषु ।

न च यवेष्विव सोमप्राप्तिसाधनक्रयद्रव्यत्वाविशेषात् प्राप्त्याशङ्का । तेषां क्रयान्तरद्रव्यत्वात् । भिन्नाहि गुणाद्वर्क्रियाः । न च विक्रेत्रानतिवशादुत्पत्तिशिष्टद्रव्यावरोधेऽपि द्रव्यान्तरनिवेशसम्भवः । एकद्रव्यानतस्यैव विक्रेतुः सम्पादनीयत्वात् । अन्यथा दक्षिणानामपि प्रसङ्गबाधानापत्तेः । न च दशभिः क्रीणातीति वचनमेव निवेशतात्पर्यग्राहकम् । तस्य क्रयसमुच्चयपरत्वेनाप्युपपत्तौ गुणन्यायसिद्धभेदापवादकत्वायोगात् । न च क्रमभेदेऽपि एकसोमप्राप्त्यर्थत्वाविशेषात् क्रयान्तरद्रव्येऽपि आरुण्यस्य निवेशाशङ्का । आरुण्यविशिष्टविजातीयक्रयविधयन्यथानुपपत्तिकल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वाऽनतिप्रसक्तस्यैव कल्पनीयतया विजातीयक्रयजन्यानतिविशेषस्य विजातीयक्रयत्वस्यैव वा विवक्षितत्वेनातिप्रसङ्गशङ्कानुपपत्तेः । यथा चैवं सति विवक्षे सर्वक्रयद्रव्यस्थानापत्ते निवेशस्तथा-कौस्तुभे द्रष्टव्यम् ॥३।६॥

*एकत्वयुक्त ॥ ज्योतिष्टोमादिषु यद्ग्रहं सम्मार्ष्टीत्यादि श्रुतम् । तत्र* सम्मार्गादि प्रति ग्रहत्ववदेकत्वस्यापि उद्देश्यतावच्छेदकता, उत तस्यैव

यथा चैवं सति, गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्याद्यनुशासनोपपत्तिस्तथा. कौस्तुभे द्रष्टव्यम् ।

एकहायन्यादिपदानां तु बहुव्रीहित्वादवयवार्थविशिष्टान्यपदार्थरूपे द्रव्यएव शक्तिरिति प्राञ्चः । अन्यपदार्थे पदद्वयस्य लक्षणेति तु बहवः । न च द्रव्यस्यैकेनैव पदेन विधिसम्भवे इतरेण विध्यनुपपत्तिर्वैयर्थ्यं चेति वाच्यम् । उभयोर्युगपत्प्रवृत्तेर्विहितविधानाभावात् गुणान्तरपरत्वेन सार्थक्याच्च । प्रकृते त्वत्रापि आरुण्यन्यायेन लक्षणाऽपि नेति वक्तुम् । समासानुशासनस्य मत्वाद्यनुशासनवदुपपत्तेः । द्रव्ये पार्ष्ठिकगुणसम्बन्धोपपादनस्य प्रमाणान्तरप्रमितद्रव्यमादायोपपादनीयमिति न कश्चित् विरोधः । तद्धितारुण्यस्य योग्यत्वेऽपि कारकत्वेनाव्युत्पन्नस्य वाक्यीयद्रव्याद्यन्वयस्यायोगाद्युत्पन्नत्वेऽपि* चामूर्त्तत्वेनायोग्यस्य वाक्यीयक्रियान्वयायोगात्ततो विच्छिन्नस्य प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेन वाक्येनारुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारेण प्राकरणिकसर्वद्रव्याङ्गत्वमिति प्राञ्चः ।

न योग्यताज्ञानं शाब्दबोधहेतुरपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम् । अतश्च प्रतिबन्धकताभावसत्त्वे आरुण्यस्यापि क्रियान्वयबोधोपपत्तेः । पश्चाच्च योग्यतागवेषणायामारुण्यस्य पार्ष्ठिकद्रव्यसम्बन्धबोधोपपत्तेर्न ततो विच्छेदाशङ्का । अतएव प्रथमत. सोम-

---

* इत्थमेव पाठ. सर्व्वत्र । द्रव्याद्यन्वयस्यायोगादुत्पन्नत्वेऽपि, — इति तु प्रतिभाति ।

र्यता । पशुत्वेन विनियुक्तस्यापि लोहितादेः संस्कार्यत्ववद् बहुत्वावच्छेदेन विनियुक्तस्यापि ग्रहस्यैकत्वावच्छेदेन संस्कार्यत्वोपपत्तेः । न चैवमपि द्वयोरुद्देश्ययोरेकप्रधानक्रियावशीकाराभावात्कथं परस्परान्वयनियम इति वाच्यम् । वैकृताङ्गग्रहणानुरोधेनापि पदश्रुत्यैव वा प्रधानयोरप्याकाङ्क्षां प्रकल्प्य तदुपपत्तेः । दृश्यते च यत्र भिन्नवाक्यस्थले आग्नेयं चतुर्धा करोति, पुरोडाशं चतुर्धा करोतीत्यादौ गुणानुरोधेन प्रधानयोरभेदान्वयस्तत्रैकवाक्यस्थले सुतरां शाब्दबोधे मुख्यविशेष्यभूतक्रियया वशीकारः । एकत्वाविवक्षापेक्षया च वशीकारकल्पनायां न कोऽपि दोषः । अत एकत्वादेरपि स्वातन्त्र्येणोद्देश्यतावच्छेदकत्वोपपत्तिरिति चेत् ।

भावनायाः करोतिपर्यायत्वेनैककर्मत्वाभावादुद्देश्यानेकत्वे तन्तङ्गनिबन्धनवाक्यभेदापत्तेः । एककर्मकत्वञ्चैकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वम् । अत सर्वस्मै दर्शपूर्णमासावित्यादौ यद्यपि पुत्रत्वपशुत्वादीनां कर्मत्वपर्याप्त्यधिकरणतावच्छेदकानां धर्माणां भेदे एकेनैव सर्वपदेन युगपद्बोधात्सैककर्मकत्वहानिरित्याद्यं विपर्येत्यन्तम् । पर्याप्तिपदरहस्यं तु कौस्तुभे द्रष्टव्यम् । अन्तश्च फलद्वये संस्कार्यद्वये फलसंस्कार्यद्वये वा तावद्वाक्यभेदापत्तिः स्पष्टा । निमित्तद्वयस्थलेऽपि यावज्जीवाधिकरणन्यायेन निमित्तद्वयस्य फलद्वयावेदकत्वाद्वाक्यभेदापत्तिर्द्रष्टव्या । यथा पवननिमित्तद्वयेनैकस्यैव फलस्य प्राचेपणतया कौस्तुभे स्पष्टम् । अतएव निमित्तफलस्थले निमित्तसंस्कार्यस्थले वा एककर्मकत्वभङ्गाभावान्न वाक्यभेद । न वा कालदेशादुद्देश्यानेकत्वे सः । यथा च फलादि-

षा, एकत्वं तु कथमपि विध्यन्वयासम्भवाद्विवक्षितमिति चिन्त्यम् । पश्वेकत्वद्वयष्टकत्वस्यापि अविवक्षाकारणाभावादुद्देश्यतावच्छेदकता । अतश्चैकस्यैव ग्रहस्य सम्मार्ग इति प्राप्ते ।

यत्र हि समासादौ परस्परान्वयोव्युत्पत्तौ यथाऽस्याभिधानी यत्किञ्चिल्लोमच्छिन्नमित्यादौ, तत्र भवत्येव विशिष्टोद्देश । यत्र तु स न व्युत्पन्नस्तत्र परस्परान्वयेन विशिष्टोद्देशे अव्युत्पन्नान्वयनिबन्धनवाक्यभेदापत्तेर्न विशिष्टोद्देश । यथा यस्योभय हविरार्त्तिमार्च्छेद्ग्रहमिति च, द्वयो सुबन्तयोर्भावनान्वयस्यैव व्युत्पन्नत्वेन परस्परान्वयस्याव्युत्पन्नत्वात् । अन्यथा पशुद्वयान्याज्यानीत्यत्रापि विशिष्टविधानापत्ति । एकवचनाद्युपात्तसङ्ख्यादेस्तु समानाभिधानश्रुत्या कारणत्वकर्मत्वादिरूपे प्रत्ययार्थ एवान्वितस्य पदश्रुत्या प्रातिपदिकार्थान्वयो नैव व्युत्पन्न । एव सर्वेभ्यो दर्शपूर्णमासावित्यादौ एकपदोपात्तानेकार्थप्रतीत्युत्तर लक्षणया प्रातिपदिकादेव साहित्यप्रतीतिस्तत्रापि साहित्यस्य प्रत्ययार्थ एवान्वयो न प्रातिपदिकार्थ इति कौस्तुभे स्पष्टम् । अतश्च नैतादृशस्थले विशिष्टोद्देशसम्भव ।

अथ विशिष्टोद्देशासम्भवेऽपि उभयोरपि प्रातिपदिकवचनार्थयो प्रत्ययार्थे कर्मत्वादावन्वयेन तद्द्वारा भावनान्वयोपपत्ते सम्मार्गस्य पार्ष्णिकोद्देश्यद्वयसम्बन्धे बाधकाभाव । न चोद्देश्यानेकत्वे वाक्यभेद । भावनायामनेककारकसम्बन्धवदनेकोद्देश्यसम्बन्धे बाधकाभावात् । न च तस्यामेकोद्देश्यतावच्छेदकनियम । सर्वेभ्यो दर्शपूर्णमासावित्यादौ पुत्रत्वपशुत्वादेरनेकस्यापि तत्र दर्शनात् । विधेस्त्वनेकोद्देश्यकत्वे नैव काचित क्षति । न चैकत्वावच्छिन्नस्य विनियोगाभावादस्का-

वाक्यभेदाद्यभावात्तथापि ज्योतिष्टोमैक्ये तत्तद्ग्रहापूर्वाणां भेदात् पयसा मैत्रावरुणं श्रीणातीति तद्ग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेर्न चमसेषु सम्मार्गः ॥३।८॥

आनर्थक्यात् ॥ सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्राव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशारत्नित्वं वाजपेयोद्देशेन षष्ठीश्रुत्या विधीयते । न यूपोद्देशेन, अतिप्रसङ्गापत्तेः । वाजपेयेन विशेषणे विशिष्टोद्देशाच्च । अतः सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयोर्ध्वपात्रद्वारेण निविशते । यूपपदं सादृश्याद्गौणं इति प्राप्ते ।

यूपपदस्य गौणत्वे प्रमाणाभावाद्यूपपदेन स्वर्गकार्यं लक्षयित्वा तदुद्देशेन सप्तदशारत्निद्रव्यं विधीयते । यद्यपि च द्रव्यमरत्नि-परिमाणस्यातिदेशतः सम्भवत्प्राप्तिकं, तथापि तदनुवादेन सङ्ख्या-विधाने एकप्रसरताभङ्गापत्तेस्ततः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टं द्रव्य-मेव सङ्ख्याविधिफलकं लोहितोष्णीषा* इत्यादिवद्विधीयते । यूप-कार्यं स्वरूपे चानर्थक्यात् प्रकरणात् वाजपेयापूर्वसाधनत्वलक्षणया वाजपेयापूर्वसम्बन्धियूपलाभात् वाजपेयस्येत्यनुवादः । षष्ठी च पर-म्परासम्बन्धेऽप्युपपन्ना नप्तरि देवदत्तस्यायमिति वत् । व्यवहितत्वादि च गौणत्वापेक्षया न दोषः ॥१॥८॥

कर्त्तृगुणे ॥ दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतमभिक्रामं जुहो-तीति । तत्राभिक्रमणस्यामूर्त्तत्वाज्जुहोत्युपात्ते प्रयाजहोमेऽन्वयानुप-पत्तेरारुण्यवदेव कर्त्तृरूपस्य द्रव्यस्यानुपात्तत्वात्तद्द्वाराऽप्यन्वयानुपप-

* इत्यमेव पाठः सर्व्वत्र । लोहितोष्णीषा इति पुस्तकान्तरे पाठः ।

साहित्यस्य नैकबोधविषयता तथा कौस्तुभे स्पष्टम् । अतश्च तत्सा-हित्याविवक्षायां वाक्यभेददोषपरिहार एवेत्याद्यन्यत्र विस्तरः ।

ननु तथापि नैकत्वादीनामविवक्षा सम्मार्गभावनायां गुणत्वेन विवक्षोपपत्तेः । न चैवमेकत्वांशे द्वितीयया करणत्वलक्षणाद्ग्रहांशे च प्राधान्याभिधानाद्वैरूप्यापत्तिः युगपद्वृत्तिद्वयविरोधापत्तिश्चेति वाच्यम् । ईप्सितानीप्सितसाधारणकर्मत्वमात्रे द्वितीयायाः शक्तत्वेन प्रमाणान्तरादिष्टत्वावगमेऽपि ऐकरूप्येणोभयोरप्यन्वयोपपत्तेः । न चैवमपि सम्मार्गाङ्गभूतस्यैकत्वस्य तदनङ्गभूतग्रहद्वारकतासम्भवः । अङ्गत्वाद्यभावेऽपि सम्बन्धितामात्रेणागमेति मन्त्रे स्वर्गस्येव ग्रहस्यापि द्वारत्वोपपत्तेः । अतश्च विवक्षितमेकत्वमिति चेत् ।

गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणत्वलक्षणाङ्गीकारस्य युग-पद्वृत्तिद्वयविरोधवैरूप्यादिदोषान्याय्यत्वात् । तदरमनुवादत्वे तस्मिन्नेव पाशाधिकरणन्यायेन लक्षणामात्रम् । न चेप्सितानीप्सितसाधारण-कर्मत्वमात्राभिधानाच्चोक्तदोषप्रसङ्गः । तथात्वे निरुक्तैककर्मत्वभङ्ग-प्रसङ्गेन वाक्यभेदापत्तेः । अतश्च गुणत्वसिद्ध्यर्थं लक्षणाश्रयणे पूर्वोक्त-दोषापत्तेरेकवचनं बहुत्वलक्षणार्थं सत्साधुत्वार्थमनुवादोऽविवक्षितम् । यथा चैवं सत्यष्टवर्षं ब्राह्मणमुपनयीतेत्यादौ अष्टवर्षत्वादेर्विवक्षा, तथा कौस्तुभ एवोपपादितम् ॥३॥७॥

संस्कारादा ॥ एकत्ववद्ग्रहत्वस्यापि अविवक्षा, लिङ्गादेव सम्मा-र्गस्य सोमावयवैकनिर्हरणप्रयोजनत्वावगमेन सोमपात्रमात्रस्य संस्का-र्यत्वावगतेः । उभयोरपि ग्रहचमसयोरेकत्र्योर्निरूपेणाग्रूहैश्वर्यत्वेन ग्रहेष्विव चमसेष्वपि सम्मार्गापत्तिश्चेति प्राप्ते । ग्रहत्वविवक्षायां

वचनफलप्रकाशकत्वेन ज्रपि लनुवदनजनकतया लाघवात्। ज्रतश्च न द्वारलोपाद्बाध ऊहो वा। ज्रनुशब्देन दर्शपूर्णमासाङ्गभूतपदार्थानन्तर्यस्य उक्तत्वात्तस्य च परप्रयुक्तत्वेन बहिः क्रतु प्रयोगेऽनुष्ठानुमशक्तेः क्रतुमध्यप्रयोगसिद्धिः। वैकृतानुवचनेनैव च प्रसङ्गात् प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम्। ज्रतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः। न च तर्हि तदङ्गत्वमेवोपवीतस्य किं न स्यात्। तेषां विकृतित्वेन प्राकृताङ्गैर्निराकाङ्क्षाणां प्रकरणाभावात्। वाचनिकाङ्गसन्दंशाभावाच्च। ज्रतो महाप्रकरणाद्दर्शपूर्णमासाङ्ग उपवीतं तत्कर्तृसंस्कारकतया तत्कर्मणि सर्वप्रयोगारम्भे कार्यमिति सिद्धम्।३॥११॥

गुणानाम्॥ ज्राधाने पवमानेष्टिषु प्रदेशान्तरे वारणीयज्ञावचरोवैकङ्कतीयज्ञावचर इति श्रुतम्। तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां सत्यादयज्ञरूपाधाने निवेशासम्भवादानर्थक्यतदङ्गन्यायेन पवमानेष्टिरूपे यज्ञ एव निवेश इति प्राप्ते, भाष्यकारेण तावदेव सिद्धान्तितम्।

ज्राधानप्रकरणे पठितेन यदाहवनीये जुहोतीति वाक्येन पवमानहविषामग्न्यङ्गत्वावगतेराधानाङ्गत्वाभावेनानर्थक्यतदङ्गन्यायासम्भवात् स्वरूपेण च पवमानेष्टीनामसन्निधितत्वाद्वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्वं सर्वयज्ञाङ्गत्वं वेति।

वार्त्तिककारस्तु न तावदनारभ्यवाक्येन पवमानहविषामग्न्यङ्गत्वेन सर्वहोमानुवादेनाहवनीयविधानात्। पवमानेष्टीनामेव विधिथ्योपस्थित्यभावे सप्तम्या प्राधान्यलक्षणाया प्रमाणाभावात्। नापि

त्तोमस्ततो विच्छिन्नस्य प्राकरणिकसर्वहोमाङ्गत्वं तदीयकर्त्तुराहवनीय-प्रत्यासत्तिरूपदृष्टकार्यद्वारेति प्राप्ते ।

अनुपात्तस्यापि आख्यातगम्यस्य सन्निधानात्तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेवेति भाष्यकारेण सिद्धान्तितम् । तत् पञ्चम्यन्तस्य पूर्वकालतादिसम्बन्धेन जुहोत्यनन्वयेनैवाकाङ्क्षाभावात् जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणाभावाद्दशमाधिकरणेन गतप्रायत्वाच्च वार्त्तिककारेणान्यथा व्याख्यातम् ।

सत्यपि वाक्यीयहोमसम्बन्धे सङ्कोचे प्रमाणाभावादेवा हवींषीतिवत्प्राकरणिकसर्वहोमाङ्गत्वम् । वाचनिकाङ्गसन्दंशरूपावान्तराधिकारस्य वाक्यसङ्कोचकत्वानुपपत्तेः । यदि हि तादृशसन्दंशमध्ये अभिक्रामतीत्येव श्रूयेत, ततोऽवान्तरप्रकरणेन स्यादपि प्रयाजाङ्गत्वम् । वस्तुतस्तु नाङ्गेष्वितिकर्त्तव्यताऽऽकाङ्क्षालक्षणं प्रकरणं, फलाभावात् । अन्यथा प्रयाजाभिक्रमणादीनामप्यनुयाजाद्यङ्गत्वापत्तेः । वाचनिकाङ्गसम्बन्धसिद्ध्यर्थञ्च कल्पितायाः आकाङ्क्षायास्तन्मात्रग्राहकत्वेनाभिक्रमणग्राहकत्वानुपपत्तेरिति प्राप्ते ।

भावनाख्याभावेनाङ्गभवनाख्यपि क्रतूपकारभाव्यकाख्येतिकर्त्तव्यताकाङ्क्षोपपत्तेरङ्गानामप्यस्त्येव सा । सा परं प्रधानगतफलवत्त्वेन प्रतिबध्यते सन्निधाम्नातविषये । अतो न परस्पराङ्गत्वप्रसङ्गः । तदा तन्निवृत्तिरतिदेशेनाचेपलभ्यस्वसम्बन्धेन साधारणैर्वा आचमनादिभिः । यच्च तु वाचनिकाङ्गसन्दंशस्तत्राधेनाङ्गाकाङ्क्षोन्मीलन्नस्तिमेन च तत्राय । न तु मन्त्रादाविव वाचनिकाङ्गानां प्रत्येकमुत्तेजकता । तावद्भावकूटप्रवेशे गौरवात् । तद्वदिह व्यभिचाराभावाच्च । अतो-

वाक्यायामिति वाक्याभ्यां प्रधानाङ्गत्वम् । दृश्यते च लिङ्गस्यापि मन्त्रगतस्य वाक्येनापि ब्राह्मणगतेन बाधो यद्यप्यन्यदेवत्य इत्यादिनेति प्राप्ते ।

अबाधेनोपपत्तौ बाधायोगाच्च प्रधानाङ्गत्वम् । न हि सोमदेवत्यस्य मन्त्रस्य लिङ्गाविरोधः सम्भवति, सोमस्य देवतात्वाभावात् । अस्यावश्यापरसन्निधानत्वस्याप्यसम्भवाच्च । वस्तुतस्तु वाक्यस्यास्य व्यवस्थामात्रकरणे लाघवाच्च प्रधानाङ्गताबोधकत्वम् । व्यवस्था च, पौर्णमास्यां यौ आज्यभागौ तत्र वार्त्रघ्नीत्यादिरूपेण कालकृता, पौर्णमासीसंज्ञकप्रधानाङ्गभूताज्यभागयोर्वार्त्रघ्नीत्येव कर्मकृता वेत्यादि विशेषः कौस्तुभे द्रष्टव्यः ॥ ६ ॥ १३ ॥

आनन्तर्यम् ॥ दर्शपूर्णमासयोर्हस्तावनेनिक्ते, उलपराजीं स्तृणातीति, तथा ज्योतिष्टोमे मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयतीति श्रुतम् । तत्र हस्तावनेजनं हस्तसंस्कारार्थं मुष्टीकरणवाग्यमौ च मनःप्रणिधानार्थौ । अतस्तत् त्रयमपि तावत्करिष्यमाणकर्मार्थमित्यसन्दिग्धम् । तत्र करिष्यमाणकर्मानन्तर्यादेकवाक्यत्वाद्वा उलपराजिस्तरणदीक्षितावेदनरूपमेवेति प्राप्ते ।

आनन्तर्यस्यावर्जनीयत्वादङ्गताग्राहकत्वानुपपत्तेर्ग्राहकत्वेऽपि वा प्रकरणेन बाधात् पश्य मृगो धावतीतिवदाकाङ्क्षाविरहेण चाख्यातद्वयस्य यच्छब्दाद्युपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारस्यापि प्रकरणादङ्गप्रधानसाधारणस्योत्तरपदार्थाङ्गत्वं हस्तावनेजने । मुष्टीकरणवाग्यमयोस्तु अङ्गुलीवाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम् ॥ ७ ॥ १४ ॥

पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना। तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्तेः। अस्तु वा आधानप्रकरणे तत्तथापि तेनाधानाङ्गभूतहोमानामाहवनीयाधिकरणत्वसिद्धिरेव न त्वग्न्यङ्गत्वसिद्धिः। सप्तम्या लाक्षणिकत्वापत्तेः। अत एव तत्रत्यमाहवनीयपदं आधानजन्योत्पत्त्यपूर्वविशिष्टाग्निलक्षकमेव। परमापूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमसत्त्वात्। न चैव पवमानेष्टिहविःश्रपणादौ गार्हपत्यादिप्रापकाभावः। तत्र मुख्यगार्हपत्याद्यधिकरणत्वबाधेऽपि सति सम्भवे प्रकृतिदृष्टगौणगार्हपत्यादिबाधे प्रमाणाभावात्। अतश्च सत्यपि वचनान्तरे पवमानेष्टीनामग्न्यङ्गत्वे प्रमाणाभावादाधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थत्वैवमुपपादनीया सर्वत्र स्वोद्देश्यस्यापूर्वव्यभिचारेऽपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशो यथा गोदोहनादौ। अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः। प्रकृते तु यज्ञपदेनैवाव्यभिचारितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानसम्बन्धस्यैवाप्रसक्तौ क्व तदङ्गावतारः। एवं सत्यपि यदि पवमानेष्टिसन्निधौ पात्राणि श्रूयेरन्, तदाऽनुवादस्य सति सम्भवे सन्निहितगामित्वाद्व्रीहिभिर्यजेतेत्यादिवद्भवेत् प्रकृतमात्रविषयत्वम्। न त्वेतदपि, पवमानेष्टीनां प्रदेशान्तरस्थत्वात्। अतो वारणादीनां सर्वयज्ञार्थत्वमेव। प्रयोजनं, पवमानेष्ट्यनन्तरं पात्राणां नाशे दर्शाद्यर्थं अनियतानामुत्पत्तिः। सिद्धान्ते वारणादीनामेवेति ॥३॥१२॥

मिथश्च ॥ आज्यभागक्रमे श्रुतानां वार्त्रघ्नीवृधन्वतीमन्त्राणां लिङ्गक्रमौ बाधित्वा वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमा-

पयोद्देश्यतावच्छेदकत्वसिद्धिः। तेन च पुरोडाशं चतुर्धा करोतीति सामान्यवचनस्योपसंहारः। तस्मादाग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम् ॥२॥१५॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां तृतीयाध्यायस्य प्रथमः पादः ॥१॥

शेषस्तु ॥ दर्शपूर्णमासयोराग्नेयं चतुर्धा करोतीत्यत्र नाग्निदेवताकहविष्ट्वमुद्देश्यतावच्छेदकं, विशिष्टोद्देशे वाक्यभेदापत्तेः। अपि तु तद्धितोपात्तहविष्ट्वमेव। कथञ्चिद्वा अग्निसम्बन्धिहविष्ट्वं तथा। अस्ति चाग्निसम्बन्धोऽग्नीषोमीयादावपि। अपि वा पुरोडाशं चतुर्धा करोतीत्यनेनोपसंहारादग्निसम्बन्धिपुरोडाशस्यैव तत्, न त्वाज्यस्यापीति। अस्तु वा देवतात्वस्यापि कथञ्चिद्विवक्षा, तथापि द्विदेवत्येऽप्यग्नेरस्त्येव देवतात्वम्। द्वन्द्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसम्बन्धात्। अतः सर्वेषां चतुर्धाकरणमिति प्राप्ते।

प्रचुरप्रयोगात्तद्धितस्य देवतात्व एव शक्तस्य सम्बन्धमात्रलक्षकत्वानुपपत्तेर्न तावदग्निसम्बन्धित्वस्य विवक्षा। न च देवतात्वं द्विदेवत्ये प्रत्येकवृत्ति। इतरेतरयोगरूप-चार्थविहितद्वन्द्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव त्यागस्वत्वरूपोपाधिरूपदेवतात्वस्वीकारात्। अत एव द्वन्द्वान्त इत्यादिप्रवादस्तु यथोद्देश्यत्वेन साहित्याविवक्षा तथेति ध्येयम्। अतः केवलाग्निपदादुत्पन्नस्तद्धितो नान्यसापेक्षस्य देवतात्वमभिवदितुं क्षमः। सामर्थ्यविघातापत्तेः।

यत्तु अग्निदेवताकत्वमविवक्षितमिति। तन्न। तथात्वे, न तावत् प्रकृतद्रव्यत्वमात्रं अपूर्वसाधनलक्षकम्। तस्य देवतातद्धितैरनुक्तेः। नापि हविष्ट्वम्। तत्परत्वस्य देवतात्वाविषयत्वमतीति विनाऽनुपपत्तेः। न हि हविषि वाच्ये देवतातद्धितएवेति लक्षणा नियम्यते। तदाश्रितेऽपि सम्बन्धमात्रान्न तद्धितस्य सत्त्वात्। अतः प्रथमावगतस्य देवतासम्बन्धोद्देश्यतावच्छेदकत्वम्। तस्य चानुयोगिप्रतियोगिसापेक्षत्वात्, हविराग्निन्द्राग्नेनाधेयमग्नेर्वैदीतिवदग्निदेवताकहविष्ट्वस्य तत्र-

प्रकरणे, तत्र सामान्यसम्बन्धबोधकप्रमाणसत्त्वे उत्कर्षः । यथा दर्श-पूर्णमासप्रकरणाम्नातसूक्तानुमन्त्रणमन्त्वाद्दे । याग्यानुमन्त्रणमन्त्राख्या-यामेव सामान्यसम्बन्धबोधकत्वात् उत्कर्षस्याप्यसम्भवे प्रकरण एव जघन्यार्थे विनियोगः । यथा मनोतादौ । असंयुक्तलक्षणादिना तस्या-प्यसम्भवे तदर्थाभिधानस्यैवादृष्टार्थत्वम् । यथा जपादौ ॥२॥१६॥

वचनात् ॥ यत्र तु गौणार्थे तात्पर्यग्राहकं वचनं विद्यते । यथा अग्नौ, कदाचनस्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादौ । तत्र गौण एव गार्हपत्ये विनियोगः । अथैन्द्र्येत्युपक्रमस्थतद्धितश्रुत्या मुख्यसामर्थ्याज्जीवनाज्जघन्यद्वितीयाया एव तदनुरोधेन प्रतियोगिनि लक्षणा । गार्हपत्यसमीपे स्थितेति । गुणभूतप्रातिपदिक एव वा यज्ञसाधनत्वसादृश्याद्गौण्या स्तृहपतित्वयोगेन वेन्द्रप्रकाशत्वम् । अस्तु वा रूढत्वादग्नेरेव धातुवाच्यसमीपस्थितिं प्रति कर्मत्वम् । न तु मन्त्रसाध्याभिधानं प्रति तस्या शब्दत्वात् ।

न चोपमन्त्रकरण इति स्मृत्या आत्मनेपदविधानेन धातो-र्मन्त्रकरणत्वावगतेस्तस्याभिधानलक्षकत्वावगतिः । आत्मनेपदबलेन समीपस्थितेरभिधानप्रयोजनकत्वावगतेर्मन्त्रस्य स्वसाध्याभिधानाङ्गत्व-सम्बन्धेन समीपस्थितिविशेषणत्वोपपत्तेरभिधानलक्षणाया प्रमाणा-भावात् । अतश्च प्रकृत्यर्थ एव समीपस्थितौ गार्हपत्यस्य कर्मत्वम् । इन्द्रस्य तार्थिकेऽभिधाने इति न विरोधः । यथा चास्य धातो सकर्मकत्वं तथा कौस्तुभ एव प्रपञ्चितम् ।

कथं मन्त्रस्य गौणेऽर्थे विनियोग इति चेत्स । ऐन्द्र्येति तद्धि-तेनैकपदे विशेष्यतया प्रतिपाद्यमानस्य मन्त्रस्य पदनानुपयोगोऽत्रा-

# अथ द्वितीयः पादः ।

अर्थाभिधान ॥ एवं श्रुत्युपयोगिविचारे कृतेऽधुना लिङ्गोपयोगिविचारः प्रस्तूयते । तत्र लिङ्गं नामाङ्गत्वघटकीभूतपरोद्देश्यता कृतिकारकत्ववाचकपदकल्पनाऽनुकूला क्लृप्तपदार्थनिष्ठा योग्यता । यथा स्रुवेणावद्यतीत्यत्र स्रुवनिष्ठा द्रवपदकल्पनाऽनुकूला । एवं मन्त्रेषु स्वार्थस्मृत्युद्देश्यतावाचिपदकल्पनाऽनुकूला स्वस्मृतिकारकत्ववाचिपदकल्पनाऽनुकूला च योग्यता लिङ्गम् । सा च पदरूपश्रुतिकल्पकत्वात्तद्द्वारा तदर्थविनियोगे प्रमाणम् ।

तत्र वस्तुसामर्थ्यरूपस्य लिङ्गस्य विशेषविचारासम्भवात् मन्त्रसामर्थ्यस्य किं मुख्य एवार्थे विनियोजकत्वमुत जघन्यवृत्तिप्रतिपाद्येऽपीति सन्देहे, क्रतुप्रकरणाम्नातमन्त्रस्य बर्हिर्देवसदनं दामीत्यादेर्मुख्य इव जघन्येऽपि उलपराज्यादौ स्मारकाकाङ्क्षादिरूपसामर्थ्यविशेषात् तत्साधारण्येनैव विनियोगः । प्रवेशयेत्यादिवदाकाङ्क्षादिरूपतात्पर्यग्राहकसत्त्वे मुख्यार्थबाधस्याकिञ्चित्करत्वादिति प्राप्ते ।

मुख्यमन्त्रस्याग्रहमापेक्षकत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वात् प्रथमप्रतीतमुख्यविनियोगेन चरितार्थस्य मन्त्रादेर्जघन्यार्थविनियोजकत्वानुपपत्तिः । अत एव तत्स्मारकाकाङ्क्षया ध्यानाद्युपायान्तरेणैव निवृत्तिः । अत एव यत्र प्रकरणे मुख्यार्थोपयोगो न क्लृप्तस्तत्र मन्त्राम्नानबलादेव तत्कल्पना । यत्र तु विरोधिगुणान्तरावरोधः

प्राप्तत्वात्। पश्येवेत्यस्य तु नायमर्थो यत्स्वयमेवोत्तिष्ठति न साङ्गेति, अपि तु पश्येव नान्येनेति। अतो नेदमपि तदभावबोधकम्। अतश्चाज्ञाने मन्त्रस्य लिङ्गादेव प्राप्तत्वादाज्ञानस्य च महार्थत्वेनावघातकाल एव प्राप्तेरप्राप्तनियमस्याप्यनुवादकत्वात् केवलं चिरभ्राममात्रं विधीयते, चिरभ्रामयुक्तविशिष्टावघातसमानकालत्वेन वाऽऽक्रामोद्देशेन विधीयत इति न गौणेऽवघाते विनियोगः ॥२॥१॥८॥

तथोत्थान ॥ सोमे, उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहरेति। तथा व्रतं कृणुतेति वाचं विसृजति। दर्शपूर्णमासयोः, प्रणीताः प्रणेष्यन्वाचं यच्छति तां स-हविष्कृता विसृजतीति श्रुतम्। तत्रापि पूर्ववदेव मन्त्राणां मुख्येऽर्थे विनियोगो न तु गौणयोरुत्थानवाग्विसर्गयोः। प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनाप्युपपत्तौ गौणतात्पर्यग्राहकत्वाभावात्। न च लक्षणा। शतृप्रत्ययस्य कालिकसम्बन्धेनोपलक्षणार्थत्वमङ्गीकृत्य श्रुत्यैवान्वयोपपत्तेः। अतश्चोत्थानकाले विहरणमन्त्रं पठनीय इति कालविधिरेवायम्। व्रतं कृणुतेत्यत्रैतिकरणस्यापि मन्त्रस्वरूपमात्रपरत्वात् कालिकसम्बन्धस्यैव सहार्गविधया भानोपपत्तेर्न लक्षणा। हविष्कृदाके तृतीयायाश्च वाग्यमापेक्षितावधिसमर्पकत्वेन तदेकवाक्यतोपपत्तौ वाक्यभेदे प्रमाणाभावादित्थंभूतलक्षणार्थतामङ्गीकृत्य कालविधिपरत्वम्। अतश्च मन्त्रयोः पाठश्रावणततत्तन्मन्त्रपाठकाले वाग्विसर्गः कर्तव्य इति सोऽपि तत्र कालविधिरेव ॥२॥१॥९॥

सूक्तवाके ॥ दर्शपूर्णमासयोः सूक्तवाकेन प्रस्तरं प्रहरतीति श्रुतम्। तत्र सूक्तवाकपदवाच्यस्य मन्त्रस्य इष्टदेवताप्रकाशनेन

श्रुत्वबोधकत्वानुपपत्ते । अतस्तस्य शक्यबोधकालीनेन्द्रप्रकाशकत्वानुवादत्वेनाप्युपपत्तेर्न द्वितीयादौ तद्वत्वेन लक्षणाऽश्रयण रूढिग्या-गौवा । न च समीपस्थितिं प्रति अग्ने कर्मत्वम् । तथात्वे तस्याभिधान प्रत्ययत्वले उद्देश्यानेकत्वप्रसक्तवाक्यभेदापत्तेरात्मनेपदविरोधेन च धातुनैव स्वप्रकृत्यर्थविशिष्टाभिधानलक्षणाऽवश्यम्भावादिविशेष्यभूतेऽभिधान एव मन्त्रस्य करणत्वप्रतीतेर्गार्हपत्यस्य च चयनसंस्कार्यस्य कर्मत्वप्रतीतेरर्थाच्च सामीप्यप्रतियोगित्वेन तस्यैव ग्रहणोपपत्तेस्तात्पर्यग्राहकब्राह्मणानुरोधेन मन्त्रस्यैव गौण्या वृत्त्या गार्हपत्ये विनियोग इति सिद्धम् ॥३॥१७॥

तथा ॥ दर्शपूर्णमासयो हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति इति श्रुतम् । तत्र नायं मन्त्र आह्वानाङ्गम् । तस्य पत्न्येव हविष्कृदुपतिष्ठति सा देवानभिद्रुत्याघ्नन्तीति वचनानुसारेणाभावप्रतीते । अत इति-करणेन अवघाताङ्गमेव । अतश्चास्मिन्वाक्ये त्रिरभ्यासयुक्तमन्त्रविशिष्टावघातविधिरेव । पत्नीवाक्ये च गुणादेव कर्मान्तरविधि । तयोश्चावघातयोर्भिन्नत्वेनवघन्तीत्यनेन संस्कार्यसम्बन्धोऽपि । दृष्टार्थत्वादिकस्य । पत्नीकर्तृकेऽवघाते चावरचोदिव इति मन्त्र । अतश्चानेन वाक्येनावघाते गौण एवायं मन्त्रो विनियुज्यते । गौणत्वोपपादनं कौस्तुभे द्रष्टव्यम् । आह्वयतिश्च तदाचष्ट इत्येव शक्यार्थबोधकालीनाह्वानप्रकाशनानुवाद इति प्राप्ते ।

मुख्य एवाह्वाने विनियोगसम्भवे मन्त्रस्याह्वयतिपदस्य च गौणत्वकल्पनाया प्रमाणाभावात् । मान्त्रवर्णिकविनियोगविधिकल्पनया स्योनमित्यादिना ग्रहणादेरिवाह्वानस्यापि नियमेन

यथाध्ययनादौ कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसम्पत्तिप्रसङ्गेन समस्तानुवाके रूढेरवश्यम्भावात्। अस्तु वेष्टदेवताप्रकाशनमानुषङ्गिकं फलम्। प्रकरणादेव तु श्रुतिविनियोगात् सर्वानुवाकप्रयोजक इति दर्शपौर्णमासे च सर्वं प्रयोक्तव्य इति प्राप्ते।

प्रथमयाऽपि श्रुत्या लिङ्गस्य बाधे प्रहरतिलक्ष्यहोमान्तर्गतदेवतोद्देशस्यारादुपकारकत्वापत्तेरदृष्टविधया सन्निपत्योपकारकत्वलाभार्थं श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थत्वं मन्त्रस्यानुमन्यते। अत एव श्रुतिफलोपपत्तात् प्रकरणप्रयुक्तः सूक्तवाकः प्रकरणाभावे चाश्रूयमाणोऽपि विभज्य विनियोगाद्धि इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वमनुमन्यते।

न चैव सूक्तवाकशब्दस्यावयवलक्षणार्थेनापत्तिः। सूक्तवाकपदस्य सुष्ठु उक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढत्वात्। तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा, तत्र तावानेव सूक्तवाकः। अतश्च सूक्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गाबाधः। न चाध्ययनादौ योगबाधात् रूढिमात्रकल्पना। तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपौर्णमासिकदेवतापदसमुदायरूप एव मन्त्रे निरूढलक्षणाऽङ्गीकारात्। चयनादौ तु तद्यत्सम्बन्धमन्त्रीत्यभावात् कृत्स्नावयवाभिधानाव्यतिरिक्तप्रसिद्ध्यभावादिति विवेकः। प्रयोजन विभज्य विनियोग ३।२।२१॥

लिङ्ग॥ काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवताः काम्येष्टयः समाम्नाताः। तेष्वेव क्रमेण मन्त्रकाण्डे तत्तल्लिङ्गा एव काम्ययाज्यानुवाक्याकाण्डमन्त्रोपगाख्यया याज्यानुवाक्यामन्त्राः समाम्नाताः। ते

कृतार्थत्वात् प्रस्तरप्रहरणस्य चोपयुक्तप्रस्तरप्रतिपत्तित्वेन कृतार्थत्वात् दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत्कालार्थः सम्बन्धः। तृतीया चेत्थम्भूतलक्षणपरा सती सूक्तवाकस्य कालिकसम्बन्धेन प्रहरणोपलक्षणत्वेनान्वयं बोधयन्ती नानुपपन्ना। न चैव लक्षणा, तस्या अपि आनुशासनिकत्वेन मुख्यत्वात्। अतश्चानुयाजोत्तरं सूक्तवाकपाठात्कालविशिष्टं प्रस्तरोद्देशेन प्रहरणमेव विधीयते, न सूक्तवाकस्य प्रहरणाङ्गत्वमिति प्राप्ते।

प्रचुरप्रयोगाल्लाघवाच्च करणत्व एव तृतीयायाः शक्तिर्न तु इत्थम्भूतलक्षणे, तस्यानुशासनिकत्वेऽपि लाक्षणिकत्वेनाप्युपपत्तेः। अतश्च श्रुत्या प्रहरणाङ्गत्वस्यावगतेः प्रहृतिर्मान्त्रवर्णिकदेवताकल्पनया आग्नेयिकर्मरूपप्रहोमलक्षको न विरुध्यते। अत एव सूक्तवाक एव याज्येति यागलिङ्गमपि सङ्गच्छते। यद्यपि च नास्य मन्त्रत्वादिवदभियुक्तप्रसिद्धिविषयत्वात्तं मुख्यं याज्यात्वं सम्भवति। एवकारोपबद्धत्वेनैव लिङ्गस्य याज्यात्वासाधकत्वात्। तथापि यागसाधनत्वमात्रेण याज्यात्वव्यपदेशात् यागलिङ्गत्वम्। अतश्च श्रुत्या मन्त्रस्य प्रहरणाङ्गत्वेऽपि मुख्यसामर्थ्यस्य नास्ति बाध, प्रहरणेऽपि तदुपपत्ते ॥३॥२॥१०॥

कृत्स्नोपदेशात् ॥ श्रुत्या लिङ्गोपबद्धया प्रहरणाङ्गत्वावगमाच्च लिङ्गमात्रेण सूक्तवाकस्येष्टदेवताकारणार्थत्वम्। न चाचाविरोधोऽपि। अर्थैकप्रसिद्धा समस्तानुवाके सूक्तवाकशब्दस्य रूढत्वेनावयवशो विभज्य विनियोगेऽवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः। न चासौ सुष्टूक्तं वक्तीति व्युत्पत्त्येष्टदेवतावाचिपदसमवाये यौगिकः। पारा-

वस्तुतस्तु नाप्यव्यभिचारोऽपि। शुक्रादीनां हि न तत्त्वेनान्यत्र कारणत्वेति तस्या युक्तः क्रतुनाऽव्यभिचारितः सम्बन्धः। देवताद्युपस्थाप्यादिशब्दस्य तु आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं वर्णं प्रति च स्वार्थप्रतिपादनं प्रति कारणत्वान्नाव्यभिचारितक्रतुसम्बन्ध इति वैषम्यम्। अतश्च व्यभिचारात्। अव्यभिचारेऽपि वाऽकाङ्क्षोत्थापकत्वानुपपत्तेर्नान्यत्र विनियोगः। अत एव स्वारसिकी आकाङ्क्षा यत्र न निवर्त्तते यथाऽर्थज्ञाने उपनिषज्जन्यात्मज्ञाने वा, तत्र आकाङ्क्षोत्थापनप्रयोजनाभावात् सामान्यसम्बन्धबोधकप्रमाणं विनाऽपि भवत्येव लिङ्गमात्रादिविनियोगः। प्रकृते तु स्वारसिकाकाङ्क्षानिवृत्तेः आकाङ्क्षोत्थापकसामान्यसम्बन्धबोधकप्रमाणापेक्षेति वैषम्यम्।

न चैवं प्रबलक्रममात्रेणैव तदुपपत्तेः समाख्यावैयर्थ्यम्। यत्र यागद्वयवदग्निदेवत्यकर्मकर्मणि आग्नेयमन्त्रद्वयाम्नानं तत्र प्रथमातिक्रमे कारणाभावात् क्रमाविरोधाच्च सामिधेनीषु निवेशे प्राप्ते समाख्यया याज्यानुवाक्याकार्ये निवेशः। सामिधेनीषु तु अन्याम्नानम्। न चैव क्रमोपन्यासवैयर्थ्यम्। यत्रान्यदेवत्यपूर्वेष्टियाज्याऽऽम्नानानन्तरं उत्तरेष्टियाज्यातः पूर्वमाग्नेय्यचच, पठितास्तत्र तल्लिङ्गकमन्त्रेण याज्याकार्ये निवेशासम्भवात् समाख्याबाधेऽपि क्रममात्रेणोत्तरेष्टिसामिधेनीकार्ये विनिवेशः। तत्सामिधेनीस्थानपठितत्वात्। अत' लिङ्गं काम्येष्टिष्वेव विनियोग इति ॥३॥२२॥

अधिकारे ॥ ज्योतिष्टोमे आग्नेय्याऽऽग्नीध्रमुपतिष्ठत इत्यत्र किं अप्रकृतसाधारण्येन स्वङ्गमात्रमाग्नीध्रोपस्थानाङ्ग उत प्रकृता एव याः स्तोत्रादौ अपि विनियुक्तास्ता एवेति चिन्तायां, आग्नेयीपदस्या-

लिङ्गादिन्द्राग्न्यादिदैवत्यकर्ममात्राङ्गं, न तु दुर्बलक्रमसमाख्याऽनुरोधेन काम्येष्टिमात्राङ्गम् । न च सामान्यसम्बन्धबोधकप्रमाणाभावे लिङ्गमात्रेण विनियोगायोग । मन्त्रगतप्रयोजनाकाङ्क्षासहकृतलिङ्गेन सामान्यसम्बन्धबोधकप्रमाणाभावेऽपि इन्द्राग्न्यादिदेवताप्रकाशने मन्त्रविनियोगोपपत्तेः । न चैन्द्राग्निस्वरूपे आनर्थक्यादपूर्वसाधनलक्षणार्थं क्रमाद्यपेक्षेति वाच्यम् । इन्द्राग्न्यादिदेवताना गुह्यत्वकालव्यभिचारित्वेन लक्षणोपपत्तेः । व्यभिचारित्वेऽपि वा लौकिकस्याग्न्यादेर्वैयर्थ्यादेव वारणोपपत्तौ परिशेषादेवापूर्वीयस्योपस्थितेः । अतो लिङ्गमात्रेण क्रतुसमाख्ययोर्बाधात् सर्वार्थत्वमिति प्राप्ते ।

आकाङ्क्षाऽभावे योग्यतारूपस्य लिङ्गस्य विनियोजकत्वानुपपत्तेर्मन्त्रगतप्रयोजनाकाङ्क्षायाश्च सर्वमन्त्राणां वाचस्तोमे विनियोगेन निराकाङ्क्षतया अभावाच्च लिङ्गमात्रात् सर्वार्थत्वोपपत्तिः । अतश्च वाक्यप्रकरणक्रमादिना सामान्यसम्बन्धबोधकप्रमाणेन तत्तदाकाङ्क्षोत्थापनात्तत्र क्रतुसम्बन्धेऽवगते द्वारविशेष एव लिङ्गादवगम्यते । न च वाचस्तोमीयवाक्येन प्रकरणादिबाध. । मन्त्रविशेषविषयाणां तेषां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजनाकाङ्क्षावेलायामनुपस्थितेन तेन वाक्येन बाधायोगात् । न चैवं प्रबलेन विनियुक्तस्यापि दुर्बलेन विनियोगे वत्सोपस्थापि पूषानुमन्त्रणमन्त्रस्य प्रकरणेन गौणेऽर्थे विनियोगापत्तिः । प्रमाणद्वयस्याप्येकविषयत्वान्मन्त्रप्रयोजनाकाङ्क्षावेलायां प्रबलप्रमाणस्योपस्थितत्वाच्च बाधकत्वोपपत्तेः । अतश्च प्रकृते बाधायोगात्क्रमसमाख्याऽनुरोधात् काम्येष्टिविषयत्वमेव मन्त्राणाम् । न चान्यथाकाङ्क्षोत्थापकं किञ्चिदस्ति । अव्यभिचरितक्रतुसम्बन्धादेराकाङ्क्षोत्थापकत्वे प्रमाणाभावात् ।

जन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम्। अतः सर्वासामेव ग्रहणम्। अप्रकृतानामेव वा, कार्यसाकाङ्क्षत्वादिति प्राप्ते।

अप्रकृतग्रहणे तासामपूर्वसाधनीभूतोपस्थानार्थत्वान्यथानुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत्कल्पनीयत्वापत्तेः। प्रकृतानां च कार्यान्तरसम्बन्धबोधकविधावेवापूर्वार्थत्वस्य क्लृप्तत्वाल्लाघवोपजीविना प्रकृतनियमः। सम्भवति च प्रकृतानामप्याग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसम्बन्धासम्भवेऽपि कार्यान्तरद्वारा सः। आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव वा तदपूर्वसम्बन्धावगमः। अयमेव च मुष्टौदनप्राशने ऋत्विक्त्वनियामकन्यायः। न चैवमात्रेयाय हिरण्यं ददाति इत्यत्रापि तन्नियमापत्तिः। ऋत्विक्षु आत्रेयत्वस्य नियमेनाप्राप्तेः। अत एव चाग्निमुपनिधाय स्तुवीतेत्यादावाग्नेयीयस्तोत्रापूर्वसम्बन्धस्याहवनीयादावप्राप्तत्वान्न तन्नियमोऽपि तु विना वचनं आयतनवद्विर्भावायोगाल्लौकिकस्यैवेति वक्ष्यते। अतः सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम् ॥३।२।३॥

लिङ्गसमाख्यानाभ्याम् ॥ सोमे, भक्षे हि मामिशेत्यादिर्भक्षानुवाक इत्येवं समाख्यातो मन्त्रः श्रुतः। तत्र यस्तावदस्यांशो भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते। ग्रहणावेक्षणसम्यग्जरण-प्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोगोऽथवा भक्षणमन्त्रैकवाक्यतया भक्षण एवेति चिन्तायां, ग्रहणादेरविहितत्वेनापूर्वप्रयुक्तत्वव्यञ्जकत्वस्याप्यभावाद्ग्रहणस्यार्थाद्भक्षणाङ्गकत्वेन पक्षप्राप्तावपि मरुद्भ्यां सध्यासमित्यनेनोक्तस्य वागुदयकरणकस्य ग्रहणस्य कथ-

विशेषेण सर्वपरत्वात् प्रकरणस्य तथाक्षेपकत्वानुपपत्तेरग्निदेवाद्य-सम्बन्धमात्रस्यैव विशिष्टविध्युत्तरकालीनविशेषणविधिना आग्नीध्रोप-स्थानाङ्गत्वेन विधानम् । न तथाग्नेयी उद्देश्या येनानर्थक्यभिया मौक्षिकप्रकरणेन सङ्कोच्येत । तृतीयपादीयत्वाविगमात् । यत्र चोप-स्थानस्वरूपे आनर्थक्याशङ्का, तत्र प्रकरणानुप्रवेशेऽपि नाग्नेयीपदस्य प्रकृतपरत्वापत्तिः ।

न चाग्नेयीपदस्य यौगिकत्वात्तद्धितान्तत्वाद्वा सन्निहितपरत्वम् । यौगिकानामयथार्थविशिष्टव्यक्तिमात्रवाचित्वेन सन्निहितवाचित्वे प्रमाणाभावात् । तद्धितस्य तदाचित्वेऽपि प्रकृतानामग्न्यनेकप्रकरण-स्थत्वेऽपि प्रदेशान्तराम्नातत्वेन सन्निहितत्वाभावात् । अस्तु वा प्रकरण-सन्निहितस्यैव तद्धितेन ग्रहणं, तथापि यत्र न तद्धितग्रहणं यथा अग्नौदनप्राशनादौ चतुरो ब्राह्मणान्भोजयेदित्यादौ, तत्र प्रकृतलिङ्ग-ग्रहणे प्रमाणाभाव । न च प्रकृतानामपूर्वार्थत्वस्य क्लृप्तत्वात् तेषाम दारूपाग्नीध्रोपस्थापनसम्बन्धकरणे लाघवादप्रकृतानां तूभयकरणे गौरवापत्तेः प्रकृतनियम इति वाच्यम् । प्रकृतपक्षेऽप्युपस्थानस्व-रूपस्य दारत्वे तत्कार्यापत्ते ऊहाद्यनापत्तेरपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । न हि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तर-कल्पनया अपूर्वार्थत्वबोध । तथात्वे व्रीहीणां स्वरूपेण दारत्वा-पत्तौ यवानां तदनापत्तिः ।

अतो लाघवादपूर्वसाधनीभूतस्यैवाङ्गत्वेनैवोद्दिश्यता । तावता चा-पूर्वसाधनीभूतोपस्थानार्थत्वस्यालाभादस्यैव प्रकृतपक्षेऽपि तद्विधा-वपूर्वसाधनलक्षणा । अपि च स्तोत्रापूर्वसाधनत्वक्लृप्तावपि नोपस्थान-

वाक्यतां प्रकल्प्य स्वार्थविशिष्ट*भक्षणप्रकाशकत्वमेवाङ्गीकर्त्तव्यम्। स्वार्थश्च श्रुत्या हविरेव। तत्प्रकाशनमपि चादृष्टार्थत्वम्। अथवा लक्षणया भक्षणस्मृतिः। सर्वथा न लिङ्गादिविनियोगः ॥२॥२४॥

लिङ्गविशेषनिर्देशात् ॥ भक्षमन्त्रः किं इन्द्रदेवत्याभ्याम एवाङ्गं तल्लिङ्गाभ्यामेव्यमन्त्रक भक्षण उत तेषूदेनोतानूदेन वेति चिन्तायां, प्रकरणाङ्गत्वमन्त्रस्य सर्वप्रदानार्थत्वावगमेऽपि इन्द्रपीतस्येति लिङ्गेनेन्द्रदेवत्यप्रदानमात्राङ्गत्वम्। न चेन्द्रेण यस्मिन् सवने पीत इति बहुव्रीहिस्वीकारेण सोमसम्बन्धिसवनविशेषणत्वाङ्गीकाराल्लिङ्गाविरोध इति वाच्यम्। पदद्वयलक्षणापादक-लक्षणानुगत-व्यधिकरणबहुव्रीह्यपेक्षया पूर्वपद एव सम्बन्धिलक्षणापादकस्य लक्षणानुगतस्येन्द्रेण पीत' स्वीकृत इत्येवं तत्पुरुषस्यैव लघुभूतत्वात्। विद्यते च देवतायाः प्रतिग्रहाभावेऽपि देवस्य न यद्दौयादित्यादिवचनबलेन सम्बन्धविशेषरूपः स्वीकारः। न च स्थूलपृषतीपदस्वरादेव बहुव्रीहित्वनिर्णयः। तद्वदिह समासस्य लक्षणानुगतत्वाभावेन स्वरस्यैव बाध्यमानत्वात्। यथा च तत्पुरुषपक्षेऽपि स्वराविरोधस्तथा कौस्तुभ एवोपपादितम्।

अतश्च लिङ्गादिन्द्रदेवत्यप्रदान एव मन्त्रस्याङ्गत्वावगमादैन्द्राग्नं च कर्मण एकत्वेन प्रकृतिविकारभावाभावादूहानुपपत्तेर्मैत्रीवरां मेधइति वदैन्द्राग्नाममन्त्रकं भक्षणमित्याद्यः पक्षः। द्वितीयस्तु सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः। इन्द्राय त्वा वसुमत इत्यादिमानग्रहणमन्त्राणां च लिङ्गादिन्द्रमात्रविषय-

* विशिष्ट,– इति ख० पुस्तके पाठः।

भक्षप्राप्तेरवेक्षणस्य च भक्षाजनकत्वेनैवाप्राप्तेः सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभावितया भक्षाजनकत्वेन तेषामपूर्वप्रयोजकत्वस्याप्यभावाद्ग्रहणाद्यर्थत्वे आनर्थक्यापत्तेः भक्षणमन्त्रैकवाक्यतया भक्षणार्थत्वमेवैषाम् । एवं च समाख्याऽप्युपपन्ना भवतीति प्राप्ते ।

ग्रहणादिप्रत्यक्षविध्यभावेऽपि समाख्यासहकृतानन्तरप्रकरणेन भक्षसम्बन्धे तत्तन्मन्त्राणामवगते लिङ्गवशेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्तेस्तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ न स्वतो निराकाङ्क्षयोर्द्वयोराख्यातपदयोः कथञ्चिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनम् । अतएव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशकत्वकल्पनमुपपत्तिमत् । न चैवमपि सम्यग्जरणस्याशक्यसाध्यत्वान्न विधिसम्भवः । सम्यग्जरणानुकूलव्यापारस्यासनविशेषस्यैवानुष्ठेयस्य विधेयत्वात् । वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणं प्रतिपत्तिरिति तस्य भक्षोपयोगिता । गुणाभिधानात् ।

तस्मिन्नेवानुवाके मन्द्राभिभूतिरित्यादिस्तृप्यत्वित्यन्तमन्त्रौ विनियोक्तव्यौ ग्रहणादाविवेति प्राप्ते ।

ग्रहणादिवदनुष्ठेयत्वाभावात् तृप्तेरप्रकाश्यत्वम् । न च सम्यग्जरणवत् तृप्त्यनुकूलव्यापाररूपभक्षणवाक्याक्षेपकत्वम् । अल्पं भक्षयतीति वचनविरोधेन तत्कल्पनाऽनुपपत्तेः । अत एव तृप्तेर्भक्षणेनाजननाच्च तस्याः स्वर्गवज्जन्यत्वमात्रेण प्रकाश्यत्वोपपत्तिः । अतश्च लिङ्गविनियोगासम्भवात् यद्यपि आख्यातद्वयस्य स्वतो निराकाङ्क्षत्वे इतिकरणाध्याहारेण तृप्यत्वित्येतदर्थं भक्षयामीत्येवं भक्षमन्त्रैक-

पात्नीवतत्वं न लाघवएवेव। आग्रयणवचानाग्रयणमपि संग्राहत्वात् तस्मादपेतमिति दिदेवत्यस्यापि देवतान्तरसमन्वयेन पूर्वदेवतासम्बन्धापायात्। भूतपूर्वगत्या च प्रकृतावनुपलक्षणान्नोपलक्षणीयाः॥ ३॥२७॥

त्वष्टारम्॥ पात्नीवत एवाग्राह पत्नीवाः सजूर्देवेन त्वष्टा सोमं पिबेति मन्त्रात् त्वष्टुरपि देवतात्वम्। अतः सोऽप्यग्निवदुपलक्षणीयइति प्राप्ते।

युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यमाकाङ्क्षत सामानाधिकरण्येन विशेष्यग्राहकत्वात्। त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते। न चासौ पानक्रियान्वयाव्यभिचारी। सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यादौ व्यभिचारात्। सत्यपि पाने देवतात्वस्याप्रामाणिकत्वाच्च। अतः पात्नीवतमिति निरपेक्षतद्धितेन पत्नीवतोऽग्नेरेव देवतात्वमिति स एवोपलक्षणीयो न त्वष्टा॥३॥२८॥

त्रिंशच्च॥ तस्मिन्नेव याज्यामन्त्रे, एभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वेत्यत्र त्रयस्त्रिंशतां देवतानां पत्नीवच्छब्दसामानाधिकरण्यादग्निवद्विशेष्यत्वोपपत्तेर्मदश्रवणाच्च पानोपपत्तेर्देवतात्वावगमात्तेषामप्युपलक्षणं मन्यते। अग्नेर्मादयितृत्वश्रवणात् तेऽग्निदत्तेन कामं माद्यन्तु यजमानस्त्वग्नय एव ददातीत्यवगमात् तस्यैव देवतात्वं न त्रयस्त्रिंशताम्। एवञ्च पात्नीवतमिति तद्धितोऽप्यसति बहुवचनग्राहकप्रमाणे एकवचनेनैव विग्रहीतो भवतीत्यपि लाघवम्। अतो नोपलक्षणीयास्ते॥३॥२९॥

त्वात् तदनुरोधेन च तत्प्रकाशयोर्मानग्रहणयोस्तत्संस्कार्यस्य सोमस्य तत्संस्काराणां चाभिषवादीनां तन्त्रियाणां चाङ्गान्तराणामैन्द्रमात्र-विषयत्वप्रतीतेरितरेषामेकधर्मकाणां युक्तोऽतिदेशः । भवति चाङ्ग-वशेनापि प्रधानसङ्कोचः । अग्न्याद्यनुरोधेन क्रतूनामाहिताग्निविषय-त्वात् । अतश्च प्रकृतापूर्वीयदेवताप्रकाशकस्य भक्षमन्त्रस्य कार्य-मुखेन विकृतावागतस्य भवत्येव यथादेवतमूह इति । एवं स्थिते-ऽन्तरा चिन्ता ॥३॥२५॥

पुनरभ्युन्नीतेषु ॥ सवनमुखीयेषु चमसेष्वैन्द्रेषु सर्वेषु हुतेषु ये होत्रकाणां मैत्रावरुणादीनां चमसाः स्तेष्वभिचितेष्वेव पुनः सोमोऽभ्यु-न्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते । तत्र पूर्व-प्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयो न वेति चिन्तायां, उन्नयन-काले न देवतान्तरोद्देशः । येनोन्नीतस्यैव तत्सम्बन्धात् पूर्वशेषस्य पूर्व-देवतासम्बन्धो नापैयात् । प्रदानकाले तु संसृष्टस्यैव देवतान्तर-सम्बन्धात् पूर्वदेवतासम्बन्धापनयप्रतीतेर्नोपलक्षणमिति प्राप्ते ।

उन्नयनकाले देवतासङ्कल्पाभावेऽपि सामर्थ्याद्वोन्नयनस्य करि-ष्यमाणकर्मार्थत्वप्रतीतेः पूर्वशेषस्य संसृष्टत्वेऽप्येतदर्थत्वे प्रमाणाभावा-दनपनीतसम्बन्धा पूर्वदेवताऽप्युपलक्षणीया ३॥२६॥

पात्नीवते तु ॥ द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्य-स्थाल्यामागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति । पात्नीवतश्चाग्रयणात् गृह्यते, तस्मिन्भक्ष्यमाणे द्विदेवत्या अपि उपलक्षणीयाः । पूर्ववदा-ग्रयणस्यैव पत्नीवद्देवतासम्बन्धादिति प्राप्ते ।

पात्नीवतमाग्रयणाद् गृह्णातीत्यपादानत्वश्रवणात् तस्मादपेतस्य

यत्तं पीतपदेन स्त्रीकारलक्षणा । पानस्य नवमे निषेध्यमानत्वात् । त्यागस्य तदङ्गत्वेत्या लक्षयितुमशक्यत्वाच । स्त्रीकारस्य तु देवत्वादिपदार्थालम्बनतया कल्प्यमानस्य कृतावशिष्ट एव कल्पनीयत्वात् युक्ता लक्षणा । तथापि तस्य लाघवेन व्यासज्यवृत्तित्व एव कल्पने प्रत्येकवृत्तित्वे प्रमाणाभावाच्चतुर्थाकरणाधिकरणविषयलोपपत्तेर्न तस्य समन्वकभक्षणम् ॥३॥२९॥

छन्दश्च ॥ तत्रैव मन्त्रे गायत्रछन्दस इत्यादि श्रुतम् । तच्चेद सोमविशेषणमेवास्मिन् पूर्वपक्षे । अतश्च केवलमेव यत्रेन्द्रप्रदाने गायत्रच्छन्दो यथा इहस्पतिसवादौ, गायत्रमेतदहर्भवतीति श्रुतेः, तत्रैवास्योत्कर्षो न तु ज्योतिष्टोमे निवेशः । केवलगायत्रच्छन्दस्कप्रदानाभावात् । न च सामान्यसम्बन्धबोधकप्रमाणाभावः । इन्द्रदेवत्यत्वस्य सवनादीनामन्यत्र लोकादावभावेन पारिशेष्यादेव इहस्पतिसवोपस्थितिसम्भवादिति प्राप्ते ।

इहस्पतिसवेऽपि सवनमुखीये ग्रहान्तरस्य पठितत्वाद्गायत्रमेत दित्यादेश्च भूम्नाऽपि व्याख्यानोपपत्ते, प्रकृतौ विकृतौ वा केवलगायत्रच्छन्दस्कत्वाभावाच्चित्यपापेक्षत्वेन समासोपपत्ते, प्रकृतावेव निवेशः । वस्तुतस्तु गायत्र्याः प्रत्येकमेव साधनत्वात् सत्यपि ग्रहान्तरे न समासभङ्गाशङ्काऽपि ॥३॥३१॥

सर्वेषां ॥ स्थितादुत्तरम् । नेन्द्रपीतपदे तत्पुरुषोऽपि तु बहुव्रीहिरेव । तत्पुरुषेऽपि पूर्वपदे तावदेका सम्बन्धिलक्षणा पीतपदे च स्त्रीकृतावयवलक्षणा । यद्यपि चैव सिद्धान्तिनोऽपि तुल्या, तथापि अवयवस्त्रीकारस्यावयविस्त्रीकारसापेक्षत्वेन विलम्बोपस्थिति-

वषट्कारश्च ॥ अनुवषट्कारयागदेवताया अग्नेर्देवतात्वस्य निःसन्दिग्धत्वादुपलक्षणम्। प्रकृतौ त्वसौ विद्यमानाऽपि नोपलक्षिता। अनुवषट्कारयागस्य सोमयागात्कर्मान्तररूपस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य कृत्स्नविधानत्वेनातिदेशाकल्पनात्। उपदेशेन कथञ्चिद्भक्षणप्राप्तावपि मौहौणां भेष इति यदैन्द्रमन्त्रस्य प्राप्त्यनुपपत्तेश्च। अतश्च विकृतावपि प्रधानदेवतैव तत्कार्यापन्नोपलक्षणीया नानुवषट्कारदेवता ।३।२०॥

छन्दः ॥ एवमूहं विचार्याधुनाऽऽद्यपूर्वपक्षवादी पुनस्तं दूषयति। नोहः कर्मण एकत्वात्। अभ्यासानामपि फलचमसवत्समानविधानत्वे प्रमाणाभावाच्च। न हि मानग्रहणमन्त्रानुरोधेन तदुद्देश्यानां सङ्कोचो युक्तः। अग्निविद्वयोस्तु स्वस्वविधिप्रयुक्तत्वेन क्रतुविधिप्रयुक्तत्वाभावान्मुक्तः परप्रयुक्ताग्निविद्योपजीवकतया क्रत्वधिकारसङ्कोचः। अतो मानग्रहणमन्त्रावेव कामं ऐन्द्रमात्रप्रदानविषयौ भवेतां न तु भानाद्यपि। यत्तस्तु वसुमत इत्यनेन देवतान्तरस्याप्यभिधानात् तयोरपि सर्वार्थत्वमेव। अतो भक्षमन्त्रस्यैवैन्द्रप्रदानविषयत्वादनैन्द्राणामसमन्त्रकं भक्षणम् ॥३।२१॥

ऐन्द्राग्ने ॥ एवं स्थिते पुनश्चिन्ता। ऐन्द्राग्नेऽप्यभ्यासे इन्द्रपीतस्येत्येव समन्त्रकं भक्षणम्। यागस्य व्यासज्यवृत्तित्वेऽपि पानस्य पीतपदस्थितक्तोकारस्य वा प्रत्येकवृत्तित्वेन डित्थमात्रवदेकेन व्यपदेष्टुं शक्यत्वात्। यागस्य च कृताकृतसमुदायविषयत्वेन भक्ष्यमाणकृतात्मभावविषयत्वाभावाच्च पीतपदे तद्युक्तलक्षणा। अतदर्धापकरणाधिकरणविषयत्वाभावात् तथापि समन्त्रकं भक्षणमिति प्राप्ते।

## अथ तृतीयः पादः ।



श्रुतेः ॥ इतानीं वाक्यादिविनियोगो निरूप्यते । तत्र वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतरपदार्थकल्पनाऽनुकूलश्रुतपदसन्निधिः । अस्ति चेद् धेनुर्दक्षिणा, उच्चैरृचा क्रियते, प्रयाजशेषेणेत्यादौ । अत्र कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकं संसर्गविधया लक्षणादिसाधारणेन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितं । तेन धेनुर्दक्षिणेत्यादौ संसर्गविधया भासमानकरणताके नाव्याप्तिः ।

वस्तुतस्तु सुबन्तपदयोः परस्परान्वयस्याव्युत्पन्नत्वाद्वाक्यस्य भावनान्वयानुरोधेन धेनुरिति प्रथमया करणत्वलक्षणाद्दक्षिणापदेन च तत्कार्यदत्तिकर्मत्वलक्षणात्कल्पनापदेन लक्षणाजन्योपस्थितिरेवाभिप्रेता । उच्चैरित्यादौ लुप्तविभक्त्यर्थस्य करणत्वस्य प्रातिपदिकेनैव लक्षणयाऽव्याप्तिः । अथवोच्चैरित्यादौ करणत्वस्य संसर्गविधयैव भानोपपत्तेः कल्पनापदेनोभयं विवक्षितम् । प्रयाजशेषेणेत्यादौ तृतीयया कर्मत्वस्य धातुना करणत्वस्य लक्षणात्कल्पना स्फुटैव ।

श्रुतपदसन्निधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम् । श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि च श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मैर्विशिष्टरूपेण कल्पनात् श्रुतिकल्पकत्वोपपत्तिः । अतश्च वाक्यं, लिङ्गं श्रुतिं च कल्पयित्वाऽङ्गत्वे प्रमाणम् । यदि च

कल्पाच्च तुल्यत्वम्। ततश्च पीतपदे अर्शआद्यच्प्रत्ययं मत्वर्थीयं पाधातुना चावयवविगतमेव तत्सम्बन्धिस्वीकारं लक्षयित्वा इन्द्रः पीतः स्वीकारकर्त्ता यस्मिन् सवने इति व्युत्पत्त्या समानाधिकरणबहुव्रीहिरङ्गीक्रियते। प्रकरणविशेषाच्च निर्णयः। अतः सर्वस्यैव सोमस्योक्तविधप्रातःसवनादिसम्बन्धित्वादैन्द्राणामपि समन्त्रकमेवाविकारेण भक्षणम्।

यदि तु पीतपदस्य पूर्वं निपातापत्तिराशङ्क्यते, तदाऽस्तु इन्द्रे पीतं पानमस्मिन्निति सप्तमीबहुव्रीहिः। यदि तत्रापि निष्ठान्तत्वेन पूर्वनिपातापत्तिरविशिष्टेति विभाव्यते, तदाऽस्त्वयं तत्पुरुष एव। तदापि तु लक्षणया सोमसम्बन्धिसवनपरत्वम्। न च तस्यां प्रमाणाभावः। तैत्तिरीयशाखायां प्रातःसवनादिभेदेन इन्द्रपीत-नराशंस-पीत-पितृपीतानां त्रिवार पाठस्यैव प्रमाणत्वात्। सोममात्रपरत्वे हि तत्तत्प्रदानेषु लिङ्गादेवेन्द्रपीतादिपदानां सकृत्पठितानामेव पाठोपपत्तौ तत्र योग्यतयैव प्रातःसवनादिपदानां विभागेन विशेषणत्वोपपत्तिः। अतस्तेषां प्रातःसवनादिभेदेन त्रिवारं पाठ एव वैयर्थ्यभिया सवनपरत्वलक्षणातात्पर्यग्राहकः। अतश्चैन्द्रपीतादिविशेषणत्रययुक्तस्य तत्तत्सवनस्य सम्बन्धिनं सोमं अन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वत्रैकमंत्रत्वम्। विभागोऽपि तैत्तिरीयशाखाऽऽम्नातक्रमेणैव बोध्यः। कल्पसूत्रकारास्त्विदमेवामनन्ति* ॥२॥२४॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य द्वितीयः पादः॥

---

* कल्पसूत्रकारास्त्विद एवामनन्ति,- इति ख० ग० पुस्तकयो पाठः।

ध्ययनेनापि अध्ययनविध्यर्थसमाप्त्यापत्तेः। शूद्रस्यैकपदश्रवणनिषेधस्य दृष्टाकावयवादिनिषेधवदनुपपत्तेः। तथा* चैतादृशविषये निषेधस्य विध्यपेक्षया वैलक्षण्यं, तथा कौस्तुभे द्रष्टव्यम्। तस्मादुपक्रमानुसारेण ऋग्वेदविहितकर्माङ्गभूतमन्त्राङ्गत्वमेवोच्चैष्ट्वादीनाम्। एवञ्च वेदस्य प्रकरणस्थवाक्यमात्रेषु अपर्य्याप्तत्वात्प्रकरणेन वाक्यस्य स्वविषये उपसंहारानुपपत्तेर्वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेन वाक्येन स्वरविधानावगतेः प्रकरणबाधेऽपि न क्षतिः॥२॥२५॥

गुणमुख्य॥ याजुर्वैदिके आधाने सामवेदपठितानि वारवन्तीयादीनि सामान्यङ्गत्वेन श्रुतानि। तेषु सामवैदिकः स्वरः स्ववेदनिबन्धनत्वाच्छीघ्रमुपस्थितो न तु प्रधानविधिनिबन्धनो याजुर्वैदिकः, प्रधानैकवाक्यतापेक्षत्वेन विलम्बोपस्थिकत्वादिति प्राप्ते।

साङ्गस्यैवाधानस्य यजुर्वेदेन विधानादङ्गेषु विलम्बोपस्थितिरप्ययं प्रधानाश्रितत्वाद्बलीयान्। अतस्तेषु याजुर्वैदिक एव स्वर उपांशुत्वमिति भाष्यकारः।

वार्त्तिककारस्तु प्रयोगविध्याश्रितस्वरस्य प्रधाने श्रुतस्याप्यङ्गेष्वपत्वेन दौर्बल्यमेव। इतरथा ज्योतिष्टोमाङ्गभूतहौत्रादेरप्याध्वर्य्यवकर्तृकत्वापत्तेः। वारवन्तीयस्यापि यजुर्वेदे वारवन्तीयं गायतीति विनियोगविधेराधानार्थवच्छिन्नत्वमीयम्। यच्च वेदान्तरे उत्पत्तिर्वेदान्तरे च विनियोगस्तत्र वारवन्तीयादौ कः स्वर इति चिन्तायाम्। उत्पत्तेः पूर्वभावित्वादसञ्जातविरोधित्वेन तन्निबन्धनएव स्वरो यष्टोयान्। अतएव यथा ऋग्वेदेन क्रियते उच्चैरिति सूत्रार्थ इति प्राप्ते।

* यथा,— इति गविनिषुर्विनम्।

ज्योतिष्टोमे श्रुतेनोच्चैर्ऋचा क्रियत इत्यादिना वाक्येन विधीयमान-स्योच्चैस्त्वादेरुद्देश्यसमर्पकेन ऋगादिपदेन किं ऋगादीनां मन्त्राणा-मेवोद्देश्यत्वं प्रतिपाद्यते, उत त्रयो वेदा असृज्यन्तेत्याद्युपक्रमस्थार्थ-वादवशेन लक्षणया ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रमात्रस्येति चिन्तायाम्।

उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपदार्थवाचकत्वेन प्रधान-भूतविध्युद्देश्यऋगादिपदे निःसन्दिग्धेऽङ्गगुणविरोधन्यायेन लक्षणा-तात्पर्यग्राहकत्वायोगादेतत्पद एव तदेकदेशऋगादिलक्षणा। वस्तु-तस्तु वेदशब्दस्यावयवेऽपि न लक्षणा। वेदत्वस्य प्रत्येकवृत्तित्वादि-तरथा शूद्रस्यैकवाक्यश्रवणे दोषाभावापत्तेरिति प्राप्ते।

उपक्रमे वेदपदश्रवणे एतावदवगम्यते नूनमत्र वेदस्य स्वरूपमा-त्रस्योद्देश्यत्वं विधेयत्वं वा तस्यावश्य वाक्ये* विवक्षितमिति। तत्र च विधेयस्य उच्चैस्त्वादेर्लाभात्परिशेषादेव तस्योद्देश्यत्वावगतेर्वस्तुतो-ऋगादिपदमनुवाद एव तदुद्देश्यपरम्। अतश्चासञ्जातविरोधिन-उपक्रमस्थस्य वेदपदस्यैव तात्पर्यग्राहकस्य सत्त्वात् ऋगादिपदे तल्ल-घुत्वेन ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा।

न चोपक्रमस्थस्यापि अपच्छेदाधिकरणन्यायेन परेण बाधः। तस्येह विधौ श्रुतिसापेक्षितार्थनैमित्तिकवाक्यतया आत्मलाभात् पूर्व-विरोधे परस्यानुत्पन्नत्वादेवाप्रवृत्तेः। न च वेदस्य ऋगादिष्वपि पर्याप्तत्वादुपक्रमाविरोधः। वेदत्वस्य समाजमात्रसमुदायात्मके प्रत्य-विषये एव पर्याप्तेस्तदवयवपर्याप्त्यभावात्। इतरथा एकवाक्या-

* वाक्येन—इति उ० पुस्तके पाठः।

गन्धादीनामपि तदापत्तेः। प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च। अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयाजानाकाङ्क्षत्वेऽपि इतिकर्त्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्। किमिदमितिकर्त्तव्यतात्वं नाम? न तावत्फले अपूर्वे वा सहकारित्वम्। प्राधान्यापत्तेः। प्रयाजादिवदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च। नापि करणजनकत्वम्। प्रयाजादिषु बाधादिति चेत्।

न। सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्त्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात्। अत्रासन्निहितज्योतिष्टोमाद्यङ्गत्वस्य प्रयाजादौ वारणाय प्रथमं विशेषणम्। अनूयाजाद्यङ्गत्ववारणाय फलवत इति द्वितीयम्। प्रोक्षणादेः श्रुत्यादिभिर्विनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम्। लिङ्गरूपस्य लिङ्गाविनियुक्तमन्त्रादेः प्रकरणाविषयत्वसिद्ध्यर्थमितिकर्त्तव्यतात्वेनेति चतुर्थम्।

इतिकर्त्तव्यतात्वञ्च करणानुग्राहकत्वम्। सर्वत्र हि अग्राकस्य करणत्वायोगात्फलशक्तिः कारणनिष्ठा समस्तीति निर्विवादम्। सा च कारणतावच्छेदिका कारणरूपा वेत्यन्यदेतत्। तस्याश्च जन्यत्वेऽपि जन्यतैवेत्युत्सर्गः। सामग्र्यलाभे परमतादितेत्यपवादः। तत्र तत्सामग्र्यपेक्षैवेतिकर्त्तव्यताऽपेक्षा। तथा च सन्निहितप्रयाजादेरङ्गत्वबोधः। प्रयाजादेस्तत्सामग्रीत्वात्। लिङ्गरूपस्य च द्रव्यादेर्व्यापारावेश विना तत्सामग्रीत्वासम्भवात्तया अग्रहणम्।

अत्र च प्रधानगतेतिकर्त्तव्यताऽऽकाङ्क्षाया, प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायास्तत्तदाक्यस्य स्वस्वावान्तरवाक्यार्थं समाप्तस्यापि महावाक्यैकदेशत्वस्यापादिकाकदर्थक्रियाव्ययातत्वकल्पः, नि-

आम्नानमात्रेण मन्त्रस्य प्रयोजनानवगमेन प्रयोज्यत्वानवगतेः स्वरानपेक्षत्वादिविनियोगोत्तरकालमेव स्वरसम्बन्धात् क्रियत इत्यस्य प्रयुज्यत इत्यर्थावगतेः प्रयोगस्य च विनियोगाधीनत्वेन विनियोगस्यैवाव्यवहितपूर्वं पुरःस्फूर्त्तिकत्वात्तद्विधिनिबन्धन एव स्वरोऽसति बाधकेऽनुष्ठेय इत्याह ॥३॥२६॥

भूयस्त्वेन ॥ यत्रैकमेव कर्मानेकेषु श्रुतं, तत्र क्वोत्पत्तिः क्व च तदनुवादेन गुणार्थं श्रवणमिति जिज्ञासायां, यत्राङ्गबाहुल्यं तत्रोत्पत्तिः। सेवकबाहुल्येन राजावस्थाननिर्णयवत्। वस्तुतस्तु कर्मस्वरूपपरिचायकद्रव्यदेवतादिसाकल्यस्यैव निर्णायकत्वम्। तत्रापि द्वैविध्ये, बहिरङ्गत्वेऽव्यभिचाराद्देवताया एव, न तु द्रव्यस्येत्यूह्यम्। अतश्चैवंविधनिश्चायकसत्त्वे तत्रैवोत्पत्तिः। अन्यत्र तदनुवादेनाविरोधिगुणान्तरविधानम्। विरोधिनि तु गुणाद्भेद एव। एवं यत्र कस्यचिदपि नियामकस्याभावस्तत्राप्यभ्यासाद्भेदः। न ह्यत्र शाखान्तरन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्मैकत्वम्। तद्विद्धाध्येतृभेदाभावात्। अतो नियामकबलेन यत्रैवोत्पत्तिस्तद्वेदनिबन्धन एव स्वर इति सिद्धम् ॥३॥२७॥

असंयुक्तम् ॥ एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते। ननु किमिदं प्रकरणं नाम? न तावत्सन्निधिमात्रं, गोदोहनादेरपि दर्शाङ्गत्वापत्तेः। अथ* साकाङ्क्षत्वमात्रम्। विश्वजितेरपि प्राकृताङ्गविषये तदापत्तेः। नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वम्। उपहोमादावपि तदापत्तेः। अथोभयाकाङ्क्षत्वविशिष्टं तत्। सिद्धरूपाणां

* न च,– इति भवितुमुचितम्। एवं परत्र।

यागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थत्युक्तम्। प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्य विशेषणम्।

तत्रादेशापरपर्याय द्विविध, पाठसादेश्यमनुष्ठानसादेश्यञ्च। आद्यञ्च द्विविधम्। यथाक्रमं पाठ सन्निधौ पाठश्च। यमपौदमुभयाकाङ्क्षयाऽन्यतराकाङ्क्षया चेति। अत्रोभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा चेतिकर्त्तव्यताऽऽकाङ्क्षाभिन्ना द्रष्टव्या। तत्र पाठक्रमात्काम्ययाज्यानुवाक्यामन्त्राणां काम्येष्ट्यङ्गत्वम्। सन्निधेस्तु, साम्राय्यपात्रशुन्धनविधिसन्निधौ समाम्नातस्य शुन्धध्वमिति मन्त्रस्य तदङ्गत्वम्। अनुष्ठानसादेश्यात्तु पशुधर्माणां दैवमस्यङ्गत्वम्।

यद्यपि चैषां लिङ्गादिप्रमाणान्तरेणैव विनियोगात्क्रमादीनाञ्च क्वचिदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्वमात्राङ्गत्वे प्रामाण्यम्। तथापि षड्विधस्यापि क्रमस्यासङ्कीर्णोदाहरणानि कौस्तुभोक्तरीत्योहनीयानि।

अत्र षड्विधेऽपि क्रमे आरादुपकारकस्थले तावदितिकर्त्तव्यताऽऽकाङ्क्षया कल्पनीयत्वात्प्रकरणकल्पकत्वम्। मन्त्रादिरूपसन्निपत्योपकारकस्थलेऽपि मन्त्रादे, स्वरूपेण यागाजनकत्वेऽपि तत्तत्त्रियमादृष्टोपहितस्य तज्जनकत्वात्करणनिष्ठयोग्यताजनकत्वरूपेतिकर्त्तव्यतात्वात्मकप्रकरणकल्पनावश्यकैव। अत एव तदपेक्षया तस्य दौर्बल्यम्। पञ्चविधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य। तत्रापि पाठक्रमादनुष्ठानसादेश्यस्य। विधिसन्निधानस्य पुरः स्फूर्त्तिकत्वात्। तयोस्तु मध्ये सन्निधानस्य प्राबल्यम्। एकग्रन्थस्थत्वादित्यादि कौस्तुभे द्रष्टव्यम्॥३॥१८॥

इतरपदानाञ्च स्वार्थोपस्थितिद्वारा तत्सिद्ध्यनुपपद्यमानतत्कल्पनाऽनु-कूलयोग्यताद्युपस्थितिकल्पनया च, सन्निधौ यजति इत्यं दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्त्तव्यताकाङ्क्षाविषयपदश्रुति-कल्पनया चेतिकर्त्तव्यतासम्बन्धप्रकृतिकारकत्वे प्रामाण्यम् । सम्भवति हि प्रयाजादीनामपि उभयाकाङ्क्षाजनकत्वेन भावनायामन्वयः । तस्मा-त्सिद्धं प्रकरणं नाम चतुर्थप्रमाणम् ।

यत्तत्र पार्थसारथिना, अननुष्ठीयमानस्यापि कर्मादिः सयोग-विभागारम्भकत्वदर्शनाद्भेद प्रकरणम् । अपि तु व्यापारसामान्य-स्याख्यातार्थतामङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्त्तव्यताऽपेक्षा । तदैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्युक्तम् । तस्मा-तथात्वे निरूक्तप्रकरणस्य तदघटिताङ्गत्वबोधकत्वानुपपत्तेः । प्रयाजा-देर्भविमात्वे तस्यैव फलसम्बन्धापत्तेश्च । अस्मन्मते तु यत्नस्यैव भावना-त्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वाच्च तदापत्तिरिति वैषम्यम् । न चैव प्रधानस्य स्वतो निराकाङ्क्षत्वान्यतराकाङ्क्षयैव प्रकृतौ प्रया-जाद्यङ्गत्वापत्तिः, विकृतौ च भावनायाविशेषापेक्षायां अक्लृप्तोप-कारैरपि सन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पना-पत्तिरित्यादि कौस्तुभे विस्तरः॥२॥२८॥

क्रमश्च ॥ स्थानत्वाङ्गत्वे पञ्चमं प्रकरणम् । तस्येतिकर्त्तव्यता-त्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिः । इतिकर्त्तव्यतात्वेनायो-ग्यत्वं द्वेधा । क्वचिदाकाङ्क्षाविरहात् । यथा विकृतेरुपहोमादि-विषये, क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात् । क्वचिद्व्यापारा-त्मकत्वात् । यथा जपादिमन्त्रादौ । अत्र चैकवाक्योपात्तव्रीहि-

समाख्या चैवम्॥ ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादि-समाख्या वेदे याज्ञिकैश्च प्रयुज्यते। साऽप्यङ्गत्वे प्रमाणम्। तथा हि। सर्वत्र कृप्तावयवशक्तिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नञ्चेति। तत्राद्यं निर्मन्थ्येनेष्टकाः पचति, प्रोक्षिताभ्यामुलूखल-मुसलाभ्यामवहन्तीत्यादौ निर्मन्थ्यादिपदम्। तत्र वाक्येनैव मन्यना-दीनां पाकाद्यङ्गत्वात् नामाख्यानिको विनियोगः। द्वितीयन्तु आध्वर्यवमधीते प्रैतु होतुश्चमस इत्यादौ। तत्र विशेषस्य काण्डस्यैव प्रकृतविधावन्वये प्राप्ते विशेषणस्याध्वर्युकर्तृकत्वादेः सिद्धवन्निर्देशान्य-थाऽनुपपत्त्या विनियोगः कल्प्यत इति तत्र समाख्यया विनियोगः।

अत्र समाख्ययाऽवयवार्थयोः सम्बन्धे संसर्गमर्यादया बुद्धे न तन्निर्देशान्यथाऽनुपपत्त्या स्वतन्त्रविधिकल्पना, गौरवापत्तेः। किन्त्वन्वाधानादिवाक्यस्याध्वर्युं वृणीत इति वाक्यस्य चैकवाक्यता-सम्पादकपदमात्र, यमध्वर्युं वृणीते सोऽग्नीनन्वादधातीति। तत्र द्वयोर्विध्योः कथञ्चिदप्येकबुद्धिस्थतैवविधस्थलकल्पनापूर्वकमध्व-र्य्यादिरितिकर्त्तव्यतात्वबोधकाकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्मध्या-वाक्यैकदेशत्वात्पदसन्निधिरूप वाक्यं कल्प्यते। तेन चाध्वर्युमात्र-निष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासम्पादकपदरूपश्रुति-कल्पनाक्रमसत्त्वात् षष्ठप्रमाणत्वम्॥१३॥४०॥

श्रुतिलिङ्ग॥ तदेव षट्सु प्रमाणेषु निरूपितेषु अधुना विरोधे बलाबलं निरूप्यते। विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे। यथैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्चेन्द्राङ्गत्वे। यथा वा एक-स्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये। यथा गार्हपत्ये श्रुत्ये-

नोपांशु चरन्तीत्यनेन समिहितयत्किञ्चित्पदैकवाक्यतयाऽवगत-पदार्थधर्मत्वेन बाध्यते।

वाक्यप्रकरणविरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः।

यत्तु अग्नीषोमादिपदैकवाक्यतापन्नानां इदं हविरित्यादि-पदानाममावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यत-इत्युदाहरणमुक्तम् मूले। तच्छ्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाक्यस्य मुख्यप्रकरणविनियोज्यत्वप्रसक्त्यभावे-ऽपि अधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणतात्पर्यग्राहकस्य प्रसक्तत्वात्तद्बाधाभिप्रायेण द्रष्टव्यम्। प्रकरणयोर्विरोधे महाप्रकरण-मवान्तरप्रकरणेन।

प्रकरणक्रमयोर्विरोधे अक्षैर्दीव्यतीत्यादिविदेवनादीनां सन्नि-धानादभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणाद्राजसूयाङ्गत्वम्। न चाभिषेचनीयस्यापि फलवत्त्वेन प्रकरणग्रहः। तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य तदभावात्।

न च विकृतावपि यथाप्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते यथा प्रयत्यादि, तथापि विकृतिगताङ्गाकाङ्क्षायामभि-षुत्यायामेव विधेयत्वात्तत्फलस्य तत्पूर्वभावित्वे सति प्रधानोपकार-भावित्वेऽपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेः विदेवनादीनामप्य-भिषेचनीयोत्तरमुक्तविधाभिषेकपूर्वभावित्वेन पाठात्प्रकरणग्रहणोप-पत्तिरिति वाच्यम्। प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गस्योप-होमस्यदिरूपाकाङ्क्षायां नियतायामेव विधानात्। यत्र हि

त्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्राद्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः। तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षत्वात्। अतः श्रुत्या गार्हपत्याङ्गत्वमेव। न च श्रुतेः करणत्वमात्राभिधायित्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वात्नायं श्रुतिलिङ्गविरोध इति वाच्यम्। तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया* यद्यप्यन्यदेवत्यः पशुरितिवत्प्रबलत्वोपपत्तेः। वस्तुतस्तु यथा न केवलया श्रुत्या विरोधो नैवं वाक्येनापि। गार्हपत्यसमीपे इत्येवमुपपत्तेः। अतस्तूभयविरोधत्वेऽपि प्रधानेन व्यपदेशा भवन्तीति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम्।

लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाधः। लिङ्गवाक्ययोस्तु स्योनन्ते इति सदनकरणप्रकाशकस्य पूर्वार्धस्य तस्मिन्सीदेत्युत्तरार्धेन सादनप्रकाशकेन तस्मिन्कस्मिंश्चिदिति विभागे साकाङ्क्षैकवाक्यत्वात्सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव वाऽस्य तस्मिन्निति पदमश्विभिरूपेण वाक्येन विनियोगे प्राप्तेऽपि, ततः पूर्वप्रवृत्तेन लिङ्गेन तत्तदाख्यानस्य मुख्यविशेष्यत्वेन स्वार्थबोधकस्य परोपसर्जनकत्वकल्पने प्रमाणाभावात्तच्छब्दस्य च सा वैश्वदेवीतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात्प्रत्येकमेव विनियोग इति।

वाक्ययोर्विरोधे उपांशुत्वस्य एवा एषा यज्ञस्येति यपेतयज्ञपदैकवाक्यत्वाद्यज्ञमात्रधर्मत्वं, तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्ते-

* लिङ्गाद्यपेक्षया,- इति ग० पुस्तके पाठः।

ख्यया बाधः । एवं द्व्यन्तरितत्र्यन्तरितादिप्रमाणस्य पूर्वेण सह विरोधे शेषानेकत्वे च उदाहरणानि कौस्तुभे द्रष्टव्यानि ।

स चायं श्रुतिलिङ्गादिविषयोऽप्राप्तबाधः । तत्त्वं चाङ्गताबोधकलिङ्गादिकस्याप्रमाणप्रतिबन्धकत्वम् । पूर्वपूर्वप्रकारेण हि अङ्गत्वेऽवधारिते निराकाङ्क्षत्वादुत्तरोत्तरत पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति । सोऽयमप्राप्तबाधः । एवं स्वरुमेधीये आज्यभागौ यजतीत्यादावपि । अन्यत्र सामान्यविशेषनित्यनैमित्तिकभावादौ प्राप्तबाधः । तत्त्वञ्च कॢप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमादिविषयतामात्र प्रतिबध्यते । न तु सामान्यशास्त्रमपि । तस्य कॢप्तत्वेनाकल्पनीयत्वात् । होमान्तरेष्वप्याहवनीयाभावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च ।

अतएव येन सामान्यशास्त्रमेव पूर्वमालोचितं तस्य विशेषादर्शनजनितभ्रम एव विशेषविषयविषयको विशेषशास्त्रेण बाध्यते । एवं यद्यपि न तौ पशौ करोतीत्यादौ शास्त्रप्राप्तस्य निषेधस्तथापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्राप्तिमापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमात्रग्राहकम्, तथापि तत्र विकल्पाङ्गीकारात्तदभावपक्षे विशेषविषयत्वप्रतिबन्धाभावाल्लक्षणाव्याप्तिः । यथा च तत्र रागप्राप्तनिषेधवत् भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पमाथा कौस्तुभे द्रष्टव्यम् । वक्ष्यते चात्रापि दशमे । अत सिद्धं बाधस्य द्वैविध्यम् ॥ ७ ॥ ४ ॥ १ ॥

अहीने वा ॥ एवं विरोधे बलाबल निरूप्याधुना विरोध एव

प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथौदुम्बरत्वशरादेस्तस्यैवानिवृत्ताकाङ्क्षाया विधानम् । तत्सन्दंशस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम् । अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावान्न तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः ।

वस्तुतस्तु अभिषेकस्यापि स्वतन्त्रोत्पन्नस्य प्रकरणाद्राजसूयाङ्गत्वावगतेर्माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इत्यत्र प्रतिशब्दयोगेन कालार्थसंयोग इति वक्ष्यते। अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव सन्निधानादिनाऽभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः । न च राजसूयस्यापि प्रत्येकं विकृतित्वात्प्रकरणाभावः । पवित्रादारभ्य क्षत्रस्य धृतिं यावद्राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गाम्नानात्तत्सन्दंशपतितविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः । एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणान्यूह्यानि। एवं क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्यैन्द्राग्नद्वयाङ्गत्वे अनियमेन प्रसक्तौ यथाक्रमं पाठादाद्यस्याद्याङ्गत्वम् ।

क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य शुन्धध्वमिति मन्त्रादेः सन्निधानात्सान्नाय्याङ्गत्वम् । न च महाधिकारेण सन्निधिबाधः । तस्यापि वाचनिकाङ्गसन्दंशत्वेन बलवत्त्वात् । न चैवं तस्य प्रकरणत्वापत्तिः । मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन च प्रकरणाविषयत्वात् । सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्व एव बलावत्त्वं न तु विनियोगे। तत्र उदाहरणान्तरं मृग्यम्। एवं समाख्ययोर्विरोधे आध्वर्यवमिति सामान्यसमाख्याया याजमानमिति विशेषसमा-

तथात्वे आद्युदात्तश्चेति सूत्रात् प्रत्ययादेरीकारस्योदात्तस्वर-सिद्धिः ।

न चेकारस्येनादेशावयवत्वात् कथं स्वप्रत्ययावयवत्वमिति वाच्यम् । अयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति उक्त्या प्रत्यय-स्वरसिद्ध्यर्थं ईनादेशस्यापि प्रत्ययोपदेशकालत्वरूपोपदेशिवद्भावस्य विहितत्वात् । अतो नायं नञ्समास इति चेत् ।

तथापि प्रकरणानुरोधादहीनशब्दस्य ज्योतिष्टोमे बहुदिन-कत्वसादृश्येन गौणतयोपपत्तेः । वस्तुतस्तु अहःसाध्यक्रतुसमूहत्वस्य शक्यतावच्छेदकस्य ज्योतिष्टोमेऽप्यभ्याससमूहात्मके सत्त्वादहीनशब्दस्य मुख्यवृत्त्यैवानुवादत्वोपपत्तिरिति प्राप्ते ।

आस्तां तावदहीनपदं, एवकार एव तावत् त्रित्वातिरिक्त-सङ्ख्यायाः साधनत्वाभावमनुवदन् द्वादशत्वेन विकल्पं समूहे । किञ्चैवं प्रकरणादेव त्रित्वद्वादशत्वयोर्ज्योतिष्टोमसम्बन्धोपपत्तेः साक्षादहीन-शब्दयोर्द्वयोरपि वैयर्थ्यप्रसङ्गः । अस्मन्मते तु एकेन अह्ना समाप्य-मानत्वेन स्वान्यकर्मणः स्वस्यैव यज्ञोचितेति औचित्येन स्तुतिपरतया साक्षच्छब्दस्य न वैयर्थ्यम् । किञ्च द्वयोः सङ्ख्ययोरेकार्थत्वेन विधौ शब्द-भेदो न युज्यते । अतोऽहीनपदं साक्षादर्थान्तरपरमित्यप्यविवादम् ।

युक्तञ्चैतत् । तत्र समूह इत्यनुवृत्तिसहितया अह्नः ख. क्रतावित्ति स्मृत्या वैदिकप्रयोगाच्च अहःसमूहसाध्यक्रतुविशेषत्व-स्यैव सत्रादिव्यावृत्तस्य यजतिचोदनाचोदितसुत्यासमुदायात्मकत्वस्यैव योगरूढ्याऽहीनपदशक्यतावच्छेदकत्वप्रतीतेर्न द्वादशत्वस्य ज्योतिष्टोमे निवेशसम्भव । अतश्चाहीनसम्बन्ध्युपसदुद्देशेन द्वादशत्वविधिः । यद्वो-

क्वास्ति क्व नास्तीति चिन्तार्थ उत्तरः प्रपञ्चो यावदध्यायसमाप्ति । ज्योतिष्टोमे उपसदो विधाय तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति श्रुतम् ।

तत्र द्वादशत्वम् किं द्वादशाहे निविशते प्रकरणएववेति चिन्तायां, चित्वस्य तावदुपसदनुवादेन विहितस्य वाङ्नियमन्यायेन स्वापूर्वसाधनीभूतोपसदर्थत्वादुपसदाञ्च प्रकरणाज्ज्योतिष्टोमसाचाङ्गत्वावगतेः साह्नपद अह्ना समाप्यमानत्वात्तदनुवादमात्र न तूद्देश्यविशेषण, वाक्यभेदादैयर्थ्याच्च । अतश्च तद्वदेव द्वादशत्वमपि तदनुवादेन विधीयमानमुपसदर्थमेव ।

न च तस्याहीनोद्देशेन विधिः । उपसदुपसर्जनत्वेन श्रुतस्य तस्याहीनसम्बन्धानुपपत्तेः । तस्यावृत्त्या द्वादशत्वोपपत्तेश्च । द्वादशाहप्रकरणपठितवाक्यान्तरेण तस्य तत्र प्राप्तत्वाच्च । अतोऽत्रापि चित्वेन विकल्पः । अहीनपद न हीयतइत्यादिव्युत्पत्त्या नञ्समासमङ्गीकृत्य ज्योतिष्टोमानुवादकम् । सर्वे ह्यन्ये क्रतवो विकृतित्वादेनमपेक्षमाणा न जहति ।

अथ नायं नञ्समासस्तत्पक्षे तस्य तत्पुरुषत्वात् तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इति सूत्रा प्रकृत्या पूर्वपदमित्यनुवृत्तिसहितया अव्ययाख्यस्य नञः पूर्वपदस्योदात्तास्यप्रकृतिस्वरत्वविधानादाद्युदात्तत्वापत्तेः । अपि तु मध्योदात्तत्वादह्नः खः क्रतौ इति सूत्रा तस्य समूह इत्यनुवृत्तिसहितया अह शब्दस्य क्रतुसमूहवाचि खप्रत्ययान्तत्वविधानात्तस्य चायनेनीयीयिय फढखछघां प्रत्ययादीनामिति सूत्रेणादेशविधानात् अह शब्द खप्रत्ययान्तः ।

यदि तु षष्ठी, तदाऽधिकारित्वाख्यसम्बन्धानुवादिका सती स्ववैयर्थ्यपरिहारार्थं पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवाद्द्वित्वयजमानत्वयोरेकं व्यासज्यवृत्तिनिमित्तत्वं प्रतिपादयति। विशेषणविशेष्यभावे विनिगमनाविरहात्। एवं बहुभ्यो यजमानेभ्य इति तादर्थ्यचतुर्थ्याऽपि अधिकारित्वसम्बन्धानुवादिकया उक्तविधे निमित्तत्वे लक्षणा। अतश्च नान्यतराविवक्षाप्रसङ्गः। निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विजातीयत्वाभावान्नैकोद्देश्यता। प्रकरणाद्वा प्रतिपत्सम्बन्धलाभ इति पक्षद्वयेऽप्यविवादम्।

तदिहेमौ मन्त्रौ ज्योतिष्टोम एव निविशेते उत द्विषड्यजमानके कुलायाहीनादाविति चिन्तायाम्। प्रकरणाविरोधात् प्रकृतएव निवेशः। न च तत्र निमित्ताभावः। आख्यातेन वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिना उपादेयकर्तृविशेषणत्वेनोक्तस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य वक्ष्यमाणत्वाद् यद्येको न शक्नुयात् तदा द्विषड्यजमानकत्वप्राप्तेः प्रतिपद्विधानसम्भवात्। अथवा यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि सम्भवादाद्यवाक्ये तावत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः। द्वितीयवाक्येऽपि पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेर्यथानुशासनेन पुंलिङ्गस्य स्त्रीनपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्र। नित्यास्तु प्रतिपत्त्येक इति प्राप्ते।

नित्यत्वेऽपि ज्योतिष्टोमस्य नैकत्वे यथाशक्तिन्यायविषयता। उत्पत्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्या-मारत्वेनाशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेनाप्येवानुष्ठानात्।

स्थले च परस्परसम्बन्धस्य प्राचीनमते व्युत्पन्नत्वात् विशिष्टोद्देशे वाक्यभेदः।

वस्तुतस्तु, श्रहीनोद्देशेनातिदेशप्राप्तेः पूर्वप्रवृत्त्या द्वादशोपसत्त्वमेवानेन वाक्येन द्वादशत्वप्राप्तिफलकं, तां चतुर्भिरितिवद्विधीयते। द्वादशाहप्रकरणस्थवाक्यान्तरं तु शाखान्तरीयतया सत्त्रमात्रपरतया न विरुध्यते इति भाष्यकाराभिप्रायः।

वस्तुतस्तु द्वादशाहप्रकरणस्थवाक्यस्य सत्त्राहीनोभयसाधारणत्वादेवाहीनेऽपि द्वादशत्वप्राप्त्युपपत्तेरेकवाक्यत्वलाभाय प्रकरणपाठार्थवत्त्वाय चौचित्येन नित्यविधेरेवायमर्थवादः। महतः कर्मणो महती सङ्कोचिता न तु प्रकृत इति च स्तुतिः। अतो वाक्येन प्रकरणं बाधित्वा द्वादशत्वस्याहीनसम्बन्धावगतेर्न तेन ज्योतिष्टोमे द्वादशत्वम्। मूले तु षष्ठ्या भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधोपन्यासइति द्रष्टव्यम् ॥३॥४२॥

द्वित्वबहुत्व॥ ज्योतिष्टोम एव उपासै गायता नर इति नित्यां प्रतिपदं विधाय, युव हि स्थ' स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति श्रुतम्।

तत्राद्यवाक्ये द्वयोर्यजमानयोरिति यदि सप्तमी, तदा सा निमित्तस्वरः। यद्यपि च पृथक् विभक्तिश्रवणं, तथापि हविरार्त्त्यधिकरणन्यायेन पाक्षिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिलितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोर्निमित्तत्वं प्रतिपाद्यते।

एवञ्च वाक्येन प्रकरणबाधात् पत्नीसंयाजानां पशुङ्गत्वमात्रप्रतीतावपि आज्येन पत्नीः संयाजयन्तीति वचनस्य निर्विषयत्वापत्तेः प्रकरणबाधायोगात्तेनारादुपकारकतया दर्शपूर्णमासाङ्गत्वावगमेऽप्यनेन वचनेन सन्निपत्योपकारकतया अग्नीषोमीयपशुयागाङ्गतया विधिर्नानुपपन्नः।

न च आघन्या' परप्रयुक्तपशुनिष्पन्नत्वस्य लोकेऽपि सत्त्वादव्यभिचारिक्रतुसम्बन्धाभावेन कथं यागीयत्वोपस्थितिः। अग्नीषोमीयप्रकरणे श्रुतेन आघन्या पत्नीः संयाजयन्तीति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूतजाघन्युद्देशेन पत्नीसंयाजविधायकेन यागसम्बन्धोपस्थितौ अंशु ग्रहातीतिवदनारभ्याधीतेऽप्यस्मिन् क्रतुसम्बन्धावगमोपपत्तेः।

यत्तु केश्चिदतिदेशादेव पत्नीसंयाजानां पशुयागसम्बन्धावगमात् प्राकरणिकं वाक्यं तद्धर्मककर्मान्तरविधायकं पूर्वपक्षे इत्युक्तम्। तदतिदेशेन पत्नीसयाजानामारादुपकारकविधया पशुयागसम्बन्धावगमेऽपि तात्पर्यग्राहकाभावे अनारभ्याधीते वाक्ये जाघन्यास्तदीयत्वोपस्थितौ प्रमाणाभावादतिदेशेन सन्निधाने प्रकरणान्तरासम्भवेन कर्मान्तरत्वानुपपत्तेश्चोपेक्षितम्। तस्मादाक्येन प्रकरणं बाधित्वेदं विधानं अग्नीषोमीय उत्कृष्यत इति प्राप्ते।

जाघनीशब्दस्य पश्ववयवत्वाविशेषेऽपि उत्तरार्द्धादिशब्दवत् सम्बन्धित्वाभावात् लोकसिद्धद्रव्यस्य जाघन्या एवाज्यवत् पत्नीसयाजोद्देशेन विधिसम्भवे तृतीयाया लक्षणाङ्गीकरणे प्रमाणाभावः। अतिदेशात् प्राप्तानां पत्नीसयाजानामारादुपकारकत्वबाधेन पशु-

किञ्च यत् श्रुतिमाध्यत्वेनानुष्ठेयतया प्रसक्तं तत्रैव यथाप्रकृत्युपवस्त्रो न लननुष्ठेये कालादौ । अतश्च तद्देवाखापि न तन्न्यायविषयतेति न प्रकृते यागे द्वित्वबहुत्वे । न च यजमानशब्दः पत्नीपरः, मुख्येव प्रचुरप्रयोगेण प्रत्यक्षगमेन लक्षणायां प्रमाणाभावात् । यजमानेभ्य-इति पुल्लिङ्गस्य प्रमा द्व्यस्य मे * * मित्र* निषिद्धत्वेनामतिक-व्ययथानुप्रापनाङ्गीकारानुपपत्तेश्च । अतश्च वाक्येन प्रकरणबाधा श्चच, एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्, एको द्वौ बहवो वा यजेरन्नित्यादावेव कुलायाहीनादिषु द्वित्वबहुत्वविधानं तत्रैवास्योत्कर्षः । न चात्र तत्कल्पस्यापकाभावः । प्रतिपक्षमन्येनैव सामान्यत कर्तृसम्बन्धोऽवगते निमित्तबलेन तद्विशेषोपस्थितौ बाधकाभावात् ॥३।४२॥

जाघनी ॥ दर्शपूर्णमासयो पत्नीसंयाजावान्तरप्रकरणे, जाघन्या पत्नीः संयाजयन्तीति श्रुतम् । तत्र किमनेन वाक्येनाग्नीषोमीय-पशुनुनिष्पन्नजाघन्युद्देशेन पत्नीसयाजाविधीयन्ते । ततश्चैतस्य विधा-नस्य प्रकरणादुत्कर्षः । उत पत्नीसयाजोद्देशेन जाघनीद्रव्येण विधी-यत इति चिन्तायाम् ।

जाघनीशब्दस्योत्तरार्धादिशब्दवदेकदेशद्रव्यवाचित्वेन जाघन्या-परप्रयुक्तत्वावगमात् प्रयोजनवत्तावगमेन प्रयाजशेषवदुद्देश्यत्वावगते-स्तृतीयया द्वितीयार्थलक्षणामप्यङ्गीकृत्य पत्नीसयाजा एव तदुद्देशेन विधीयन्ते । एवञ्च द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम् । इतरथा • तृतीयविधिप्रकारापत्तेः ।

* सर्वत्रैवमेव पाठ ।

† इत्यमेव पाठ सर्वत्र । तृतीयविधि,– इति तु प्रतिभाति ।

दीर्घस्य यजमानस्य सोमो दीर्घसोम इत्येव षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते मन्तर्दनविधानम्।

यदि तु निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्यैव न्याय्यत्वात् यजमानदैर्घ्येण च फलकविदारणप्रसङ्गाहारकत्वेन सन्तर्दनश्रुतेरसम्भवेन द्वारा इत्यर्थवादानुपपत्तेर्दीर्घश्चासौ सोमश्चेति कर्मधारय एवाङ्गीक्रियते। तथापि ज्योतिष्टोम एव सत्त्याद्यिस्त्वान्तरयुक्ते प्रदानविवृद्ध्या प्रदेयसोमविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेर्वाक्यप्रकरणयोरविरोधाच्चिन्त्यम्।

न च प्रदानविवृद्धेस्तोत्रादिना सम्पादनम्। सोमद्रव्यकस्य यागस्य विना तस्य द्रव्यान्तरसङ्ख्येन सोमेन करणायोगात्। न च त्रिपर्वदशमुष्टिलक्षणसोमपरिमाणबाध। स्थूलदीर्घपर्वसोमग्रहणेन तद्बाधाभावात्। अत एव सोमपदेन यागलक्षणाऽभावात सोमदीर्घपर्वत्वमेव सन्तर्दने निमित्तमित्यपि शक्यं वक्तुम्।

वस्तुतस्तु। त्रिपर्वदशमुष्टिपरिमितसोमग्रहणोत्तरमवशिष्टान शुनुपसमूहतीत्युपसमूहनविधानात्तत्र चार्थवादे यदि तावतैव सोम स्याधावता मिमीते यजमानस्यैव स्यात्रापि सदस्याना प्रजास्यस्तेत्यवशिष्टानशुनुपसमूहतीति पूर्वोक्तमाननिन्दयोत्तरादोहनपावदपेक्षितपरत्वप्रतीते कपिञ्जलाधिकरणन्यायस्याप्यप्रवृत्त्या परिमाणाभावात् प्रदेयविवृद्धिः सुलभैव।

न चैवमपि अग्निष्टोमसंस्थाया अङ्गत्वादन्यासा काम्यासा तिसृणा संस्थानाञ्च विकृतित्वेन स्वतःप्रकरणाभावात् ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोध

प्रयुक्तसोमविवृद्धिकृतमिति भवतोऽप्यविवादम्। विवृद्धग्रहणानि च सत्याङ्गानि वचनान्न तु ज्योतिष्टोमाङ्गानि। अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसम्बन्धाभावाद्विकृतिमात्रपरत्वमिति।

न चोक्तग्रहणानां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्सम्बन्धसत्त्वात्तस्य दीर्घसोमत्वोपपत्तिः। सर्वतोमुखादौ पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाके दिगन्तरे दीर्घसोमत्वस्य सत्त्वादग्निष्टोमसंस्थाकेऽपि सत्रर्दनापत्तेर्यदङ्ग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यत्प्रयुक्तविवृद्धप्रदेयकत्वमेव वा यत्र, तत्र तदपूर्वसाधनीभूतफलकसंस्कारकतया सत्रर्दनविध्यवगमादुक्तविवृद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात् तदङ्गत्वेन सत्रर्दनविध्यनुपपत्तेर्वाक्येन प्रकरणं बाधित्वोक्तविधसर्वविकृतावेव निवेशः। न तु संस्थास्वेव, तासां विकृतित्वेन प्रकरणाभावादिति।

अत एव सत्तृदादिति धातोः सकर्मकत्वादनुपक्रदितीया-न्तपदेन फलकस्यैव संस्कार्यत्वावगमाद्दीर्घसोमस्योद्देश्यत्वतद्विशेषण-त्वयोरसम्भवेन निमित्तत्वमेव। अत एव नायं यज्ञोऽस्मिन् वा सोमपदेन यागलक्षणया सत्रान्तोऽपि तत्पुरुषः। अतश्च सार्व-सोक्ता + + तत्पुरुषः* समासत्वात्त न निमित्तेऽपि विशिष्टोद्देशे वाक्यभेदः॥ ३।३।४॥

सत्रायुक्त॥ समारभ्याधीत. प्रवर्ग्यं पशुयागं प्रवृणक्तीति श्रुतः। तस्य च पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्तीति ज्योतिष्टोमाङ्गत्वेन विनियोगः। अव्यभिचरितक्रतुसम्बन्धसमारम्भाधीतत्वादेन तद्-

* इत्यधिक पाठ [illegible]।

इति वाच्यम्। काम्यसंस्थासु ग्रहणविवृद्ध्या आश्रयभूतज्योतिष्टोमाभावे विवृद्धेरावश्यकत्वात् संस्थानां चतुर्णामपि स्वप्रकरणाभावेऽपि च ज्योतिष्टोमस्य सर्वत्रानुवृत्तत्वात् काम्यसंस्थाकज्योतिष्टोमप्रयोगे मन्त्रदर्शनविधानेन प्रकरणानुग्रहोपपत्ते । अत एवाग्निष्टोमसंस्थाकज्योतिष्टोमप्रयोगेऽमन्त्रदर्शनं प्रदानविवृद्ध्यभावादिति न विकल्पोऽपि। अत एव च दीर्घत्वस्यानुयोगिन काम्यसंस्थाकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंस्थाकज्योतिष्टोमस्य प्रकरणादेव लाभादतिलाघवम्।

न चैवमितरसंस्थाकज्योतिष्टोमस्यापि प्रकरणे अङ्गीक्रियमाणे एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा अथान्येन यजते गर्त्तपत्यमेव तद्भवतीत्यत्रापि एतच्छब्देनेतरसंस्थाकस्य ज्योतिष्टोमस्य ग्रहणापत्तेरग्निष्टोमसंस्थाकस्यैव प्रकरणात् ग्रहणं वक्ष्यमाणं विरुध्येतेति वाच्यम्। ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात्। अग्निष्टोमसंस्थाया अङ्गत्वेनेतराङ्गवत्प्रकरणावच्छेदकत्वानुपपत्तेश्च। एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्योक्तावपि अन्यशब्देन तद्विकृतिमात्रवाचकेन संस्थान्तरयुक्तत्वात् तासामपि ज्योतिष्टोमोत्तरकालविधिप्रतीतेरर्थादग्निष्टोमसंस्थाकस्यैव प्रथम करणोपपत्ते । अतो वाक्यप्रकरणयोरविरोधात् प्रकरण एव मन्त्रदर्शनस्य निवेश इति प्राप्ते ।

भाष्यकारेण तावदिष्टापत्त्यैव सिद्धान्तितम्। पूर्वपक्षस्याद्यप्रकारद्वयेनैव इत । वार्त्तिककारेण तु विकृतिमात्रे विवृद्धभोमके निवेश इत्युक्तम्। तन्न्यायमाय । दीर्घत्वं तावत् ग्रहणदिवृद्धि-

प्रत्येकमङ्गैर्वार्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य चाप्रवृत्तप्रवर्त्तनविषयवाचित्वादाद्यप्रयोगपरत्वावगतेर्यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वे प्रकरणाज्ज्योतिष्टोमरूपयज्ञपरत्वमेव वाऽङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते। स चाग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य पाशुमिकन्यायेन प्रथमं यजमानोऽतिरात्रेण यजेतेति वचनादतिरात्रसंस्थाकस्य च। अत उभयत्राप्यनेन वचनेन प्रवर्ग्यस्य प्रतिषेधः पर्युदासो वा। न तु विकृत्यन्तरे। तत्रोपदेशातिदेशाभ्यां तद्प्राप्तेः।

न च ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वाद्विकृतावपि तद्द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति वाच्यम्। प्राथम्यस्य निरूपकापेक्षायां द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पनात्। एष वाव प्रथमो यज्ञो यज्ञानामिति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात्। अत एव प्रथमप्रयोगविषयोऽपि ज्योतिष्टोम एव बोध्यः।

तथाच प्रथमयज्ञशब्दो वाक्यशेषादैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत्प्रयोगविषयज्योतिष्टोममेवाभिधत्ते। अन्यथा स्व-स्व-द्वितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने, आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा सत्रमासीरन्नित्यादौ सत्रे यज्ञमात्रोत्तरकालताऽऽपत्तेः। अत उक्तद्विविधज्योतिष्टोमप्रथमप्रयोगे एव प्रवर्ग्यप्रतिषेधः।

वस्तुतस्तु। नाय प्रतिषेधस्तत्काले न तौ यत्रौ करोतीतिवदतिरात्रप्रथमाहारेऽपि विकल्पापत्तेः। न च क्रियायाः स्वरूपेणोद्देश्य-

पस्थिते । न चोपसदङ्गत्वमेव किं न स्यादिति वाच्यम् । उपसत्-पदस्य पुरस्तात् कालप्रतियोगित्वेन स्वार्थोपस्थापकत्वोद्देश्यसमर्पक-त्वाभावात् । उपस्थितत्वात् तद्वाचकपदान्तरकल्पनयोद्देश्यत्वाङ्गीकारे तु उपसदां फलवत्त्वज्ञानार्थे ज्योतिष्टोमोपस्थितेरावश्यकत्वात् स्वाच-वेन तदर्थत्वोपपत्तेः । कौषितकिब्राह्मणे* प्रकरण एव प्रवर्ग्याम्नानाच्च । तत्र च, न प्रथमयज्ञे प्रयुञ्ज्यादिति श्रुतम् ।

तत्र प्रथमयज्ञपदेन सर्वसंस्थ सत्रावस्थश्च ज्योतिष्टोमोऽभिधीयते उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायाम् ।

प्रथमयज्ञशब्दो ज्योतिष्टोमनाम, एष वाव प्रथमो यज्ञो-यज्ञानां यज्ज्योतिष्टोम इति सामानाधिकरण्यात् । तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तसत्त्वाच्च । यद्यपि च संस्थानामन्यपदे-नाभिधानात् तासु ज्योतिष्टोमोत्तरकालत्वविधानात् न सर्व-संस्थाकज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वम् । तथापि ज्योतिष्टोम त्वसामानाधिकरण्येन तावत् तदस्तीति प्रवृत्तिनिमित्तविघातः ।

अतो वाक्यात् प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैवाय प्रतिषेध पर्युदासो वा । ज्योतिष्टोमभिन्ने प्रवृणक्तीति । अन्यथा विकल्पा पत्तेः । यत्वग्निष्टोमे प्रवृणक्तीति वचनं तत्पर्युदासप्रतिप्रसवार्थम् । तदपि च कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यादि-त्यनेनोपसङ्ख्रियते । तेनानूचानस्य श्रोत्रियस्याग्निष्टोमसंस्थाकज्योति-ष्टोमे नित्यं करणम् । अन्यज्योतिष्टोमेषु प्रमकरणमं । विकृतिषु नित्यं करणमिति प्राप्ते ।

---

* कौषीतकिब्राह्मणे, इत्यत्र पाठः                    † इत्ययमेव पाठः सर्वत्र ।

प्रथमप्रयोगविषयतैव। अनेन च काममित्यनूचानवाक्योपसहारः। तेनाग्निष्टोमसस्थाकप्रथमप्रयोगे अनूचानस्य नित्यकरणम्। तथा श्रोत्रियस्यापि। अनूचानो वेदाध्यायक। तेन चत्रियवैश्ययो-र्निवृत्ति। श्रोत्रिय' प्रकर्षेण वेद तदर्थ-ज्ञ। काम पदेन प्रकर्षा भिधानात्। तस्येत्येकपदेनोभयो कर्त्तोर्विधानाच्च न विधेयानेकत्वम्। तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणम।

यत्तु वार्त्तिके अनूचानादेर्विकल्पोऽन्येषा नित्यमकरणमित्युक्तम्। तत्प्रौढिमात्रम्। अत एव पार्थसारथिना अनूचानादेर्नित्यमेव प्रयोग इत्युक्तम्। यदि तु तदेव समर्थनीयमित्याग्रहस्तदा काम पदेन विकल्पाभिधानादग्निष्टोमवाक्यस्य च तेनोपसहारादनूचानादे र्विकल्प इत्येव समर्थनीयम्। सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाप्रयोगोविकृतौ तु प्रथमप्रयोगे नित्य करणमिति स्थितम् ॥२॥४६॥

पौष्णम् ॥ दर्शपूर्णमासप्रकरणे, पूषा प्रपिष्टभागोऽदन्तको हि स इति श्रुतम्। तत्र किं दर्शपूर्णमासयोरेवाङ्गत्वेन कर्मान्तरविधिरुत पूषदेवत्ययागे पेषणमात्रविधिरितिचिन्तायाम्। न तावद्भागशब्द-लचितयागोद्देशेन पेषणविधि। एकप्रसरताभङ्गापत्ते। पूषपदेन विशेषणे वाक्यभेदाच्च। कामत्वयार्थद्रव्योपसर्जनपेषणस्य यागान्वया नुपपत्तेश्च। अत एव न पूषपदेनैव भक्त्यार्थस्य लचितपूषदेवत्ययागस्य वोद्देश्यतापरम्। पूष्णोऽप्यभिचरितक्रतुसम्बन्धाभावेन क्रतूपस्थितौ प्रमाणाभावाच्च। अतो गुणद्रव्यदेवताविशिष्टकर्मान्तरविधिरेवाय मिति प्राप्ते।

सम्बन्धित्वेन वा निषेध एव कल्प्यो यथोक्तस्थले। यत्र तु कारक-निषेधो यथा रात्रौ श्राद्धं न कुर्वीतेत्यादौ, तत्र निषेधस्य कारक-मात्रविषयत्वेन क्रियाविषयत्वाभावात् क्रियाविषयविधिविकल्पा* पादकत्वानुपपत्तिः। प्रकृते च प्रथमयज्ञशब्दस्य नोद्देश्यत्वपरत्वम्। अपि तु मन्त्रं प्रातःसवन इति वदधिकरणकारकत्वम्। अतश्च न विकल्पापादकत्वापत्तिरिति केषाञ्चिदुक्तं युक्तमिति वाच्यम्। कारकस्यापि प्रथमप्रयोगाधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्येन प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेरावश्यकत्वात्। अत एवाचेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्यैच्छिकत्वेन रागप्राप्ता वैधत्वाभावाच्च तन्निषेधस्य विकल्पापादकत्वम्। प्रकृते तु प्रथम-प्रयोगाधिकरणत्वं नैच्छिकं प्रतिप्रधान गुणान्वयस्य वैधत्वात्। अत-स्तन्निषेधोऽपि विकल्पापादक एव।

वस्तुतस्तु। प्रथमप्रयोगस्य उद्देश्यत्वमेव शास्त्रदीपिकायामुक्त-मिति न किञ्चिदेतत्। अतो नानूयाजेष्वितिवत्पर्युदास एवाय-मनारभ्यवादत्वाच्छेषः। उक्तविधप्रथमप्रयोगभिन्ने मन्त्र्यादिति। ततश्च प्रापकप्रमाणाभावात् प्रथमप्रयोगे अकरणप्रसक्तावग्निष्टोमे प्रयाजमीति वचनं वस्तुतोऽत्यन्ताप्राप्तप्रापकमपि प्रतिप्रसवफलकं सदग्निष्टोमसंस्थाकले निमित्ते प्रथमप्रयोगेऽपि नित्य प्रवर्ग्यविधा-नार्थम्। न तु विकल्पेन। विकल्पे प्रमाणाभावात्।

अस्य च नान्यविषयता। सामान्यविधितएव सर्वत्र प्राप्तत्वादिति

* विकल्पा,—इति ख. ग॰ पुस्तकयो पाठ। एवं परत्र।

चरावेवेति चिन्तायाम्। अविशेषाद्दन्तकत्वेहेतुवशाच्च सर्वत्रेति प्राप्ते।

पुरोडाशे तावत्पाकात्पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थम्। तदुत्तरं तु पुरोडाशपदवाच्याकृतिविनाशापत्तिः। एवं पश्चादवदानादावपि। तेषामपाकारविशेषविशिष्टमांसवाचित्वात्। न चोभयावदानोत्तरकालं पेषणविधिः। अत्यन्ताप्राप्तपेषणविधौ गौरवापत्तेः। चरावतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्त्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम्।

प्रकृतौ हि प्रदेयपुरोडाशसिद्धेरन्यथोपपादयितुमशक्यत्वादर्थप्राप्तमपि पेषणं अध्वर्युकर्तृकत्वादिप्रयोजनसिद्ध्यर्थं स्वधर्मकं विहितम्। तच्चरौ प्रदेयसिद्धेस्तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नप्रति पेषणस्याकारणत्वान्निवर्त्तमानं प्रतिप्रसूयते। अत एव प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः। तत्र चोत्पत्तिविनियोगाद्यसम्बन्धाद् यथासम्भव विधेर्व्यापाराभावाल्लाघवम्*।

अत एव पेषणस्य प्रदेयसिद्धिरूपप्राकृतप्रयोजनलोपेनादृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसववचनविघातः। धर्माणान्तु पेषणस्य कर्मान्तरत्वाभावेन,

प्रधानं नीयमानं हि तथाङ्गान्यपकर्षति इति।

न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानामेवादृष्टरूपकार्यान्तरकल्पनं न दोषाय। दृश्यते चायमर्थोऽग्निसंस्कारकमन्थनादेः

* एव कारकमात्रे व्यापाराल्लाघवमित्यर्थः,—इति टीका।

प्रविष्टभागपदेन तावद्भागो भजनीय सेव्य अस्येति व्युत्पत्त्या सेवनासम्भवेऽपि सम्बन्धमात्रं देवेखादिव्यवहारप्रमाणक प्रविष्ट-पूष्णो प्रतीयते। तच्च याग विनाऽनुपपन्नमिति यागमनु-मापयतीत्येतावत्तु उभयोरविवादम् । तत्र च विशेषणमात्रसम्भवे विशिष्टविध्यादिकल्पनस्यान्याय्यत्वात् प्रमाणाभावेन नापूर्वयागान्त-रानुमितिरित्यपि प्रथमतोऽवगतमेव ।

अतश्चानुमीयमानयागे अनुमापकपूषसम्बन्धेन प्रविष्टपूषदेव त्यापत्त्युपस्थितिरपि सुलभैव । अतश्च यागविशेषानुमितेरेव तात्पर्यग्राहकत्वात् पूषपदं विजातीयापूर्वसाधनीभूतपूषदेवतापरम् । तदुद्देशेनैव च स्वजन्ययागप्रदेयचरुप्रकृतितिलसम्बन्धेन प्रविष्टद्रव्यकत्व प्रविष्टभागसमाधार्यो विधीयते । सम्भवति च द्रव्योद्देशेन देवता-विधिवद्देवतोद्देशेनापि निरुक्तसम्बन्धेन द्रव्यविधिर्विशेषणमात्रविधि-फलक । यद्यपि च प्रकृतिद्रव्यस्याप्यतिदेशेन सम्भवत्प्राप्तिकता, तथापि तत पूर्वं विधानाङ्गीकारात्त्वैकप्रसरताभङ्गाद्यापत्ति । पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावाच्च कर्मान्तरता । एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रविष्टभागपदल-क्षितपेषणविधिरिति प्रकारोऽपि, निषादस्थपत्यधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरविधेरेव न्याय्यत्वादधट्कर्तृं प्रथमभक्ष-दत्यादावतिप्रसङ्गापत्तेश्चोपेक्षित । तत्रास्मदुक्तप्रकारस्तु भक्षस्य प्रत्यक्षविधिनैव प्राप्तत्वेन तत पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेरसम्भवी । तदेतत्सर्वं सिद्धमेवोत्तरविवक्षया स्मार्यत इति प्राञ्च ॥३॥४७॥

तत्सर्वार्थम् ॥ तत्पेषण पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यादुत

सति पाकसम्पत्तिस्तया यतितव्य अन्तरायकरणेन वा कामिकनिवेषेण वा पाचभेदेन वेति प्राप्ते ।

आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणाया आवश्यकत्वादधिष्ठानद्वारकत्वकल्पनस्य च पूष्णोदेवतात्वोपस्थितिमन्तरेणानुपपत्ते तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैवानर्थक्यपरिहाराद्द्विदेवत्ये च चतुर्धाकरणाधिकरणन्यायेन केवलस्य पूष्णोदेवतात्वाभावाद्यत्र केवल एव पूषा तत्रैव पेषणम् ।

न चापूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूष्णोपरिभाने स्वरूपसम्बन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तेरविवक्षणात्तस्य च द्विदेवत्येऽप्येकस्मिन् पूष्णि सत्त्वेन तत्राप्युद्देश्यत्वोपपत्तेः कथ न पेषणादीति वाच्यम् । व्यासज्यवृत्तिधर्मपर्याप्तप्रकारताया एकमात्रवृत्तिसम्बन्धस्य संसर्गत्वानुपपत्ते । अन्यथा एको द्वित्वसमवायवानितिवदेको द्वित्ववानेको द्वौ इत्यादिशाब्दबोधापत्ते । अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसम्बन्धेनैव प्रकारत्वात् तस्य च पूष्णि केवले भावात् पूषमात्रवृत्तिदेवतात्वस्यैव प्रकारत्वेन तत्रैव पेषणादि । अदन्तकत्व त्वर्थवादमात्रत्वान्न विवक्ष्यते । नैमपिष्टत्वस्यापि च तत्रैव विधेयत्वाच्चरुकारादिविशिष्टभावनाविधानेन चावाक्यभेदाद्गमकत्वम् ॥३॥४८॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयाध्यायस्य तृतीय पाद ॥

पशुप्रकरणाम्नातस्य वचनाच्चातुर्मास्याङ्गत्वेन विनियोगे मद्भर्माणां कार्यान्तरप्रयुक्तत्वकल्पनादौ ।

वस्तुतस्तु अत्र पेषणस्य न कार्यान्तरकल्पनाऽपि । प्रदेयसिद्ध्यर्थत्वादेव । यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वं, तथापि पिष्टकचरावपि चरुशब्दप्रयोगात् पेषणविधिबलेन च पौष्णं चरुमित्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्चयात् तस्य प्रदेयस्य पेषणमन्तरेणासिद्धेर्न पेषणस्य कार्यान्तरकल्पनाऽपि । अत एव चरुत्व नामानवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वम् । अत्र भक्तव्यावृत्त्यै अनवस्रावितेति । मण्डकव्यावृत्त्यै अन्तरिति । सूपशाकादिव्यावृत्त्यै तण्डुलेति । अत एव पिष्टकचरावपि तल्लक्षणाभावात् पेषणस्य विघातकत्वमिति तत्रैव पेषणम् ॥३॥४ ॥

एकस्मिन् ॥ यत्रान्यसहितः पूषा देवता, यथा राजसूये ऐन्द्रापौष्णश्चरुरिति, तत्रापि पेषणमुत यत्र केवल एव देवता तत्रैवेति चिन्तायाम् । अदन्तको हि स इति अर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेस्तत्स्वरूपस्य चान्यसाहित्येऽपि सत्त्वात्तत्रापि पेषणम् । अत एव सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकाम इति नेमपदवाच्यार्द्धपिष्टत्वानुवादोऽपि सङ्गच्छते ।

यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत, तदाऽस्तु पूर्वोक्तविधया पूषप्रपिष्टसम्बन्धज्ञानजन्ययागानुमितेरेव तात्पर्यग्राहिकायाः सत्त्वात् साऽपि पूषपदे । परं तथैवादाद्यनुरोधात् पूषाधिष्ठानकदेवतात्वप्रयोज्यापूर्वीयत्वलक्षणायाएवाङ्गीकारादृद्विदेवत्येऽपि पेषणधर्मस्य । यथाचैवं

पाकार्थत्वमेव वाऽङ्गीक्रियतामिति न दोषः। अतः सर्वप्रमाणाबाधात्प्राकरणिकमनुष्योद्देशकर्माङ्गमित्येव सिद्धान्तः ।

यत्तु मूले पक्षान्तरं सिद्धान्तत्वेनोपन्यस्तम् । तथा हि। वाक्यादेव शुद्धमनुष्यप्रधानकातिथ्यादिकर्माङ्गतया विधिः । न च तदुपस्थापकाभावः । मनुष्यपदस्य लक्षणया सनकादिमनुष्यपरत्वेन तत्प्रधानकस्य दृत्त्कारातिथ्यादेरुपस्थितिसम्भवात् । अत एव न फलकल्पनाऽपीति । तदाक्याबाधस्यास्मन्मतेऽप्युपपादितत्वात् सनकादिपरत्वस्य तेन चातिथ्याद्युपस्थितेरव्यभिचरितत्वाभावेन वक्तुमशक्यत्वात् प्रकरणवाक्ययोर्बाधे प्रमाणाभावात्तत्त्वचिन्तात्वेन च सिद्धान्तनियमस्यानावश्यकत्वादस्य पक्षस्य वार्त्तिककृता क्लिष्टत्वाभिधानाच्चोपेक्षितम् ।

अतः प्राकरणिकमनुष्यप्रधानकर्माङ्गत्वमेव सिद्धान्तः । वस्तुतस्तु नाच विधिर्वाक्यभेदापत्तेरपि तु उपवीतविधेरेव शेषः प्राचीनावीतवत् । यथा च निवीतप्राचीनवीते तत्तत्प्रधानकर्मकत्वसम्बन्धेन मनुष्यपितृसम्बन्धिनी उचिते, तथोपवीतमपि देवसम्बन्धितया । अतस्तदेव दर्शपूर्णमासयोः प्रशस्तमिति स्तुतिः। अथवा ते तत्र तत्र वक्ष्यमाणवचनात्प्रशस्ते अत्र तु दैवत्वादुपवीतमेवेति स्तुति ॥३॥५०॥

उपवीतम् ॥ तदिदमुपवीतं सर्वकर्माङ्गम् । स्मृताग्निहोत्रे प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयतीति जीवद्वध्यायां यज्ञोपवीताम्नुवादलिङ्गस्य प्राप्त्यभावेन सर्वार्थतागमकत्वात् । विप्रतिषत्त्वेन दर्शपूर्णमासमस्यानुवादानुपपत्तेश्च । वैकल्पिकेन्द्रमहेन्द्रदेवत्यदार्शिकदोहने देवतावक्तृत्वाभावेन तदनुवादानुपपत्तेः च ।

# अथ चतुर्थः पादः ।

निवीतम् ॥ दर्शपूर्णमासयोः, निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इति श्रुतम् । तत्र सर्वोऽप्ययमुपव्ययत इत्यस्योपवीतविधेः शेषो न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणेनैव स्थितम् । यदा विधिस्तदा कृत्वा चिन्तया निवीतवाक्ये विचारः ।

तत्र प्रकरणात्क्रतुधर्मः । मनुष्यग्रहणन्तु सम्बन्धसामान्यवाचिन्या षष्ठ्या अङ्गाङ्गिभावसम्बन्धपरत्वावसायात् । निवीतस्य मनुष्याभिलषितफलजनकत्वाङ्गीकारात्क्रतुमनुष्यधर्मः, षष्ठीश्रुत्या प्रकरणबाधादिति द्वितीयः । अबाधेनोपपत्तौ बाधायोगात्फलकल्पनापत्तेश्च सन्निपत्योपकारकत्वलाभाच्च प्रकरणसहकृतया तया अङ्ग्यमानमन्त्रवत्क्रतुयुक्तमनुष्यधर्म इत्यपरः । अत्र पूर्वपक्षत्रयक्रमो-मूलेऽन्यथा कृतोऽप्ययुक्तिमत्त्वादुपेक्षित. ।

सिद्धान्तस्तु प्राचीनावीतवैषम्यापत्तेस्तत्समभिव्याहारात्तद्वाक्यानुरोधात् षष्ठ्या मनुष्यसम्प्रदानकप्राकरणिकान्वाहार्यदानपाकादिपदार्थोपकारकत्वरूपसम्बन्धपरत्वावसायादुक्तविधसम्बन्धेन मनुष्यार्थत्वम् । सम्भवति हि प्राचीनावीतस्य पितृदेवत्यप्राकरणिकप्रोक्षणीशेषनिनयनाङ्गत्वात् पितृदेश्यकप्राकरणिककर्माङ्गत्वम् । अतस्तत्समभिव्याहारादस्यापि तत् । एवञ्चाध्वर्युसमाख्याऽप्यनुगृहीता भवति । निवीतव्यापारादुपकारकत्वेनाध्वर्युकर्तृकेणापि तेन दानोपकारसिद्धेः ।

यज्ञस्य प्रसृत्या इत्यनेन फलाधिक्यजनकगुणाधिक्यद्वारकत्वमात्रं जपादिहोमवत्सर्वयज्ञाङ्गत्वावगत्याऽनावश्यकत्वप्रतीतेरावश्यकत्वार्थं दर्शपूर्णमासयोर्वासोविन्यासविध्युपपत्तिः। अत एव शिष्टा अपि वासोविन्यासं विनाऽपि कर्मान्तराण्याचरन्ति। यद्यपि च यज्ञस्येति वाक्यं यज्ञोपवीत्येवेत्यस्य वाक्यशेषः सन्निधानादिष्येत, तथापि समस्तेन तेन वासोविन्यास एव फलाधिक्यार्थं विधीयत इति न दोषः। मुख्यब्रह्मसूत्ररूपयज्ञोपवीतं तु तदा स्मृत्यैव सर्वयज्ञार्थत्वेन विधीयते। एवञ्च श्रौतप्रायश्चित्तसिद्ध्यर्थमिदमपि दर्शपूर्णमासाङ्गत्वेन उपव्ययत इत्यनेन विधीयत इत्यपि केचित्। निवीतादिष्वसमभिव्याहारस्योभयत्र प्रत्यभिज्ञापकस्य तुल्यत्वात्तु वासोविन्यास एवात्र नियम्यत इति युक्तमुत्पश्यामः। सर्वथोपव्ययत इति विधिर्दर्शपूर्णमासविधिश्रवचितत्वात् न तत्स्तावकत्वानुपपत्तेरिति सिद्धम् ॥३॥५.२॥

एवं वा ॥ यावज्जीववाक्येनाग्निहोत्रे जीवनस्य निमित्तत्वावगमेऽपि वचनेनैव दाहावधि सायंप्रातःकाले, मरणोत्तरं नित्यत्वेन विहितोऽग्निहोत्रप्रयोगो मृताग्निहोत्रम्। तस्मिन्मृताग्निहोत्रे प्राचीनावीती दोहयेद् यज्ञोपवीती हि देवेभ्यो दोहयतीत्यनेन दैवाग्निहोत्रे किं यज्ञोपवीतस्य विधिरनुवादो वेति चिन्तायाम्। स्वरूपेण प्राप्तस्यापि ब्रह्मसूत्रस्य श्रौतप्रायश्चित्तप्राप्तिफलकतया विधिर्वासोविन्यासरूपस्य वा नियमार्थं विधिरिति प्राप्ते। स्थितं तावदपर्यवसितम्। मध्ये चिन्ताऽन्तरारम्भः ॥

उदङ्मुख ॥ तत्रैव, ये पुरोडाशीदर्भांस्तान् दक्षिणाग्रांस्तृणीया-

सर्वार्थत्वे तु कर्त्तृसंस्कारकस्योपवीतस्य यज्ञदेवत्याग्निहोत्रप्रयोगाङ्ग-त्वेन तद्दोहनेऽपि प्राप्तेरनुवादोपपत्तिरिति प्राप्ते ।

सन्निकृष्टासम्भवे विप्रकृष्टानुवादस्यापि न्याय्यत्वात् प्रकृतिविकृत्य-भिप्रायेण च सायम्प्रयोगेऽपि दैवताङ्गत्वाभावादनुवादोपपत्तेः प्रकरणा-द्दर्शपूर्णमासाङ्गमेवोपवीतम् ।

वस्तुतस्तु वक्ष्यमाणवचनानुसारादग्निहोत्रेऽपि यज्ञोपवीतप्राप्तेस्तत्रत्यस्यैवायमनुवादः ॥३॥४॥१॥

विधिर्वा ॥ उपव्ययत इति विधिरनुवादो वेति चिन्तायाम् । नित्योदकी नित्ययज्ञोपवीतीति गौतमस्मृत्या प्राप्तत्वादनुवाद । यदि त्वनेन पुरुषार्थतया प्राप्तिरित्याशङ्क्येत, ततो यज्ञोपवीतिना कर्त्तव्यमिति स्मृत्यन्तरात्क्रत्वर्थेनापि प्राप्तिरङ्गावनीया । यदि वृक्ष-वचनेनाङ्गत्वे तद्भ्रंशे स्मार्त्तप्रायश्चित्तापत्तेर्यत्नु* श्रेयप्रायश्चित्तप्राप्त्यर्थे दर्शपूर्णमासयोस्तद्विधानमित्याशङ्क्येत, ततो यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वेत्यादितैत्तिरीयकश्रुत्या सर्वयज्ञार्थत्वेन यज्ञोप-वीतविधानात्तत्प्रायश्चित्तस्यापि प्राप्त्युपपत्तेर्विधानानर्थक्यम् । यदि त्वेतेषां सर्वेषां वचनानां नवतन्तुकत्रिसूत्ररूपमुख्ययज्ञोपवीतविषय-त्वादाग्नेविन्यासरूपगौणोपवीतस्यैवाप्राप्तस्य दर्शपूर्णमासाङ्गत्वेन विधि रित्याशङ्क्येत, ततो यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत-उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषमिति वचनेन तस्यापि सर्व-यज्ञार्थत्वेन प्राप्तत्वादनुवाद एवाय दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते ।

* इत्यमेव पाठः सर्वत्र प्रायश्चित्तापत्ते यत्नु – इति तु भवितुमुचितम् ।

द्विशब्दश्रवणाद्विध्यन्तरैकवाक्यत्वाच्चोपरि होमीत्यनुवादः पूर्वस्त्वर्थः। न च प्राप्त्यभावः। स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीतिवचनेन स्रुग्दण्डस्याधिकरणत्वप्रतीतेरुपरि धारणाभावे च पतनप्रतिबन्धकत्वरूपतद्योगादुपरिभावस्य प्राप्तेः। न च समित्स्रुग्दण्डयोरुभयोरपि कृतार्थत्वादुत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरितिवद्देशार्थत्वावधारणात् सप्तम्या सामीप्यमात्रलक्षणेति केषाञ्चिदुक्तं युक्तम्। कृतार्थयोरङ्गाङ्गिभावाभावेऽपि अधिकरणत्वेनैव दृष्टान्त इव स्रुग्दण्डस्य देशत्वोपपत्तेः। अतोऽत्राप्यनुवाद इति प्राप्ते।

स्रुग्दण्डस्य न तावल्लक्षणाधिकरणत्वम्। हस्तस्यैव तदधिकरणत्वात्। उपशब्दवैयर्थ्याच्च। नाप्युपशब्दार्थे सामीप्ये, स्रुग्दण्डस्य सामीप्यप्रतियोगित्वेनाधिकरणत्वानुपपत्तेः। अतः सप्तमी सामीप्यप्रतियोगित्वमात्रलक्षणार्था। कथञ्चित् सामीप्याधिकरणत्वसम्भवेऽपि वा समिदधिकरणत्वस्याप्राप्तत्वान्नोपरिभावानुवादः। अतो द्विशब्दपरित्यागेनैकवाक्यतामपि भुक्त्वा दैवाग्निहोत्रे उपरिभावनियमविधिः।

वस्तुतस्तु। अनियतप्राप्त्याऽप्येकवाक्यत्वसम्भवे हविरुभयत्वादिवद्वाक्यभेदाङ्गीकारस्यायुक्तत्वादस्यार्थवादत्वमेवाङ्गीकृत्य सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विध्यन्तरस्यैवाप्राप्तनियमफलकस्य कल्पनेति युक्तम्।

वस्तुतस्तु स्रुग्दण्डे निधाय समिधमनुद्रवतीति न्यायसुधाकृल्लिखितवचनेनोपरिभावस्यापि लक्षणातात्पर्यग्राहकप्रमाणाभावेन प्राप्तत्वादेतद्वचनाभावं कृत्वा चिन्तयेदमधिकरणमिति ध्येयम् ॥२॥५॥५॥

दिग्विभागश्च॥ सोमे, प्राचीनवंशं करोतीत्येतद्विधिशेषः प्राचीं

दिति श्रुतेऽपि ये पुरा दर्भास्त उदञ्चः कार्या इत्येवं विधिवाचक-पदाध्याहारेणापि पूर्ववद्विधिः । न च पुराशब्दस्य विशेषणत्वे विशिष्टोद्देशः । दक्षिणाग्रत्वस्य स्मार्ताग्निहोत्रे विधावर्थादेवोदक्त्वस्य जीवदवस्थायामेव प्राप्तत्वेनाविशेषणत्वात् । निपातत्वेन पुराशब्दा-न्वयस्य व्युत्पन्नत्वाच्च । न चापवर्गे प्रागग्राण्युदगग्राणि चेति सामान्य-स्मृत्यैवोदगग्रत्वप्राप्तेर्विध्यानर्थक्यमिति वाच्यम् । यजुर्भेषप्रायश्चित्त-सिद्ध्यर्थं तद्विधानोपपत्तेः । अन्यथा स्मृतिमूलभूतश्रुतेरविज्ञातवेद-त्वाद् यद्यविज्ञाते भूर्भुवः स्वरित्याहवनीये जुहुयादित्येतत्प्रायश्चित्तेति प्राप्ते । यच्छब्दश्रवणात्प्रत्यक्षविध्यभावाद्विध्यन्तरैकवाक्यत्वाच्च नायं विधिः । अपि तु प्राप्तत्वात् तच्छब्दापेक्षितोद्देश्यविशेषसमर्थक एवे-त्यनुवादः ॥२॥५३॥

क्षितादुत्तरम् ॥ हिशब्दोपपन्नादिविध्यन्तरैकवाक्यत्वाच्चायमपि निवीतादिवत्प्राचीनावीतस्तुत्यर्थः । अत एवोपव्ययत इतिवदानर्थ-क्याभावादपि विधिकल्पनं निरस्तम् । यज्ञोपवीतपदवाच्यब्रह्मसूत्रस्य च स्मृत्यैव जीवदग्निहोत्रे प्राप्तत्वादौचित्यादिना स्तुत्युपपत्तिः । वासो-विन्यासरूपस्यापि चानियमेनोक्तविधया जीवदग्निहोत्रे प्राप्तत्वात् स्तुत्युपपत्तिः । यदि तु नियमेन तत्प्राप्तिः श्रुतावावश्यकी अपेक्षेत, ततः सन्निकृष्टापभवादिप्रकृष्टदर्शपूर्णमासादिस्थस्यैवायमनुवादः स्तुत्यर्थं नानुपपन्नः । बहुवचनं तु प्रकृतिविकृत्यभिप्रायमित्युक्तमेव ॥२॥५४॥

विधिश्च ॥ स्मार्ताग्निहोत्र एवाधस्तात् समिधं धारयन्ननुद्रवे-दुपरि हि देवेभ्यो धारयतीति श्रुतेन किमुपरि धारणं दैवाग्निहोत्रे विधीयते उतायमप्यनुवाद इति चिन्तायाम् ।

तस्य कर्त्ताऽपि वाच्यः। एकत्वादिवत्ततस्तस्यापि प्रतीतेः। कर्त्तरि शदित्येतत्सूत्रस्थकर्त्तरीत्येतदनुकर्षणार्थचकारयुक्तेन लः कर्मणि च भावे चाकर्मकेभ्य इत्यनेन कर्त्तृकर्मभावानामप्याख्यातार्थत्वस्यतेश्च चैत्रः पचतीति चैत्रादिपदसामानाधिकरण्याच्चैवम्।

न च भावप्रधानमाख्यातमिति स्मृत्या एकत्वादिवदेव यद्यपि भावनां प्रति विशेषणत्वेनान्वीयते। तथाप्युपस्थितत्वात्तद्वाचकपदान्तरमाश्वकल्पनया तदुपकारस्यैव भाव्यत्वेनान्वयो न तु कर्मणो विलक्षितप्रतीतिकत्वात्। दृश्यते च गुणत्वेन प्रतीतस्यापि प्रयोजनाकाङ्क्षायां प्राधान्यं पश्वाद्यथा पशुपुरोडाशादौ देवतादेः। विधिनिषेधाभ्यामपि स्वविषये ,तद्गतेष्टानिष्टसाधनत्वस्यैवाक्षेपाच्चेदमेव युक्तम्। अतश्च विधिस्थले स्वर्गो निषेधस्थले च प्रत्यवाय एव क्रियाफलं समानाभिधानविधिश्रुतिभ्यां, न तु क्रतूपकारकः प्रकरणात्। एवञ्च यद्यप्याख्यातेन कर्त्ता नाभिधीयेत, तथापि भावनयाऽऽक्षिप्तस्याख्यातेन स्वचितस्य च तस्यैवोपस्थितत्वात्तदर्थत्वकल्पनं न दोषः।

अतश्च वैमृधवत्प्रकरणबाधेन श्रुत्यैव पुरुषधर्मत्वावगतेस्तदा चानृतवदनप्रतिषेधस्योपनयनप्रभृतिप्रवृत्तेः स्मार्त्तानृतवदनप्रतिषेधस्यापीदमेव मूलमिति प्रथमः पक्षः।

द्वितीयस्तु सत्यपि पुरुषप्राधान्यावगमे स्वर्गप्रत्यवायादिकल्पनाऽपेक्षया क्रतुगतफलाधानयोग्यत्वायोग्यत्वरूपसंस्कारस्यैव प्रकरणावगतस्य श्रुत्यपेक्षितस्य कल्पनं युक्तम्। अतश्च जञ्जभ्यमानमन्त्रवदेवैषां क्रतुयुक्तपुरुषधर्मत्वम्। तदा च,

देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा-इत्ययं श्रुतः । तत्र मनुष्यसंयुक्ते निवीताधिकरणवदौदुम्बराधिकरणवच्च विधित्वं निरस्तमपि पूर्वाधिकरणवन्मनुष्यकर्त्तव्यवैदिककर्मणि तावद्दिगन्तरस्यैव सामान्यविशेषादिवचनेन प्राप्ततया प्रतीच्यास्तत्राप्राप्तेः लौकिके च कर्मणि प्रतीच्यानित्यप्राप्त्यभावाद्विधित्वं विधिकल्पकं वेति प्राप्ते ।

इह प्रतीच्या मनुष्यसम्बन्धमात्रोपादानेऽपि कर्मविशेषानुपादानात् सर्वत्र विधानस्य लघैव निरस्तत्वाद्यस्यामेव क्रियायक्तौ प्रतीचीदिगभिमुखत्वं लोके यदृच्छया सिद्धं, तादृशक्रियागतमेव मनुष्यप्रतीचीसम्बन्धं स्तुहीला स्तुत्युपपत्तेर्नातिरिक्तविधन्तरकल्पनं प्रमाणवत् । उपरि हीत्यत्र तु दैवाग्निहोत्रत्वावच्छेदेनोपरिभावश्रवणात् तस्य चाप्राप्तत्वेन विध्यन्तरकल्पनया दैवाग्निहोत्राङ्गसमिद्धारणानुवादेनोपरिभावविधिः । अनुमितवाक्यत्वाच्च न विशिष्टोद्देश इति वैषम्यम् ॥२॥५६॥

पदयिदित ॥ दर्शपूर्णमासयोः, पर्व प्रतिलुनातीति विधेयत्पर्षपिदितं तद्देवानां, यदन्तरा तन्मनुष्याणां, यत्समूलं तत्पितॄणामिति शेषः । तथा सोमे, यत्पूर्णं तन्मनुष्याणाम्, यदुपर्यधात्तद्देवानामिति उपरिविलाङ्गुलातीत्यस्य विधि.। तथा तत्रैव, नवनीतेनाभ्यङ्क्ते इत्यस्य घृत देवानां नि.पक मनुष्याणामिति । तथा दर्शपूर्णमासयोः, अविदहता श्रपयितव्यमिति विधेर्या विदग्धः स नैर्ऋतइति ।

अत्र मनुष्यसयुक्ते क्रियाविशेषस्य लवनादेरुपादानात्तत्र च

वस्तुतस्तु। न तस्य वाच्यत्वम्। प्रतीतेरन्यथाऽप्युपपत्तेः। तथाहि, आख्यातान्तावत्कर्त्ता हृतिरेकसादिकं प्रतीयत इत्यविवादम्। तत्रानेकार्थबोधकपदे सर्वत्रैकत्र शक्तिरपरत्राक्षेपादीत्यपि तथैव। इतरथाऽनेकशक्तिकल्पनापत्तेः। तत्र च नियामकापेक्षायां प्रधानेन गुणभूतस्य लोके आक्षेपदर्शनात् प्राधान्यं तावन्नियामकम्। तत्र यथा सत्वप्रधानानि नामानीत्यनया स्मृत्या कृदन्तादिनामसु सत्वरूपस्य कर्त्तुरेव प्राधान्यावगमादाच्यत्वं न कृतेः, लक्षणादिनाऽपि तत्प्रतीत्युपपत्तेः। एवमाख्याते भावप्रधानमाख्यातमिति स्मृत्या भावनायाएव प्राधान्यावगमादाच्यत्वं नाश्रयस्य कर्त्तृकर्मादेर्लक्षणयाऽपि तत्प्रतीतेः।

अत एव यत्र न किञ्चित्प्राधान्यनियामकं, तत्रैव घटघटत्वादौ नागृहीतविशेषणान्याय इत्यादि कौस्तुभे स्पष्टम्। यत्र तु नैकत्वादौ व्यभिचारादाक्षेपः, तत्रातिरिक्तैव शक्तिः, न तु कर्त्रादौ। या तु स्मृतिस्तत्र प्राहुः। द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमिति सञ्ज्ञाशास्त्रेण लः कर्मणीत्यादेरेकवाक्यता। अत्र हि द्व्येकयोरित्यत्र भावप्रधानो निर्द्देशः द्वित्वैकत्वयोरित्यर्थः। अन्यथा द्व्येकेष्विति वक्तव्यतापत्तेः। तथा च कर्त्रादौ वर्त्तमानेष्वेकत्वादिषु लकारादेशभूततिबाद्येकवचनादीनि भवन्तीति सूत्रद्वयार्थः। न तु कर्त्रादौ लकारः शक्त इति।

न चैवं कर्त्रादेरनभिहितत्वात्तत्र तृतीयाद्यापत्तिः। शक्त्याऽनभिधानेऽपि लक्षणयाऽभिधानादिति। अथानभिहितत्व अभिहितत्वाभाव। तत्राभिहितत्वं न तिङादिवाच्यत्वं तत्प्रतिपाद्यत्वमात्रं वा।

प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ।

इति स्मृते सनातनग्रहणेन सार्वकालिकविषयत्वावगतेरेतन्मूलत्वासम्भवेन मूलान्तरस्यावश्यकत्वात् सर्वदा चानृतं वर्जयेत् क्रत्वनृतप्रसक्त्यभावादनुवाद एवायम् ।

अस्तु वा पुरुषार्थप्रतिषेधेन पुरुषस्यानृतवदने प्रत्यवायबोधनेऽपि क्रतुवैगुण्यापत्तौ प्रमाणाभावाद्य प्रत्यवायं सोढ्वाऽपि क्रतुं सगुणं कर्त्तुमिच्छेत्तस्य ब्रीहिभिर्यष्टव्य इत्युक्त्वा सम्भवदेव यवैर्यागेऽनृतप्रसक्तिरिति क्रतुप्रकरणगतस्यापि निषेधस्य विधायकत्वम् । अतश्चैतदतिक्रमे श्रौतप्रायश्चित्तप्राप्तिश्च फलमिति प्राप्ते ।

सत्यं नानुवादः । क्रतुयुक्तपुरुषधर्मत्वे तु न किञ्चित्प्रमाणमस्ति । यद्यपि तावत्कर्त्ता वाच्यः स्यात्तथापि तस्य वक्ष्यमाणरीत्या गुणत्वेनोपपादनाच्च तावच्छब्दत एव प्राधान्यम् । नापि पदान्तरकल्पनया, वैमृधादिवत् । कर्त्तुः प्रयोजनवत्त्वसिद्ध्यर्थमवश्यं प्रकरणात्तोपगमे क्रियमाणे क्रतोरुपस्थितत्वेन तद्गतसाद्गुण्यवैगुण्यपरिहारयोरेव प्रवर्ग्यन्यायेन कल्पयितुं युक्तत्वात् ।

अत एव यत्र पशुपुरोडाशादौ उद्देश्यांशस्य दृष्टविधया देवतास्मारकत्वासम्भवाददृष्टोपकारकत्वकल्पना, तत्र सन्निपत्योपकारकत्वलाभाय परम्पराङ्गीकरणमप्यदोषः । जप्यमानमन्त्रे तु वक्ष्यते । प्रकृते तु समिदादेः प्रकृतापूर्वसाधनीभूतपुरुषोद्देशेन प्रकृतक्रतुफलाधानयोग्यतासम्पादकतया विधाने गौरवापत्तेर्बाधकत्वात् प्रकृतापूर्वसाधनक्रतुगतसाद्गुण्यमेव समिदादीनाम् । अनृतवदनस्य च तद्गतवैगुण्यसम्पादकत्वम् । अत शुद्धक्रतुधर्मत्वमेव कर्त्तुर्वाच्यत्वपक्षेऽपि युक्तम् ।

श्रुत्वाऽप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना।

इत्यादिद्वितीयान्तप्रयोगानापत्तिः। यदि त्वुक्तप्रयोगेष्वनाख्यातो-मयैव भुज्यत इत्यत्र च कर्त्तर्येवाद्या तृतीया पक्वौदनो भुज्यत-इत्यत्र नाध्याहाराङ्गीकरणम्। तदोक्तनियमभङ्गीकृत्य क्तप्रत्यय-स्यापि च भाव एवशक्तिमङ्गीकृत्य तदर्थस्य भावस्य पूर्वकालत्वसमा-नकर्तृकत्वसंसर्गेणोत्तरक्रियायामन्वयोऽङ्गीक्रियते। तदाऽस्तु यद्वृत्ति कारकं स्वान्वयिप्रधानक्रियाप्रतिपादकपदेन वृत्त्या प्रतिपाद्यं तत्त्व-मभिहितत्वं, तदभावोऽनभिहितत्व, तत्र तृतीयादीति संक्षेपः।

अत्र वदन्ति। एवं सति क्त इति षष्ठ्यन्तस्तिबाद्यन्वितं वाच्यम्। प्रथमान्तस्यान्वयात्। अतश्च लस्येति सूत्रवैयर्थ्यापत्तिः। स्यादेशभूत-शानजादेः कर्त्रादिवाचित्वानुपपत्तिश्च। न च कर्त्तरि कृदित्यनेन तद्वाचित्वं, तथात्वेऽपि कर्मणि भावे चाकर्मके तत्प्राप्तेः सूत्रान्तरा-विषयत्वात्। अत एवं परिहर्त्तव्यम्। ल इति प्रथमान्त कर्त्रादावे-वान्वेति। न त्वेतावता तस्य वाचित्वं लाघवेन वृत्त्या तद्गम्यत्वस्यैव शास्त्रतात्पर्यविषयत्वेन सत्यंशे तद्व्यापाराकल्पनात्। सा तु प्राधा-न्यादिनैव सिध्यतीति सिद्धमाख्याते कर्त्रादेरवाच्यत्वम्। शानजादौ च वाच्यत्वमिति। लस्येति सूत्रस्य च तिबादीनां स्यादेशत्ववि-धायकस्य न वैयर्थ्यम्।

अत. कर्त्तुरवाच्यत्वाद्वाच्यत्वेऽपि वा प्राधान्यस्य दूरभ्रष्टत्वान्न पुरुषधर्मत्वक्रतुयुक्तपुरुषधर्मत्वे। एतेन लक्षणया तस्योपस्थितत्वादेव तत्कल्पनेति निरस्तम्। प्रयोजनमाद्यपक्षे स्मार्त्तं प्रायश्चित्तम्। क्रतुयुक्तपुरुषधर्मत्वे फलिसंस्कारकत्वाद्यजमानेनैव विधिप्रतिषेधार्थ-

तथात्वे पाचकेन गम्यते चैत्रेण भुक्त्वा गम्यत इत्यादौ तृतीयाद्यनापत्तेः । तृच्प्रत्ययेन कर्त्तुरुपात्तत्वात् । क्त्वाप्रत्ययेन समानकर्तृकत्वेनाथा कर्त्तुरुपादानाच्च । नाप्यभिहितसङ्ख्याकत्वे चैत्रेण पक्त्वा इतिवच्चैत्रेण पाचक इति प्रयोगापत्तेः । सूत्रे लक्षणापत्तेश्च ।

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

इत्यादौ निपातेन युज्यत इति क्रियाभिधायकेन सङ्ख्याऽनभिधानात् वृक्षमिति द्वितीयापत्तेश्च ।

अपि तु यद्वृत्ति कारकं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्य, तत्तम् । अस्ति चेद् चैत्रः पचति ओदनः पच्यत इत्यादौ । चैत्रादिवृत्तिकर्तृत्वकर्मत्वादेर्निरुक्तपदेन प्रतिपादनात् । पाचकेन गम्यत इत्यादौ च तृजुपात्तस्य पुरुषस्य गमनक्रियैवान्वयिनी न तु पाकक्रिया, तस्या एव तन्निष्ठत्वयात् । तद्वृत्ति च कारक न कर्माख्यातेनाभिहितमिति युक्तैव तत्र तृतीया । एवं चैत्रेणेत्यस्य भुजिक्रियायामनन्वयाद्गमनक्रियायामेवान्वयाङ्गीकारात् तृतीयोपपत्तिः । मयैव पक्त्वा मयैव भुज्यते इत्यत्र तु पक्त्वेत्यनेन कर्त्तुरुपात्तत्वात्कर्त्तरि न मयेत्याद्या तृतीया । अपि तु आत्मानमात्मना वेत्सि, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, इत्यादिवत्करणे इति न काचिदनुपपत्तिः । पक्त्वौदनो भुज्यत इत्यादौ तु पचिधातोः कर्माकाङ्क्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम् । न हि प्रधानक्रियायामुक्तस्य कारकस्य गुणभूतक्रियायामप्युक्तिरिति नियमे प्रमाणमस्ति । येनाध्याहार विनाऽपि वाक्य समर्थ्येत । तथात्वे, ओदन भुक्त्वा ग्रामं पच्यते,

नुपपत्तेर्यजमानादन्यपुरुषकर्तृकत्वस्थापि तत्कर्तृकमन्त्रपाठापत्तेः मान-
गुतगृहाककर्तृकर्तृकत्वानुवादानुपपत्तेरवश्यं गृह्मायाः पुरुषविशेषण-
त्वमङ्गीकृत्य अध्वर्युमाणकर्तृविशिष्टमनुवचनमेवाध्वर्यवं विधीयते
आरादुपकारकत्वेन। ततश्च गृह्मायाः क्रियां प्रति निमित्तत्वेनान्व-
यायोगादार्थिकमेवास्या वपद्वारादिवन्निमित्तत्वमिति प्रथमः पक्षः।

द्वितीयस्तु अध्वर्युमाणस्य कर्तृत्वेनानुवचनं प्रति गुणत्वाङ्गीकारे
गुणानुरोधेन प्रधानभूतानुवचनस्य कृतौ पाक्षिकत्वापत्तेरध्वर्युमाणस्य
क्रियां प्रति शब्दतो विशेषणस्यापि स्वर्गादिवदेव प्राधान्यम्। तदा
हि प्रधानानुरोधेन पाक्षिकत्वेऽपि न दोषः। यद्यपि च तिङ-
भिहितकारकत्वमेव प्रथमार्थो न तु संस्कार्यत्वम्। तथापि कर्तृ-
त्वस्य फलसमानाधिकरणत्वतद्व्यधिकरणत्वविशेषभेदेन भिन्नत्वादुक्त-
युक्त्येह फलसमानाधिकरणकर्तृत्वस्यैव प्रथमार्थत्वात् फलभोक्तृत्वरूप-
संस्कारसिद्धिरविकलैव। एतदभिप्रायेणैव च कौस्तुभे अधिकारि-
त्वस्य प्रथमार्थत्वोक्तिरिति ध्येयम्। अतो अध्वर्युमाणोद्देशेनानु-
वचनविधानात् प्रकरणानुरोधेन च वाक्यसङ्कोचे प्रमाणाभावात्
शूद्रपुरुषधर्मत्वम्। न च फलकल्पना। प्राणापानधारणरूपस्य
फलस्य स्ववाक्य एव क्लृप्तत्वेन तदभावात्। यद्यपि चायमर्थवादः
स्यात्, तथापि प्रकरणावगतक्रतूपकारापेक्षयाऽप्येव स्ववाक्योपस्थितस्य
तदाचकपदान्तरकल्पनया फलत्वस्यौचित्याच्च। अतः शूद्रपुरुष-
धर्मत्वमिति प्राप्ते।

न तावत् पक्षः क्लृप्तम्। धत्त इति वर्तमानत्वनिर्देशेन योग्या-
नुपलब्धिबाधितत्वात्। अतोऽस्य स्तत्यर्थत्वेनान्वयमङ्गीकृत्य फला-

सम्पादनं न तु समाख्ययाऽध्वर्युनियमः । शुद्धक्रतुधर्मत्वे तु विधिषु सति समाख्यया नियमः । निषेधेषु तु तस्यानियामकत्वासम्भवात् कर्त्तृमात्रेण वर्जयितव्यमिति ॥२॥५८॥

अहीनवत् ॥ ज्योतिष्टोमे, तीर्थे स्नाति तीर्थमेव समानानां भवतीत्यत्र तीर्थस्नानस्य प्रकरणादेव पूर्ववदारादुपकारकत्वं प्राप्त पशुपुरोडाशन्यायेन दृष्टरूपमलापाकरणार्थत्वलिङ्गेन बाधित्वा क्रतुयुक्तपुरुषधर्मत्वम् । तेऽस्य दीक्षातपसी प्रावेशयन्निति अर्थवादे अस्य दीक्षावत्त्वसङ्कीर्तनात् दीक्षायाश्च यमनियमपरिग्रहरूपाया पुरुषसंस्कारकत्वस्य गृहपतिं दीक्षयतीत्यादिना स्पष्टत्वादपि स्नानस्य क्रतुयुक्तपुरुषधर्मत्वम् । अत एव कर्त्तृत्वाभावे वैयर्थ्यादनुपयोगेऽपि फलाधानार्थं उपयोगकल्पनादस्य याजमानत्वमिति स्पष्टत्वादेवेद सूत्रे उदाहरणमपि न विचार्यते ।

दर्शपूर्णमासयोस्तु, जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवात्मन् धत्त इति श्रुतौ मन्त्रपाठः किं शुद्धक्रतुधर्म-उत शुद्धपुरुषधर्म आहो क्रतुयुक्तपुरुषधर्म इति चिन्तायाम् । पूर्ववत्पुरुषस्य जृम्भणस्यापि सर्वप्रधानभूतायां भावनायां चैत्रादिवद्विशेषणत्वेनोपादानात्प्रयत्नन्यायेन प्राधान्यकल्पनानुपपत्तेर्लक्षणत्वेनो क्रियाया इत्यनेनानुवचनक्रियायां लक्षणत्वेनावगतस्य जृम्भणस्य भाष्यमादिना लक्षणयायोगाविनिमित्तमप्रतीतेर्जृम्भणायां निमित्तोऽनुवचन भेदकत्वेनारादुपकारकम् । प्राणभृपाक्त फला अर्थप्राप्तत्वादनुवाद ।

वचनात्तु । अनुवचनस्यारादुपकारकत्वे समाख्याया आध्वर्यवत्वा-

न च क्रतौ अवगूरणप्राप्त्यभावादेवास्योत्कर्षसिद्धेर्न प्रत्युदाहरणत्वमिति वाच्यम् । अन्वाहार्यपचनाद्यसम्भवे तस्यापि तदर्थं प्राप्तेः । क्रतूपकारकतया प्राप्त्यभावेऽपि न स्त्रियमुपेयादित्यादिवत्क्रतुमध्यप्रसक्तप्रतिषेधस्यापि क्रत्वङ्गत्वोपपत्तेश्च । अतश्च फलस्य श्रुतत्वादेव पुरुषधर्मत्वम् । अत्र चार्थवादोन्नीतस्य वा पदान्तरस्य फलपरत्वं, अस्यैव स्वर्गादिवद्वा तत्परत्वमित्यादि तु स्वयमूह्यम् ॥३॥६०॥

प्रागपरोधात् ॥ दर्शपूर्णमासयोरेव, मलवद्वाससा न संवदेदिति श्रुतम् । मलवद्वासा रजस्वला । अस्य च प्रतिषेधस्य फलाश्रवणात् क्रत्वङ्गत्वे नानुपपत्तिः । न च यस्य व्रतेऽहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेतेति वचनेनैवानालम्भुकापदवाच्यरजस्वलाऽपरोधोत्तरं क्तप्रत्ययेन यागप्रयोगकर्त्तव्यताविधानात् क्रत्वङ्गभूतस्य लौकिकस्य च याजमानस्य आर्त्विजस्य वा रजस्वलासंवादस्याप्रसक्तेः कथं प्रतिषेध इति वाच्यम् । अन्यस्याप्रसक्तावपि साधारणद्रव्यतया मौह्याद्यर्थेऽनुमतिरूपस्य तस्य प्रसक्तेः । अनुमतेरपि परम्परया ज्ञातृ शक्यत्वेन संवादाप्रसक्तौ तु पत्न्यतिरिक्तरजस्वलासंवादस्य क्रतुमध्ये रागतः प्राप्तस्यापरोधवाक्यविषयस्य सतो निषिद्धस्यापि क्रत्वर्थतया प्रतिषेधोऽनृतवदननिषेधवदिति प्राप्ते ।

मनुना, रजस्वला च षण्ढश्चेत्यादि प्रक्रम्य,

होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितम् ।
दैवे हविषि पित्र्ये वा तद्गच्छत्ययथायथम् ।

इत्युक्त्वा, तमप्यनयेत् तत इत्यनेन रजस्वलामात्रस्य दैवकर्ममात्रे वाक्येन श्राद्धप्रकरणं बाधित्वा अपनयविधानात् तथा मह मवादा-

पेक्षायां कामपदयुक्तपदान्तरकल्पनयाऽन्यैव वा भविष्यदर्थकल्पनया फलपरत्वं परिकल्प्य तस्य कथञ्चिल्लभ्यमानकर्तृभोग्यत्वं वाच्यम् । तथा सति फलं तज्जनकत्वं तद्व्यापाररूपापूर्वञ्चेत्यनेककल्पनातो वरं प्रकरणानुरोधेन सूक्तक्रतुफलाधानयोग्यताजनकत्वमात्रं क्रत्वपेक्षितत्वात् कल्पयितुमुचितमिति क्रतुयुक्तपुरुषधर्म एवायम् । फलाधानयोग्यतासम्पादकत्वाच्च याजमान इति प्रयोजनम् ॥३।४।८॥

शंयौ ॥ अत एव दर्शपूर्णमासयोर्देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नोवहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति तेऽब्रुवन्योऽब्राह्मणायावगुरेत्तं शतेन यातयात्तस्मान्न ब्राह्मणायावगुरेदिति श्रुतोऽदण्डोद्यमनादिरूपावगूरणादिप्रतिषेधोऽपि शुद्धपुरुषधर्म एव । यातनारूपस्य फलस्य कृत्स्नेन प्रकरणेन वाक्यसङ्घोषायोगात् । अत्र हि आशिषि लिङ्, प्रवर्त्तनाया बाधात् । आख्यातार्थोऽपि लक्षणया भोगरूपानुभवो निष्कारो वा । तमिति द्वितीयार्थो विषयत्वम् । तथा चावगूरणकर्तृविषये शतगुणं यातनानुभवः शतसंख्यारूपेण वा तन्निष्कारो भवत्वित्यर्थः ।

वस्तुतस्तु आख्यातार्थोऽनुभावनादि, लिङर्थोऽनुकूलव्यापार एव । तथा च तं प्रति भवान् शंयुरनुभावयेदित्यर्थः । अत्र लिङुपादानेन पूर्वमवर्त्तमानताप्रतीतेर्यातनायाः साध्यत्वावगमाद्विधेयत्वं कामपदाद्यभावेऽपि स्फुटम् । अतः शुद्धपुरुषधर्म इति प्रत्युदाहरणमात्रम् । अतएव सामान्येन शंयोर्वरदानमपि सङ्गच्छते । पुरुषधर्मत्वञ्च पुरुषनिष्ठफलजनकक्रियाविषयतामात्रं, न तु पुरुषस्य संस्कार्यतया शेषित्वं प्रमाणाभावादिति ध्येयम् ।

फलसाधनत्वकल्पनाया एव प्रसक्तेः पारिशेष्याभावात्। धारणस्य संस्कारकस्य सुवर्णस्याश्रयापेक्षायां तत्त्वेनाप्यर्थादन्वये बाधकाभावात्। न चेष्टापत्तिः। तथात्वे धारणसुवर्णोभयकरणकयोर्द्वयोर्भावनयोर-पूर्वयोस्तत्पदयोश्च कल्पने गौरवापत्तेः। सुवर्णाङ्गेऽप्यपूर्वविधित्व-प्रसङ्गाच्च। अध्वर्युं वृणीते, स्वाध्यायोऽध्येतव्य इत्यादौ तु उभयोरपि दृष्टार्थत्वादुक्तगौरवाभावेन संस्कारविध्यन्यथाऽनुपपत्त्या विनियोग-कल्पनेऽपि न दोषः। प्रकृते तु धारणेन सुवर्णं संस्कुर्यात्तेन च तदाश्रितेन फलं भावयेदिति कल्पने गौरवम्।

अतः क्रत्वर्थत्वयत्नव्या एकैवात्र भावना। तस्याश्चावश्यकत्वादार्थ-वादिकस्य फलस्यैव भाव्यत्वं, न तु सुवर्णस्योद्देशानेकत्वप्रसङ्गात्। अतः प्रकृन्यायेन विनियोगभङ्गात् सुवर्णहिरण्यधारणमेवार्थकर्मतया विधीयते। किञ्च सुवर्णस्वरूपे आनर्थक्ये यथैव तत्कार्यं क्रतुरेवं लौकिक्यपि क्रिया। तस्यामपि च नैवानर्थक्यम्। छेचकर्मणि बाहच्छिद्रणादिविघ्निर्विघ्नसमाप्त्यर्थत्वेन धारणाख्यसंस्कारोपपत्तेः। अतः परिशेषाभावान्न क्रत्वर्थत्वम्। न चोभयार्थत्वम्। एकस्यैव विधेरंशे प्रयोजकत्वमंशे च प्रधानप्रयुक्तत्वादप्रयोजकतेति वैरूप्याच्च। अतः सक्तुवदिनियोगभङ्गमपि प्रकल्प्य धारणस्यार्थकर्मतैव युक्ता।

न च तस्यापि वैदिकक्रियात्वसामान्यात्क्रत्वङ्गत्वं सादृश्येन क्रतूप-स्थितौ धर्मातिदेशस्यैवाङ्गत्वेऽपि बाधकाभावादिति वाच्यम्। विधिबलेनोपस्थितेषु नियमेन सर्वेप्सितेषु तद्गतनिरतिशयत्वस्यापि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्। आर्थवादिकफलस्य वाक्योपात्तत्वेन ततोऽपि शीघ्रोपस्थितिकत्वाच्च।

प्रसक्तेर्न क्रत्वर्थत्वम्। न चेयमेव श्रुतिस्तस्यामूलम्। स्मृतेर्दैवकर्ममात्रविषयत्वेन सामान्यरूपत्वात्। न च रजस्वलामात्रस्थापनये अपरोधवाक्यवैयर्थ्यम्। अपरोधवाक्यस्य पत्न्या यद्देव पत्युरधिकाराद्रजस्वलायाश्चानधिकारेण तां विना यागाकरणप्रसक्तौ दर्शपूर्णमासप्रकरणविध्यर्थत्वात्। अत एव तत्त्वमपरुध्येत्यनुवादः। अतस्थापप्रक्तत्वात् पुरुषार्थ एवायं निषेधः। श्रौतप्रायश्चित्तप्राप्त्यर्थ इति तु प्रकृते वक्तुमिति ध्येयम् ॥२॥६१॥

अप्रकरणे ॥ अनारभ्य, सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवतीति श्रुते, न तावत्क्रतुगतहिरण्योद्देशेन सुवर्णत्वविधिः। धारणप्राप्त्यभावेनानुवादानुपपत्तेः। नापि हिरण्यं हस्ते सम्प्रदाय षोडशिनस्तोत्रमुपाकरोतीति विहितक्रतुहिरण्यधारणानुवादेन सुवर्णत्वविधिः। विशिष्टोद्देशापत्तेः। अतो भार्यमिति कृत्प्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात्तदुद्देशेनैव धारणाख्यसंस्कारविधिः। हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादित्वम्। न चैवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः। सुवर्णस्वरूपे आनर्थक्याल्लौकिकक्रियासाधनीभूतग्रहणेऽपि तत्तादवस्थ्यात् सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या स्वर्गार्थवादिकफलकल्पनस्य चाश्रयाभावादनुपपत्तेः। परिशेषादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तेरिति प्राप्ते।

न तावत्प्रकरणात्क्रतुसम्बन्धोपपत्तिरनारभ्याधीतत्वात्। नापि चक्षुरादिपदस्यानित्यत्वात्। लोकेऽपि सुवर्णत्वेन व्यभिचारात्। न वा पारिशेष्यात्। श्रुतकर्मत्वान्यथाऽनुपपत्त्या सुवर्णस्यार्थवादिक-

धन्यायेन तदङ्गभावेऽप्यङ्गत्वोपपत्तेः । कृषिदेशेऽग्निचयनेन समानदेशसम्भवाच्च ।

नन्वतस्तु कृष्यादेर्दृष्टार्थतया विधेयत्वाभावेन प्रयोगविध्यभावाद्‌ङ्गप्रधानयोरेकदेशत्व एव प्रमाणाभावः । अस्तु वा तत्तथापि तस्य लिङ्गादिरूपप्रमाणत्वाभावेन वाक्यसंकोचकत्वानुपपत्तेर्लौकिकसाधारणमर्वकर्मार्थत्वमेव जयादीनामिति प्राप्ते ।

अग्निमद्वैदिककर्माङ्गे तस्य परमयुक्ताग्नितत्र्ययनोपजीवित्वं तदन्यकर्माङ्गे च तत्प्रयोजकत्वकल्पनमिति गौरवद्वैरूप्यादिभिया कामश्रुतीनामाहिताग्न्यादिमात्रविषयत्ववत्कृष्यादिविधिनैव स्वलाघवार्थमग्निमत्कर्मार्थत्वयैव जयादिविधानाच्चेतरकर्मार्थत्वम् ॥३॥६३॥

दोषात् ॥ अनारभ्य, प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान् निर्वपेदिति श्रुतम् ।

प्रतिपद्धमब्दोऽत्र दानपर इत्युत्तराधिकरणे वक्ष्यते । तत्र यत्किंचदायादादिभ्यो लौकिकं दानं तत्सम्बन्धिनीयमिष्टिः, किं वाऽश्वदानमात्रसम्बन्धिनी, किं वाऽग्निमत्कर्माङ्गभूताश्वदानसम्बन्धिनीति चिन्तायाम् । अर्थवादानुरोधेन दानविषयत्ववद्दृष्टदोषनिर्घातार्थत्वस्याप्यवगमाद्दोषस्य च न वेषरिणो दद्दातीत्यनेनाविहितलौकिकविषयत्वात्तदनुरोधेनास्यापि लौकिकदानविषयत्वम् । इद हि वचनं यथानियमेन सामान्यतो विहिते अश्वविषये

क्रत्वर्थत्वे तु स्वगतेन वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्रतोरुपस्थित्या तदङ्गत्वकल्पने गौरवम्। अत एव विश्वजिद्वाचि-स्रवाद्यौ न तत्कल्पनम्।

प्रकृते तु विशिष्टधारणस्यार्थवादिकमेव फलमिति पुरुषार्थता। तच्चं सुवर्णस्य कर्मत्वमेव। तस्यैव त्वार्थवादिकफलम्। तेनेति पदाध्याहारस्य स्तुतिपक्षेऽपि समानत्वात्। न चाचाश्रयापेक्षाविधि-वैयर्थ्यं, तस्य संस्कारविधिनैव परिहारात्। दुर्वर्णोऽस्य भ्रातृव्यो-भवतीत्यत्र भविष्यदर्थकत्वमात्रलक्षणा तु पूर्वपक्षिणोऽप्यविशिष्टा। स्तुतिलक्षणा सुवर्णपदे अपूर्वसाधनत्वलक्षणा च तत्राधिकेति ममैव लाघवमिति॥३॥६२॥

शेषोऽप्रकरणे॥ अनारभ्यैवाधीतं, येन कर्मणेर्त्सेत् तत्र जयां जुहुयादिति। कर्मणा ऋद्धिं स्वफलाधिक्यं प्राप्नुमित्यर्थः। अतस्य यथावस्थितफलार्थं विनैव जयादीन् कर्माणि। कर्मभ्यः फलाधिक्ये-च्छायान्तु जयादयः कर्माङ्गम्।

तत्र च कर्मत्वस्य क्रतुव्यभिचरितत्वाच्च तावज्जुह्वादिवत्तदुप-स्थितिः। न च लौकिकस्य कर्मणः कृतिभोजनादेर्दृष्टार्थत्वेना-दृष्टार्थजयादिग्राहकत्वायोगः। रोहिण्यां कृषिकर्माणि कारयेत्, पुरस्तात्कृषिकर्मणां प्राच्यां चैत्रमर्यादायां द्यावापृथिवीयं बलिं हरेदित्यादिवदत्रापि निर्विघ्नसमाप्त्यर्थत्वेन फलोपचयार्थत्वेन वा ग्रहणोपपत्तेः। न च तथापि जयादेराहवनीयसाध्यत्वात्तस्यादौ तदभावादनङ्गत्वम्। जयादेरेव होमत्वेनाहवनीयप्रणयनप्रयोजक-त्वोपपत्तेः। न च प्रधानस्य देशासम्भवादनङ्गत्वम्। अङ्गगुणविरो-

द्वितीयस्तु तदर्थवादे जलोदरापरपर्य्यायो वरुणग्रहाख्यो दोषः । स नैव प्रत्यक्षादिना वैद्यकसंहिताभिर्वाऽश्वदानजन्यतयाऽवगम्यते । अथ मुख्यार्थबाधेऽपि पापमेव वृणोतीति व्युत्पत्त्याऽवयवयोगेन वरुणग्रहशब्देनोच्येत, ततो वैदिके दानेऽपि कथञ्चित् त्यागाद् दुःख-दर्शनात्तदेव वरुणग्रहशब्देनोच्यताम् । इत्याडम्बरविनोदेन च दुःखगमनात् एवं नैमित्तिकस्याप्युपपत्तेरदृष्टदोषनिर्घातार्थत्वे प्रमाणा-भावाल्लौकिकमात्रविषयत्वानुपपत्तेर्वाक्यसंकोचायोगेन सर्वविषयत्वम् । न च गृह्णीयादिति लिङा विहितत्वेनोक्तत्वाद्विहितस्योपस्थितिः । उद्देश्यस्य विहितत्वेन विशेषणायोगात् । अतः सर्वविषयत्वमिति प्राप्ते ।

जयादिन्यायेनैव लौकिके फलकल्पना वैदिके नेत्येव विहिते-ऽप्यसिरहिते तत्प्रणयनादिप्रयोजकत्वमितरथा नेत्येवञ्च वैरूप्यापत्ते-र्विधिलाघवानुरोधेनैव स्वसंकोचकामश्रुतिवदेवानुमन्यते । अत-श्चाग्निमत्कर्मसम्बन्ध्यश्वदानमेवोद्देश्यम् । तदपि च न शेषितया । प्रवर्ग्यन्यायेनाश्वदानगतप्रयोजनवत्त्वजिज्ञासायामश्वस्योपस्थितक्रतोरेव शेषित्वकल्पनौचित्यात् । अतश्चोपसद्वदेव नाश्वदानहेतुत्वं शेषितया अपि तु निमित्ततयैव । अस्तु वा तत्तथापि अग्निमत्कर्मसम्बन्ध्यश्व-दान एवेयमिष्टिः ॥१॥६४॥

अचोदितं च ॥ सेयमिष्टिर्न प्रतिग्रहीतुरपि तु दातुरेव । उप-क्रमस्थार्थवादे प्रजापतेर्दातुरेव प्रधानभूतस्य स इत्यनेन परामर्शात् । प्रजापतिरेव वरुणायाश्वं दत्वा स्वां देवतां सम्प्रदानरूपां वरुणं जलो-दररूपेण मार्च्छत इत्यर्थावगमात्तस्यैव तन्निर्मोकार्थमिष्टिकर्त्तृत्वाव-

दन्यथा प्रवृत्तिर्यंन वा नैव विहित तथा मित्रदायादादिभ्यस्तद्विषयम् ।

अत एव यत्र विश्वजिदादौ सर्वस्वदानेऽश्वदानं नियतं तत्र तत्प्रकरणस्थेन वाक्यान्तरेणैव तस्य पर्युदासेऽप्यस्य शाखान्तरीयवचनस्योक्तविषयनिषेधत्वमेव । अतस्तत्र निषेधबलेन दोषावगतेस्तद्विघातार्थाया दृष्टेरपि तद्विषयत्वम् । भेदनहोमस्येव भेदनवद्दर्शपूर्णमासविषयत्वम् । अत एव दोषनिर्घातः फलं, अश्वदानं च निमित्तं न तु शेषि । तथात्वे उक्तफलत्वानुपपत्तेः । अव्यभिचरितक्रतुसम्बन्धाभावाच्च । यदि त्वस्माद्दोषनिर्घातार्थत्वं नाभ्युपगम्यते, ततो यावच्छब्दसमभिव्याहारेणाश्वदानस्योद्देश्यत्वावगतेस्तावच्छब्दसमभिव्याहृतायाः प्राप्तेष्टेस्तदङ्गत्वापातान्निमित्तत्वानुपपत्तिः । न हि यावच्छब्दो निमित्तवाची ।

न च यावत्तावच्छब्दाभ्यां क्रियाद्वयसम्बन्धमात्रावगतौ शेषित्वपक्षे आरादुपकारकत्वेन तत्र त्वापत्तेस्तावच्छब्दस्य प्राप्त्यभावेन विधेयत्वप्रसङ्गान्निमित्तत्वपक्षे च प्रतिनिमित्तं नैमित्तिकावृत्तिरिति न्यायेनैव तावच्छब्दार्थस्य प्राप्तत्वेनाविधेयत्वाद्विधिलाघवेन निमित्तत्वावगतिः सिद्धान्ते सुलभेति वाच्यम् । पक्षद्वयेऽपि निमित्तानुरोधेन आवृत्तिप्रसक्तौ कालसैक्ये तन्त्रत्वप्राप्तेस्तावच्छब्दस्य प्रतिप्रसवविधित्वावश्यम्भावात् । अत एव प्रत्नीयादिति लिङः प्रयोजकत्वापरपर्यायहेतुत्वार्थकत्वेऽपि शेषित्वेऽपि तदुपपत्तेर्निमित्तत्वनिश्चयो दुर्लभः । प्रत्युतापेक्षितत्वाच्छेषित्वमेव सिद्धान्ते स्यात् । मम तु दोषनिर्घातार्थत्वात्तद्विषय इति वैषम्यम् । अतस्तद्वशेन लौकिक-एवाश्वदाने आहिताग्नि स्यादिति प्रथमः ।

क्रतुवैगुण्यस्यैवोपादानात्तन्निर्घातार्थत्वमेवास्या इष्टेर्युक्तम्। जायते च मामेका वाक् नाभिमतिगादत्यादिमन्त्रवर्णात्तस्यागुजरणान्तस्यैव भचणस्य शेषप्रतिपत्त्यर्थत्वावगतेर्वमने क्रतुवैगुण्यम्। अतस्त्वाश्वदानवद्वमनस्य वैधत्वाभावेऽपि इष्टेरग्निमत्क्रतुविशेषाङ्गत्वमविरुद्धम्॥ ३॥६६॥

तत्सर्वंच॥ सैव किं याजमान एव वमने स्यादुतार्त्विज्येऽपीति चिन्तायाम्। ऋत्विग्वमनेऽपि प्रतिपत्तिविलोपादिना वैगुण्यस्यावश्यकत्वात्तत्समाधानार्थमियमिष्टिः स्यादेवेति प्राप्ते।

इष्टिस्तावदियं क्रत्वङ्गत्वाद्यजमानेन कार्या। ऋत्विग्भिर्यजमानद्रव्यस्य त्यक्तुमशक्यत्वात्। स्वद्रव्येण स्वाग्निषु करणे पुनः क्रत्वर्थत्वानुपपत्तेः। यजमानकर्तृकायाश्च न ऋत्विग्वमनस्य निमित्तता, य सोम वमितीति यच्छब्दवलेनेष्टेर्वमनसमानकर्तृकत्वावगतेः। तस्य चोपादेयविशेषणत्वेन विवक्षितत्वात्। अतश्च समानकर्तृकत्वबलाद्यपीयमिष्टिर्नैमित्तिकी क्रतूपकारिका, यदि वा नैमित्तिकीवार्थवादवशात्क्रतुवैगुण्यसमाधानार्था सती आरादुपकारिका, यदि वा वमनस्य जुम्भावदेवार्थिकं निमित्तत्वमङ्गीकृत्य तद्वदेवेयमिष्टिः पश्चात् क्रतुयुक्तपुरुषसंस्कारिका, सर्वथा यजमानवमन एव स्यात् ऋत्विग्वमने तु सामान्यविहितं यजुर्भेषनिमित्तम्॥३॥६७॥

सर्वप्रदानम्॥ शेषभूतसोमवमनप्रसङ्गात्किमाग्नेयादौ कृत्स्नस्य पुरोडाशादेर्यागसाधनता होमश्चोत द्रवदानादेरेव तत्पुरोडाशादिस्थ तन्नक्रतिरत कृत्स्नं पुरोडाशादि यागसाधनं होमस्तु तद्द्रवदानस्यैवेति चिन्तायाम्। उत्पत्तिवाक्ये कृत्स्नस्यैव साधनत्वप्रतीतेर्न

गतेरस्यैन्द्रादिवद्देवोपमंहारस्यप्रतिपत्तीयपदस्य दातृलक्षणार्थत्वात्। अथवाऽऽख्यातेन याचकप्रयोजकमाधारत्वेन कर्तृमात्राक्षेपात्प्रायास-भावे प्रयोजककर्तृतापेक्षेऽपि दृष्टोपक्रमानुरोधेन तदाक्षेपात्प्रतिग्रहं यः कारयेदित्यर्थावगतेर्विनैव लक्षणां दातुरिष्टिः।

न चैवं तेन गतार्थत्वम्। मैत्रायणीयशाखायां स एषोऽश्वः प्रतिगृह्यत इत्येवं प्रतिग्रहोपक्रमाया एवास्या आम्नानात्तद्दर्शनेनोप-क्रमस्येऽप्यर्थवाद एव लक्षणेत्यधिकाशङ्कायाः सत्त्वात्। तन्निवृत्तिस्तु शाखान्तरे प्रतिग्रहीतुरिष्ट्यवगतेऽप्यस्यां शाखायां प्रबलोपक्रमे प्रमाणाभावेन लक्षणानुपपत्तेरेतद्वचनेन दातुरिष्टौ बाधकाभावात् दूरस्थकर्मानुवादेन उद्देश्यसम्बन्धानुपपत्तेरस्य कर्मान्तरविधायकत्वाच्च नामादीनामुपस्थापकानामभावेन शाखान्तरन्यायाभावाच्च। दात्रुप-क्रमानुरोधेन मैत्रायणीयशाखास्थोपक्रमस्यापि प्रयोजककर्तृत्वाभि-प्रायेण व्याख्यातुं शक्यत्वाच्च ॥२॥६५॥

पानव्यापच्च॥ अनारभ्यैव, वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वमिति तस्मात्सोमेन्द्रं चरुं निर्वपेत्सोमवामिन इति श्रुतेरिष्टिरपि वैदिकस्यैव सोमस्य वमने न तु लौकिकस्य। वैरूप्य-गौरवादिभयेन जयादिहोमवद्देवोभयार्थत्वस्य तावदनुपपत्तेः। न चास्यप्रतिपद्येष्टिवद्दोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्व-शङ्का। वमनजन्यस्यार्थवादिकस्येन्द्रियवीर्यनाशाख्यव्यृद्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि जायमानत्वात्। तन्निर्घातार्थत्वस्य प्रत्यक्ष-बाधितत्वाच्च। वैद्यके वमनार्थतयैव सोमपानविधानात् तस्येन्द्रि-यादिनाशकत्वानुपपत्तेश्च। अत इन्द्रियवीर्यव्यृद्धिपदेन लक्षणया

अस्तु वा शेषकार्यानुरोधादस्य कस्यचित् प्रकृतस्यैकस्य हविषः शेषस्थापनं, इतरेषां तु सर्वहोम एव। तदा च तद्विषयमेव मध्यपूर्वार्धवाक्यमिति प्राप्ते।

न चतुरवत्तवाक्येनावदानविधिः, द्विर्हविषोऽवद्यतीत्यनेनैव प्राप्तेः। अनेनैव विधानेऽपि वा निष्ठाप्रत्ययोपादानवैयर्थ्यप्रसङ्गेनावदानसंस्कृतस्यैव द्रव्यस्य विधेयत्वाच्च। अतश्च यागानुवादेनावत्तस्यैव हविष्ट्वेन विधेयत्वादुत्पत्तिवाक्येऽष्टाकपालपदं पशुसोमवत् प्रकृतिद्रव्यविधायकम्। अतश्चावत्तस्यैव यागसाधनत्वादवशिष्टस्यानुनिष्पन्नप्रतिपत्तिशेषकार्याणीति भाष्यकारः॥

वार्त्तिककारस्तु। न यागहोमयोरभेदः। याज्ञिकानां देवतोद्देशपूर्वकद्रव्यत्यागे प्रक्षेपाङ्गके यजिपदप्रयोगाद्देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिप्रयोगात् प्रक्षेपाङ्गकक्रियाद्वयवृत्ति जातिर्यागत्वं, क्रियात्रयवृत्तिजातिश्च होमत्वमिति तयोर्भेदात्। अत एव न यजिनाऽङ्गभूतोऽपि प्रक्षेपः शक्योच्यते, अपि तु प्रमाणान्तरलभ्य एव। तद्द्वाग्नेयादिवाक्ये यागमात्रानुमानेऽपि अङ्गभूतस्य प्रक्षेपस्याप्राप्तत्वाच्चतुरवत्तवाक्येनैवावत्तोद्देशेन तद्विधानम्। अतएव तत्र द्वितीयाऽप्युपपद्यते। यागे त्वष्टाकपालः कृत्स्न एव हविः। प्रक्षेपस्तु त्यागसमानकालीनस्तदुत्तरकालीनो वा द्रव्यदानस्य प्रतिपत्तिः। अतएवात्यजुहोतिनोद्देशत्यागयोरुत्पत्तिवाक्यादेव प्राप्तेर्लक्षणया प्रक्षेप एव प्रतिपाद्यते। एवं च यत्र प्रकृतौ विकृतौ वा प्रत्यक्षवचनेनातिदेशेन वा प्रक्षेपप्राप्तिस्तत्र सावेव प्रक्षेपस्य। अन्यत्र तु प्रयाजादौ प्रमाणान्तराभावादत्र न प्राप्तिस्तत्र यजिनैवाक्षेपः। तदङ्ग एव

तावद्ध्रुवदानस्यैव यागसाधनत्वम्। न हि चतुरवत्तं जुहोतीत्येतदुत्पत्तिवाक्यम्। तथात्वे आग्नेयादिवाक्ये द्रव्यदेवताद्यनेकगुणविधाने वाक्यभेदापत्तेः। अतश्चोत्पन्नशिष्टत्वेन पुरोडाशावरुद्धे यागे चतुरवत्तविधानानुपपत्तेः चतुरवत्तवाक्ये जुहोतिना यागमनूद्यावदानाख्यसंस्कार एव निर्मन्थ्येनेष्टकाः पचन्तीतिवद्विधीयते। न हि यागाद्धोमोभिद्यते, येन जुहोतिना नानुवाद इत्याशङ्क्येत। जुहोतिचोदितानामपि, स एष यज्ञः पञ्चविध इत्यादौ यजिनाऽनुवादात्। यजतिचोदितानाञ्च प्रयाजादीनामभिक्राम जुहोतीति जुहोतिनाऽनुवादाच्च। यागहोमयोर्भेदे प्रयाजानूयाजव्हर्मेधीययागादौ प्रक्षेपे प्रमाणाभावाच्च। अतो यागहोमयोरभेदाद्युक्तो जुहोतिना यागमनूद्य प्रदेयपुरोडाशसंस्कारकतयाऽवदानविधिः। अतश्च कृत्स्नस्यैव पुरोडाशस्यावदानेन संस्कार्यत्वात् पुनः पुनरवदाय याग इति ज्योतिष्टोमवद्यागाभ्यासेऽपि न दोषः।

वस्तुतस्तु। सर्वं पुरोडाशं पुनः पुनरवदाय सकृदेव इदयादिवद्याग इत्यपि शक्यं वक्तुम्। शेषकार्याणि स्विष्टकृदादीनि तु प्रकृते विद्यमानशेषाभावाद्धविरन्तराक्षेपकाणि। तद्वाक्यस्थशेषशब्दस्तु अवशिष्टवचनत्वासम्भवाद्राज्येन शेषं सम्पादयतीति वदन्यपरः। दृष्टश्च शेषशब्दोऽन्यत्रापि ततः शेषेण विशिष्टदेशजात्यादिमतोजन्म प्रतिपद्यत इति गौतमस्मृतौ स्वर्गारम्भकसुकृतातिरिक्तसुकृतपरः। न हि स्वर्गारम्भकसुकृतशेषेण देहान्तरप्राप्तिरन्यथान्यस्य व्यापारायोगात्। अतस्तत्र शेषशब्दोऽन्यवाच्येवेति प्रकृतेऽपि हविरन्तरमेव पूर्वसदृशं शेषशब्दवाच्यं भविष्यति।

एकस्माच्चेत् ॥ परप्रयुक्तद्रव्योपजीविनोऽर्थकर्मणश्च तुषोपवापादे-
रनेकपुरोडाशीयकपालानां मध्ये एकस्मिन् कपाले स्मरणमाणे अनि
यमप्राप्तौ आग्नेयस्य मुख्यत्वेन प्रथमोपस्थितत्वात् तदतिक्रमकारणा-
भावेन तदीयकपालस्यैव ग्रहणम्। ग्राह्यतावच्छेदकञ्च प्रथमोप-
स्थितत्वं न त्वाग्नेयत्वम्। अतो विकृतावन्यविकारस्य तत्त्वेन तदीय-
मेव कपालं ग्राह्यम्।

यत्तत्र मूले मन्त्रतिलोभेन कृत्वाचिन्तया यदा शेषकार्यानुरोधेन
यस्य कस्यचित् स्थापनं तदा कस्येत्यपेक्षायां मुख्यस्येति सिद्धा-
न्तितम्। तदाग्नेयवेलायां शेषकार्याणामबुद्धिस्थत्वाच्छेषस्थापना-
पेक्षानुपपत्तेः शेषकार्यानुष्ठानवेलायां चान्त्यस्यैव स्थापनोपपत्तेरुपे-
क्षितम्। तत्रत्यमुख्यपदं वा प्रथमोपस्थितपरम्। ततश्च यस्यैव यत्र
प्रथमोपस्थितिराद्यस्यान्त्यस्य वा, तस्यैव तत्र ग्रहणमिति न्याय-
शरीरार्थः ॥३॥७०॥

भक्षाश्रवणात् ॥ आग्नेयस्य पुरोडाशस्य चतुर्धा कृतस्येदं ब्रह्मणः
इदं होतुरित्यादिमन्त्रवर्णकल्पितो विभागरूपो व्यादेशः श्रुतः।
स किं दक्षिणारूपतया परिक्रयार्थः सन् ऋत्विक्संस्कारार्थः, उत
भक्षणरूपतया प्रतिपत्त्यर्थः सन् शेषसंस्कारार्थ इति चिन्तायाम्।
भक्षणस्याश्रवणाद् ब्रह्मण इत्यादिषष्ठीश्रुत्या च वासिष्ठादिवद्ब्रह्मादीनां
स्वामित्वावगमात् तस्य च दानमन्तरेणानुपपत्तेस्तस्य च त्यक्तेऽपि
पुरोडाशे श्विष्टकृद्वदेव स्वीकारकल्पकत्वोपपत्तेः सोमचमसवदृत्विक्-
संस्कारार्थं दक्षिणादानविधिरेवात्र कल्प्यते। अत एव एषा वै दर्श-
पूर्णमासयोर्दक्षिणेत्यपि लिङ्गमुपपद्यते। अतः परिक्रयार्थ इति प्राप्ते।

शक्तिग्रहात्। पात्नीवतादौ तु देवतासम्बन्धेनोद्देशत्यागयोरेव कथनात् पर्यग्निकरणान्तमरौति विधानेन च प्रक्षेपानतिदेशात् न प्रक्षेपः। स्विष्टकृदिष्टादौ तु आज्यभागवत् पुनःश्रवणाद्वा तत्करणमिति विशेषः। अतश्च कृत्स्नस्यैव पुरोडाशस्य देवतायै त्यागादुपयुक्तस्य च ध्रुवद्रानस्य प्रक्षेपणमिति प्रतिपत्तिः। उत्तरार्धादिग्य स्विष्टकृदादिना। न च त्यक्तस्य स्विष्टकृते पुनस्त्यागासुपपत्तिः। वचनवशेन त्यक्तस्यापि पुनः स्वीकारेण त्यागोपपत्तेः। अतोऽस्ति शेष इति सिद्धम् ॥३॥६८॥

अप्रयोजकत्वात्॥ अत्र भाष्यकारेण शेषकार्याणामर्थकर्मत्वादेकस्मादेव हविषः शेषकार्याणि कर्त्तव्यानीति पूर्वपक्षयित्वा प्रतिपत्तित्वं प्रसाध्य सर्वेभ्य इति सिद्धान्तितम्। तत्रतुर्थं एतादृशविषये प्रतिपत्तित्वस्य साधयिष्यमाणत्वात् पुनरुक्तत्वापत्तेः पूर्वाधिकरणप्रयोजनकथनार्थान्येतानि सूत्राणीति वार्त्तिककारो व्याचख्यौ।

यदि पूर्वाधिकरणे शेषकार्याणां हविरन्तराक्षेपकत्वं पूर्वपक्षे, तदा स्पष्टमेव प्रयोजनम्। यदा तु शेषकार्यानुरोधेन शेषस्थापनं, तदा तेषां परप्रयुक्तद्रव्योपजीवित्वेनाप्रयोजकत्वेऽप्यर्थकर्मत्वेन तुषोपवापकपालवच्छेषस्य गुणभूतत्वात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादुपादेयविशेषणत्वेन तद्गतसङ्ख्याया विवक्षितत्वादेकस्मादेव करणं शेषकार्याणाम्। सकृदुपकृदिति चौथाश्रवण तु चतुर्थे चतुर्थस्य-हीनस्येतिवत्प्रयोगान्तरविषयम्। सिद्धान्ते तु विद्यमानशेषत्वाख्यचातुर्थिकन्यायेन प्रतिपत्तिकर्मत्वादविवक्षितसङ्ख्यो पात्यसंस्कार्थानुरोधेन सर्वेभ्यः करणम्। चौथा चोपपद्यतरा॥ ३॥६८॥

## अथ पञ्चमः पादः।



आज्याच्च ॥ उपांशुयाजप्रयाजाज्यभागानूयाजादिद्रव्याणां जौहवादीनां स्विष्टकृदिडादीनि शेषकार्याणि कर्त्तव्यान्युत नेति चिन्तायाम्। उत्तरार्धात् सकृत्सकृत्समवद्यति सर्वेभ्यो हविर्भ्यः समवद्यतीत्यादिवचनेभ्यो वेदा हवींष्यासादयतीतिवदप्रधानसाधारणहविर्थत्वप्रतीते कर्त्तव्यानीति प्राप्ते।

यत्तावदेषां तत्तद्यागेषु असाधारणे प्रयाजानूयाजेषु जौहवाद्येकदेशरूपे आज्यभागोपांशुयाजेषु च वाचनिकध्रौवोपादानं चतुर्गृहीतं, तस्य तत्तद्यज्याक्षिप्तप्रक्षेपरूपविनियोगप्रतिपत्तिमत्त्वात् चतुर्गृहीतं जुहोतीति भाष्यकारदृष्टोपांशुयाजावान्तरप्रकरणस्थवाक्यादेव तत्सत्त्वाद्वा न सामान्यविहितविद्यमानशेषोपजीविस्विष्टकृदादिप्रतिपत्तिग्राहकता। अत एव यत्र प्रयाजशेषाभिघारणादौ विशिष्यैव तद्विधानं, तत्रागत्याऽवयवशस्तयोः समुच्चयः। न चैवमाग्नेयस्यापि विशिष्य चतुर्धाकरणभक्षणरूपप्रतिपत्तिविधानात् स्विष्टकृदाद्यकरणापत्तिः। तत्र भक्षणस्य कल्प्यत्वेन तस्यापि विलम्बोपस्थितिकत्वेन तुल्यत्वात्। नापि तत्तदुपादानभूतात् ध्रौवात् स्थाल्याज्याद्वा तत्करणं, तयोः सर्वस्मै वा एतदित्यादिवाक्याद् यज्ञादिरूपकरिष्यमाणकर्मार्थत्वस्याप्यवश्यम्भावेनाकीर्णकरत्वाभावात्। न चाकीर्णकरत्वाभावेऽपि आज्ये तावन्मात्र एव प्रतिपत्तिः तत्रापि स्थाल्याज्यस्य पिष्टलेपफलीकरणादावुपयोगसत्त्वेऽपि वचनादेव पत्नी-

मकलस्यैव पुरोडाशस्याग्नये त्यक्तत्वादग्नीषो यजमानो न शक्नो-त्यन्यांस्तेन परिक्रेतुम् । अतएव मते पुनः स्वीकारो दानं आन-तिश्चेत्यनेककल्पना । स्विष्टकृति तु यागस्य श्रुतत्वात् स्वीकारकल्प-नेऽपि न दोषः । अतोवरभक्षणकर्तृत्वमेव सम्बन्धसामान्यवाचिषष्ठ्यर्थं परिकल्प्य शेषापेक्षितशेषप्रतिपत्तिरूपं भक्षणमेव ब्रह्मादिकर्तृकं मान्त्रवर्णिकविधिना विधीयते । अवश्यं चानतिरथनेन भक्षणोप-योगिन्येव जननीया, न तु गृहसुवर्णादिवत् क्रियान्तरोपयोगिनी, अयोग्यत्वात् । अतश्चावश्यकत्वाद्भक्षणस्यैव सम्बन्धघटकं कल्प्यते न क्रियान्तरं समर्पणादि गौरवात् । अतश्च ब्रह्मसम्बन्धि समर्पणस्यैव शेषप्रतिपत्तित्वेन तु गृहे नीत्वा स्वयं अन्यद्वारा वा भक्षणं सम्पाद-नीयमित्यपास्तम् । आवश्यकभक्षणस्यैव तत्कर्तृकस्य प्रतिपत्तित्वोप-पत्तौ क्रियान्तरकल्पने गौरवात् । दक्षिणाश्रुतिस्तु आनुषङ्गिका-नतिसाधनत्वादर्थवादः ॥३॥७१॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य चतुर्थः पादः ॥

प्राप्तदेवतासंस्कारार्थं पशुपुरोडाशे द्रव्यतया पयोग्रहाः सुराग्रहाश्च विधीयन्त इति द्वयमेव सूत्रभाष्यकाराभ्यां वक्ष्यते। तदत्र स्थानापत्त्या पुरोडाशाङ्गं स्विष्टकृदिडं कर्त्तव्यमेव। न च ग्रहशब्दस्य नामातिदेशकत्वाज्ज्योतिष्टोमिकशेषकार्यातिदेशशङ्का। ग्रहशब्दस्य प्रयणीयपदवन्नामातिदेशकत्वानुपपत्तेरिति प्राप्ते।

न तावदवशिष्टः शेषोऽस्ति। यथागृहीतान् ग्रहान् चलिजउपाददने उत्तरेऽग्नौ पयोग्रहान् जुहोति दक्षिणेऽग्नौ सुराग्रहानिति वचनेनानवदायैव होमावगमात्। न चोच्छिष्टरिष्टि न सर्वहुतं जुहोतीति वचनेन हुतशेषावगतेः शेषकार्यकरणम्। तस्य ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं यदि न विन्देत् वल्मीकवपायामवनयेत् ततोऽयवशिष्टं शतातृण्णायां विचारयन्ति इति विशिष्य प्रतिपत्त्यन्तरविधानेनातिदेशिकप्रतिपत्तिबाधात्। वल्मीकवपा वल्मीकछिद्रं, शतातृण्णा शतछिद्रा कुम्भी। इदञ्च सूत्रभाष्यकारमताभिप्रायेणोक्तम्। यदा तु वार्त्तिकरीत्या देवतासंस्कारार्थं यागान्तरमेव सुरापयोद्रव्यकं विधीयते, तदाऽप्यौषधद्रव्यकत्वपयोद्रव्यकत्वाभ्यां दार्शिकपौर्णमासिकविध्यन्तस्याष्टमे वक्ष्यमाणत्वेन स्विष्टकृदिडादिप्राप्तावपि पूर्ववत्तदभाव इति अधिकरणं व्याख्येयम् ॥ ३॥ ७ ४॥

द्रव्यैकत्वे ॥ सर्वपृष्ठायामिन्द्राय राथन्तरायेन्द्राय बार्हतायेन्द्राय वैरूपायेत्यादिषट्हविष्कारायां यद्यपि निरूप्य सहावघातपेषणे कृत्वा प्रकृतिवद्विभागे प्राप्ते तमकृत्वा वचनादेकमेव षट्चक्रमात्रं पुरोडाशं कृत्वा समन्तं पर्यवद्यतीति वचनेन समन्ततः पर्यवदाय प्रधानानि क्रियन्ते। अत्र समन्तत इत्येव कर्मभेदतात्पर्यग्राहकम्।

सयाजावयवशेषस्यैव प्रतिपत्त्युपपत्तावपि प्रकृते तादृशवचनाभावेन साधारणद्रव्यस्य प्रतिपत्त्ययोग्यत्वात् । न च सर्वकार्यान्ते क्रम बाधित्वाऽपि प्रयोगवचनवशेन तत्करणं, समिष्टयजुरादिविशिष्यप्रतिपत्त्यन्तरविधानेन तच्च तदप्राप्तेः । अत शेषाभावाच्च शेषकार्याणि । ३।७।१॥

साकं प्रस्थाय्ये ॥ दर्शपूर्णमासयोः, साकं प्रस्थाय्येन यजेत पशुकाम इत्यत्र सहत्व फलाय विधीयते । तस्य चाग्नेयेन प्रचर्याग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामेदिति वाक्येन सान्नाय्याङ्गभूतमभिक्रमणं आश्रयत्वेनोच्यते, कुम्भ्यौ निरूपकत्वेन, अन्यत् सर्वमनूद्यते । वाक्यभेदश्च न, निपातत्वादिविशिष्टभावनाविधानादित्युक्तं द्वितीये । तदत्र सान्नाय्याङ्गतया स्विष्टकृदादिशेषकार्याणि कर्त्तव्यानि न वेति चिन्तायां, अभिक्रमणे कुम्भीसाहित्येऽपि आहवनीयदेशङ्गत्वा चतुरवत्तमादायैव होमानुष्ठानाच्छेषसद्भावेन कर्त्तव्यानीति प्राप्ते ।

नात्रापूर्वमभिक्रमणमाश्रयः, भेदकप्रमाणाभावात् अपि तु सान्नाय्यप्रक्षेपाङ्गभूतमेव । तादृशाभिक्रमणकर्त्तुं कुम्भीसाहित्य च कर्मभिक्रमणकालीननयनसंस्कार्यत्व नान्यत् । नयनमपि च नेदमपूर्वं, अपि तु दृष्टार्थत्वाभाव स्रुग्यागानुवादाद्धोमप्रक्षेपाङ्गभूतस्रुग्नयनमेव । अतश्च कुम्भीकृतसंस्कार्यत्वान्यथानुपपत्त्याऽभिघवयुक्तपूतिकवत् स्रुककार्यप्रक्षेपार्थत्वावगत्या तत्स्थस्य हविषोऽपि ध्रुवदानवत्प्रक्षेपप्रतिपाद्यत्वावगतेः सर्वहोमात्सान्नाय्यस्य साकं प्रस्थाय्यप्रयोगे सान्नाय्यस्य शेषकार्याणि ॥३।७।२॥

सौत्रामण्याम् । सौत्रामणी नाम पशुयागः । तत्राग्निदेश-

वादिदेवतासम्बन्धाद्धविरिति सर्व एव मन्यते। तस्य चान्यं जुहो-
तीति वचनेनोन्योद्देशेन प्रक्षेपरूपप्रतिपत्तिविधिर्लिङ्गवदानवत्। तत्र
च यद्वैजुहोतीत्यादिना पात्रविधिरिति स्थितिः। अतश्च शेषत्वा-
न्नचरुणं प्रतिपत्तिः। तत्प्रमाणञ्च समाख्या वचनञ्च।

तत्र समाख्या तावदग्नेतु होतुश्चमसः प्र ब्रह्मण इत्यादिका वेदे,
याज्ञिकानां होमचमस इत्यादिका। अदनार्थस्य चमेर्धातोरधि-
करणवाचके औणादिके असप्रत्यये कृते चमसशब्दनिष्पत्तिः। सोम-
श्चम्यते अस्मिन्निति व्युत्पत्त्या सोमभक्षणसाधनत्वावगतेस्तत्समाख्या-
कल्पितश्रुत्या होत्रादिकर्तृकभक्षणस्य सोमप्रतिपत्त्यर्थत्वसिद्धिः।
यदि तौणादयोऽव्युत्पन्ना इति पक्षाश्रयणं, तदा चमसशब्दस्य
पात्रे रूढत्वे योग्यतयैव होत्रसोमादिसम्बन्धो भक्ष्यभक्षकत्वादिसम्ब-
न्धेनैवेति तथा भक्षणसिद्धिरविकला। अतश्च होतृब्रह्मोद्गातृयज-
मानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां स्वस्वचमसेषु
समाख्यया भक्ष। सदस्यपक्षे तस्यापि स्वचमसे। वचनं त्वग्रे निरू-
पयिष्यते॥२॥०६॥

उद्गातृ॥ तत्रैव, ग्नेतु होतुरित्यादिमन्त्रे औद्गात्रणामिति श्रुतम्।
तेन किं उद्गातैवैकस्तच्चमसभक्षणे विनियुज्यते उतोद्गातृप्रस्तोतृप्रति-
हर्त्तारस्त्रय इति चिन्तायाम्। प्रातिपदिकश्रुत्या उद्गातैव। न च
बहुवचनानुरोधेनास्य सर्वतोमुख्यादौ उत्कर्ष, प्रातिपदिकस्य वा
लिङ्गसमवायेन त्रितयपरत्वम्, योगेन चोत्कृष्टगानकारित्वेन त्रितय-
परत्व कल्प्यतामिति वाच्यम्। उद्गातृशब्दस्य प्रचुरप्रयोगेनोद्गीथा-
परपर्यायसामद्वितीयभागरूपोद्गानकर्त्तरि रूढत्वात् गुणभूतसङ्ख्यव-

अन्यथाऽऽग्नेये हविष्काय इतिवत्कर्मैकत्वे सकृदवदानापत्तेः। याज्या-भेदाद्वा कर्मभेदः। तत्र च स्विष्टकृदिडादि प्रधानभेदात् प्रत्येकं भवति।

न च द्रव्यैकत्वात् तन्त्रता, अवदानप्रदेशभेदेन तत्तदुत्तरार्धा-दीनां भेदात्। न च संस्कारवाक्यानां परस्परान्वये प्रमाणाभावे-नोत्तरार्धस्यावदानप्रदेशप्रतियोगिकत्वाभावात् प्रकरणेन हविःप्रति-योगिकत्वप्रतीतेस्तस्य च पुरोडाशैक्येन साधारणत्वात् द्रव्यैकत्वमिति वाच्यम्। तत्तद्देवतायै चतुर्मुष्टिपरिमितस्यैव निरुप्तस्य हविष्ट्वेन पुरोडाशस्य हविष्ट्वाभावात्। न च तथापि हविषः संसृष्टत्वेन साधारण्याद्यागकाले इन्द्राय राथन्तराय निरुप्तं यत्तत् तस्मै न ददातीति प्रत्येकं सद्भावेऽपि संसृष्टोत्तरार्धादेः अगृह्यमाणविशेषत्वात् तन्त्रत्वं शेषकार्याणामिति वाच्यम्। तथापि स प्रयाजानूयाजानीति-वत् हरिरैन्द्रवायवस्य भक्षयति दिग्धेतस्य वषट्करोतीत्यनेन प्रधान-भेदस्य शेषकार्यभेदे हेतुत्वावगमात्। तदन्यथानुपपत्तिकल्पित-प्रत्यासन्नत्वेन भेदोपपत्तिरिति प्राप्ते।

तेन सर्वं क्रियत इतिवद्विधौ सदा सततलक्षणापत्तेरपेक्षित-बुद्धिसाधनत्वात्सामान्याद्भक्तकत्वस्य च न्यायप्राप्तस्य तन्त्रसाधकत्वानुप-पत्तेः सकृदेव शेषकार्याणि। न प्रत्येकं तु लक्षणाभावाद्धेतु-विधित्वमिति ज्ञेयम्। ऐन्द्रवायवे तु वचनादेव भेदापत्तिरिति सिद्धम् ॥ ७ ॥ २५ ॥

सोमे। ज्योतिष्टोम उत्पत्तिशिष्टोऽपि सोमोऽभिषवादिसंस्कार-विधिबलाद्द्रव्यप्रकृतिः। इत एव तु पशुवपादिपाकशक्तिरैन्द्रवाय-

नियमः। उद्गायतीनामरविन्दलोचनमित्यादावन्यत्रापि प्रयोगात्। अत एव पङ्कजादिशब्दस्य मण्डूकादौ प्रयोगाभावेन योगरूढ़िकल्पनायामपि प्रकृते न तत्कल्पना। अपि तु अग्निशब्दवन्निरूढ़लक्षणैव। अतश्च तात्पर्यग्राहकमन्त्रे लाक्षणिकार्थग्रहणेऽपि प्रकृतेऽग्निमुपनिधाय स्तुवत इतिवन्मुख्यार्थसम्भवे लाक्षणिकार्थग्रहणायोगात् बहुवचनानुरोधाच्च निषद्योद्गातार इतिवत्प्रकृतापूर्वीयगानकर्तॄणामेव ग्रहणम्। न सुब्रह्मण्यस्य भाष्यकारोक्तस्यापि। गानकर्तृत्वाभावात्। मूलग्रन्थान्यथाकरणं तु युक्त्यनुरोधेन न दोष, सिद्धान्तेऽन्यथात्वाभावादिति ध्येयम् ॥३॥७७॥

यावत्ततः॥ अन्ते समाख्या प्रमाणमुक्ता। वचनमिदानीमभिधीयते। यथाचमसमन्वांसमर्पाश्चमसिनो भवयन्ति, अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्त इति श्रुतम्। तत्र लिप्साशब्देनोपक्रमस्थार्थवादानुरोधाल्लिप्सामात्रग्रहणे अदृष्टार्थत्वापत्तेश्च लक्षणया भक्षणमभिधीयते। तत्र हारियोजने वक्ष्यमाणविधया वषट्कारनिमित्तं होमाभिषवनिमित्तश्च यद्यपि प्राप्तं, तथापत्र विशिष्टोद्देशे वाक्यभेदापत्तेर्भक्षान्तरमेव सर्वकर्तृविशिष्टं विधीयते।

अथवा हारियोजनावान्तरप्रकरणे पाठात् तदीयभक्षानुवादेनैव पुरस्तादैन्द्रवायवस्य भक्षयति सर्वतः परिहारमाश्विनं भक्षयतीत्यादिवद्गुणमात्रं विधीयते। विशेषपुरस्कारेण कर्तृविधानाच्च नैककर्तृकरोधे कर्त्रन्तरविधानानुपपत्तिशङ्का। सर्वथा वाचनिकः कर्तृविशेषः। तदिह सर्वपदं किं चमसिमात्रपरं किं वा प्राकृतसर्वर्त्विक्परमिति चिन्तायाम्। सर्वशब्दस्य सर्वनामत्वादुपस्थितपरा-

नानुरोधेन लदुक्ताया अखिविधाया अपि अन्याय्यकल्पनायाः पाशाधिकरणन्यायेनानुपपत्तेः। न ह्युक्तपर्यायोग एव तदधिकरणविषयः, प्रकरणबाधापादकतद्योगे श्रुतिबाधापादकलक्षणाद्ययोगस्य सुतरान्तदधिकरणविषयत्वात्। अतो बहुवचनमेव व्यत्ययानुशासनादिरीत्या एकत्वलक्षणार्थं व्याख्येयम्। न चैकत्वलक्षणायां जहत्स्वार्थतापत्तेः प्रातिपदिक एवाजहत्स्वार्थता युक्तेति केषाञ्चिदुक्तं युक्तम्। मुख्यत्वप्राधान्याभ्यां प्रातिपदिके अधन्यष्टत्यङ्गीकारे विरक्ते जहत्स्वार्थतायाः फलमुखत्वेनादोषात्।

न च प्रतिहर्त्रादिकर्मण्यपि तत्प्रतिपादकवाक्येषु च औद्गात्रं कर्म काण्डश्चेति समाख्यानात् तत्कर्त्तर्यपि प्रतिहर्त्रादावुद्गातृशब्दस्य प्राञ्चेव प्रयोगोपपत्तेरनेकार्थकस्योद्गातृपदस्य बहुवचनानुरोधेन निषयोद्गातारः स्तुवत इत्यादिवक्तितत्रयपरत्वमविशेषाद्वा प्रस्तुतद्वाण्यचतुष्टयपरत्वं किं न स्यादिति वाच्यम्। अनेकशक्तिकल्पनाभियोद्गातृकर्त्तृवाचकस्यैवोद्गातृपदस्य लक्षणादिनाऽपि क्वाचित्कसर्वविषयप्रयोगोपपत्तेः। अत एव मुख्योद्गातुरेव कर्म मुख्यमौद्गात्रं तदेदंसंयोगात्त्वन्यत्रापि औद्गात्रशब्द उद्गातृशब्दस्य गौण इति द्रष्टव्यम्। अतः पाशाधिकरणन्यायेनोद्गातैवैकः पिबेदिति प्राप्ते।

नोद्गातृशब्दस्य ऋत्विग्विशेषे शक्तिः, कृतावयवयोगेनैवोत्कृष्टगानकर्तृमात्रवाचित्वेनोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात्। प्रचुरप्रयोगस्याध्वर्य्वीयेऽग्निपदवन्निरूढ़लक्षणयाऽप्युपपत्तेः। न चात्र रथकारादिशब्दवदवयवार्थं विहाय ऋत्विग्विशेषे प्रयोगः, येनातिरिक्ताऽपि शक्तिः कल्प्येत। न चोद्गायतिरप्यङ्गीयवाच्यैवेति

त्वात् । तथा हि सर्वत्रोद्देश्यविधेयभावस्थले उद्देश्ये विधेयान्वयात्पूर्वमुद्देश्यस्योद्देश्यत्वेन क्रियान्वयोऽवश्यं वक्तव्यः । अत एव,

यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।

इत्यपि सङ्गच्छते । प्राथम्यं तत्त्वेन प्रथमक्रियान्वयोऽन्यस्यातिप्रसक्तत्वात् । तदच यच भिन्नपदस्थले यागेन स्वर्गं भावयेदित्यादौ तत्तत्पदार्थोपस्थित्यनन्तरं स्वर्गस्योद्देश्यत्वेन यागस्य च विधेयत्वेन क्रियान्वये प्रथममवगते पश्चादेव विधेयस्य यागस्योद्देश्ये स्वर्गेऽन्वय इति स्थिति । तदचेहाप्येकपदस्थले भक्ते प्राथम्यान्वयात्पूर्वं भक्तस्य क्रियान्वयोऽभ्युपगन्तव्य । ततश्च क्रियान्वयात्पूर्वं भक्तप्राथम्ययोर्विशेष्यविशेषणभावानवगमादेकार्थीभावलक्षणसामर्थ्यभङ्गादपरिपूर्णसमासपदस्य पदान्तरेणाख्यातेनाप्यन्वयायोगः ।

यद्यपि चास्मन्मते वैयाकरणवद्विशिष्टार्थवाचकत्वं न सामर्थ्यं, तथापि क्रियान्वयात्पूर्वं विशिष्टार्थबोधकत्वमेव तदिति बोध्यम् । अत्र च क्रियाभिन्नं विधेयं बोध्यम् । क्रियात्मके विधेये तदन्वयात् पूर्वमुद्देश्यस्य तत्त्वेन क्रियान्वयस्य वक्तुमशक्यत्वात् । अत एव विविदिषन्ति यज्ञेनेत्यादौ विविदिषोद्देशेन यज्ञादिभावनाविधानेऽपि न क्षति । अतश्चैकप्रसरताभङ्गभिया भक्तान्तरमेव विधेयम् । अत एव लोहितोष्णीषा इत्यादावतिदेशात् पूर्वमेव लोहितोष्णीषविशिष्टाः कर्त्तार एव प्रचारोद्देशेन विधीयन्ते विशेषणमात्रविधिफलका इति तत्र तत्रैकप्रसरताभङ्गपरिहारप्रकारो वक्ष्यते । अतश्च प्रकृते एकप्रसरताभङ्गभिया प्राथम्यस्य पूर्वकर्मसन्निवेशाद्दुणादेव वषट्कर्तृप्राथम्योभयविशिष्टभक्षान्तरमेव विधीयते सोमचमसाकारार्थत्वेन । तत्र च

भक्षित्वावगतेश्चमसिनामेव पूर्वमुपस्थितत्वात् तेषामेव ग्रहणमिति प्राप्ते ।

चमसिशब्दस्यान्यचमसेषु एकैकचमसिनो भक्षणं न्याय्यं अत्र तु चमसिनामन्येषां च सर्वेषामेव तद्युक्तमित्येवं स्तुत्यवलम्बनत्वेनोपपत्तेर्न पुनः सर्वपदसङ्कोचत्वम् । अतश्च परमसर्षेण व्यवहारासम्भवादावश्यकेन प्रकरणादिनैव प्रकृतकर्मकरमात्रग्रहणोपपत्तौ पुनश्चमसिभिर्विशेषणे प्रमाणाभावः । न चैवं पत्न्या अपि भक्षापत्तिः सेवीवदेव, पुंलिङ्गेन तस्या ग्रहणानुपपत्तेः । चमसाध्वर्यूणान्तु याज्ञिकाचाराभावादेवा-ग्रहणमिति ध्येयम् । न हि ऋत्विज एव सर्वशब्देन ग्राह्या इत्यत्रा-न्यत् किञ्चित्प्रमाणमस्ति ॥२॥७८॥

वषट्काराच्च ॥ सोम एव, वषट्कर्तुः प्रथमभक्ष इति श्रुतम् । तत् किं भक्षान्तरवचनं किं वा समाख्यादिप्राप्तभक्षानुवादेन प्राथम्य-मात्रविधिरिति चिन्तायाम् । भक्षान्तरत्वे प्रमाणाभावात् प्राथम्य-मात्रविधिः । न च वषट्कर्तुरपि विधेयत्वे वाक्यभेदः । वषट्कारे निमित्ते भक्षोद्देशेन प्राथम्यविधानात् रथन्तरे निमित्ते ग्रहोद्देशे-नैन्द्रवायवाग्रत्वविधिवच्च विजातीयानेकोद्देशे वाक्यभेदाभावात् । अतश्च यत्र चमसे हारियोजने वा अध्वर्य्वादेरन्यस्य वषट्कर्तुश्च होमाभिषवाभ्यां समाख्यया लिङ्गवचनेन वा भक्षप्राप्तिस्तत्र वषट्कर्तुः प्रथमं भक्षः ततोऽन्यस्येति वचनार्थ इति प्राप्ते ।

प्रथमभक्ष इति समासरूपे एकस्मिन्पदे एकांशेनोद्देश्यत्वे एकां-शेन विधेयत्वे चाङ्गीक्रियमाणे एकप्रसरताभङ्गापत्तेः कर्मान्तर-मेवेदम् । न च तस्मिन्दूषकताबीजाभावः । सामर्थ्यभङ्गस्यैव तद्बीज-

समवायस्तत्रैकशेषप्रतिपत्त्यर्थत्वाद् भक्षणानां विकल्प । प्रयत्नशिष्टानामपि वषट्कारादिभक्षाणां सामान्यविहितत्वात् कल्पिकयाऽपि समाख्यया विशेषनिष्ठया प्रमेयबलाबलन्यायेन बाधाद्वत्तविषयत्वावगतेर्भिन्नविषयत्वे वा प्राप्ते श्रन्य भक्षयतीति वचनेन तत्स्तस्य शेषस्यैकभक्षणप्रतिपाद्यत्वासम्भवादेकेन भक्षणेन प्रतिपादितेऽपि शेषे श्रवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसम्भवात् प्राथम्यविधिश्च समुच्चय ।

नन्वेव कर्तृभेदेन केषाञ्चिद्भक्षाणा पृथगनुष्ठानेन समुच्चयोपपत्तावपि यत्रैकस्मिन्नेव कर्त्तरि कारणानेकत्व, तत्र प्रयोगविधावगतमाहित्यसम्पत्त्यर्थं तन्त्रत्वोपपत्तेर्न पृथगनुष्ठानेन समुच्चय । वस्तुतस्तु समाख्याया अच्छावाकयजमानसदस्यचमसेषु कारणान्तरेणैतत्कर्तृकभक्षस्याप्राप्तत्वात् तद्विधायकश्रुतिकल्पकत्वेऽपि होत्रकचमसेषु वषट्कर्तृत्वेन तेषा तत्र भक्षस्य प्राप्तत्वात् कृप्तप्रवृत्तिनिमित्ततया न विधिकल्पकत्वावकाश । एव हारियोजनेऽपि । येषा कारणान्तरेण न भक्षप्राप्तिस्तत्राप्तिफलक एव सर्वत्र विधिरिति न तत्रापि कारणद्वयस्यैकस्मिन् कर्त्तरि समवाय इति चेत् ।

मैत्रावरुणादिहोत्रकचमसेषु वषट्कारात्तेषामिव होतुरपि वषट्कर्तृत्वाद्धोतृचमससाधारण्येन चाध्वर्योरपि होमाभिषवकर्तृत्वाद्ग्रावादीनामपि तद्भक्षणप्राप्तेर्विशिष्य तत्तत्समय इत्येवविधसमाख्यायाश्चत्तत्कर्तृकभक्षणान्तरविधिमन्तरेणानुपपत्ते । अत एव तन्त्रानुष्ठाने विधिफलाभावेन न तन्त्रत्वमपि । न चैवमप्येकस्मिन्नेव कस्मिंश्चिद्दृशाचे समाख्यानिमित्तभक्षकरणमात्रेण समाख्योपपत्तौ न समम-

यागार्थत्वेन वषट्कारस्य सृष्टत्वात् कर्त्तुरुपलक्षणत्वेनार्थान्निमित्तत्वाव-गतेर्वषट्कारनिमित्तकमिदं भक्षणं ग्रहेषु चमसेषु चाविशेषात् सिद्धं भवति ॥३।७९॥

होमाभिषवाभ्यां च ॥ इदमपरं भक्षस्य निमित्तम्। हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीत्यत्र हविर्धानादीनां सर्वेषां गुणानां विध्यन्तरादेवापि प्राप्तत्वात् केवलं होमाभिषवसमानकर्तृकत्वं भक्षमात्रे अप्राप्तं विधेयम्। यद्यपि हारियोजनादौ होमाभिषवसमानकर्त्तुरपि भक्षणं प्राप्तं, तथाप्यत्र-त्यानुवादे वाक्यवैयर्थ्यापत्तेस्तस्य विधेयता। सा च न पूर्वविहित-भक्षेषु। सर्वत्रोत्पत्तिशिष्टविशेषविहितकर्त्रन्तरावरोधात्। अतश्च होमाभिषवसमानकर्तृकं भक्षान्तरमेवेह विधीयते। कर्तृरूपगुणा-नुरोधेन वाऽवेष्टिवदपूर्वभक्षस्यैव प्रयोगभेदमात्रम्। न चोत्पत्तौ नियामकाभावः। प्राथम्यस्यैवोत्पत्त्यन्वयिनो वषट्कारवाक्ये नियाम-कत्वात्। प्राथम्यस्यापि प्रयोगान्वये तु कर्मान्तरमेवेति ध्येयम्।

अत्र च होमे अभिषवसमानकर्तृकत्वस्याध्वर्यवसमाख्याबलादेव प्राप्तेः प्रधानान्वयस्याभ्यर्हितत्वाच्च भक्ष एवाभिषवसमानकर्तृकत्वं होमसमानकर्तृत्ववद्विधीयते। होमाभिषवयोश्च सृष्टफलत्वाद्वषट्कार-वदेवार्थान्निमित्तत्वम्। तयोश्च समुच्चितयोर्निमित्ततेति पश्चाद् वक्ष्यते। अतश्च यो यदभ्यासे होमाभिषवकर्त्ता अध्वर्युः प्रतिप्रस्थाताऽन्यो वा ग्रहे चमसे वा स तेन भक्षयेत् ॥३।८०॥

प्रत्यक्षोपदेशात् ॥ अथ यथैकस्मिन्पात्रे अनेकेषां भक्षकर्तृत्वेनानेक-स्मिन्कर्मणि वा अनेकेषां वषट्कारहोमाभिषवसमाख्यादिकारणानां

द्यानमात्रं न क्रमाभिव्यञ्जकं किञ्चित्। तत्त्वे तु पूर्वोक्तक्रम इति ध्येयम् ॥३॥८१॥

वचनात् ॥ इदं च भक्षणं, मातृपङ्क्तेन सोमः पातव्य इति वचनादनुज्ञयैव। तदपि न लौकिकेन शब्देन, अपि तु आबालवगाडुपहूत उपह्वयस्वेत्यनेनैव मन्त्रेण। तत्रापि लिङ्गेन वाक्यं बाधित्वा विभज्यैवैकोऽनुज्ञापने अपरश्चानुज्ञायाम्। निषेधबलाच्चानुज्ञापनानुज्ञयोर्विधिकल्पना। मन्त्रबलाच्च। तत्राप्यर्थक्रमेण पाठं बाधित्वा उपह्वयस्वेति प्रथममनुज्ञाग्रहणे उपहूत इति पश्चादनुज्ञादाने विनियोक्तव्यम् ॥३॥८२॥

तदेकपात्राणाम् ॥ सेयमनुज्ञा यद्येकस्मिन् पात्रे भक्षप्रसक्तिस्तत्रैव ग्राह्या। दृष्टार्थतालाभात्। भागाधिकारादिप्रसङ्गनिमित्तकलहप्रसङ्गनिवृत्त्यर्थत्वात्। उपायान्तरेणापि तु तन्निवृत्तावस्य नियमविधित्वात्। अन्यस्यानुज्ञाने तु अदृष्टार्थत्वमपूर्वविधित्वञ्च दोष। अत एव यत्रैकस्मिन् पात्रे एक एव भक्षयिता तत्र नैवानुज्ञाग्रहणम्। एवं अन्तिमस्यापि भक्षयितुर्नानुज्ञाग्रहण, प्रयोजनाभावात्। याज्ञिकास्त्वाचरन्ति ॥३॥८४॥

याज्यापनयेन ॥ ज्योतिष्टोमे ऋतुयाज्यासु हौत्रप्रवचनाम्नानासु अन्या याज्या होतुरपनीय यजमानस्य विकल्पेन विधीयते। यजमानयाज्या सोऽभिप्रेष्यति होतरेतद्यजेति स्वय वा निषद्य यजतीति। तत्र स्वयं याज्यापाठपक्षे वषट्कारभक्षयो स एव कर्त्ता उत होतेति चिन्तायाम्।

षष्ठीश्रुत्या यजमानस्य याज्यामात्र श्रुतं न वषट्कारः। तस्य

साध्याभ्यासमात्रे तदापत्तिः । समाख्याकल्प्यश्रुतौ अविशेषात् प्रकृता-पूर्वसाधनचमसस्थसोमसंस्कारार्थत्वेन तत्तत्कर्तृकभक्षणस्य विधेयत्वेन सर्वत्रैव चमससाध्याभ्यासे तत्प्राप्तिः । अत सर्वत्रैव एकपात्रे कर्तृभेद-द्वैककर्त्तरि कारणभेदेऽपि युक्तो भक्षस्य पृथगनुष्ठानसमुच्चयः । यद्वा, हारियोजने तु माऽस्तु समुच्चयः । याज्ञिकानुष्ठानं चेत्तर्हि तेनास्तु सः ॥१॥८१॥

एकपात्रे ॥ भक्षसमुच्चये चिन्तितेऽधुना प्रसङ्गात् तत्क्रमो निरू-प्यते । तत्रैकस्मिन्पात्रे कर्तृभेदेन भक्षणभेदे, वषट्कर्तुः प्रथमभक्ष इति वचनात्, होतेव नः प्रथमः पाहि इत्यादिमन्त्रवर्णाच्च वषट्कर्तृत्व-निमित्तः प्रथमो भक्षः । न च होमकर्तुरध्वर्योर्हस्ते पात्रसत्त्वादर्पण-प्रत्यर्पणकल्पने गौरवापत्तेस्तस्यैव न्यायेन भक्षप्राथम्यावगतेस्तदपेक्षया च वषट्कर्तुः प्राथम्यविधाने अपूर्वविधित्वापत्तेः समाख्यानिमित्त-भक्षापेक्षयैव तेन प्राथम्यविधिर्नियमविधित्वलाघवानुरोधेन युक्त इति वाच्यम् । नियामकन्यायप्रवृत्तेः पूर्वमेवैतस्य वचनस्य प्रवृत्तत्वेन नियमविधित्वानपायात् न्यायेन सङ्कोचानुपपत्तेः ।

अतो वषट्कारनिमित्तः प्रथमं भक्षः । मैत्रावरुणादिचमसेषु च सवनमुखीये ऐन्द्रप्रदाने होत्रा वषट्कारात् मित्रावरुणादिभ्यश्च प्रदाने मैत्रावरुणादिभिर्वषट्कारादवषट्कर्तृत्वे तु प्रदानक्रमेण क्रमः । वष-ट्कर्तृभक्षानन्तरञ्च होमाभिषवोभयकर्तृत्वे तस्य भक्षः । तन्नि-मित्तभक्षस्य वाचनिकत्वात् । ततो दुर्बलः समाख्याप्रमाणकः । होमाभिषवकर्तृकभक्षाभावे तु तदनन्तरं भिन्नकर्तृकसमाख्या-प्रमाणक एव । समानकर्तृके तु होमाभिषवकर्तृकभक्षाभावे द्विरनु-

निमित्तत्वेनोपचीणस्य यागस्य फलचमसमान्वयित्वानुपपत्तेस्त-च्छब्दपरामृष्टस्य च तस्य भक्षान्वयश्रवणात् प्राप्तयागानुवादेनानेक-पेषणादिरूपगुणविधाने वाक्यभेदापत्तेश्चानेकगुणविशिष्टभक्षान्तर-मेव फलचमसप्रकरणकं विधीयते। फलचमसस्य विनियोगाभावेन संस्कार्यत्वानुपपत्तेः सक्तुन्यायेन विनियोगभङ्गस्यावश्यकत्वात्। तदपि आरादुपकारकमपि यजमानसोमभक्षस्य बाधकं, न सोमसिद्ध्यनु-वादत्वात्। न गिरा गिरेति ब्रूयादितिवदेककार्यत्वाभावेऽपि बाधकत्वरूपाया एव स्थानापत्तेरङ्गीकारात्। अस्तु वा स्वतन्त्र एव तन्निषेध इति भाष्ये।

यद्यपि भक्षान्तरमिदं तथापि तस्य नारादुपकारकत्वम्। तमिति द्वितीयानिर्देशेन फलचमसस्संस्कारार्थत्वप्रतीतेः। अनुप-युक्तस्य च संस्कारायोगेऽपि अध्वर्युं वृणीतइत्यादिवद्विनियोग-कल्पना। तथापि यदि सोमं बिभक्षयिषेदित्याद्यनुवादबलाद्यज-मानकर्तृकभक्षस्य च तावतैवोपपत्तौ सर्वत्र सोमबाधेन सर्वार्थत्व-कल्पने प्रमाणाभावाद्यजमानचमसयागाभ्यासाधनत्वमेव फलचमसस्य कल्प्यत इति न काचिदनुपपत्तिः।

वस्तुतस्तु। भक्षान्तरत्वे प्रमाणाभावाद्यजमानसोमभक्ष एव तत्कर्तृकपेषणदध्युन्मृज्युत्तरकालद्वयविशिष्ट फलचमसंस्कारत्वेन विनियुज्यते। राजा राजसूयेनेतिवत्, तस्य वायव्यास्त्विविच, विनियोगविशिष्टप्रयोगविधानाद्वाक्यभेदः। यजमानचमसाभ्यासो-पद्रव्यसंस्कारकभक्षसंस्कार्यत्वात्, पूर्वोक्तयुक्तेश्च, तदीयत्वानुमानात्। कल्पितवाक्येन फलचमसस्य उक्तयागाभ्याससाधनत्वसिद्धिः। नैमि-

याज्यायां अधिवषट्करोति वचनेन याज्यातो भेदात् । अतश्च वषट्कारे समाख्यानिमित्तो होतैवेति तन्निमित्तो भक्षः तस्यैव । यत्तु स्वयं वेति वचनम् । तत्र तावद्यागकर्तृत्वविधायकं तस्य प्रधानवाक्यादेव सिद्धेः । नापि यागप्रकाशकवषट्कारप्रयोगकर्तृत्वविधायकम् । विध्यन्तरत्वे वाक्यभेदापत्तेः । अत आद्यवाक्येन यजमानस्य याज्यायां विहितायां द्वितीयेन प्रैषकर्तृत्वविधानात् प्रैषार्थकर्तृत्वानुपपत्तेरेव याज्याविकल्पप्राप्तेः यागकर्तृत्वस्य च याज्याप्रयोक्तृत्वमात्रेणाप्युपपत्तेस्तृतीयमर्थवादः । निषद्येत्यपि याज्यायां निषद्यत्वस्य सामान्यविधित एव प्राप्तत्वादनुवादः । अनवानं यजतीति तु याज्यान्तरविषयमिति प्राप्ते ।

आख्यातश्रवणादानुपपत्तेश्च तृतीयमेव विधायकं, आद्यस्त्वर्थवादः । अतश्च याज्यान्ते वषट्कारेणैव मुख्ययागकर्तृत्वाद्वषट्कारोऽपि तस्यैव । याज्यावषट्कारयोः समानकर्तृकत्वस्यानवानत्वस्य च बाधापेक्षया वषट्कारे होतृकर्तृकत्वमात्रस्यैवैकस्य समाख्याप्रमाणस्य बाधौचित्याच्च । एवञ्चाद्यस्यापि विधित्वे न कश्चिद्दोषः । अतश्च वषट्कारनिमित्तो भक्षोऽपि तस्यैव ॥३॥८५॥

फलचमसः ॥ तत्रैव, यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति श्रुतम् । अत्र द्वितीयो निःसन्दिग्धत्वपरः आद्यस्तु निमित्तत्वपर एव । स्तिभिनीः अङ्कुरामूलानि च । तत्रैतस्य फलचमसपदाभिधेयस्य किं भक्षणमात्रं किं वा यागोऽपीति चिन्तायाम् ।

विप्रत्यापत्तिश्च, अतो द्वयकर्तृविशिष्टं प्रत्येकचमसप्रतियोगिकमनु-प्रसर्पणमेवात्र विधीयते। तयोश्च पार्ष्णिकान्वये एकैकस्मिन् चमसे द्वाद्वश कर्त्तारो भवन्तीति त्रैप्लानुवादः। अनुप्रसर्पणस्य च प्रयोजनापेक्षायां वैमृधन्यायेन चमसपदान्तर्गत-चमिधातु-प्रतिपाद्यस-माख्यानिमित्तभक्षस्यैव स्ववाक्योपस्थितत्वात्तद्वाचकपदान्तरकल्पनया प्रयोजनत्वम्। अतश्च समाख्यानिमित्तभक्षार्थं प्रतिचमस द्वशाना-मनुप्रसर्पणे चमसानां द्वशत्वाच्छतसङ्ख्यासम्पत्तेः शतवाक्यमनुवादो-विधेयद्वशत्वस्तुत्यर्थो न तु ब्राह्मणत्वविधायको वाक्यभेदापत्तेः। अतो-ब्राह्मणग्रहणं सोमपदवदेव भूम्ना गौणमिति यजमानचमसे राजत्व-जातेरेव न्यायप्राप्तत्वाद्राजन्याद्य भक्षयेयुरिति प्राप्ते।

ब्राह्मणत्वस्य सर्वचमसेषु प्राप्त्यभावेनोपरि हि देवेभ्यो धारयतीति वद्विधेयत्वापत्तेर्गौणत्वे प्रमाणाभावात् ब्राह्मणत्वमेवेह प्रतोद्देशेन विधीयते। सोमान् भक्षयन्तीत्यनुवादमात्रम्। वस्तुतस्तु भक्षयतिना पूर्ववाक्ये समाख्याभक्षस्योद्दिश्यत्वेनोपस्थितस्यैवोपादानात्तदुद्देशेनैव ब्रा-ह्मणत्वविधानमिति द्वशत्वेनैकत्वबाधवद्ब्राह्मणत्वेन राजत्वबाध इति यजमानचमसेऽपि ब्राह्मणा एव फलचमसमन्ये भक्षयेयुः। न च स यदि सोममित्यनेन राजकर्तृकभक्षस्य निमित्तत्वावगतेः कथं तदभावे फलचमस इति वाच्यम्। निमित्तद्वयाङ्गीकारे वाक्यभेदापत्तेरायो-नैव यदि-शब्देन यागगतराजकर्तृकत्वनिमित्तप्रतिपादनात्। अयन्तु यदि-शब्दो नि सन्दिग्धत्वार्थकोऽनुवाद इत्युक्तम्॥ ३॥ ८७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य पञ्चमः पादः।

त्तिकत्वाच्च तत्र नित्यसोमबाधकत्वम्। एवं च स्थानापत्त्यैव फल-चमसे इतरसोमसंस्कारवद्यजमानभक्षस्यापि प्राप्तिसम्भवे पूर्वप्रवृत्त्या तद्विध्यङ्गीकरणं गुणद्वयविधानार्थं फलचमसस्य यागसाधनत्वसिद्ध्यर्थं चेति द्रष्टव्यम्। एतेन यदि सोमं न विन्देत् पूतीकानभिषुणुया-दित्यत्राभिषवयुक्तपूतीकानामपि यागसाधनत्वं व्याख्यातम् ॥३॥८६॥

अनुप्रसर्पिषु ॥ राजसूये दशपेयो नाम सोमयागविकारोराज-कर्तृकः। तत्रातिदेशतोदशसु चमसेषु प्राप्तेषु यजमानचमसे राज्ञो-भक्षणम्। तत्रापरं, शतं ब्राह्मणाः सोमान् भक्षयन्ति दशदशै-कश्चमसमनुप्रसर्पेयुरिति वचनद्वय श्रुतम्।

तत्र न तावच्छत ब्राह्मणा इति विधिर्दशदशेत्यनुवादः, भक्षा-नुवादेन गुणद्वयविधाने वाक्यभेदात्। एकैकस्मिन् भक्षे शतब्राह्मण-प्राप्त्यापत्तौ दशदशेत्यस्य प्राप्त्यभावाच्च। अतो दशेत्येव लिङ्श्रवणा-द्विधिः। सोऽपि न चमसोद्देशेन, दशत्वस्य प्राप्तत्वात्। नापि तदु-द्देशेन भक्षाश्रितदशकर्तृविधिः। चमसोन्नयनादिक्रियान्तरस्याप्या-श्रयत्वप्रसङ्गेन भक्षस्यैवाश्रयत्वे प्रमाणाभावात्। याज्ञिकाचारसिद्ध-समाख्याभक्षस्यैव नियमेनोपस्थित्यभावेन वषट्कारनिमित्तस्याप्याश्रय-त्वापत्तेश्च। चमसमिति द्वितीयाया अनुशब्दयोगनिमित्तत्वेन प्रति-योगित्वपरतया तस्योद्देश्यत्वोपस्थापकाभावाच्च। नापि चमसानुप्रस-र्पणोद्देशेन दशकर्तृविधि। विशिष्टोद्देशेन वाक्यभेदात्। चमस-प्रतियोगिकर्त्विक्कर्तृकानुप्रसर्पणस्याप्राप्तत्वाच्च। प्रयाजेभ्यस्तदितिवत्सर्व-चमसेषु एकस्यैव दशकस्य प्रसक्त्यापत्तेश्च। चमसे चैकैकत्वविशेषणे पुनर्विशिष्टोद्देशः। दशदशेति वीप्सार्थविधाने वाक्यभेदः। प्रतिचमसं

दीक्षासु यूपच्छिन्नत्तीत्यत्र अग्नीषोमीयसवनीयानुबन्ध्यसम्बन्ध्युपदिष्टातिदिष्टच्छेदनसाधारण्येन दीक्षाकालविधौ न प्राप्तिकालवैषम्यं, तथाऽग्रे वक्ष्यामः। वस्तुतस्तु न साधारण्येन विधिः। प्रकृत्यर्थत्वेन विहितस्यातिदेशतोऽपि प्राप्तिसम्भवात्। तथापि यूपैकत्वं भिन्नकालकृत्वेनाग्रह्यमाणविशेषत्वात् पाचवदेव नानुपपन्नम्। प्रयोजनं, पूर्वपक्षे पर्णतालोपे वेदान्तरीयविकृतौ याजुर्वैदिकत्वात्तद्भ्रेषप्रायश्चित्तं, सिद्धान्ते अविज्ञातप्रायश्चित्तं विकृतिवेदीयं वा। भूरादिप्रायश्चित्तानामपि उपक्रमानुसारेणोत्सैद्धादिवद्वेदधर्मत्वात् ॥२॥८८॥

प्रकरणविशेषात्तु ॥ सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्याधीतं सामिधेन्युद्देशेन विधीयमानं साप्तदश्यं प्राकरणिकपाञ्चदश्यावरोधान्न पूर्ववत्प्रकृतौ दर्शपूर्णमासयोर्निविशते सामिधेनीस्वरूपे आनर्थक्यप्रसक्तौ लक्षणीयस्यापूर्वविशेषसाधनत्वस्य प्रकरण**डित्युपस्थापनात्। साप्तदश्ये तु अव्यभिचरितक्रतुसम्बन्धेन कथञ्चिदपूर्वसामान्योपस्थितावपि तद्विशेषस्य विरुकालन्यायेनोपस्थित्या विलम्बितत्वात्। किन्तु विकृतौ।

न च तत्रापि कृप्तोपकारपाञ्चदश्यविरोधः। औपदेशिकत्वेन शरवद्बाधकत्वोपपत्तेः। न चानारभ्याधीतत्वेन दौर्बल्यं, निरवकाशत्वरूपप्राबल्यम्। युक्तिरुभयत्रापि तुल्यत्वात्। अत एव य दक्षेत्यनेन गम्यमानपञ्चदशत्वादिसर्वविकृतिषु निविशत एव। सर्वविकृतिषु साप्तदश्यप्राप्तौ काम्येष्टिपशुमित्रविन्दादिविकृतिषु तत्पुनःश्रवणं

* सर्वत्रैव पुस्तके अत्र किञ्चित् स्थानं रिक्तम्।

# अथ षष्ठः पादः ।



सर्वार्थं ॥ अनारभ्य श्रुतेन यस्य पर्णमयी जुहूर्भवतीत्यादिना अव्यभिचरितक्रतुसम्बन्धिजुह्वद्देशेन विधीयमाना पर्णता तद्द्वारेण जुहूमत्क्रत्वङ्गमिति स्थिते, सा किं प्रकृतिविकृतिसाधारणी उत प्रकृतिरेवेति चिन्तायाम् ।

अविशेषात् सर्वोऽपि । न च विकृतावतिदेशेनापि प्राप्तेर्द्विरुक्तत्वापत्तिः । उपदेशेनैव प्राप्तिसत्त्वे अतिदेशस्य कुशविषयत्ववत्पर्णताविषयत्वाकल्पनात् । न च विकृतौ जुहूप्राप्तेरतिदेशायत्तत्वात्तस्य च प्रकृतेः सर्वाङ्गसम्बन्धोत्तरकालीनत्वेन पर्णताविधेः प्रथमं प्रकृतिविषयशाब्दबोधजनकत्वावश्यम्भावे पुनर्विकृतिविषये तज्जनकत्वायोगेन प्राप्तिकालवैषम्यापत्तिरिति वाच्यम् । वैमृधादिवत्पर्णताव्यतिरिक्ताङ्गसम्बन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य विकृतावतिदेशोपपत्तौ पर्णतायाः पश्चादेव विधानेन साधारण्योपपत्तेः । अन्यथा वैमृधेऽपि वैमृधव्यतिरिक्तप्रयाजाद्यतिदेशानापत्तेरिति प्राप्ते ।

यत्किञ्चिदितिकर्त्तव्यताक-वैमृधोपेतसमकालाङ्गसम्बन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य वैमृधेऽतिदेशकल्पनायामपि येषामङ्गानां स्वाङ्गसम्बन्धेन निराकाङ्क्षता तेषामेवातिदेशो न वैमृधस्य अङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् । अतश्च पर्णतारूपाङ्गसम्बन्धं विना प्रकृतेः पूर्णत्वाभावादतिदेशतो जुहूप्राप्त्यनन्तरं पुनः पर्णताविधौ प्राप्तिकालवैषम्यापत्तेः प्रकृत्यर्थैव पर्णता । यथा चैवं सति

फलाश्रितात् काम्यादपि फलानापत्तिः। काम्यस्य लाघवेन परप्रयुक्ताश्रयोपजीवितया स्वातन्त्र्येणानुष्ठानप्रसङ्गानुपपत्तेराश्रयस्यापि परप्रयुक्तकाम्यगुणेनैवोपकारसिद्धौ नित्यनैमित्तिकचमसाद्यनुष्ठापकत्वाकल्पनात्। काम्यप्रयोगे चमसादेरङ्गत्वाभावेनैव वैगुण्यशङ्काऽप्रसक्तेः। अतो दुर्बलस्य नित्यादेः प्रबलानास्कन्दितप्रयोगविषयत्वकल्पनया प्राप्तबाधविधया बाधकत्वं काम्यनैमित्तिकादेरिति सिद्धम्॥२॥८०॥

इष्ट्यर्थम्॥ अग्नीनामतिदेशेन पवमानेष्ट्यङ्गत्वावगमात्तत्संस्कारकत्वेन विहितस्याधानस्यापि प्रकरणसहकृतवाक्यात् पवमानेष्टिसाधनीभूताग्निसंस्कारकत्वेन विनियुक्तस्य पवमानेष्ट्यङ्गत्वम्। पवमानेष्टीनां विश्वजिन्न्यायेन फलकल्पनेति प्राप्ते।

आधानस्य किमुत्पादकत्वमुत सम्मार्गादिवदग्निनिष्ठातिशयमात्रजनकत्वं? उभयथापि लभ्यते अग्निहोत्रादिषु आहवनीयाद्युत्पादकाभावादतिदेशस्यैवासम्भवः। अतोऽग्निहोत्राद्यङ्गभूताहवनीयाद्युत्पादकमेवाधानम्। पवमानेष्टयोऽप्यन्यङ्गभूताः, फलवदाधानाङ्गभूता एव वा, प्रकरणात्। ततश्च पवमानेष्टिष्वसिद्धत्वादग्नेरतिदेशस्यैवाभावः। प्रयोजनं, पवमानेष्टिषु पूर्वपक्षेऽन्वारम्भणीया, सिद्धान्ते पृथगारम्भाभावान्नेत्यादि॥२॥८१॥

तत्प्रकृत्यर्थम्॥ तदाधानमग्निवदेव पर्णतान्यायेनाव्यभिचरितक्रतुसम्बन्धग्यङ्गत्वेन क्रत्वङ्गत्वावगतेर्दर्शकताद्दोपभिर्येव प्रकृत्यर्थमिति प्राप्ते।

नाधानस्य क्रत्वङ्गत्वं, प्रमाणाभावात्। जुह्वादयोह्याकृतिविशेषरूपाः पर्णतादिव्यतिरेकेणापि काष्ठान्तरेण जायमाना आनर्थक्य-

अन्यविकृतिषु तत्परिसङ्ख्याफलकोपसंहारार्थम्। न च वाक्यद्वयवैयर्थ्यापत्तिः। एकेन सामिधेनीसम्बन्धोऽपरेण क्रतुविशेषसम्बन्ध इति विषयभेदात्। न चैवमपि प्राकरणिकेनैवोभयसम्बन्धसिद्धौ इतरवैयर्थ्यम्। वाक्यद्वयासामर्थ्यबलेनाभ्युदयशिरस्कत्वकल्पनादिति दशमे वक्ष्यते॥२॥८९॥

नैमित्तिकम्॥ यत्तु प्रकरण एव, सप्तदश वैश्यस्येति नैमित्तिकमाप्तदशत्वात्पञ्चदशस्य बाधकम्। अत्र हि षष्ठ्या निमित्तत्वमेव वैश्यस्योच्यते। विजातीयत्वाच्च सामिधेन्युद्देशेऽपि न वाक्यभेदः। वैश्यस्वामिकसामिधेन्युद्देशेन वा साप्तदश्यविधिः। षष्ठ्याः परम्परासम्बन्धस्य प्रायां व्युत्पन्नत्वेन न विशिष्टोद्देशे वाक्यभेदोऽपि। वैश्योद्देशेनैव वा स्वस्वामिकसामिधेनीकत्वसम्बन्धेन तद्विधिः। सामिधेनीरनुब्रूयादित्यस्य तात्पर्यग्राहकत्वात्। अन्यपक्षद्वये च वैश्याभावे साप्तदश्याननुष्ठानान्निमित्तत्व तस्यार्थिकम्।

तथा, काम्यमपि गोदोहनादि एकविंशत्यादिस्तुवचनादि च नित्यस्य चमसपाञ्चदश्यादेर्नैमित्तिकस्य च साप्तदश्यादेर्बाधकम्। नित्यस्य सामान्यविहितत्वेन ब्राह्मणादिप्रयोगे सावकाशत्वेन च विशेषविहितान्निरवकाशाच्च काम्यनैमित्तिकाद्दुर्बलत्वावगतेः। न चैवमपि नैमित्तिकस्य कामनारहितप्रयोगे सावकाशत्वकाम्यस्यापि ब्राह्मणादिकाम्यप्रयोगे सावकाशत्वाविशेषेण नैमित्तिकापेक्षया बलवत्त्वानापत्तिः। साक्षात्पुरुषार्थसाधने पुरुषस्योन्मुखत्वेन काम्यस्य पुरस्फूर्तिकतया बलवत्त्वोपपत्तेः।

न च काम्यस्य क्रत्वङ्गत्वाभावेन क्रत्वङ्गभूतनित्यादेर्बाधे विगुण-

तेषामङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात्। अतोऽस्मा-रम्भणीयावेष्टिधन्यायेनैवानतिदेशः।

वस्तुतस्तु, नाङ्गत्वमपि। अग्नीनां तु सत्यपङ्गत्वे साध्यत्वान्नेहाति-देशः। अवश्यं हि ये प्रथमतः आधानेष्ट्यादयः कार्याः तेभ्योऽग्नि-सिद्धिरङ्गीकर्त्तव्या। ततश्च तेभ्यः कार्यसिद्धावन्येषामकरणम्। यथा चैव सति पवमानेष्टिहोमादय आधानहोमावाऽऽधानजन्यो-त्पत्त्यपूर्वरूपाहवनीयादौ भवन्ति, तथा कौस्तुभे धारणाधिकरणेऽन्य च स्पष्टम् ॥३।८।३॥

तुल्यः॥ ज्योतिष्टोमे क्रयसन्निधावग्नीषोमीयः पशुराम्नातो वच-नात् स एव औपवसथ्येऽहन्यालम्भ्यः इत्यस्याचतुर्थेऽहन्यनुष्ठीयते। पशुधर्माश्च तत्रैव पशूपाकरणादयः समाम्नाताः। सवनीयश्च पशुः सौत्येऽहनि समाम्नात आश्विनं ग्रह गृहीत्वा त्रिवृता यूपं परिवी-याग्नेयं सवनीय पशुमुपाकरोति इति। अनूबन्ध्यस्त्वन्ते समाम्नातः। तदिह पशुधर्माणां किं पशुत्रयसाधारण्यमुत सवनीयमात्रार्थत्वमुत सवनीयाग्नीषोमीयोभयार्थत्वमुताग्नीषोमीयार्थत्वमेवेति चिन्तायाम्।

महाप्रकरणाज्ज्योतिष्टोमसम्बद्धानां धर्माणां पशुधर्मत्वेन साक्षा-त्तत्सम्बन्धायोगेनानर्थक्यतदङ्गन्यायेन पशुयागद्वारकत्वावगतेस्त्रयां च मध्ये कस्यचिद्विशिष्य प्रकरणबाधकबलवत्प्रमाणाभावेनाविशेषात्सर्वा-र्थत्वमित्याद्यः पक्षः।

द्वितीयस्तु सत्यपि ज्योतिष्टोमप्रकरणस्य पशुधर्मग्राहकत्वे सव-नीयावान्तरप्रकरणेन तद्बाधः तस्य ह्यौपवसथ्येऽहन्येवोत्पत्तिः। आग्नेयः पशुरग्निष्टोम आलभ्य ऐन्द्राग्न उक्थ्ये द्वितीय ऐन्द्रोवृष्णिः

भयायुक्तं यत्पर्णतादेः स्वजन्यापूर्वार्थतां बोधयन्तीति। आहवनीया-द्यग्नयस्तु अदृष्टविशेषरूपा आधानं विनोत्पत्तौ प्रमाणाभावादानर्थ-क्याभावेन स्वस्वरूपार्थत्वमेवाधानस्यावबोधयन्ति। अत एव तत्र नाग्निशब्दे अपूर्वसाधनत्वलक्षणा। अतः क्रत्वर्थत्वस्यैवाभावात् प्रकृ-त्यर्थता दूरापास्तैव। न चैवमाधानाकरणे क्रतुवैगुण्यानापत्तिः। अन्यभावेन वैगुण्योपपत्तेः।

वस्तुतस्तु, लाघवेन क्रतुविधीनां आधानविधिसिद्धाग्निग्रहण-नैवोपपत्तौ स्वयं अग्निप्रयोजकत्वाभावादनाहिताग्नेरनधिकारः क्रतु-ष्विति वैगुण्यशङ्का दूरापास्तैव। एवं पवमानेष्टीनामपृथक्त्वर्थत्वं व्याख्यातम्। प्रयोजनं, पूर्वपक्षे आधानस्य कालान्तराम्नानेन भिन्न-प्रयोगविहिततया सर्वार्थं सकृदनुष्ठानेऽपि दृढक्षतिसवादिवदधि-कारिविशेषणत्वे प्रमाणाभावाच्चित्ये आधान विनाऽप्यनुष्ठानं यथा-शक्तिप्रयोगे। सिद्धान्ते त्वधिकारसम्पादकत्वान्नेति ॥३॥८॥२॥

तासाम्॥ पवमानेष्टीनां दर्शप्रकृतिकत्वादतिदेशेन प्रयाजादि-वदेषाग्निः प्राप्नोति। ते चाधानपवमानेष्टिसाध्या इति ततः पूर्वं कर्त्तव्यमेवाधानम्। पवमानेष्टयश्च। स चानवस्था। यावत्पौर्णमा-स्यादिकालं करणोपपत्तेरिति प्राप्ते।

न तावत्पवमानेष्ट्यादिक प्रकृतावन्, अग्निमात्रार्थत्वस्य स्थापित-त्वात्। सत्यपि चाङ्गत्वे तेषां नातिदेशः। पवमानेष्ट्यादिषु यत्कि-ञ्चिदितिकर्त्तव्यताकपवमानेष्ट्युपेतमकल्पाङ्गसम्बन्धेनैव प्रकृतेः पूर्णतां परिकल्प्य पवमानेष्टिष्वतिदेशाकल्पनायेषामङ्गानां प्रकृतौ साङ्ग-सम्बन्धेन निराकाङ्क्षता तेषामेवातिदेशो न पवमानेष्ट्यादीनाम्।

तात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिरिति स्थानलक्षणम्। यद्यपि चात्र पशुधर्माणां श्रुत्यादिविनियुक्तत्वाच्च प्रकरणस्य स्थानस्य वा विनियोजकत्वसम्भावना, तथाप्यपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व-एव विनियोजकव्यवहारोभाक्त इति द्रष्टव्यम्। न चैवमपि प्रकरणेन स्थानबाधापत्तिः। अग्नीषोमीयस्य पशुधर्माकाङ्क्षायामेवातिदेश-कल्पनवदौपदेशिकस्थानस्यैव विनियोजकत्वकल्पनौचित्यात्। अन्यथा प्रबलौपदेशिकप्रमाणेन प्रकृत्यर्थत्वाद्धर्माणां क्वापि विकृत्यर्थत्वाना-पत्तेः। इन्द्रादेरुपायान्तरेणापि स्मृतिसम्भवाच्च लिङ्गादेः श्रुतिकल्प-कत्वमिति विशेषः। अत उभयार्थत्वमिति प्राप्ते।

न सवनीयस्यावान्तरप्रकरणं, सौत्येऽहन्युपपत्तेः। अन्यथा दूरस्थ-कर्मानुवादेन कालरूपानुपादेयगुणविधानानुपपत्तेः। न च प्रातः-सवन उत्कृष्टत्वादेवोपस्थितिः। आनुष्ठानिक्युपस्थितेरङ्गग्राहकत्वेऽपि प्रकरणान्तरप्रतिबन्धकत्वस्य क्वाप्यदर्शनात्। अस्तु वा तत्, तथापि वपाभ्यासमात्रस्य प्रातःसवन उत्कृष्टत्वेऽपि उपाकरणोत्कर्षे प्रमाणा-भावात्तदुपस्थित्यनुपपत्तेः। यद्यपि चोपाकरोतिना याग एव लक्ष्येत, तथापि प्रकृतार्थस्योपाकरणस्याश्विनग्रहणोत्तरकालस्याप्राप्तेरनुवादा-नुपपत्ति। यद्यपि च वपाप्रचारोत्तरभाविपदार्थानाम्तदाद्युत्कर्षन्या-येनोत्कर्षः सम्भाव्येत, तथापि न तत्पूर्वभाविनामुपाकरणादीनामु-त्कर्षे प्रमाणमस्ति। वस्तुतस्तु। पूर्वद्युर्वेदिकरणन्यायेनापूर्वत्वात्तदुत्तर-भाविनामपि नोत्कर्षः।

वस्तुतस्तु, गङ्गायाङ्घोष इत्यादौ प्रकृतार्थस्य घोषान्वयप्राग्भावे-ऽपि लक्षणादर्शनात्प्रकृतस्योत्तरकालत्वप्राग्भावेऽपि उपाकरोतिना वपा-

षोडशिनि तृतीयः सारस्वती मेषस्तिरात्रे चतुर्थीत्येतैर्वचनैः क्रतुपशूनां विधानात् तस्य च कृत्स्नोपकारप्राकृताङ्गसम्बन्धेऽपि अपेक्षितानां पशुधर्माणां सन्निहितत्वेन प्राकृताङ्गसन्दष्टत्वेन चात्र प्रकरणोपपत्तिः। ऐन्द्राग्नादिपशूनान्तु संख्याधिकरणन्यायेन समानविधानत्वाभावादेव न पशुधर्मग्राहकत्वशङ्का। अस्तु वा तेषामप्यवान्तरप्रकरणाद्धर्मग्राहकत्वम्। नैतावता सर्वार्थत्वम्। न च सौत्येऽहनि तद्विधिः। सवनीयोद्देशेन तत्राश्विनग्रहणोत्तरकालत्वमात्रविधायकत्वात्। यूपपरिव्याणस्य विहिता यूपं परिव्ययतीति सामान्यविधिना आश्विनग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति परिव्याणान्तरविधिना वा प्राप्तत्वेनानुवादात्। परिव्याणान्तरे विहितत्वस्यापि रशनासाधारण्याधिकरणे उपपादयिष्यमाणत्वाच्च। न च तथापि दूरस्थकर्मानुवादेन कालविधिरशक्यः। औपवसथ्याहे विहितानामपि क्रतुपशूनां वपया प्रातः सवने चरन्ति पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवने इत्यनेनोत्कर्षविधानात्सौत्येऽह्न्यनुष्ठीयमानतयोपस्थितत्वोपपत्तेः। तेन यथैव क्रयसन्निधावाम्नातस्याग्नीषोमीयस्यौपवसथ्येऽह्न्यनुष्ठीयमानत्वे नैव धर्मग्राहकत्वं सिद्धान्ते, तद्वदिहापीति न दोषः। न चैवमपि क्व सवनीयविधिरित्यत्र विनिगमनाविरहः। धर्मवाक्यस्यैव नियामकत्वात्। अतस्तत्रावान्तरप्रकरणात्सवनीयार्थं इति।

इतीयत्तु सत्यं सवनीयार्थाः स्थानादग्नीषोमीयार्था अपि। तस्य हि क्रयसन्निधौ विधिदृष्टायामेव कृत्स्नोपकारप्रकृताङ्गैर्निराकाङ्क्षीकृतस्यौपवसथ्येऽह्न्युत्कृष्टस्यार्थोपस्थितिमात्रमत्वेन स्थानम्। सवनीयस्य दाक्यसन्निध्यभावेन प्रकरणाद्धानुपपत्तेः। अत एवेतिकर्तव्य-

विंशिश्च प्रमाणान्तरमपूर्वसाधनत्वेऽपि ख्यापकं न स्यात्, ततो महाप्रकरणगृहीतानामेषामानर्थक्यतदङ्गन्यायेन भवेत्सर्वपश्वर्थत्वम् । न तु तदस्ति । स्थानेनाग्नीषोमीयार्थत्वावगमात् । तेन धिष्ण्यमग्नीषोमीयएवोपदेशोऽन्यत्र त्वतिदेश इति । सामानविध्यप्रयोजनं दशमादौ स्पष्टम् ॥३॥८॥४॥

दोहयोः ॥ दर्शपूर्णमासयोर्दधि पूर्वेद्युरपरेद्युश्च पय उत्पाद्यते । दोहधर्माश्च शाखाहरणादयः पूर्वेद्युः क्रियन्ते । तेषामनुष्ठानवादेश्याद्दधिमात्राङ्गत्वमिति प्राप्ते ।

यद्यपि स्थानं भवेत्तथापि प्रकरणेन तद्बाधः। न त्वत्र पूर्ववत् क्रतूपकारकत्वादिना प्रकरणाभावः शङ्कितुं शक्यः । न च स्थानमत्र दधियागस्यास्ति। उत्तरेद्युरेवानुष्ठानात्। दध्नस्तु विद्यमानमपि नानर्थक्यभियाऽपूर्वसाधनत्वलक्षणतात्पर्यग्राहकम् । न च स्मारकविधया दध्नैव यागोपस्थितेः स्थानशङ्का । तादृशोपस्थितेर्नैयत्याभावेन ग्राहकत्वानुपपत्तेः । किञ्च दोहधर्मा. परेद्युरेवाम्नातास्तत्रैव च भाव्यापेक्षायां प्रकरणादुभयार्थत्वेनावगम्यमानाः सामर्थ्यात् पूर्वेद्युरनुष्ठीयमानदधिसिद्ध्यर्थं पूर्वेद्युस्तन्त्रेण क्रियमाणा अपि न तन्मात्रार्था भवन्ति । दोहनादयस्तु सामर्थ्यादेवावर्त्तन्त इति विशेषः ॥३॥८॥५॥

तदसत्वनान्तरे ॥ ज्योतिष्टोमे प्रात.सवनिकग्रहणसन्निधौ ग्रहधर्मा श्रूयन्ते उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुव इत्याद्याः । ते निःसन्दिग्धस्थानात् प्रातःसवनिकग्रहमात्रार्था इति प्राप्ते । माध्यन्दिनसवनिकादीनामपि प्रकरणात्तेन च स्थानबाधात्सर्वार्थत्वं, प्रयाजादीनामिवाग्नीषोमीयाद्यर्थत्वमिति ॥३॥८॥६॥

भ्यासलक्षणोपपत्तेः । पश्वनपकर्मोपयोगियूपद्रार्ढ्यसम्पादकद्वितीयपरि-व्याणस्याग्निवग्रहणोत्तरकालताविधित एव तदुत्तरभाविवपायाग-स्यापि आग्निमग्रहणोत्तरकालत्वसिद्धेरेतद्वाक्यवैयर्थ्यमिथा एवाभ्यासा-देतस्योत्पत्तिविधित्वम् । तथापीतरस्य सर्वस्य द्वितीययूपपरिव्याणा-देर्वाक्यान्तरप्राप्तत्वात्कालविशिष्टं शुद्धमेव वा द्रव्यदेवताविशिष्टं कर्म विधीयते । ततश्चानेनैव वाक्येनाग्नेयसवनीयस्तैतत्समानजातीयैश्च वाक्यान्तरैरैन्द्राग्नादीनां विधानादौपवसथ्याहे तेषां पुनः श्रवणमनु-वादमात्रम् । तदपि यथा वै मत्स्योऽविदितोजलमवधूनुते एव-मेतेऽप्रज्ञायमानाजनमवधून्वते इत्यर्थवादश्रुतसन्ततकरणनिमित्तक-निन्दोपपादकैतच्छब्दापेक्षितपशुसमर्पणार्थं निन्दोन्नीतदोषपरिहा-रार्थं च वपया प्रातःसवने चरन्तीत्यादिना वपाप्रचाराद्युद्देशेन प्रातःसवनादिकालविधिः । खण्डशः कालभेदेनानुष्ठाने हि मध्ये सत्यर्थसवकाशलाभाद्दोषपरिहारः । यद्यपि चात्रापि कालविधान-न्दूरस्थकर्मानुवादेन न शक्यम्, तथाप्यर्थवादत एव तदुपस्थितेर्न कश्चिद्दोषः ।

यत्तु प्रचारविप्रकर्षस्योपादेयगुणस्य सत्त्वान्न दोष इति मूलोक्तं समाधानं, तद्विप्रकर्षस्याशब्दस्य विधेयत्वाभावादुपेक्षितम् । अतो न सवनीयस्यावान्तरप्रकरणम् । स्थानात्त्वग्नीषोमीयाङ्ग पशुधर्माः । न च ज्योतिष्टोमप्रकरणेन स्थानबाधः । पशुधर्माणां श्रुत्यादिभिः पशुसंस्कारकतया विनियुक्तानामयोग्यतया ज्योतिष्टोमप्रकरणेना-ग्रहणात् । अतो यत्रैव श्रुतः सम्बन्धो यथा वाजपेयस्येत्यादौ, तत्रै-वानर्थक्यतदङ्गन्यायो न तत्र । एवं सत्यपि यदि कस्यापि पशो-

व्यवनीति विधिनाऽभ्यासात्परिव्याणान्तरं विहितम्। आश्विनोत्तरकालत्वस्य पाठादुपनिष्क्रमणस्य चार्थादेव प्राप्तेः। तच्च प्रकरणात् सवनीयस्यैवाङ्गन्तदपि च न प्राकृतकार्यापन्नम्। प्राकाग्रदानवद्विधिवैयर्थ्यापत्तेः। अत एव तत्कार्यमदृष्टं यूपदार्ढ्याधिक्यं वेत्यन्यदेतत्। तदिह रशनातद्धर्माश्च चिवृत्त्वदर्भमयीत्वादयोनाप्राकृतकार्यापन्ने परिव्याणान्तरे यूपावटबर्हिरास्तरण इव भवन्तीति प्राप्ते।

उत्पत्तिवाक्ये चिवृत्त्वानुवादरूपतात्पर्यग्राहकवशाल्लाघवाच्च प्रकृतापूर्वसाधनीभूत-यूपपरिव्याणत्वमेवोद्देश्यतावच्छेदकं, न तु विजातीयपरिव्याणत्वम्। तथात्वे उत्पत्तिवाक्ये चिवृत्त्वस्याप्राप्तत्वेन विधाने गौरवापत्तेः। अत उद्देश्यतावच्छेदकरूपसत्त्वात्तत्रापि रशनातद्धर्माः। व्याख्यातृणान्तु मङ्गतिलोभेन यूपच्छेदनपरिव्याणरशनातद्धर्माणां सर्वेषामुपदेशेनैव चितयमाधारणमङ्गीकृत्य सवनीयपरिव्याणान्तरे उपदेशेनैव तत्प्राप्तिं व्याचक्षाणानामभिप्रायं न विद्मः॥३॥८ ७॥

आराच्छिष्टम्॥ ग्रहधर्माणां ग्रहस्वरूपे आनर्थक्यप्रसक्तौ ग्रहयागाभ्यासमाधनत्वमेव ग्रहपदेन लक्ष्यते, दीचणीयाऽङ्गियमन्यायेन। न तु ज्योतिष्टोमापूर्वसाधनत्वम्। अतश्च प्रकरणोपस्थितापूर्वसाधनत्वस्यैव लक्षणाच्चानारभ्याधीतांशदाभ्यापूर्वार्थत्वं धर्माणामिति प्राप्ते।

प्रकरणादन्येषामिवानुष्ठानमादेशादनारभ्याधीतानामनुपस्थितेर्वाक्यसङ्कोचे प्रमाणाभावादेव सर्वार्थत्वम्। अत एव प्रबलेन दुर्बलेन वा प्रमाणेन साधनत्वेनावगतानां सर्वेषामेव हविषां वेदादिकमङ्गम्। वस्तुतस्तु अंशदाभ्ययोरनारभ्योत्पन्नयोरपि प्राकरणिकवाक्येनैव क्लृप्तेति तुल्यत्वमेव॥३॥८ ८॥

रशना च ॥ पशुनियोजनाङ्गत्वेन विनियुक्तस्य यूपस्यानुष्ठानमा-
देशादग्नीषोमीयापूर्वसाधनीभूतपशुनियोजनार्थत्वम् । अतिदेशात्तु
सवनीयानुबन्ध्यार्थत्वम् । एवं तदुत्पादकानां छेदनादिसंस्कारणा-
मपि । यद्यपि च यूपस्वरूपे आनर्थक्याभावस्तथाप्यनुवादस्य सन्नि-
हितगामित्वादेवाग्नीषोमीये निवेशः । विकृतौ त्वभिक्रमणवद्गमनम् ।
तेषां तु भेदेनानुष्ठाने प्राप्ते दीक्षाकालस्याप्युपदेशातिदेशाभ्यां
विहितस्यैकत्वात्तन्त्रेणानुष्ठानादेकस्या एव यूपव्यक्तेः सर्वोपकारकत्व-
मेकादशे वक्ष्यते । ये च परिव्याणादय उत्पन्नयूपसंस्कारकास्तेषा-
मप्यनुष्ठानमादेशातिदेशाभ्यां प्रकृतिविकृत्यङ्गत्वम् । यूपस्वरूपस्य
तद्व्यतिरेकेणाप्युत्पन्नत्वात् । यूपव्यक्तेरेकत्वात्तु स्वर्यमाणविशेषत्वेऽप्या-
तिथ्यावर्धवर्हिःप्रोक्षणन्यायेन प्रसङ्गेन कार्यसिद्धेर्नावृत्तिः ।

न चैव तन्न्यायेनैवाग्निपात्रममार्गादेर्दर्शपूर्णमासिकस्यापि विकृतौ
प्रसङ्गापत्तिः । व्रीहिप्रोक्षणादिवत्तत्कार्यकूटोद्देशेन यद्व्यक्तेरुत्पत्ति-
स्तत्कार्यकूटाङ्गभूततद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिम-
कार्यत्वेन नाशकत्वस्य क्लृप्तत्वेन तदनापत्तेः । न ह्यग्निपात्रादेर्यत्कार्य-
कूटोद्देशेनोत्पत्तिः तत्कार्यकूटाङ्गं संस्कारः* । समार्गस्य ज्योतिष्टोमा-
धनङ्गत्वात् । अतश्च तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रकृति* तत्फली-
भूतान्तिमकार्यत्वेन नाशकतेति विशिष्य कार्यकारणभावेनैव तत्प्र-
योगगतान्त्यान्तिमफलेन नाश इति वैषम्यम् । एवं च परिव्याणरशना-
तद्भूमादय औपवसथ्येऽहन्यनुष्ठीयमाना अप्युपदेशातिदेशाभ्यां विक-
त्योपकारकाः । अन्नैव चाश्विनं ग्रह गृहीत्वोपनिष्क्रम्य यूपं परि-

* इत्यमेव पाठः सर्वत्र । मम तु, प्रति,—इति पाठः प्रतिभाति ।

मणुपदेशस्य सोमतात्पर्यकत्वाभिवारणेन विकारभूतेऽपि फलचमसे अप्राकृतविशेष्यकत्वप्रसङ्गादभिषवाद्यनापत्ते । अतश्च सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसाधनत्वप्रकारकप्रकृत्यपूर्वसाधनविशेष्यक एव बोध इति तद्वत् कुर्यादित्यतिदेशेन विकृत्यपूर्वसाधनेऽपि समानविधानत्वाभावेऽपि धर्मप्राप्तिरविरुद्धा । प्रकृते तु फलचमसस्य प्रकृत्यपूर्वसाधनत्वादेव यवादिवदुपदेशविषयत्वमिति प्राप्ते ।

सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसम्बन्धित्वप्रकारकप्रकृत्यपूर्वसम्बन्धिविशेष्यक एव पार्ष्ठिक उद्देश्यबोध । तथापि सा सम्बन्धिता यद्धर्मावच्छिन्नस्य संस्कारविधिपार्ष्ठिकशाब्दबोधात्पूर्वं प्रमीयते, तद्धर्मावच्छिन्नत्वेन संस्कारविध्युपदेशविषयत्वेन व्यवहारोनान्यस्य तस्य । घटादेरिव तत्त्वनाप्रतीतस्योद्देश्यत्वानुपपत्ते ।

अत्र च तप्ते पयसि दध्यानयतीत्यादौ प्रथम पयस्त्वावच्छिन्नोद्देशेन विधीयमानेऽपि दध्यानयने पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वबोधोत्तरमेवापूर्वसाधनत्वावच्छिन्नोद्देश्यताया पार्ष्ठिकत्वात् पयस एवोपदेशविषयत्व पार्ष्ठिकपदोपादानाभ्र विरुध्यते । प्रकृते च न फलचमसत्वावच्छेदेनापूर्वसाधनताऽभिषवादिविधित पूर्वं प्रमिता । तथात्व स यदि सोम विभक्षयिषेत्तमसौ भक्ष प्रयच्छेच सोममित्याद्यनुवादानुपपत्ते । अतस्तात्पर्यग्राहकानुरोधेन सत्यप्युद्देश्यतावच्छेदकावच्छिन्नत्वेनोपदेशविषयत्वे फलचमसस्येत्यसमानविधानता । अतश्च तस्यैव धमाकाङ्क्षाया सत्यपि कर्मैकत्वे कल्पितेन स्थानापत्त्याख्यातिदेशेन क्रयाभिषवादीना सोमधर्माणा प्राप्ति । अत एव प्रकृतोपदेशविषयभिन्नविषयत्वादस्य संस्कारोत्कत्वमाचक्षते ।

अग्न्यङ्गम् ॥ इष्टकाधर्माणामकृष्णत्वादीनामनारभ्याधीतचिति-त्वादीष्टकाविनियोगस्याप्यनारभ्याधीतत्वात् प्राकरणिकेष्टकामात्र-धर्मत्वमिति प्राप्ते । पूर्ववद्गुणभूतमपादेयत्वादिष्टकाप्रयोज्यचयनापूर्व-सम्बन्धित्वस्यैव लक्षणीयस्यानारभ्याधीतास्वप्यविशेषाच्चाग्न्यङ्गभूतधर्म-त्वम् ॥ ३ । ८८ ॥

नैमित्तिकम् ॥ सोमधर्मा अभिषवादय फलचमसेऽपि समान-विधाना.। सोमस्वरूपे आनर्थक्यप्राप्तौ लक्षणीयस्य ज्योतिष्टोमापूर्व-साधनीभूतप्रदेयप्रकृतित्वस्योद्देश्यतावच्छेदकस्य यवेष्विव फलचमसे-ऽप्यविशेषात् । न ह्यत्र सोमत्वमपि विवक्षितम् । फलचमसे स्नाना-पत्त्याऽप्यभिषवाद्यनापत्ते । न च नित्यानामभिषवादीनामनित्यक्रतु-सम्बन्धे अनित्यस्य फलचमसस्य द्वारत्वानुपपत्ति । नित्यानामपि नित्यसोमवदनित्यफलचमसस्य द्वारत्वे उद्देश्यत्व एव वा बाधका-भावात् । इत एव हि उपांशु यजुषेत्यादौ नित्यानां नैमित्ति-कानां च होमादीनामुपांशुत्वादिविषयता ।

न च नैमित्तिकस्य नित्यविनियोगोत्तरप्रतीकत्वेन विलम्बित-प्रतीकत्वादतुल्यत्वम्* । तत्वात्त्वे प्रमाणाभावात् । क्वचित्सत्वेऽपि वा संस्कारविध्युत्तरप्रवृत्तिकत्वे प्रमाणाभावेन तुल्यत्वाच्च । अस्तु वा तत्त्वथापि संस्कारविध्युद्देश्यतावच्छेदकाक्रान्तत्वस्य फलचमसेऽप्यनिवा-रणाच्च । न च संस्कारविधावपूर्वसाधनत्वरूपसामान्यधर्मप्रकारक-सोमविशेष्यकबोधाङ्गीकाराच्च फलचमससङ्ग्रह इति वाच्यम् । एव-

* इत्थमेव पाठ सर्वत्र । नित्यविनियोगोत्तरप्रतीतिकत्वेन विलम्बित-प्रतीतिकत्वादतुल्यत्वम्,—इति तु समीचीन प्रतिभाति ।

एवं यत्र नावयवविघटितसादृश्येन प्रतिनिधिस्तत्र न समानविधानत्वं, न वा कार्यापत्त्याऽपि धर्मप्राप्तिः । यथाऽवघातप्रतिनिधितया नखनिर्लुञ्चनादेः करणे नखेषु प्रोक्षणादेः । यूपावटस्तरण-बर्हिर्वैमौकिकेतिकर्त्तव्यतोपादानेऽपि चरितार्थत्वात् । फलचमसे तु तमसौ भक्ष प्रयच्छेदित्यादिशब्दगतलिङ्गादेवातिदेशकल्पनमिति विशेषः । प्रयोजनं, व्रीहीणां मेध इति मन्त्रस्य पूर्वपक्षे लोपः, सिद्धान्ते त्वूहः । मन्त्रान्तर्गत-व्रीह्यादिपदानां व्रीहित्वसाधनताऽऽश्रित्रसाधनताकानामित्यर्थेनावयवेष्वपि प्रयोगोपपत्तेः ॥३॥१०१॥

नियमार्था ॥ यत्र तु पूतीकादौ तत्त्वेन विधिस्तत्र सकलाङ्गयुक्तसोमजन्ययागप्रयोगासम्भवे पश्चादेव तत्प्रवृत्तेर्न समानविधानत्वम् । न ह्यत्र पूतीकगतावयवानां प्रतिनिधिनियमः । तेषां मन्दसदृशत्वेन पक्षेऽप्यप्राप्तेः । पूतीकपदेऽवयवलक्षणाप्रसङ्गाच्च । न च नियमविधिलाघवानुरोधेन तदङ्गीकारः । तस्य फलमुखत्वेन निषादस्थपत्यधिकरणन्यायेनाकिञ्चित्करत्वादिति प्राप्ते ।

पूतीकपदार्थस्य हि पूतीकत्वस्य नात्र करणत्वं श्रुतं, द्वितीयान्तत्वात् । अतश्च नियमविधिलाघवानुरोधेन तथा न पूतीकत्वस्य साक्षाद्यागसाधनत्वं लभ्यते । अपि त्ववयवनिष्ठसाधनतानान्तरीयकप्रयोजकत्वमिति न पूतीकपदेऽवयवलक्षणा । सदृशनियामकन्यायप्रवृत्तेः पूर्वमेव चास्य विधेः प्रवृत्तेर्नियमविधित्वोपपत्तिः । ततश्चात्रापि कतिपयावयवसाधनत्वस्य सोमप्राप्त्यादेव सिद्धेः समानविधानत्वम् ॥३॥१०२॥

संस्थाश्च ॥ ज्योतिष्टोमे चतस्रः संस्था अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंज्ञाः । संस्था नाम क्रतुप्रयोगवृत्तिस्तोत्रोपरमः । तत्र द्वादश

वस्तुतस्तु गुणकामवाक्य इवाच भावनान्तरमेव विधीयते। अनेकगुणोपादानाच। अतश्च तत्र एवेतिकर्त्तव्यताकाङ्क्षयाऽतिदेशकल्पनमित्यपि शक्यं वक्तुम्। अत एव न्यग्रोधस्तिभिनीनामाहरणस्यैवौपदेशिकत्वान्न क्रय इति केचित्। प्रयोजन, गुणकामप्रवृत्त्यप्रवृत्ती। सोमपदवतोमन्त्रस्य लोपोहौ च ॥३॥१००॥

प्रतिनिधिश्च ॥ ब्रीह्याद्यभावे नीवारादिसदृशप्रतिनिधेरपि संस्कारविधितः पूर्वं साधनत्वावगमात्समानविधानत्वम्। सकलाङ्गयुक्तब्रीहिजन्ययागप्रयोगासम्भवे कर्मशास्त्रेण तदाक्षेपादिति प्राप्ते।

सत्यमुत्तरकालन्तदाक्षेप., तथापि ब्रीहिशास्त्रार्थालोचनवेलायामेव ब्रीहित्वजातेर्यागसाधनत्वेऽवगते तदन्यथानुपपत्त्या तदवच्छिन्नव्यक्तेस्तदारम्भकीभूतावयवानां च साधनत्वमाक्षिप्यते। अतश्च जातिव्यक्त्यवयवसाधनतानां पूर्वमेवावगतानां सर्वासामसम्भवे कतिपयग्रहणस्योत्तरकालप्रतीतिकत्वेऽपि स्वरूपेण पूर्वावगतेः समानविधानत्वोपपत्तिः। न हि नीवारत्वेन रूपेण तेषामुपादान, येन तद्रूपेण साधनत्वबोधस्योत्तरकालिकत्वादसमानविधानत्वापत्तिः। अपि तु ब्रीह्यारम्भकावयवसमानजातीयकतिपयावयवारब्धत्वात्। अतश्च तेषां ब्रीह्यवयवनिष्ठसाधनतासम्पत्त्यर्थमवर्जनीयतयोपादानेऽप्यवयवसाधनतायाः संस्कारविधिभ्यः पूर्वमेव प्रमितत्वात्समानविधानत्वोपपत्तिः। संस्कारविधिषु हि प्रकृतापूर्वसाधनीभूतसंदेयद्रव्यप्रकृतित्वत्वावच्छिन्नस्यैव प्रकृतित्वस्योद्देश्यतावच्छेदकत्वाद्वयवनिष्ठसाधनताया अवयवनिष्ठसाधनतातोभेदेऽपि* न विरोधः।

---

* अवयविनिष्ठसाधनतातो भेदेऽपि,—इति भवितुमुचितम्।

ष्टोमादिवत् प्रकरणाविशेषाद्दीक्षणीयादिधर्माणामुभयार्थत्वमिति प्राप्ते।

फलवत्त्वज्ञानं विना धर्माणामङ्गत्वबोधानुपपत्तेस्तस्य च गुणस्यत्वे आश्रयसम्बन्धव्यतिरेकेणावुध्यमानत्वादाश्रयस्य च स्वविधिविहितस्य लाभसम्भवे गुणेनोत्पत्तिविनियोगप्रयोगाणामनाक्षेपाद्धर्माणां गुणान्वयात् पूर्वमेवाश्रयान्वयस्य तद्विधिपर्यवसानार्थमवश्यं वाच्यत्वेन विरम्य व्यापारत्वापत्तेर्नोभयार्थत्वम्। न ह्येवमाश्रयनिष्ठफलवत्त्वज्ञानं गुणान्वयाधीनम्। तद्बोधव्यतिरेकेणापि यागस्य क्रियारूपस्य फलवत्त्वबोधोपपत्तिः। गुणे तु फलवत्त्वज्ञापकविधिवैयर्थ्यापत्त्यैव क्षतिमाधाश्रयान्वयस्य धर्मान्वयात् पूर्वमवश्यं वाच्यत्वम्। अत एवाश्रयोगुणनिष्ठकरणतासम्बन्धको गुणकरणतावच्छेदककोटिप्रविष्टो वेति करणाकाङ्क्षैव विततत्वा आश्रयाकाङ्क्षेति मूलमवादः। अतोधर्माणामाश्रयाङ्गत्वमेव। गुणभावनायान्तु आश्रयतोधर्मातिदेश इति सिद्धम्।

प्रयोजनं, यद्यपि न गुणकामप्राप्तिरूपं सम्भवति। संस्थानां विकृतित्वेऽपि तदाश्रयभूतस्य ज्योतिष्टोमस्य प्रकृतिभूतस्य सत्त्वेनैव सद्योमानाद्याश्रितगुणकामानां षोडशाद्यभ्यासाङ्गभूतग्रहणाद्याश्रितानां वा गुणकामानां प्राप्त्युपपत्तेः। नाप्युद्भिदादीनां वैकल्पिकसंस्थाप्रकृतित्वरूपम्। यागत्वसादृश्याधिक्येन ज्योतिष्टोमप्रकृतित्वस्यैवोपपत्तेः। तथापि यत्राथैव भूर्वैश्यदेत इत्यादौ न यागत्वपरिबाधकपदश्रवणं, तत्र वैकल्पिकसंस्थाप्रकृतित्वं पूर्वपक्षे। सिद्धान्ते ज्योतिष्टोमप्रकृतित्वमेवेति द्रष्टव्यम्। संस्थाङ्गभूतधर्मभेदे याजुर्वैदि-

स्तोत्राण्यग्निष्टोमे। तत्राग्निष्टोमस्तोत्रमन्त्यम्। साऽग्निष्टोमसंस्था नित्या काम्या च। संयोगपृथक्त्वाद्दध्यादिवत्। उक्थ्येऽग्निष्टोमस्तोत्रोत्तर-स्त्रीण्यन्यान्युक्थ्यस्तोत्राणि। सोक्थ्यसंस्था। षोडशिनि तदुत्तरं षोडशिस्तोत्रम्। सा षोडशीसंस्था। अतिरात्रे तदुत्तरं द्वादश स्तोत्रात्मकास्त्रयो रात्रिपर्याया आश्विनस्तोत्र च। साऽतिरात्रसंस्था। याश्चात्यग्निष्टोमवाजपेयाप्तोर्यामाख्या अन्यास्तिस्रः संस्था गण्यन्ते, ता एतास्वेवान्तर्भूताः। यत्राग्निष्टोमस्तोत्रोत्तरं उक्थ्यान्यकृत्वा षोडशि-स्तोत्र क्रियते, सा अग्निष्टोमसंस्थैवात्यग्निष्टोमपदवाच्या। यथावस्थित-षोडश्युत्तरं यत्र वाजपेयस्तोत्र क्रियते, सा षोडशीसंस्थैव वाजपेयपद-वाच्या। यत्रातिरात्रे चतुर्थो रात्रिपर्याय-स्तोत्रत्रयात्मकोऽवर्धते, तत्रा-तिरात्रसंस्थैवाप्तोर्यामपदवाच्या। तत्रात्यग्निष्टोमो राजन्यस्य नित्यः। अत्यग्निष्टोमे राजन्यस्य गृह्णीयादिति वचनात्। अन्यास्तूक्थ्यादयः काम्याः। पशुकाम उक्थ्य गृह्णीयात्, षोडशिना वीर्यकाम' स्तुवीत, अतिरात्रेण प्रजाकाम याजयेदिति वचनेभ्य'। अत्राग्नि-ष्टोमादिशब्दानां प्रचुरप्रयोगात् संस्थास्वेव शक्ति', तदति ज्योति-ष्टोमे निरूढलक्षणा, तदति क्रत्वन्तरे सार्मतिकी, ग्रहणे स्तोत्रे च गौणीत्येवं कौस्तुभे द्रष्टव्यम्।

अतश्च संस्थानामेव फलसम्बन्ध'। ग्रहणस्तोत्रादिक तु तत्त-दाक्ये वाक्यान्तरप्राप्तमनूद्यते। संस्थापदार्थेऽतिप्रयोगस्य प्रतिसम्ब-न्ध्यपेक्षायाश्च प्रकरणाज्ज्योतिष्टोमकत्तरैवाश्रयत्वेनान्वीयते। तदेत-त्सर्वमिन्द्रियकामाधिकरणे स्थितमेव। इह तु सर्वगुणकामाश्रय-भामानविधेर्न वेति चिन्तायां, फलवत्त्वेन सत्त्वादीनामपि ज्योति-

## अथ सप्तमः पादः।

प्रकरणाविशेषात् ॥ दर्शपूर्णमासयोर्वेदिबर्हिषी तद्धर्माश्च खननलवनादयः किमङ्गप्रधानसाधारणहविरासादनार्थां उत प्रधानाङ्गभूतहविरासादनमात्रार्था इति विचारे। वेद्यां हवींष्यासादयति बर्हिषि हवींष्यासादयतीति वचनेन वेदिबर्हिरासादनस्य हविरुद्देशेन विधानादर्थान्तरयोरपि हविरर्थत्वप्रतीतेर्हविः स्वरूपे चानर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकजिज्ञासायां अप्रतिबद्धफलवत्प्रधानाधिकाराख्यप्रकरणस्यैव तात्पर्यग्राहकत्वावसायात्तेन चाङ्गत्वसम्बन्धस्यैव शाब्दस्य लक्षणाघटकतया अवगमात् प्रधानापूर्वाङ्गभूतहविरर्थत्वमेवेति प्राप्ते।

प्रकरणेन वाक्यसङ्कोचे प्रमाणाभावादानर्थक्यपरिहारार्थं यथा प्रधानप्रकरणेन तात्पर्यग्रहस्तथा दुर्बलेनापि अङ्गाधिकाराख्यतत्प्रकरणेनापि। अत एवानारभ्याधीताङ्गानुष्ठानसादेश्यस्यापि तात्पर्यग्राहकत्वमुक्तम्। तेन सर्वार्था एवैते। अस्तु वा प्रधानप्रकरणस्यैव तत्। तथापि नाङ्गत्व सम्बन्धघटकं, गौरवात्। अपि तूपकारकत्वमात्रं, अभ्युदितेष्ट्यां दधिपयसोरिव। सम्बन्धमात्रं वा स्वर्गादिवद्गम्येत्यथ। अतश्च प्रधानापूर्वोपकारकहविरर्थत्वमात्रावगते रङ्गतदङ्गहविषामपि अनारभ्याधीतानां प्राकरणिकानां वा प्रधानोपकारकत्वाविशेषात् सर्वार्थत्वम् ॥१॥१०४॥

कादिप्रायश्चित्त पूर्वपक्षे। सिद्धान्ते त्वविज्ञातमपि। तथा, यज्ञस्याग्नीदृषमग्नौयेत्यादि यज्ञपदोपेतमन्त्रे अविकृत प्रयोग पूर्वपक्षे। सप्तयायामस्य लोपात्। सिद्धान्ते तु यज्ञस्य सप्तायायाग्नौरित्येव मूहितव्यम्, इत्याद्यपि द्रष्टव्यम् ॥२॥१०२॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

तृतीयाध्यायस्य षष्ठः पादः ॥

दैवर्थ्याददृष्टरूपभोक्तृत्वार्थमेव युक्तम्। भोक्तृत्वस्य कर्त्तृत्वापेक्षया अभ्यर्हितत्वाच्चैवम्। शरीरादीनामपि स्वावच्छेद्यजीवव्यक्तिगतत्वसम्बन्धेन भोक्तृत्वोपयोगित्वमव्याहतम्। न चैवं प्राधान्यापत्तिः, चेत्रसंस्काराणां बीजावपनार्थत्वस्येवात्मसंस्काराणामपि क्रतुजन्यफलाधानयोग्यताजननार्थानां क्रत्वङ्गत्वोपपत्तेः। अत एव सर्वैरेव संस्कारैः स्वस्वावान्तरादृष्टद्वारा समुच्चित्य प्रधानफलानुकूलातिशयविशेषो जन्यते। प्रधानफलमेव चात्मन्युत्पद्यते इति तदर्था एव संस्कारा नाङ्गार्थास्तत्फलस्य क्रतुगामित्वात्। यत्र तु दृष्टविधया वचनादेव वा कर्त्तृत्वोपयोगित्वं, यथा प्रायमिकशुद्ध्यर्थस्नानाचमनादौ हिरण्यमालिनः प्रवरणीयादौ च बहुवचनात्तच कर्त्तृत्व एवोपयोगादङ्गप्रधानार्थत्वम्। अत एव तादृशस्थले अङ्गविकृतिषु तस्यातिदेशः॥३॥१०५॥

चिकीर्षया॥ सोमे षट्त्रिंशत्प्रक्रमादिपरिमाणां वेदिं विधाय श्रुतं, इयति शक्ष्यामहे, स्यां कर्त्तुमिति। सा वेदिर्यद्यपि देशत्वादङ्गप्रधानार्थतया प्रयुज्यते, तथापि दीक्षादक्षिणान्यायेन उभयवचनात् प्रधानमात्रार्था। कर्त्तुमिति हि तुमुना इच्छार्थकेन चिकीर्षितार्थत्वप्रतीतेः प्रधानस्यैव चिकीर्षितत्वादङ्गानाञ्चाचिकीर्षितानामपि चिकीर्षितप्रधानार्थत्वेनैवानुष्ठानात् प्रधानमात्रार्थैव वेदिः। स्थितन्तावदपर्यवसितम्॥

तथा प्रधानेन॥ दर्शपूर्णमासयोश्चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामिति श्रुतम्। तत्रायेतौ मन्त्रौ पौर्णमास्यमावास्यायदवाच्यप्रधानमात्रसंयोगात्तद्विरभिमर्शनार्थावेव। न चात्र

फलसंयोगात्तु ॥ दर्शपूर्णमासयोर्ज्योतिष्टोमादौ केशश्मश्रुवपनादयः तावत् क्रतुयुक्तपुरुषसंस्कारार्था न त्वारादुपकारकाः। केशश्मश्रु वपते, नखानि निकृन्तते, दतोधावते, स्नाति, ऽभ्यङ्क्ते इत्यादावात्मनेपदनिर्देशेन पुरुषार्थत्वावगमात्। क्रियाफलस्य ह्यात्मगामित्वे आत्मनेपदम्। आरादुपकारकत्वे तु तत्फलस्य क्रतुसाद्गुण्यस्य क्रतुगतत्वेन नात्मगामित्वम्। यत्त्वपान्तरादृष्टं, न तत् क्रियाफलम्।

यद्यपि स्नातौ अदू च धातुः परस्मैपद्येव, तथापि छन्दस्यात्मनेपददर्शनात्तस्य च स्वार्थकत्वे सम्भवति साधुत्वार्थत्वस्यान्याय्यत्वात्त्वरितेत्यादिविधेरेवानित्यत्वं परिकल्प्यात्मगामिक्रियाफलत्वाङ्गीकारो न दोषाय। एव दतोधावत इत्यादौ। दन्तानां द्वितीययाऽपि संस्कार्यत्वावगमः। पयोव्रतं ब्राह्मणस्येत्यादौ षष्ठ्या। स्नानस्य तु सक्तावकर्पणार्थत्वलिङ्गात्। एवं वपनेोऽपि वक्ष्यते। अन्ततो यत्र न किञ्चिद्गमकं, तत्र दौचासमाख्यैव तथा। यमादिपरिग्रहानुकूलपुरुषसंस्कारवाचित्वात्। पुरुषस्य च क्रतूपयोगित्वं कर्त्तृतया क्रतुजन्यफलभोक्तृतया च। तदिह संस्काराः किं कर्त्तृत्वांशोपयोगिन उत भोक्तृत्वांशोपयोगिन इति चिन्तायाम्।

भोक्तृत्वार्थत्वे समप्राधान्यापत्तेः प्रकरणावगतक्रतुसम्बन्धबाधापत्तिः। अतः कर्त्तृत्वार्थाः। दन्तधावनादीनां शरीरसंस्कारार्थत्वात्तस्य च परलोकभोग्यफलभोक्तृत्वेऽनुपयोगादपि तथात्वम्। अतश्च कर्त्तुरङ्गप्रधानार्थत्वात् संस्काराणामपि तथात्वमिति प्राप्ते।

कर्त्तृत्वस्य शरीरादिवदेव संस्कारव्यतिरेकेणापि जायमानत्वा-

तयाने वाक्यभङ्गोपापत्तेः। अपि तूपकारकत्वाच दीत्यङ्गप्रधानार्थावेव मन्त्रौ ॥३॥१०॥६।१०७॥

दीचादक्षिणम् ॥ ज्योतिष्टोमे दीचा, दण्डेन यजमानं दीचयतीत्यादिका, दक्षिणा च गौश्चाश्वश्चेत्यादिका, श्रुता साङ्गप्रधानार्था। दीचायास्तावद् द्वितीयया पुरुषसंस्कारिकाया वपनाधिकरणन्यायेन फलिसंस्कारकत्वप्रसक्तावपि यो दीचितो यदग्नीषोमीयं पशुमालभते दीचितः सोम क्रीणातीत्यादौ दीचितग्रहणविरोधेनेष्टकाः प्रचतीत्यादिवद्विशेषणीभूतदीचाया अपि कर्तृसंस्कारद्वाराऽग्नीषोमीयद्यर्थत्वप्रतीतेस्तस्य च स्वतन्त्रविधायकत्वे गौरवादनुवादविधया दण्डेन दीचयतीत्यादौ हिरण्यमालिन इति पञ्चवचनवत्कर्तृसंस्कारकतातात्पर्यग्राहकत्वावगतेः कर्त्रङ्गप्रधानार्थत्वेन दीचाया अप्यङ्गप्रधानार्थत्वात्। दक्षिणायास्तु कर्त्रानयनार्थत्वादेवाङ्गप्रधानार्थत्वं स्फुटमेव। एवं च दीचाः सोमस्य दक्षिणाः सोमस्येति वाक्यद्वयं प्रात्यरत्वरासाधारणसम्बन्धमात्रदायानुवादः। इतरथा परिसङ्ख्यापत्तेरिति प्राप्ते।

वचनामर्थक्यभिया प्रधानमात्रार्थत्वम्। फलतः परिसङ्ख्यानाच न चैदोषापत्तिः। न च वचनस्य प्रधानप्रयुक्तमाच परत्वेनाप्युपपत्तेरङ्गानामनिष्टत्तिपरत्वे मानाभावः। प्रसङ्गसिद्धिहृतिकारकत्वादिभिराकर्तुमशक्यतया वचनस्याङ्गोद्देश्यतामाचनिवृत्तिफलत्वावश्यकत्वाद् प्रयुक्तस्य इत्याङ्गेऽपि प्रविष्टत्वेनोभयसिद्ध्युपपत्तेः। प्रयुक्तनिवृत्तौ चाङ्गताङ्गीकारे फलाभावाच। न च दक्षिणायाकौ परिक्रयार्थत्वोपपत्तावपि दण्डेनेत्यादिवाक्येन दीचायाः प्रसक्तस्य

पौर्णमास्यादिशब्दौ कालपरौ तथात्वे द्वितीयया सप्तम्यर्थलक्षणा-नुपपत्तेः। आमन्त्रानि हवींष्यभिमृशतीति प्राप्ताभिमर्शनानुवादेन मन्त्रकालोभयविधौ वाक्यभेदापत्तेश्च। काले निमित्तेऽभिमर्शनो द्देशेन मन्त्रविधौ प्रतिपदादिकालीनाभिमर्शने मन्त्रानापत्तेश्च। पौर्णमास्यादिपदाभ्यां पौर्णमास्यादिप्रयोगस्याधिकरणत्वविधौ चोभयत्र प्रातिपदिके प्रत्यये च लक्षणाप्रसङ्गो वाक्यभेदश्च तदवस्थ एव। प्रयोगस्य निमित्तत्वाङ्गीकारे च लक्षणाद्वयप्रसङ्गो विकृतावप्राप्त्या-पत्तिश्च। अतो लाघवात् प्रातिपदिकेनैव पौर्णमास्यादिप्रधानमात्र-सम्बन्धिहविर्लक्षणात्तदुद्देशेनैव मन्त्रविशिष्टमभिमर्शनं विनियुज्यते। मन्त्रमात्रं वा तदुद्देशेन विधीयते। अभिमर्शनं तु प्रकरणप्राप्तानु-वादः। उत्पत्तिवाक्ये च हविःशब्देन प्रधानमात्रहविरूपादानमुप-संहारविधया न विरुध्यते। अतः प्रधानमात्रार्थौ मन्त्रौ॥

क्षितादुत्तरम्॥ यद्यपि चिकीर्षितार्था वेदिस्तथापि साङ्गस्यैव, फलसामर्थ्येन चिकीर्षितत्वादङ्गप्रधानार्थैव सा। वस्तुतस्तु। देश-त्वात्तस्याः प्रकरणादेवाङ्गप्रधानार्थत्वसिद्धेरर्थवाद एवायमियति शक्ष्यामह इति। अत एव शक्ष्यामह इति वचनात् कर्त्तृप्रचारमा-त्रार्थत्वमङ्गीकृत्याङ्गप्रधानार्थत्वमपास्तम्। अतः सर्वार्थायावेदेरग्नी-षोमीयादौ प्राकृतहविरासादनार्थवेदिबाधकत्वं तद्विकृतौ चाति-देशे सिद्धो भवति।

यत्तु दाटशे प्राकृतवेदे प्रसङ्ग इति वक्ष्यते। तत्कर्त्तृप्रचार-मात्रार्थत्वं कृत्वा चिन्तया। द्वितीयस्योत्तरम्। सत्य पौर्णमास्यादि-शब्दाभ्यां प्रधानसम्बन्धिहविर्लक्षणा। तथापि सम्बन्धोनाङ्गत्वाच्च,

शेन विधावैफल्यमोद्देशविशेषणस्याविवक्षापत्तेः बर्हिर्वेदेिव इत्यस्यानुवादायोगाद्विधाने वाक्यभेदापत्तेरगत्या देशविशेषणलक्षणया श्रोषणमात्रोद्देशेन विधीयते। न च देशविशेषणलक्षणापेक्षया मायवादत्वेदित्वविशिष्टबर्हिर्वेदित्वमेव लक्षणया विधीयतामिति वाच्यम्। विशेष्यविशेषणभावे विनिगमनाविरहात्।

द्वितीयोदाहरणेऽपि सौमिकयूपार्थवेदेर्दर्शलेनाङ्गप्रधानार्थत्वस्य स्थापितत्वाद्यूपार्थद्वयेऽपि वेदेः प्राप्तत्वादर्थोद्देशेन तद्विधाने परिसङ्ख्यापत्तिः। न चाग्नीषोमीयादिपश्वाङ्गत्वेऽपि वेदेस्तदङ्गभूतदूपमात्राङ्गत्वे प्रमाणाभावः। प्रयोगविधिना साङ्गानामेवाङ्गानां प्रयोगविधानात्। अन्यथा तदङ्गप्रयाजपशुपुरोडाशादिहविरासादनादौ वेद्यादेरनापत्तेः। न च वाक्येन वेदेर्यूपार्थाङ्गत्वेन विधानात् प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्तेः परिसङ्ख्यात्वानापत्तिः। यद्विंशप्रक्रमपरिमाणार्थवादस्य सति प्रत्यासत्त इत्यस्यार्धमात्रार्थत्वेऽनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्तेः।

न चैवमपि फलतः परिसङ्ख्यात्वात् वेदेर्याप्राप्यमाप्रकप्रमाणप्रतिबन्धाभावेन प्राप्तपरिसङ्ख्यात्वापत्त्या वेदेर्यावश्यकत्वात्। अतो वरं देशविशेषलक्षणैका। न चार्थोद्देशेन बर्हिर्वेदिमात्रविधानादर्थान्तरे च वेदेरेव प्राप्तत्वादनुवादोपपत्तेर्न लक्षणाऽपीति वाच्यम्। अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्। तत्राप्यन्तर्वेदिपद एव लक्षणाङ्गीकारे बर्हिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्तेरर्धमन्तर्वेदि अर्ध बर्हिर्वेदीति पदेर्लक्षितदेशविशेषविशिष्ट-मानस्यैव यूपोद्देशेन मानोद्देशेनैव वा विधानम्। तत्प्रयोजनं तु, यूपैकादशिन्यां

प्रधानमात्रार्थत्वस्य यो दीक्षित इत्यादिवाक्येन दीक्षायाम् अङ्गाङ्गत्वविधायकेन बाधितस्य प्रतिप्रसवार्थता दीक्षाः सोमस्येति वाक्यस्याश्रितेति वाच्यम्। गौरवेणाग्नीषोमीयादिवाक्यस्य दीक्षाविधायकत्वानुपपत्तेः। अतोऽनुवादविधयैव तद्बाधकत्वायुक्तमेव परिसङ्ख्यात्वम्।

वस्तुतस्तु गौरवभियैवानुवादविधयाऽपि न बाधकत्वम्। अपि तु प्रधानाङ्गभूतदीक्षायुक्तपुरुषानुवाद एव य एवं विद्वानिति-वद्दीक्षितपदम्। अतस्य दीक्षावाक्यस्यानुवादकत्वमेव दक्षिणाप्रशंसा-फलम्। अतः प्रधानमात्रार्थमेव दीक्षादक्षिणम्। तथापि तु नाङ्गेषु प्राकृती अन्या वा दक्षिणा। प्रसङ्गेन कार्यसिद्धेर्दातिदेशे वक्ष्यमाणत्वात्। प्रयोजनमग्नीषोमीयादिविकारेषु दीक्षादक्षिणयोरनतिदेशः सि-द्धान्ते। अतश्च तेष्वपेक्षितत्वात्कृतोऽस्यादिवत्प्रकृतितोऽप्याहार्यदक्षि-णायाः स्वतन्त्रादिदेशः, अर्थाविष यत्किञ्चिद्दानतिसाधनं द्रव्यं वा दक्षिणेत्यपि तत्रैव वक्ष्यते॥ ३॥ १०८॥

तथा यूपस्य॥ दर्शपूर्णमासयोर्हेतुरन्तर्वेदिकः पादो भवति बहिर्वेद्येक इति श्रुतम्। तथा सोमेऽग्नीषोमीययूपमानं, प्रक्रत्यार्ध-मन्तर्वेदिमिनोत्यर्धं बहिर्वेदीति। तत्रान्तर्वेदिदेश एव तत्तदङ्गत्वेन विधीयते, उतान्तर्वेदियबहिर्वेदिशब्दलक्षितदेशविशेषो वेति चि-न्तायाम्। प्रमाणाभावादन्तर्वेदिदेश एवैकपादोद्देशेन यूपार्धोद्देशेन च विधीयते। तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेशः प्राप्त एवा-नूद्यत इति प्राप्ते।

आद्योदाहरणे तावद्बहिराधादनार्थायादेविक्यावेदेरेकपादोद्दे-

विचारे समाप्तेऽधुना समाख्यायास्तं कर्त्तुं प्रथमं तावत्स्वाम्यतिरिक्त-कर्त्तृसद्भावः प्रतिसमाध्यते।

अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिषु दक्षिणायुक्तेषु कर्मसु यद्यपि तावत्स्वर्गकामो यजेतेति सामानाधिकरण्यात्साख्यायां अपि यागादिकरणिकायाभावनायाः स्वर्गकामकर्त्तृत्वं प्रतीयते, तथापि कर्त्तृत्वस्य स्वतन्त्रः कर्त्ता तत्प्रयोजकोहेतुश्चेति सूत्रद्वयानुसारात् षड्भिर्दीक्षैः क्रयतीति प्रयोगाच्च साक्षात्प्रयोजकसाधारण्येनैवावग-तेरन्यति प्रमाणान्तरे प्रयोजककर्त्तृत्वायोगेऽपि प्रकृते दक्षि-णाऽऽस्नानादिना प्रयोजककर्त्तृत्वस्याप्यवगतेः स्वाम्यतिरिक्तस्यापि कर्त्तृत्वम्।

कर्मकरानतिसाधनवचनो हि दक्षिणाशब्दोनासत्सु कर्त्रन्तरेषू-पपद्यते। न ह्यत्रास्ति किञ्चिद्वलवद्बाधकं येन यदि पत्नीः संयाजयन् कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनोगौर्द-क्षिणा तं स देयाय दद्यादित्यत्र देयस्य ऋत्विक्प्रतिषेधादिवा-दृष्टार्थत्वं लक्षणया कल्प्येत। सामानाधिकरण्यस्य प्रयोजककर्त्तृत्वेना-प्युपपत्तेः। आत्मनेपदस्यापि च साक्षात्प्रयोजकसाधारण्येनाकर्त्तरि फलप्रतिषेधकत्वेनैवोपपत्तेर्न स्वाम्यतिरिक्तस्य कर्त्तृत्वप्रतिषेधकत्वम्।

अत एव यजन्ति याजका इति परस्मैपदप्रयोगः। तेन कस्यापि बाधकस्याभावान्न दक्षिणादानस्यादृष्टार्थत्वकल्पना। अतस्तद्बलाद्दर्श-पूर्णमासयोश्चत्वार ऋत्विज इति वचनाद्धौत्रादिसमाख्यावरणाद्या-म्नानबलाच्च स्वाम्यतिरिक्ता अपि कर्त्तारः। न च स्वामिनोऽशक्तौ दक्षिणादानादिनाऽन्योपादानम्। दक्षिणादेर्नित्यवदाम्नानविरो-

वेदेरविद्विः । वस्तुतस्तु देशविशेषलक्षणायामपि सामान्यतः शाङ्गे विहिताया वेदेरविरोधेनार्थे प्राप्त्युपपत्तेर्यूपैकादशिन्यामपि तदर्थं वेदिविवृद्धिरावश्यकी । अतएव यावद्यूपं वेदिमुद्भन्तीति कल्पसूत्रकारवचनमपि सङ्गच्छते । अतोऽन्यत्प्रयोजनं मृग्यं, देशविशेषलक्षणैव वा नाङ्गीकर्त्तव्येति धेयम् ॥३॥१०९॥

सामिधेनी ॥ सोमे, उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति श्रुतम् । यत् यत्र दक्षिणहविर्धानेऽभिषवस्तत्राग्नीषोमीयादिसामिधेनीरनुब्रूयादित्यर्थः । तत्र हविर्धानशकटः सामिधेन्यङ्गमुत तल्लक्षितोदेश इति चिन्तायाम् । पूर्ववत्परिसङ्ख्यावाक्यभेदाद्यभावाल्लक्षणापरिहाराय सोमधारणे कृतार्थस्यापि हविर्धानस्यैव पुरोडाशकपालन्यायेन सामिधेन्यङ्गत्वमिति प्राप्ते ।

हविर्धानस्यान्यस्याप्राप्तस्य सामिधेन्यङ्गत्वेन विधावपूर्वविधित्वापत्तेः प्रकृतित आहवनीयप्रत्यग्देशस्यातिदेशप्राप्तस्यानियमेन दक्षिणोत्तरहविर्धानसमीपवर्त्तितया प्राप्तेर्दक्षिणहविर्धानलक्षितदेशस्य नियमविधौ लाघवमिति तदनुरोधेन लक्षणाऽपि न दोषः ।

वस्तुतस्तु लाघवस्य प्रमाणानुग्राहकतामिपादस्यपत्यधिकरणन्यायेनौत्तरकालिकत्वाच्च तदनुरोधेन लक्षणाऽनुपपत्तेः यद्यच देशे सुन्वन्त्यभिषुण्वन्ति तस्मिन्नभिषवदेशे सामिधेनीरनुब्रूयादित्यर्थावगमेन हविर्धानस्याप्रतीतेरभिषवदेशस्यैव श्रौतत्वेन विधेयत्वाच्च लक्षणाऽपि । प्रयोजनं, पूर्वपक्षे हविर्धानोपरि सामिधेनीपाठः । सिद्धान्तेऽभिषवदेशे दक्षिणहविर्धानसमीपे ॥३॥११०॥

शास्त्रफलम् ॥ तदेवं पूर्वैः सह प्रकरणस्थानयोर्विरोधाविरोध-

न्यायेन भिन्नानां संस्कार्यभेदं विनाऽनुपपत्तेः। अप्रवृत्तस्य पुरुषस्य प्रवर्त्तनफलकमभ्यर्थनं हि वरणम्। न च तदेकस्मिन् पुरुषे अनेकं सम्भवति। भिन्नानां संस्कार्याणां तत्तत्क्रियासु भिन्नास्वेव विनियोगाच्च विकल्पायवकाशः। दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्याद्यनुवादवचनादप्येवम्।

एवं च ऋत्विजोवृणीत इत्यपि न वरणविधिस्तथात्वे ऋत्विज इति बहुत्वानुवादानुपपत्तेः। अपि तु ऋत्विक्संस्कारकवरणमात्रानुवादो ऋत्विग्धर्माणां तदुत्तरत्वप्राप्त्यर्थस्तद्धर्मविधानार्थश्च। अतो यावन्ति लौकिकानि यावन्ति मन्त्रवन्ति वा वरणानि, तावन्तः कर्त्तार इति सिद्धम् ॥३॥१॥१२॥

चमसाध्वर्यवश्च ॥ अध्वर्य्वादिसञ्ज्ञानां रूढत्वादस्तु भेदकत्वम्। चमसाध्वर्युसञ्ज्ञायास्तु चमसेष्वध्वर्युरित्येवं यौगिकत्वादध्वर्युपुरुषा-दय एवेत इति प्राप्ते। यद्यपि सञ्ज्ञाया यौगिकत्वे चमसाध्वर्यून् वृणीत इति पृथग्वरणाम्नानादेतेषामन्यानां चमसाध्वर्यूणां पूर्ववदेवान्यत्वम्। एवं सदस्यं वृणीत इति वचनात्सदस्यस्यापि। एवं च मध्यतः कारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यव इति ऋत्विक्षमन्वयपदेशोऽपि भेद एवोपपद्यते ॥३॥१॥१३॥

उत्पत्तौ ॥ ते चमसाध्वर्यवोवरणवाक्ये बहुत्वश्रुतेर्बहवः। यद्यपि तथोद्देश्यविशेषणत्वाद्बहुत्वाविवक्षा। तथापि स्वाध्यायोऽध्येतव्य इति वत्संस्कारविध्यन्यथाऽनुपपत्त्या विनियोगकल्पनदशायान्तदिवक्षोपपत्तिः। अनयैव दिशा पुरोहितं वृणीते अध्वर्युं वृणीतइत्यादावेकत्वविवक्षा द्रष्टव्या। वस्तुतस्तु तत्र तत्र विनियोगे चम-

धात् । अतः परकीयखत्वस्य परेणोत्स्रष्टुमशक्यत्वादुत्सर्गमात्रं स्वामिना कार्यम् । अन्यत्तु विशेषतः प्रमाणाभावेऽन्येनैवेति सिद्धम् ॥२॥११॥

तचार्थात् ॥ ते कियन्त इत्यपेक्षायां तत्तत्कर्मणि अध्वर्या-दिसंज्ञापुरस्कारेण तत्तत्कर्मविधानायावन्तो यत्र विधानन्तावन्त एव तत्र ज्ञेयाः । अत एवाग्निहोत्रे एक एवाध्वर्युः, दर्शपूर्णमास-योश्चत्वारः, चातुर्मास्येषु पञ्च, पशौ षट्, सोमे सप्तविंशतिः ।

न च परिक्रयवस्त्रादिकोपादानावश्यम्भावे तस्यैव पाचकत्वावका-दिवत्तत्तत्कर्मकरणनिमित्तावश्य सप्तभविष्यन्तीति वाच्यम् । सन्द्धानां कर्मकरणात् पूर्वमेवाध्वर्युं वृणीत इत्यादिना पूर्वप्रयुक्त-त्वेन कर्मकरणनिमित्तकत्वाभावात् । अपि तु तत्तद्वरणनिमित्तकत्वं तत्तद्वरणजन्यतत्तदानतिनिमित्तकत्व उक्तविधानतिजन्याध्यवसाय-निमित्तकत्व वा । क्षतेऽपि वरणे अहमध्वर्युः स्वामित्यध्यवसायाभावे अध्वर्युशब्दाप्रयोगात् ।

वस्तुतस्तु अध्यवसायस्यापि निश्चयरूपस्य क्षणिकत्वात्तज्जन्योऽभि-मानविशेष एव निमित्तम् । तस्य च सत्रे स्वत एवानतत्वेन वरणा-भावेऽपि दृष्टत्वात एव सत्त्वादध्वर्युत्वाद्युपपत्तिः । अज्ञतायपि होता अवृतः सामिधेनीरन्वाहेति वरणात्पूर्वं होतृशब्दप्रयोगोपपत्तिः । अत एव वरणजन्यादृष्टवत्त्वमध्वर्युत्वादिकमिति प्राभाकरमतमपा-स्तम् । सत्रेऽपि ऋतुयाज्यावरणवत् वरणापत्तेश्च ।

न चैवमप्येकस्यैव तत्तदभिमानोपपत्तेः कर्तृभेदे प्रमाणाभावः । अध्वर्युं वृणीते ब्रह्माणं वृणीत इति तत्तद्विधिविहितवरणानाम-

सरोपकारित्वस्यैवोचितत्वात्। स्वामिपरिक्रीतानामपि शिल्पकारिणां तथा दर्शनाच्च। तथाप्युपगानस्य सामवेदिकत्वादुद्गात्रादीनां सयाणाङ्गानव्यापृतत्वेऽपि* सुब्रह्मण्यो नियतः। अन्ये तु अवरा उपगायन्ति चत्वार उपगायन्तीति वचनान्तरानुसारादनियताः। अत एव नाध्वर्युरुपगायेदिति वचनान्नासौ ॥३।११७॥

विक्रयी ॥ सोमविक्रयी त्वन्य एव। वरणादिकं हि क्रत्वर्थत्वात्तदङ्गपदार्थकरणाय पुरुषानुपादातुं क्रियते। विक्रयस्त्वविहितः क्रयान्यथानुपपत्त्या आवश्यकोऽपि दोषस्वीकारेण रागतः प्रवृत्तपुरुषकर्तृकविक्रयोपजीवनेनापि क्रयसिद्धेरनाक्षेपात्तानङ्गम्। अतस्तत्र प्रवृत्तानामप्राप्तेरन्य एवेति ॥३।११८॥

कर्मकार्यात् ॥ ब्रह्मादयश्चमसाध्वर्य्यवश्च सोमे कर्त्तारः समधिगतास्ते सर्वे ऋत्विक्पदवाच्याः। ऋत्विक्पदस्य ऋत्विग् दधृगित्यादिस्मृत्या कर्तृवाचिक्विन्नन्तत्वनिपातनेन यौगिकत्वावगतेर्वसन्ताख्यऋतुकालीनयागप्रयोगकर्तृत्वाचित्वनिर्णयोनादृष्टरूपऋत्विक्त्वे रूढिमङ्गीकृत्यौणादिकत्वकल्पनाऽनुपपत्तेः। तच्च च सर्वपुरुषेष्वविशेषात्। तस्यैतस्य यज्ञक्रतोः सप्तदश ऋत्विज इति तु एकं वृणीत इत्यादिवदवयुत्यानुवादः। इतरथा परिसङ्ख्यायां त्रिदोषत्वापत्तेः। अदृष्टरूपऋत्विक्त्वकल्पनायां गौरवादेव वरणमेव तज्जन्यादृष्टमेव वा ऋत्विक्पदप्रवृत्तिनिमित्तमित्यप्यपास्तम्। रूढिकल्पनायां प्रमाणाभावात्। ब्रह्मादिवरणानां भेदादनेकादृष्टशक्तिकल्पनापत्तेश्च। व्यापकधर्मस्य वरणत्वस्यैव शक्यत्वाङ्गीकारे तु अतिप्रसङ्ग इत्यस्मन्मत-

* व्यापृतत्वेऽपि,- इति भवितुमुचितम्।

साध्वर्य्यवश्चमसानुन्नयन्ति अध्वर्युः पुरोविभजते इत्यादौ बहुत्वैक-त्वश्रुतेस्तद्विवचोपपत्तिः ॥१॥११४॥

दशत्वम् ॥ ते च दशैकादश वा । न तु त्रयः । चमसानान्ता-वत्त्वात् । अत एव मध्यतः कारिणां होत्रादीनां चतुर्णां होत्रकाणां च मैत्रावरुणादीनां चमसाध्वर्य्यव इति व्यपदेशोऽपि सङ्गच्छते । सदस्यपक्षे तत्सप्तमे एकादशः । एवं च दशपेये क्रतौ सिद्धवद्दश चमसाध्वर्य्यव इति व्यपदेशोऽपि सदस्याभावपक्षे सङ्गच्छते । त्रित्वपक्षे न कथञ्चिदस्योपपत्तिः ॥२॥११५॥

शमिता च ॥ पशौ शमितारमुपनयतीति श्रुतः । शमिता वरणभेदानाम्नानात्सत्यपि सञ्ज्ञाभेदे यौगिकत्वेन प्रकृतेष्वेव ऋत्विक्षु अनृत्विक्षु वा तेषु तस्या उपपत्तेर्नान्यः । तथाप्यध्वर्य्योः पराङावर्त्तते-ऽध्वर्युः पशोः सञ्ज्ञप्यमानादिति वचनेनासामर्थ्यात्तत्पुरुषः प्रति-प्रस्थाता सञ्ज्ञपयेत् । न च तस्य हिंसादोषभिया अप्रवृत्तिः । दक्षिणादिलोभेन तदङ्गीकारेण प्रवृत्त्युपपत्तेः । अत एवार्त्विज्यं निन्दति । ब्राह्मणस्य च शामित्रविषये क्रतौ पृथङ् निषेधो-दोषाधिक्यख्यापनार्थः । अत एव क्रतौ शामित्रे ब्राह्मणलाभेन शूद्रेण क्रियमाणे होमाङ्ग शमितृब्राह्मणाय दद्यादब्राह्मणः स्यादिति वचनं सङ्गच्छत एव । अब्राह्मणः स्यादिति यजमानपर-मिति तु भाष्य ॥३॥११६॥

उपगातारश्च ॥ एवं सोमे समाम्नाता उपगातारोऽपि एतेष्वेव । न चोपगातॄणां कर्म्मगुणत्वेन लोके प्रसिद्धेरेतासां च तुल्यकक्षत्वेन तदभावादन्य इति वाच्यम् । तुल्यानामपि प्रैषप्रैषार्थकारित्वस्वपर-

स्वामिसप्तदशः ॥ सप्तदशस्तु सदस्य । तस्यापि पृथग्वरणाम्नानाच्च समविधानाच्चेति प्राप्ते । सदस्यकर्त्तव्यपदार्थाश्रवणाद्वरणस्य सक्तुन्यायेन विनियोगभङ्गं कल्पयित्वा दृष्टार्थत्वावगतेः सदस्यस्य पाचिकत्वेन सप्तदशश्रुतेः पाचिकानुवादत्वात्पचे तस्य दीचाभावाच्च स्वाम्येव सप्तदशः । कर्मकरत्वेऽपि वा न पत्नी । सप्तदशत्वजनकीभूतापेक्षाबुद्धौ लिङ्गवैरूप्याङ्गीकारे प्रमाणाभावात् ॥२॥१९१॥

ते सर्वार्थाः ॥ तत्तत्क्रतुषु प्रमितानां तेषां कर्तृणामव्यवस्थयैवासति विशेषविधौ लिङ्गप्रकरणाभ्यां तत्तत्पदार्थकर्तृत्वं, न तु तयोर्दुर्बलया आध्वर्यवादिसमाख्यया सङ्कोचः ॥ स्थितं तावदपर्यवसितम् ॥

अग्नयश्च ॥ आहवनीयादयोऽनारभ्याधीतवचनैर्होमाद्यनुवादेन विहिताः पर्णतान्यायेन प्रकृतिहोमाद्यर्था एव विकृतौ हि ये तावद्धोमादयोऽतिदेशेन प्राप्यन्ते, तेषु प्राप्तिकालवैषम्यात् स्पष्टमेव दिरुक्तत्वम् । येऽप्यामनहोमादयोऽपूर्वास्तेषामपि विकृतिसम्बन्धबोधव्यतिरेकेणाङ्गग्राहकत्वानुपपत्तेर्विकृतेश्च क्लृप्तोपकाराङ्गग्रहणार्थं पूर्वमतिदेशकल्पनाऽवश्यम्भावात्तस्य च प्रकृतावाहवनीयप्राप्तिमन्तरेणानुपपत्तेस्तेष्वपि दिरुक्तत्वम् । अतस्तेषु नोपदेशेन नापि यूपावटस्तरणबर्हिर्वदतिदेशेनाहवनीयप्राप्तिः । अतोऽधिकरणं विनैव तद्गति प्राप्ते।

सत्यमतिदेशप्राप्तेषु नाहवनीयाद्युपदेशः । अपूर्वेषु त्वेषामनारभ्याधीतत्वादतिदेशेन प्राप्तिरविरुद्धा । न ह्यामनहोमानां विकृतिसम्बन्धं विना नाङ्गग्राहकत्वम् । उत्पत्तिवाक्ये दृष्टसामान्यस्य भाव्यत्वबोधेनापि शाब्दबोधस्य पर्यवसन्नतया तदनुवादेनाहवनीयविधानोपपत्ते. । अतस्तेऽपि सर्वार्थाः ॥२॥१९२॥

प्रवेश । यजमाने वरणाभावेन ऋत्विक्त्वानापत्तेश्च । सर्वे ऋत्विक्त्वमश्नुवीरन्निति वरणापत्तेश्च । अत एव ऋत्विजोवृणीत इत्यत्रैव वरणविधित्वादेकमेव वरणं पदप्रवृत्तिनिमित्तमित्यपास्तम् । ब्रह्माणं वृणीत इत्यादिविधीनां वैयर्थ्यप्रसङ्गाच्च । एतेन ब्रह्मादिनिष्ठक्रतुयजनान्येव ऋत्विक्पदप्रवृत्तिनिमित्तमित्यपास्तम् । अनेकशक्तिकल्पनातादवस्थ्यात् । अतश्च सर्वे एव ऋत्विक्पदवाच्या इति सर्वेषामेव हिरण्यमालित्वादि ऋत्विक्कार्यमिति प्राप्ते ।

मतम्, ऋत्विक्पदं यौगिकम् । ऋतुयजनसामान्यवाची च सः । तथापि सप्तदशश्रुत्या उद्भिदपदजादिवदेव रूढिमकल्पयित्वैव सप्तदशश्रुत्युन्नीतप्राचीनप्रयोगस्य सहकारित्वकल्पनयैव सप्तदशानामेव ऋत्विक्पदशक्यत्वोपपत्तिः । न चोद्भिदादिपदेषु अतिप्रसङ्गनिराकरणार्थं रूढिकल्पनम् । तथात्वे सोमादिवन्मत्वर्थलक्षणाप्रसङ्गेनैतस्य गुणविधित्वस्यैवोपपत्तेः । न चैव सप्तदशश्रुते परिसङ्ख्यात्वापत्त्या त्रिदोषत्वापत्तिः । ऋत्विक्पदव्युत्पत्तिकारणताकल्पनवेलायामेव* सप्तदशश्रुतेस्तात्पर्यग्राहकत्वकल्पनेन प्राप्तपरिसङ्ख्यात्वाभावात् । अतश्च सप्तदशानामेव ऋत्विक्कार्यं हिरण्यमालित्वादि ॥३॥१९॥

नियम ॥ के ते सप्तदशेत्यपेक्षायां ऋत्विग्भ्यो दक्षिणां ददातीत्युपक्रम्याम्नाते ब्रह्मणे उद्गात्रे इत्यादीनां षोडशानामेव सङ्कीर्तनात्तेषामेव ऋत्विक्त्वम् । अत एव सर्वे यजमानानामेव ऋत्विक्त्वोक्तेरेव यजमानसहितानां दीक्षाश्रवणम् । अतः षोडश तावत्सिद्धिगता ॥३॥१२०॥

---

* इत्ययमेव पाठ सर्वत्र ।

नानि, प्रवोवाजा अभिद्यवः अञ्जन्ति त्वामध्वर इत्यादीनि उप-देशातिदेशप्राप्तानि । प्रैषोत्तरत्वाच्चैषामनुवचनत्वम् । कानिचित्तु प्रैषत्वे सत्येवानुवचनानि, यथा होता यक्षदित्यादीनि । एषां च प्रेष्येत्यध्वर्युप्रैषोत्तरभावित्वाद्धोतर्यजेत्यन्तं प्रैषत्वाच्चोभयरूपत्वम् ।

तदिह मैत्रावरुण- प्रैषानुवचनोद्देशेन विधीयमानः सर्वत्र स्याच्च तु प्रैषान्तानुवचनेष्वेव । उद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वात् । च-शब्दस्यापि प्रैषानुवचनरूपधर्मसाहित्यपरत्वेन प्रैषत्वानुवचनत्वरूप-धर्मयोरेकाधिकरण्यरूपसाहित्यबोधकत्वाभावात् । तस्य च प्रति प्रधानं गुणान्वयन्यायेनैवासम्भतेऽपि सिद्धेरनुवादकत्वाच्च । अतश्च सर्वत्रैव समाख्याप्राप्तकर्त्रन्तरबाधेन वाक्यान्मैत्रावरुणनिवेशः । न चानेकोद्देशे वाक्यभेदोदोषः । अर्धमन्तर्वेदि मिनोतीतिवदाख्यातैकत्वा-भावात् । अत एवैकवाक्योपादानगम्यसाहित्यस्योद्देश्यगतस्याप्रतीत-त्वादेव नाविवक्षापत्तिः ।

न चैवमपि शुद्धप्रैषेष्वध्वर्युकर्तृकत्वस्य शुद्धानुवचनेषु च होतृकर्तृकत्वस्यैव समाख्यया प्राप्तेः कर्त्रन्तरानपेक्षत्वादेव न मैत्रावरुण-विधिः, प्रैषान्तानुवचनेषु तु प्रैषत्वेनाध्वर्युकर्तृकत्वस्यानुवचनत्वेन च होतृकर्तृकत्वस्य प्राप्तेर्विरोधेनोभयोरपि निवृत्तौ कर्त्रन्तरापेक्षायां तत्रैव मैत्रावरुणविधिरिति पार्थसारथ्युक्तं युक्तमिति वाच्यम् । प्रैषान्तानुवचनानामपि हौत्र एव पाठस्य वार्त्तिकोक्तत्वेनाध्वर्युकर्तृ-कत्वाप्राप्तेः । उभयत्र पाठेन तत्प्राप्तावपि च विकल्पेनोभयनिवे-शोपपत्तेर्निवृत्त्यप्रसङ्गाच्च ।

यदपि वार्त्तिके अग्नीषोमीयाङ्गभूतेषु प्रैषान्तानुवचनेषु यजेति

श्रितादुत्तरम् ॥ नात्र समाख्यया लिङ्गप्रकरणयोर्बाधः। किन्तु ताभ्यामव्यवस्थया प्राप्तानां कर्तृणां व्यवस्थामात्रमपेक्षितं क्रियते। अतश्च हौत्रसमाख्याताः पदार्था होत्रा कर्तव्या आध्वर्यवसमाख्याताः चाध्वर्युणा औद्गात्रसमाख्याता उद्गात्रा। सर्वेषु हि ऋग्वेदयजुर्वेदसामवेदेषु ये पदार्था विहिताः तेषामेताः क्रमेण समाख्या याज्ञिकानां प्रसिद्धाः। यौगिकाश्चैते शब्दा न पदार्थानामध्वर्य्वादिसम्बन्धव्यतिरेकेण सम्भवन्तीति तेषु तेषां योग्यत्वात्कर्तृत्वसिद्धिः ॥ ३॥१९३॥

तद्योपदेश ॥ अयं चोत्सर्गोऽवरणाद्यजमानस्य याज्येत्यादिकाद्विशेषसमाख्यया च पोत्रीय नेष्ट्रीय याजमानमित्यादिकया अपोद्यते। न चैवं तादृशविषये सामान्यसमाख्याया निर्विषयत्वापत्त्या आनर्थक्यप्रतिहतन्यायेन विकल्पापत्तिः। यथाशक्ति प्रयोगे पोत्रादीनामशक्तौ सविषयत्वोपपत्तेः। वस्तुतस्तु हौत्रादिसमाख्यायाः सामानाधिकरण्यसम्बन्धेन ऋग्वेदविहितकर्मत्वसुपलक्षणीकृत्यैव तत्तत्पदार्थेषु होत्रादिविधायकत्वं निरूढसम्बन्धेनाग्नीध्रोपोत्रीयशाखात्वादिलिङ्गसुपलक्षणीकृत्योपात्तत्वविधायकत्वमिव यत्किञ्चित् प्राचीनमित्यस्य। अतश्च तद्देव केषु चित्पदार्थेषु तदभावेऽपि न क्षतिः। अत एव दक्षिणारहितकाम्यादौ यजमानस्यैव कर्तृत्वेऽपि समाख्यायाम काचिदनुपपत्तिः ॥ ३॥१९४॥

प्रैषानुवचनम् ॥ ज्योतिष्टोमे मैत्रावरुणः प्रेष्यति चानु चाहेति श्रुतम्। सन्ति च तत्र केचित् केवलाः प्रैषाः, अग्नये समिध्यमानायानुब्रूहि यूपायाज्यमानायानुब्रूहीत्यादय। केवलानि चानुवच-

न चैवं सार्वत्रिकत्वापत्तिः। अनुवादस्य सति सम्भवे सन्निहितगामित्वनियमेन यानि प्रैषानुवचनान्यधिकृत्यायं विधिः प्रवृत्तस्तद्विषयत्वस्यैवाङ्गीकारात् ॥ ३॥१२५॥

चमसात् ॥ चमसेषु विशेषसमाख्यया चमसाध्वर्युरूपया तेषामेव होमादौ कर्तृत्वम्। समासान्तर्गताध्वर्युपदस्य रूढ्या शुद्धाध्वर्युपदवदेव वरणादिनिमित्तत्वाविशेषात्। इयांस्तु विशेषः, यत्तस्य सर्वकार्येषु विनियोग एतेषां तु चमसेष्वेवेति। यदि तु तत्तद्वरणानां भेदादनेकशक्तिकल्पने गौरवमाशङ्क्येत। ततोऽस्तु एष्वध्वर्युशब्दस्य गौणत्वम्।

न च विनिगमनाविरह इति शङ्क्यम्। चमसाध्वर्युवरणवाक्ये रूढिकल्पने चमसाध्वर्युपदस्यैव तत्कल्पनापत्तेरध्वर्युपदस्य ततोभिन्नस्य शक्त्यन्तरकल्पनाप्रसक्त्यभावात्। अतो लाघवात् प्रचुरप्रयोगाच्चाध्वर्युपदस्यैव प्रसिद्धाध्वर्यावेव शक्तिरितरेषु तु गौणी। तथापि तु यज्ञादौ तस्यापि होमादिकर्तृत्वाद्धोमकर्तृत्वसादृश्यमात्रेणैतेषु गौणत्वोपपत्तेः सामान्यसमाख्यां बाधित्वा चमसेष्वेतेषामेव होमादिकर्तृत्वमिति प्राप्ते।

गौणत्वस्यावश्यकत्वे चमसवृत्तिहोमादिकर्तृत्वेनापि गौणत्वोपपत्तौ तस्योपजीव्यसामान्यसमाख्याबाधे प्रमाणाभावाच्चमसेष्वध्वर्युरेव होमादिकर्त्ता तस्यान्यत्र व्यापृतत्वे तु गौणसमाख्यया चमसाध्वर्यवस्तेषामप्यसम्भवे इतरस्य इत्येवं प्रतिप्रस्थात्रादयः ॥ ३॥१२६॥

वेदोपदेशात् ॥ औद्गात्रे सामवेदे श्येनेन युक्तो ज्योतिष्टोमोपसंगात्। तत्र प्राकृताङ्गातिदेशेन सामा ऋत्विजः प्राप्ता औदटे-

शब्दस्य प्राकृतत्वात्तस्याचेऽतिदेशेनाध्वर्यो: प्राप्तिः । प्रेष्येति प्रैषान्तराम्नानाद्वा । इतरमन्त्र इति न्यायेन प्रतिप्रस्थातुः । सोमाङ्गान्तर्वर्त्ति-यजेति शब्दे तु होतर्यजेति लिङ्गानुरोधेन समाख्यां बाधित्वा मैत्रावरुणस्य । तदतिरिक्तपदान्तरेषु होतुरेव । तत्रश्चांशभेदेन मानाकर्तृप्राप्तेरेकपदार्थे च कर्तृद्वयासम्भवात् प्रच्युतयोर्मैत्रावरुणविधिरित्युक्तम् । तदपि यजेति शब्दस्याग्नीषोमीयादौ होत्र एव प्रत्यक्षपठितत्वेन समाख्यया अतिदेशकाध्वर्य्यवादिबाधेन होतृप्राप्तेस्तस्य च होतर्यजेति लिङ्गेन बाधेऽपि तत्पुरुषस्य मैत्रावरुणस्यैव यजेतिपदे तदेकवाक्यतापन्नपदान्तरेषु च प्राप्तेरुपेक्षितम् ।

अबाधेऽपि वा समाख्यायादुर्बलत्वेन यजेति शब्दे तदेकवाक्यतापन्नपदान्तरेषु च प्रतिप्रस्थातुरेवैकस्य प्राप्तेर्न कर्त्रन्तरापेक्षा । एवं सोमाङ्गभूतेष्वपि । अतः सर्वत्रैव मैत्रावरुण इति प्राप्ते ।

वाक्यभेदाङ्गीकारेऽनुषङ्गायत्तेश्च-शब्दवैयर्थ्याच्च पदद्वयेन प्रैषान्तानुवचनान्येवार्धमन्तर्वेदीतिवल्लक्षयित्वा तेष्वेव मैत्रावरुणविधानम् । च-शब्देन धर्मिणोरितरेतरयोगस्य स्वरूपे कार्ये वा असम्भवात्समुच्चयस्य च न्यायादेव प्राप्तेरानर्थक्यतदङ्गन्यायेन धर्मयोरेव प्रैषत्वानुवचनत्वयोरितरेतरयोगप्रतीतेर्निपातस्थले च परस्परान्वयस्य व्युत्पत्तिसिद्धत्वेन वाक्यभेदाभावाल्लक्षणां विनैव परस्परयुक्तप्रैषत्वानुवचनत्वावच्छिन्नोद्देशेन मैत्रावरुणो विधीयते । अत एव प्रैषानुवचनत्वावच्छिन्ने एव लक्षणोपपत्तेर्न युक्तोवाक्यसङ्कोच इत्यपास्तम् । वस्तुतस्तु शूद्रानुवाक्यास्वपि कासुचिन्मैत्रावरुणस्य याज्ञिकप्रसिद्धत्वाच्चशब्दो नेतरेतरयोगार्थं । अपि तु धर्मिसमुच्चयार्थ एव सन्ननुवादः ।

मन्त्रस्यापि तथात्वापत्तिः। अविधेः प्रत्यक्षत्वात्तासाञ्च धात्वर्थान्वयसाध्यत्वात् तृतीययाऽवश्यकरणकभावनायामन्वयावगतेर्देशत्वेन च भावनोत्पत्त्यन्वयित्वाभावेन तत्प्रयोगान्वयित्वात् प्रयोगस्य चाङ्गप्रधानसाधारणत्वाद्भावनाऽन्वयद्वारा पाश्चात्यतद्विशेषणान्वये अविशेषेणोभयान्वयतात्पर्यावगत्योपदेशेनैव प्रधान इवाङ्गेष्वप्यविरोधात्*। अत एव यत्र तृतीयाया अश्रवणाभावो यथा यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या इत्यादौ, तत्र प्रधानकर्मकभावनायामेवान्वयात्तस्यां चाङ्गान्वयाभावेन प्रधान एव प्राकृतस्वरादिबाधकत्वम्। प्रकृते तु समाख्यया प्रधानमात्रविषयत्वात्तस्य च स्वामिकर्तृकत्वेनान्यकर्तृकत्वानुपपत्तेः स्वनिर्विषयत्वापत्त्या कथञ्चिदानर्थक्यतदङ्गन्यायेनाङ्गमात्रविषयकत्वकल्पनेऽपि ऋत्विक्कर्तृकाङ्गविषयत्वकल्पने प्रमाणाभावात्कण्टकविनोदनायौपदेशिकाङ्गविषयत्वमेव कल्प्यते।

वस्तुतस्तु तेषामपि विशिष्य स्वसमाख्ययैव कर्त्तृप्राप्तेर्न प्रधानसमाख्याविषयत्वम्। अपि तु यानि वेदत्रयाविहितानि स्मृत्याद्यनुमितवेदविहितान्यङ्गानि, तद्विषयैव सेति ध्येयम्। अत प्राकृताङ्गेषु नानैव कर्त्तारः। किं च समाख्याया पाठमात्रनिबन्धनत्वेनोद्गीथे चर्वैत्यादिवद्विधाननिबन्धनत्वाभावात् प्राकृतानां च सामवेदे अपठितत्वादपि तद्विषयत्वाभावः ॥३।१।२७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य सप्तमः पादः।

---

* इत्थमेव पाठः सर्वत्र। इवाङ्गेष्वप्यविरोधात्—इति प्रतिभाति।

शिक्या औद्गात्रसमाख्यया वाध्यन्त इति तेषूद्गातैव कर्त्ता । समाख्या हि कर्त्तृप्रापिका, कर्त्ता च प्रयोगाङ्गं, प्रयोगश्च प्रयोगविधिना साङ्गस्यैवैकोविधीयत इति समाख्यया अङ्गेष्वपि कर्तृविधिरुपदेशेन। अतश्च यथैवाश्वलस्येन चरन्तीत्यपान्देशत्वात्माङ्गभावनाविषयत्वप्रतीतेः प्राकृतेषु मयाणादिष्वश्विबाधकत्वं, तथा प्रकृतेऽपि।

न च समाख्यायाः प्रधानमात्रे श्रुताया अपि अङ्गविषयत्वस्य कल्पनीयत्वेन प्रयोगविध्याश्रितत्वात्तस्य चातिदेशप्रापिताङ्गविषयत्वेन तदपेक्षत्वात्तदुपजीविचोदकप्रापितनानाकर्तृत्वबाधानुपपत्तिरिति वाच्यम् । सत्यपि तृतीयाश्रवणे अप्राप्तमप्यङ्गविषयत्वस्य कल्पनीयत्वेनोक्तविधयाऽशिवाधकत्वानापत्तेः । न हि तृतीयायाः साङ्गहृत्तिकरणत्वे शक्तिरपि तु प्रधानकरणत्व एव। तत्तु अङ्गवैशिष्ट्यं विनाऽनुपपन्नमिति अङ्गविषयत्वं कल्प्यमेव ।

अतश्च शरादौ क्लृप्तोपदेशस्येव इव कल्प्योपदेशस्याप्यतिदेशबाधकत्वं वाच्यम् । अत एव यत्र प्रकृतावेव स्तोत्रशस्त्रादौ वेदान्तरीयविशेषसमाख्यारूपेणोपदेशेनैव कर्त्रन्तरप्राप्तिस्तत्राङ्गविषये कल्प्यायाः प्रधानसमाख्याया बाध इष्ट एव। वर्णितं चैतद्गुणमुख्यक्रमाधिकरणे । प्रकृते त्वातिदेशिकत्वात् प्रधानसमाख्याया एव प्राबल्यमिति प्राप्ते ।

इहापि प्रयोगविध्याश्रितायास्तस्या अङ्गविषये कल्प्यत्वेनोपजीव्यातिदेशापेक्षत्वात्, तेन च कर्त्तविशिष्टानामेव प्राप्तत्वेन कर्त्रपेक्षाऽभावात्, समाख्याया आकाङ्क्षाविरहे श्रुत्यकल्पकत्वात्, कल्पकत्वेऽपि वा प्राकृताङ्गविषयत्वाभावात्त प्राकृतकर्तृबाधकत्वम् । न चैव-

गामिक्रियाफलकत्वावगतेः। यदि तु क्रियाफलस्वाम्यादिगतत्वात्परस्मैपदोपपत्तिरित्याग्रहस्तेन, ततः प्राप्तोपधानानुवादेन दानस्य तत्कर्तृत्वस्य च विधौ वाक्यभेदापत्तेः, य इत्यनेन कर्तृप्राप्तिप्रतीतेश्चोपधानस्याध्वर्युकर्तृकत्वावसायात्तत्समानकर्तृकस्य दानस्यापि तत्कर्तृकत्वसिद्धिः॥ ३॥१९८॥

मस्कारास्तु॥ वपनादयः फलिसंस्काराः समाख्यानादध्वर्युकर्तृकाः। तेनाध्वर्युणा क्षुरन्दन्तकाष्ठ जलं च गृहीत्वा यजमानस्य केशवपनादिकं दन्तधावनं स्नानं कारणीयं अञ्जनाभ्यञ्जनवत् इति प्राप्ते।

वपत इत्यात्मनेपदाद्वपनफलाश्रयस्य यजमानस्यैव तत्कर्तृत्वं प्रतीयते। अस्ति च तथापि छेदनाख्यवपनाधारत्वेन स्थाली पचतीवत् तत्कर्तृत्वम्। तदादायैव च तस्मात् केशान्वपाम्यहमिति प्रयोगः। यस्तु नापितोवपतीत्यादिप्रयोगः, स च्छेदनानुकूलक्षुरक्रियाकर्तृत्वमादाय। तत्प्रयोजककर्तृत्वमादायैव नापितो यजमानं वापयतीत्यादिप्रयोगः। अतश्च वपत इत्यात्मनेपदस्थले आधारत्वमादायैव तत्कर्तृत्वोपपत्तौ क्षुरग्रहणकर्तृत्वेऽपि तात्पर्यकल्पने प्रमाणाभावः। तेनार्थाच्छिन्नस्य यजमानकर्तृत्वस्य नियम एव। प्रमाणाभावे अध्वर्युकर्तृकत्वनियमस्य कः प्रसङ्ग इति नापितकर्तृकमपि तत्।

सोमे तु प्रवपति द्वैवश्रु इति परस्मैपदादध्वर्युकर्तृकगोदानवपनोत्तरं नापिताय क्षुरं प्रयच्छतीति विधानात्तत्कर्तृकमेव तत्। एवमन्यत्राप्यात्मनेपदयुक्ते द्रष्टव्यम्। अत एव यत्र तमभ्यनक्ति शरेषी-

## अथ अष्टमः पादः ।

स्वामिकर्म ॥ वरणं दक्षिणादानं च समाख्ययाऽध्वर्य्वादिभि-रेव कार्यम् । अध्वर्युश्च यथा तान् स्वद्रव्येण परिक्रीणीते तमुपाय यजमान कुर्यात् । अध्वर्योस्तेतरमन्य इति न्यायेन वरणादिकं प्रतिप्रस्थाता कुर्यात् । स चाध्वर्युर्दक्षिणाभावात् तेनानत स्वकृत्यं कुर्यात् । ऋत्विगन्तरार्थं स्वद्रव्यं दातु यजमान उपायान्तरं कुर्या-दिति प्राप्ते ।

अवश्य हृतोऽध्वर्युरन्यान् वृणीते । अन्यथा ध्वर्युत्वासम्भवात् । वरणस्यादृष्टार्थत्वाद्यापत्तेश्च । तद्वरणं च येनादौ कर्त्तव्यं, तस्या-ध्वर्युगुणत्वसम्पत्तये वरणस्यावश्यकत्वात्तस्य च समाख्यात सकर्त्तृकत्वा-वश्यभावाद्वरणे तावत्समाख्याबाध आवश्यक । एवं दक्षिणादानेऽपि। उपायान्तरकल्पने गौरवापत्ते । प्रयोगवाक्यावगतस्वामिकर्त्तृकत्व-बाधापत्तेश्च । समाख्याया एव केवलाया बाध ।

वस्तुतस्तु । सर्वत्र स्वामिकर्त्तृकत्वप्राप्तौ वरणेनैव दक्षिणादानेना-प्यन्यचान्यकर्त्तृकत्वसिद्धे समाख्यया नियममात्रं क्रियत इति स्वला-घवानुरोधेनापि न समाख्यावरणभरणविषयिणी । सत्यपि वा तस्मिन्नुपायान्तरकल्पनाद्यनुरोधेनैव दानमात्रे स्वामिकर्त्तृकत्वम् । यत्र तु वचनं यथा य एतामिष्टिमुपदध्यात् चौत्वरान्दद्यादित्यादौ, तत्राध्वर्य्वादीनामपि दानकर्त्तृत्वम्। अत हि स्वामिकर्त्तृकत्वे ह्युप-धानस्य सामानाधिकरण्येन तत्समानकर्त्तृत्वावगतेरस्यापि तत्कर्त्तृत्वे उपदध्यादिति परस्मैपदानुपपत्ति । तस्य नित्यत्वेन उपधानभिन्न-

इति वाक्यशेषानुसारात् कल्पयितुमुचितम् । अतश्च तस्य लिङ्गादेव यजमाननिष्ठत्वम् । न ह्यन्यसमवेतदुःखेनान्यदीयं पापं नश्येत् । न वा ऋत्विग्गतपापस्य स्वामिगतफलप्रतिबन्धकत्वकल्पनम् । गौरवात् । अत एव यत्र ऋत्विज उपदमन्तीत्यादिवचनं तत्रानृतवदनन्यायेनारादुपकारकत्वकल्पनं व्यधिकरणस्यैव वा फलप्रतिबन्धकत्वादिकल्पनमिति द्रष्टव्यम् । अत एव तत्र न समाख्या नियामिका ॥ ३ ॥ १३० ॥

गुणत्वाच्च ॥ ये ऋत्विक्संस्कारा हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादध्वर्य्वादिना कर्त्तव्याः, सकलस्यैवोद्देश्यगतत्वेनाविवक्षितत्वात् । अथाप्यनुवादापेक्षा, सदा तत्पुरुषैः कार्या इति प्राप्ते ।

अनियतकर्तृमात्रौ समाख्यया लाघवेनापेक्षितनियममात्रकरणात् प्रकृते च संस्कार्यस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षत्वाच्च समाख्यायास्तन्नियामकत्वम् । कर्त्रन्तरपरिसंख्यायकत्वं तु वैरूप्यापत्तेरयुक्तम् । यदि तु समाख्यायास्तत्तत्पदार्थवाचित्वाभेदेनाप्याहिरण्यमालित्वविषयिण्याः परिसंख्यायकत्वमेवेत्याग्रहेण, तथापि समाख्यया वचनस्य सङ्कोचायोगादेव सर्वविषयत्वनिश्चयः ॥ ३ ॥ १३१ ॥

तथा कामः ॥ ये गुणजन्याः कामाः, यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयादित्यादयस्ते मानाद्याश्रयस्य तावदाध्वर्यवत्वात्समानाधिकरणत्वाच्च कामयतेस्तदमानकर्तृकत्वप्रतीतेरध्वर्युनिष्ठा एव । अत एव यत्र दध्नेन्द्रियकामस्येति वैयधिकरण्यं तत्र यजमानगामित्वमेव । प्रचेयाख्यहोमस्याध्वर्यवत्वादिति प्राप्ते ।

मिनुयादिति ङितः परस्मैपदनिर्देशादध्वर्युभिन्नकर्तृकत्वावगतेः

क्रयाऽनक्ति दर्भेण दीक्षयतीत्यादौ परस्मैपदनिर्देशोऽधिकः श्रुतश्च सत्यप्याधारत्वमादायात्मनेपदोपपत्त्या यजमानकर्तृकत्वे व्यापारान्तरस्यापि विधेयत्वादध्वर्युकर्तृकत्वमिष्टमेव ।

स्नाने तु स्वनिष्ठव्यापार एव स्नातीति परस्मैपदस्यापि प्रयोगादन्यकर्तृके च स्नापयतीत्येव प्रयोगाद् यजमाननिष्ठव्यापारस्यैव विधेयत्वेनान्यकर्तृकव्यापारस्याविधेयत्वेन नाध्वर्युनियमः । न ह्यत्र परस्मैपदादन्यकर्तृकत्वनियमः, स्नाधातोः स्वरितेत्त्वाद्यभावेन तदभावात् । अतः फलिसंस्काराः स्वामिकर्तृका एव, कर्तृसंस्कारास्तु हिरण्यमालित्वादयः सामान्यविहिताः सर्वेषामेव, विशिष्य विहितास्तु तेषामेवेति न तत्रापि समाख्यया नियमः । तस्या नियामकमात्रत्वेन प्रापकत्वाभावादिति वक्ष्यते ॥ ३ ॥ १२९ ॥

तपश्च ॥ सोमे ह्रुहं नाश्नाति व्रतं नाश्नातीति श्रुतम् । तत्राद्यमशनप्रतिषेधोऽनृतवदनप्रतिषेधवदेवादारादुपकारको न फलिसंस्कारकः । आत्मनेपदाद्यभावात् । सत्त्वेऽपि वा स्वरितेत्त्वाद्यभावाच्च । अतश्च समाख्यानादध्वर्युकर्तृकत्वम् । वस्तुतस्तु । अनृतवदेव प्रतिषेध्याशनस्याविहितत्वादभावस्य चाननुष्ठेयत्वाच्च समाख्याविषयत्वमिति कर्तृमात्रविषयत्वे प्राप्ते ।

आरादुपकारकत्वपक्षे अशनस्य क्रतुवैगुण्यजनकत्वं तस्य च फलप्रतिबन्धकत्वमित्यादिकल्पनाऽपेक्षया लाघवेनाशनाभावस्य दुःखजनकतया कॢप्तत्वात्तद्दुःखस्य च स्वजनकीभूतपापनाशकत्वस्यापि कॢप्ततया केवलं तत्पापस्य सोमफलप्रतिबन्धकत्वमात्रकल्पनया अशनाभावस्य यजमाननिष्ठफलप्रतिबन्धकाभावसम्पादकत्वमेव यदागमवशादा मेधार्ह-

कर्मफलमेव एतेन मन्त्रेण प्रकाश्यत इति द्रष्टव्यम्। तच्च फलं यजमानगाम्येव। ऋत्विक्फलस्योपस्थानाद्यप्रयोज्यत्वेन तत्प्रकाशने तदङ्गत्वानुपपत्तेः। तच्च यजमानादाशास्यत्वेनाग्निं प्रत्यनाशास्यत्वाच्च। न च यजमानफलमेवाध्वर्युणाऽऽशास्यताम्। मह्यमिति ऋगन्ते इति चाध्वर्य्युप्रकाशकत्वेन लिङ्गविरोधात्। अतो याजमाना एवैते। अत एव यथैव नैतादृशं लिङ्गं, तथाध्वर्यवा एव॥ ३॥ १३३॥

द्व्याम्नातेषु॥ ये मन्त्राः सामान्यत आध्वर्यवसमाख्याते काण्डे समाख्याताः पुनश्च याजमानेऽपि विशेषतः समाख्यायन्ते। यथाऽऽज्यग्रहणमन्त्राः स्रुग्व्यूहनमन्त्राश्च। ते तावत्तत्पदार्थे प्रत्यभिज्ञायमानत्वाद्विधभावाच्चाभिन्नाः। अतस्तत्र गुणभूतकर्तृद्वयस्य विकल्पः। विशेषसमाख्याबलाद्वा यजमान एव कर्त्ता। आज्यग्रहणस्रुग्व्यूहनादेर्वा निःसन्दिग्धमाध्वर्यवत्वात्तदङ्गभूतामन्त्रा अपि तत्कर्तृका एव। न चैवं द्विःपाठवैयर्थ्यम्। एकस्य स्वरूपस्थानमन्यच विनियोग इत्येवं सार्थक्यादिति प्राप्ते।

एकपाठेनैवोभयसिद्धौ द्वितीयस्य वैयर्थ्यापत्तेस्तस्योच्चारणान्तरविधायित्वावगतेस्तस्य च समाख्यान्तरेण कर्त्रन्तरसिद्धिः। उच्चारणान्तरप्रयोजनं तत्क्रियाप्रत्यवेक्षणमिति नादृष्टकल्पनाऽपि। यद्यपि च तन्नियमेन यजमानस्य न प्राप्तं, तथापि द्विःपाठवशादेव तत्कल्प्यमिति न दोषः। यत्र तु नैवंविधं प्रयोजनं कर्तृभेदोवाऽप्रमाणो। यथा अयं सहस्रमानव इत्यस्यामौद्गाचे एव प्रणीताप्रणीतभेदेन समाम्नातायाम्। तत्रान्यतरस्य गिरस्त्वत्वं परिकल्प्य उत्पत्तिविनियोगपरत्वेन सार्थक्यमिति विशेषः॥ ३॥ १३४॥

सामानाधिकरण्यबाधेन याजमानत्वमेव। यद्यपि यो वृष्टिकामः स सौभरेण स्तुवीतेत्यादौ न परस्मैपदं, तथापि नोद्गातृगामित्वम्। स्वत्विक्कामनाऽनुरोधेन यजमानफलसाधनीभूतनित्यगुणबाधानुपपत्तेः। अतश्च सामानाधिकरण्यमात्मनेपदस्य प्रयोजककर्तृत्वाभिप्रायेणैव व्याख्येयम्। अतएव यत्र न नित्यगुणबाधो बाधेऽपि वा साक्षादेव वचनं, तत्र स्वामिभिन्नगामित्वेऽपि न क्षतिः। यथाऽऽत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेदिति। अत्र पृथग्यजमानपदश्रवणादात्मपदश्रवणाच्चात्मपदेनोद्गातैवोच्यते। अतएवाऽनुषङ्गेण वाक्यभेदोऽप्यदोषः। तन्नित्यनेनोभयविशिष्टं वैकल्पिकं कामं परामृश्य उद्देश्यत्वविधानाद्वा न वाक्यभेदः। गायतेश्च गायन्ति यं सामगा इत्यादौ अर्थाभिधानेऽपि मयोगास्य कामरूपार्थस्योद्देश्यत्वविघातः॥ ३॥ १३२॥

मन्त्रश्च॥ इह कार्यं करणभूताः कर्मफलप्रकाशकाः कर्माङ्गभूतमन्त्रा आयुर्दा अग्ने अगन्म सुवरित्यादयः। ते समाख्यानाद्याध्वर्यवादिति प्राप्ते।

यद्यप्येते लिङ्गादिनाऽऽह्वनीयोपस्थानादौ विनियुक्ता न सूक्तवाकादिवत्तृतीयया इतिकरणेन वा विनियुक्तत्वाभावादानुषङ्गिकफलकल्पकास्तथापि कर्मफलमेवोपस्थानादिप्रयोज्य प्रोत्साहनाय प्रकाशयन्ति। तत्र च यचैतत्प्रकाश्यं फलं कर्मजन्यत्वेन क्लृप्तं, तच्च तत्फलमेव नियतमनियतं वा प्रकाश्यते। अत एव दर्शपूर्णमासादौ स्वर्गायुरादेः फलत्वात्तत्तत्फलार्थप्रयोग एव तत्तन्मन्त्रो न फलान्तरार्थप्रयोगे। यत्र तु नैतत्प्रकाश्यस्य कर्मफलत्वं; तत्र लक्षणया

स्यात्। द्वन्द्वता हि नाम एकया यत्नोपायभूतक्रियया धेनुवत्सयोः प्रत्यासन्नत्वसम्पादनं, एकया वा तद्दमनविषययोर्मूत्रसमुपनयोः। एवं द्वादशस्वपि द्रष्टव्यम्।

न च तत्कर्मानुरोधेन प्रधानभूतपदार्थानां कर्तृबाधः। अङ्गगुणविरोधन्यायेन तदसम्भवात्। न च तानि सम्पाद्य यजेतेति क्त्वाप्रत्ययबलेनैव द्वन्द्वतायाः यागसमानकर्तृकत्वावगतेः वचनादेवाङ्गनिष्ठादपि पदार्थेषु समानाया बाध इति वाच्यम्। क्त्वाप्रत्ययस्य प्रयोजकत्वेनाप्युपपत्तेः प्रधानसमाख्याबाधकत्वानुपपत्तेः। एवं द्वन्द्वतानिष्ठसमाख्याऽपि प्रयोजकत्वाभिप्रायेणैव व्याख्येया। अतः करणमात्रं याजमानं पदार्थास्त्वाध्वर्यवा एव ॥ ३ ॥ १२४ ॥

विप्रतिषेधे॥ द्वैतपत्नौ यूपपरिव्याणे आध्वर्यवः करणमन्त्रः परिवीरसीत्ययं श्रुतः। तथा, युवा सुवासा इत्ययं क्रियमाणानुवादी हौत्रोऽपि। तौ च द्वावपि यूपाय परिवीयमाणायानुब्रूहीति प्रैषवशादेतदुत्तरपाठाच्चैतस्याप्यव्यवहितोत्तरक्षणे एककालीनौ। आद्यपरिव्याणभावनाकरणमन्त्रकालत्वाच्च क्रियमाणानुवादित्वाविरोधः। सोमविकृतौ च कौण्डपायिनामयने तथैव प्राप्तौ। अथ च यो होता सोऽध्वर्युरिति च श्रुतम्। तस्य च समवाख्यात्वे वार्तिकप्रयुक्तकरणजन्यहोतृत्वाध्वर्युत्वादेरात्यन्तिकेनाभावाद्योहोतेत्यत्र होत्रध्वर्युपदाभ्यां तत्कार्यलक्षणया कार्यद्वयेऽप्येककर्तृकत्वं विधीयते। अतश्चौपदेशिकैककर्तृकत्वबलेन प्राकृतैककालत्वबाधात् प्रथमतः करणं पश्चादनुवाद इत्येकः पक्षः।

होतृत्वादेरध्यवसायमात्रनिमित्तकत्वस्य स्थापितत्वात् सर्वेऽपि

ख्याते च ॥ वाजपेयादौ यत्र कृष्णीर्यजमान वाचयतीति श्रुतं, तत्र याजमानोमन्त्र । वाचनमाध्वर्यवमित्यविवादम् । परन्तु वाचयतेर्ब्रह्मचारिणो गायत्र्युपदेशादौ शिक्षणवाचित्वेन क्लृप्ततया प्रकृतेऽपि शिक्षणविधायित्वावगते तस्य चादृष्टार्थत्वप्रसङ्गेन आनर्थ-सम्भवादुक्तविधाङ्गानुरोधेनाज्ञ एव वाजपेयादावधिकारी। अतो-ऽन्येषां क्रतूनामध्ययनविधिसिद्धज्ञानोपजीवनेन ज्ञानाधिकारकत्वेऽपि वाजपेयादौ तदसम्भवादज्ञस्यैव वाचनमिति प्राप्ते ।

वाचयतेर्वचनानुकूलव्यापारमात्रवाचित्वेन क्वचिदन्यथानुपपत्त्या शिक्षणपरत्वेऽपि स्मरणमात्रपरत्वेनापि प्रकृते वाचनोपपत्तेरर्थज्ञाना-क्षेपकत्वे प्रमाणाभावात् अज्ञस्यैव वाचनम् । तच्च खण्डशो वा इमं मन्त्रं ब्रूहीत्येव वेत्यन्यदेतत् ॥ २ ॥ १२५ ॥

याजमाने ॥ दर्शपूर्णमासयोर्वत्समुपावसृजतीत्यादीनि कानि-चित्कर्माण्याध्वर्यवसमाख्यायुक्तानि प्रत्येकं विभिन्नदेशे विधाय, पुनस्तान्येव याजमानसमाख्यायुक्तानि द्वन्द्वं वत्सञ्चोपावसृजत्युखा-ञ्चाधिश्रयतीत्याद्युक्त्वैतानि वै दश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्य यजेतेति श्रुतम्। तदेषां ह्याम्नातमन्त्रवदुभयकर्तृकत्वं तावन्न सम्भवति। अदृष्टार्थत्वापत्ते । न चाभ्यासात्कर्मार्थत्वम्। अन्यपरत्वात्। अत एव एककर्तृकत्वावश्यभावे विशेषसमाख्यानाद्याजमानत्वे प्राप्ते ।

नैषां याजमानकाण्डे विधानम्। आध्वर्यवे भिन्नदेशविहितानां-मेव द्वयोरिव गत्यामन्त्वाख्यद्वन्द्वतारूपगुणविधानार्थमेवानुवादात्। अत पदार्थेषु तावदध्वर्युरेव कर्ता। न च द्वन्द्वतायामेव यजमान शक्तः। अन्येन क्रियमाणानामन्येन द्वन्द्वताया सम्पादयितुमशक्य-

कालेषु रूप्यायेति चकारेण लोटोऽपि प्राप्तकालतायां विधानात् प्राप्तकालतायामयं लोट्। प्रोक्षण्यासादनस्य प्राप्तः काल इति। युष्मदर्थकोमध्यमपुरुषस्तु साधुत्वार्थः। अथ वा। हे प्रोक्षण्यासादन, तव प्राप्तः काल इति क्रियायां चेतनत्वाध्यारोपेण सः। यत्र तु अग्नीदग्नीन्विहरेत्येव प्रैषः, तत्रास्तु सम्बोधनानुरोधेन प्रैषार्थस्याग्नीध्रकर्तृकत्वम्। वस्तुतस्तु हे अग्नीत् ममाग्निविहरणस्य प्राप्तः काल इति व्याख्यातुं शक्यत्वात् तथापि समाख्याबाध इति प्राप्ते।

समाख्यानुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चेतनत्वारोपेण व्याख्याने प्रमाणाभावात् सम्बोधनमध्यमपुरुषयोश्चादृष्टार्थत्वापत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थकत्वानुपपत्तेः। प्रैषस्यापि स्वशिष्योपचारिकत्वापत्त्या एकत्राध्वर्युसमाख्याबाधेनोभयोर्भिन्नकर्तृकत्वमेव ॥ ६ ॥ १३८ ॥

अध्वर्यु.॥ तथापि बहुषु प्रधानभूतेषु प्रैषार्थेषु समाख्याबाधे प्रमाणाभावादेकस्मिन् प्रोक्षणीरासादयेत्यादिप्रैषे एवाध्वर्युबाधेनान्यकर्तृकत्वम्। अत एव तिर्यञ्चं स्फ्यन्धारयित्वा संप्रैषमाह यदन्वञ्चं धारयेत् स्फ्योवज्रेणाध्वर्युं क्षणोतीति धारयितुर्भिन्नमध्वर्युं दर्शयतीति प्राप्ते।

प्रैषार्थेष्वन्यकर्तृकत्वेऽपि प्रयोजकत्वेनाध्वर्योः कर्तृत्वोपपत्तेः समाख्यायाः क्वचाप्यबाधात् प्रैषार्थानन्य एव कुर्यात् प्रैषोच्चारणं त्वध्वर्युः। स च सोमादावसति विशेषवचने प्रतिप्रस्थात्रादिरन्यः पुरुषः, दर्शादौ त्वाग्नीध्र एव कर्मकरत्वेन याज्ञिकप्रसिद्धत्वादिति ध्येयम्। यत्तु लिङ्गं, तत्राध्वर्युरन्वञ्चन्धारयेत्तदा स्फ्यस्तं क्षणोतीत्यर्थेऽपि बाधकाभावाद्धारणप्रैषयोराध्वर्यवत्वेऽप्युपपन्नम्। स्फ्यधार-

तन्मुख्येन पदद्वये कार्यलक्षणायां प्रमाणाभावाच्चाद्यन्य एवाध्वर्युपदे तल्लक्षणामङ्गीकृत्याध्वर्यवपदार्थानां होतृसंस्कारकत्वेन विधानम्। अप्राकृतकार्यकारित्वापत्तेः होतृपदे कर्मलक्षणापत्तेश्च होतैव वा तत्कर्तृत्वेन विधीयते। तथापि तु परिधौ पशु नियुञ्जीतेत्यत्र परिधित्वाविरोधेनेव होतृत्वाविरोधेनैव कर्तृत्वविधानाद्धौत्रः क्रियमाणानुवाद्येव तेन प्रयोक्तव्यः। अपरस्तु तेन कालान्तरेऽन्येन वा तत्पुरुषेण तस्मिन्नेव काले प्रयोक्तव्य इति प्राप्ते।

पुरोडाशकपालवदग्निपरिधानार्थस्यैव परिधेः पशुनियोजने विनियोगायुक्तं परिधिधर्माणां सत्त्वादीनां प्राबल्यम्। प्रकृते त्वध्वर्युमात्रनिमित्तहोतृत्वेनैवाध्वर्यवे विनियोगाद्धोतृकार्यस्य प्रयोजकत्वकल्पने प्रमाणाभावादाध्वर्यवस्य करणस्यैव प्रत्यक्षवाक्यावगतशेषित्वेन प्राबल्यात्तातिदेशिकसमाख्यासमाख्यानकक्रियमाणानुवादिनः प्राथम्यं, न वा कालान्तरे तस्य होत्रा पाठः। स च श्रेयान् भवतीति लिङ्गावगतक्रियमाणानुवादित्वबाधापत्तेः। नापि करणमन्त्राव्यवहितोत्तरक्षणे होत्रा तस्य पाठः। यूपायेत्यादिमैत्रे होतुः कर्तृत्वेन प्रैषार्थे तदसम्भवात्। अतस्तस्मिन् तत्काले एव होतृपुरुषोऽन्यः कश्चिदन्तरङ्गोऽध्वर्य्वादिः कर्त्ता। तस्य कर्मान्तरव्यापृतौ तु बहिरङ्गोऽपि॥ २॥ १२७॥

प्रैषेषु॥ प्रोक्षणीरासादयेत्यादयः प्रैषाः प्रैषार्थाश्च प्रोक्षण्यासादनादयः समाख्यानादध्वर्युणैवैकेन कर्त्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः। चेतो द्वया खिद्यस इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसम्भवात्। वस्तुतो नैवायं प्रैषः। अपि तु प्रैषातिसर्गप्राप्त-

तथापि यजमानगामित्वम्। अतश्च तदनुरोधेन ममेति मम यजमानस्येत्येवं व्याख्येयम्। मद्यमित्यादौ लक्षणच्छन्देन यजमान एवोपचाराद्भिधीयत इति न दोषः। प्रयोजनं, सर्वेऽग्न्याधानाभावादृष्टाननुप्रयोजनानाभावेऽपर्यानुसन्धानविशेषरूप द्रष्टव्यम् ॥३॥१४०॥

कर्मार्थम् ॥ यत्र तु मा मा सन्ताप्तमित्यादावितिकरणविनिर्मुक्त एवासन्तापनादिरूप फलं ऋत्विग्गामित्वेऽपि क्रतुविरोधिसन्तापनिवर्तकतया तदुपयोगि, तच्च यजमानस्य चेति षष्ठ्या परम्परयाऽप्युपपत्तेर्लिङ्गानुरोधादृत्विग्गाम्येव ॥३॥१४१॥

व्यपदेशाच्च ॥ एवं यत्रापि तन्नौ सहेत्यादौ द्विवचनानुपपत्तिस्तत्रापि ऋत्विग्गामित्वम् ॥३॥१४२॥

द्रव्यसंस्काराः ॥ बर्हिर्धर्माणां प्रकृतावङ्गप्रधानसाधारणत्वमुक्तम्। अतश्च दैक्षपशावपि बर्हिषा यूपावटमवस्तृणातीति विहिते यूपावटस्तरणबर्हिष्यपि दार्शिकबर्हिर्धर्मा भवेयुरिति प्राप्ते।

प्रकृतौ बर्हिषि हवींष्यासादयतीति वचनादङ्गप्रधानसाधारणहविराधारार्थएव बर्हिषि धर्मा न कार्यमात्रार्थे इत्युत्तराधिकरणे वक्ष्यते। यद्यपि वा परिभोजनीयादिवत् प्राकृतकार्यमात्रार्थत्वं स्यात्, तथापि नाप्राकृतकार्ये यूपावटस्तरणबर्हिषि भवेयुः। उपकारप्रश्नभावेनैव पदार्थानामनिर्देशेन विकृतावप्राकृतकार्यकारित्वकल्पनाऽनुपपत्तेः। न हि प्रकृतौ येन केनचित्सम्बन्धेन अपूर्वसम्बन्धिबर्हिरुद्देश्यतावच्छेदकम्। येनाप्राकृतस्यापि तत्सम्बन्धात्संस्कारकत्वं स्यात्। सम्बन्धविशेषवाचकप्रमाणाबलेन तावद्विशेषाणामेव प्रवेशेनानुपस्थितसामान्यस्योद्देश्यतावच्छेदककोटावप्रवेशात्। न च तथापि

णमपि कल्पसूत्रेषु आध्वर्यवमेव प्रसिद्धमिति । अत्र वार्त्तिकं प्रौढिवादः ॥३॥१३८॥

ऋत्विक्फलम् ॥ ये इतिकरणेन तृतीयया वा विनियुक्ता, करणमन्त्रास्तेषां मान्त्रवर्णिकक्रियाजन्यफलकल्पकत्वं, न तु आयुर्दा अग्न इत्यादिवत् प्रधानफलानुवादकत्वमित्युक्तं कौस्तुभे । तदत्र ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णातीत्याद्यावत्यन्त्वा-धानक्रिया तावदाध्वर्यवी । मन्त्रलिङ्गवशेन प्रधानभूतक्रियायां समाख्याप्राप्तकर्तृबाधानुपपत्तेः ।

न च यजमानेन मन्त्रेणाध्वर्युगतक्रियाप्रकाशनम् । वयन्त्वेन्धाना इति मन्त्रलिङ्गवशेन क्रियासमानकर्तृकत्वस्य मन्त्रे प्रतीतेः । अतश्च मन्त्रक्रिययोरुभयोरप्याध्वर्यवत्वात् फलमपि वर्चःप्रभृति तद्गतमेव । अन्यथा ममाग्ने इति मह्यं न मन्तामित्यादिमन्त्रलिङ्गविरोधापत्तेः ।

न च साङ्गप्रधानविधायिफलवाक्यावगतात्मनेपदानुरोधेनाङ्ग-फलानामपि स्वर्गकामकर्तृकत्वावगतेर्यजमानगामित्वमिति वाच्यम् । श्रुतस्यात्मनेपदस्य यावकाशतया तेन कल्पितस्यापि लैङ्गिकस्याध्वर्यु-इत्तित्वस्य बाधानुपपत्तेः । न चात्मनेपदार्थस्यैव तद्विषये बाधे विधेरन्यत्राधानविषयेऽनुष्ठापकत्वस्यापि बाधापत्तिः । प्रमाणा-भावात् । अतोऽग्निसंस्कारार्थानुष्ठापितक्रियाजन्यानुषङ्गिकफलस्य क्रत्वनुपयोगिनोऽप्याध्वर्यवत्वेऽपि न काचित् क्षतिरिति प्राप्ते ।

यां काञ्चन यज्ञे ऋत्विज आशिषं आशासते यजमानस्यैव सेत्य-न्यथासिद्धलिङ्गानुगृहीतात्मनेपदश्रुत्या यजमानगामित्वावगतिः । एतल्लिङ्गबलादेव च यत्र नात्मनेपदश्रवणं यथा जुहुयादित्यादौ,

विकृतौ ॥ अनारभ्य, यज्ञायर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या इति श्रुतमुपांशुत्वं प्रधानवदङ्गेष्वपि मन्त्रोच्चारणधर्म्मत्वात्काम्यशब्दस्य च कामप्रयोजकत्वेनाङ्गेष्वपि प्रयोगोपपत्तेर्जनकमात्रपरत्वेऽपि चोद्देश्यविशेषणत्वेनाविवक्षितत्वादिष्टीनामेवाविवक्षितत्वे चोक्तेऽपि तदापत्तेः साङ्गस्यैवमिति प्राप्ते ।

अङ्गेषु कश्चिदपि काम्यशब्दप्रयोगाभावाज्जनकत्वसम्बन्धेन प्रधानमात्रपरत्वावगतेः काम्यत्वेष्टित्वोभयपरामर्शकतच्छब्दस्य चोद्देश्यपरत्वेनोभयविवक्षोपपत्तेः प्रकृतौ प्राकरणिकचैस्वर्याविरोधे निवेशासम्भवेऽपि काम्यविकृतौष्टिप्रधानमात्रे निवेशः । न चाग्नेयः प्रवर्ग्येणावभृथेनेत्यादिवत्करणविभक्तिनिर्देशो येन साङ्गस्य भवेत् । तच्छब्देन कर्मत्वाभिधानात्तु प्रधानमात्रे एव निवेशः ॥३॥१॥४६॥

सन्निधान ॥ श्येने, दृतिनवनीतमाज्यं भवतीति श्रुतम् । दृतिनवनीत प्रकरणात् श्येनप्रकरणाङ्गम् । न चाज्यानुवादेन दृत्यधिकरणकत्वनवनीतप्रकृतिविधिः । आज्यस्य नवनीतप्रकृतिकत्वस्य प्राप्तत्वात् । तदनुवादेन दृत्यधिकरणकत्वविधाने एकप्रसरताभङ्गापत्तेश्च । अतो यज्ञमात्रे विधिमानार्थं एवैकोदृत्यधिकरणकनवनीतप्रकृतिक्रमं सन्निधानात् श्येने विधीयते । आज्यपदन्तु तस्यैव नवनीतप्रकृतिकस्यानुवाद. अन्यपदार्थतात्पर्यग्राहकश्चेति नानेकविधानता । अत एव श्येनोऽप्याज्यद्रव्यकत्वादुपांश्वाज्यविकार एव । गमकान्तराभावे तु सोमप्रयाणायमात्रमिति प्राप्ते ।

विशिष्टविधौ गौरवापत्तेः अतिदेशप्राप्ताज्यपरत्वमेवाज्यशब्दस्याङ्गीकृत्य तदुद्देशेन दृत्यधिकरणकनवनीतप्रकृतिकत्वमेव प्रयो-

यूपावटस्तरणभावनायाधर्माकाङ्क्षायामेव फलचमसन्यायेन धर्मग्राह-कत्वम् । लौकिकधर्मग्रहणेनाथाकाङ्क्षानिवृत्तौ उपदेशातिदेशयोर-भावात् । फलचमसे तु यागापत्या भक्षानुवादवक्षातिदेश-कल्पनमिति विशेषः ॥३॥१४३॥

विरोधे ॥ प्रकृतावपि च न ममन्त्रकबर्हिर्लवनादिधर्माणां प्रकृत्यपूर्वसम्बन्धिबर्हिर्मात्रार्थत्वम् । अपि तु हविरासादनार्थबर्हि-रर्थत्वमेव । अत एव पवित्रविधृत्यादिबर्हिषि नैते संस्काराः । त्रिधातु पञ्चधातु वा बर्हिर्लुनातीति विहितत्ववं संस्कृतस्य बर्हिष-स्यैव सम्रडूप्यासादितस्य । त्रिधातु पञ्चधातु वा बर्हिस्तृणातीति वचनेन सर्वस्यैव स्तरणे विनियोगात्, अमन्त्रकलवनमात्रसंस्कृतस्य परिभोजनीयबर्हिषः प्राकृततदितरसर्वकार्यार्थत्वेन तत एव पवि-त्रादिकरणोपपत्तेः ॥७॥१४४॥

अपनयः ॥ सोमे पुरोडाशशकलमैन्द्रवायवपात्रे सादयति आ-मिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्र इति श्रुतम् । तत्र शकल-पदस्य उत्तरार्धादिपदवदेकदेशवाचित्वेन सवनीयपुरोडाशत्वैकवाक्या-शकेः प्रातःसवनिकसवनीयपुरोडाशावयवपरत्वं तावन्निर्विवादम् । आमिक्षादौ तु तदभावात्पयसा मैत्रावरुण श्रीणातीति वाक्यैकवाक्या-मिक्षादिग्राहकत्वेनोपपत्तौ क्रमप्रतिपत्तिबाधेन सवनीयगततद्‌ग्रा-हित्वे प्रमाणाभाव इति प्राप्ते ।

द्वितीयया प्राप्तमध्यामिक्षादिप्रतिपत्तित्वावगमात्कर्मणि ओपदे-शिक्या तया आतिदेशिकप्रतिपत्तिबाधोपपत्तेः प्रातःसवनिकसव-नीयममन्त्रिकामेव पुरोडाशादीनां ग्रहणम् ॥३॥१४५॥

मांसन्तु ॥ षट्त्रिंशदाब्दिके शाक्यानामयनाख्ये सत्रे, मंस्थिते सस्थितेऽहनि गृहपतिर्मृगयां याति तत्र यान् मृगान् हन्ति तेषामन्तराः सवनीयाः पुरोडाशाभवन्तीति श्रुतम्। मांसं भवतीति विधिना प्रत्यासन्नत्वात् पुरोडाशस्य तदुद्देशेनैव विधीयते। विधेरेव हि प्रवर्त्तनार्थे भावनाभाव्यसाकाङ्क्षत्वम्। अतस्तत्प्रत्यासत्तिरत्र तदुचित, न सवनीयानाम्। यदा तु पुरोडाशाः सवनीया इति भवदेवादिष्टतः पाठस्तदा प्राथमिकत्वादिधेयतरसप्रत्यासन्नत्वाच्च पुरोडाशकार्यस्यैवोद्देश्यत्वं स्पष्टमेव।

न च पुरोडाशस्य सवनीयपदेन विशेषणम्। विशिष्टोद्देशापत्तेः। अत. सर्वपुरोडाशकार्ये तरसं विधीयते। सवनीयपदन्तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा। अतः पुरोडाशमात्रे तरसन्न धानाज्यादिष्वाति इति प्राप्ते।

सवनीयपदवत् पुरोडाशपदेऽपि कार्यलक्षणापत्तेः प्राथमिकसवनीयपदमेव सवनीययागोद्देश्यतापरम्। प्रथमायास्तु द्वितीयार्थे लक्षणा उभयथापि सिद्धैव। अतः सवनीययागोद्देशेनैव धानादिपञ्चकबाधेन तरसं विधीयते। पुरोडाशपदं लिङ्गं जघन्यश्च पुरोडाशवत्त्वसम्बन्धेन सवनीययागेषु लाक्षणिकमनुवादः। दृष्टञ्च पुरोडाशानलङ्कुर्वित्यादौ पुरोडाशशब्दः सवनीयहविःपर इति तस्य सवनीययागलक्षकत्वं सुकरमेव। तदेवं श्रुत्यादिषट्प्रमाणकमङ्गत्वं निरूपितम्। अत. परं प्रयोज्यत्वं निरूपयिष्यते ॥३॥१५०॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

तृतीयस्याष्टमः पादोऽध्यायश्च ॥

---

गाम्नःपातितया विधीयते। आज्यस्याङ्गत्वेव प्राप्तमिति तन्मात्र-विषयता। यत्तु धृतिनवनीतपदस्य तत्पुरुषत्वमङ्गीकृत्य धृत्यधिकर-णकनवनीतमेव आज्यपदलक्षिततत्कार्योद्देशेन द्रव्यतया पक्षत-रूपान्यमत्याम्नायेन विधीयत इति न्यायसुधाकृतोक्तम्। तदाज्यपदे सांप्रतिकलक्षणापत्तेस्तदपेक्षया आनुमानिकनिरूढलक्षणापादक-षष्ठीसमासाङ्गीकारस्यैव न्याय्यत्वादुपेक्षितम्। यदि तु किञ्चिद्गम-कान्तरम्भवेत्तदा तदेवास्तु ॥२॥१४७॥

आधाने ॥ सर्वत्र धर्माणामनारभ्याधीतप्राकरणिकसाधारण्येना-पूर्वोपकारे एवान्वयात्पवमानेष्ट्यादीनामपि च श्येनापूर्वोपकारकत्वा-त्तत्रापि धृतिनवनीतमिति प्राप्ते।

यदुपकारकता वैधप्रमाणप्रमिता तदुपकारके एव धर्माणां निवेशः। न त्वर्थसमाजप्राप्तोपकारकत्वेऽपि। श्येनोपकारकयजमा-नाज्यभोजनादावपि धृतिनवनीतत्वापत्तेः। न चाधानादेः श्येनोप-कारकत्वं शास्त्रप्रमितम्। अग्निसाधनत्वस्यैव तत्प्रमितत्वात्। अतः श्येनप्रयोगवर्त्तितदुपकारकाङ्गे एव तन्निवेशः ॥२॥१४८॥

तत्काले वा ॥ एवं चेत्सुत्याकाले एव श्येनवैशेषिकाणां सह पशुनालभेत इत्यादीनां दर्शनाद् धृतिनवनीतत्वस्यापि सुत्याकाला-व्याप्त एव निवेश इति प्राप्ते।

सामान्यतोदृष्टेन वाक्यशेषोपयोगात्सर्वार्थत्वम्। न हि पशु-पाशित्वस्यापि सुत्याकालत्वे श्येनाङ्गत्वं प्रयोजकं, अपि तु प्रधान-प्रत्यासत्ति-तुल्यकालोत्कर्ष-वाक्याबाधरूपहेतुत्रयम्। न चात्र तदस्ति। अतः सर्वार्थतैव ॥२॥१४९॥

कारकत्वेनाङ्गत्वसत्त्वेऽपि तत्प्रयोज्यभावेन व्याप्यत्वस्याप्यभावात्। अतो-नावच्छेदकावच्छेदेन हेतुहेतुमद्भावः। तथापि क्वचिद्दृष्यानयनादि-निष्ठप्रयोज्यत्वनिरूपणे तद्विशेषत्वनिरूपणस्योपयोगात् सामानाधि-करण्येन तन्निरूपणं प्रति अङ्गत्वनिरूपणस्य हेतुत्वात् सङ्गत्युपपत्तिः।

अत्र प्रयोज्यत्वं, क्वचित्क्रत्वर्थपुरुषार्थविचारद्वारेण निरूप्यते, क्वचि-दन्यद्वारेण, क्वचित्साक्षादेवेति प्रयोज्यत्वमेवाध्यायार्थः। क्रत्वर्थपुरुषार्थ-त्वन्तु तृतीयसिद्धमपि उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यत इति विवेकः ॥४॥१॥१॥

यस्मिन् ॥ वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमुच्यते। तत्र तन्त्ररत्ने तावत्स्वय प्रार्थितसाध्याधीनानुष्ठानः पुरुषार्थस्तदुपकारार्थः क्रत्वर्थ इत्युक्तम्।

तत्र, फले काम्यकालादौ न कलञ्जभक्षयेदित्यादिनिषेधेषु चाव्याप्तिः। अनुष्ठेयत्वाभावात्। निषेधेषु स्वय प्रार्थितसाध्याप्रसिद्धेश्च। क्रत्वर्थलक्षणे आधानादावतिव्याप्तेश्च।

यदपि शास्त्रदीपिकायामितिकर्त्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्व तद्भिन्नत्वं करणफलवृत्ति पुरुषार्थत्वमित्युक्तम्। तदपि न, क्रत्वर्थ-निषेधानामक्रियात्वेनामितिकर्त्तव्यतात्वेन तेष्वव्याप्तेः। आधानाध्य-यनयोरुभयभिन्नतया तन्त्ररत्ने तदुक्तत्वेन* तत्र पुरुषार्थलक्षण-स्यातिव्याप्तेश्च।

तस्मात् स्वयं प्रार्थितहृत्युद्देश्यतानिरूपितविधिविषयताकत्वं पुरुषार्थत्वम्। स्वय प्रार्थितत्वञ्च शास्त्रानधीनेष्टसाधनताज्ञानजन्ये-

* इत्यमेव पाठ सर्व्वत्र। तदुक्तत्वेन, इति तु प्रतिभाति।

श्रीगणेशाय नमः ।

# अथ चतुर्थोऽध्यायः ।

## प्रथमः पादः ।



अथातः क्रत्वर्थ ॥ एवं सिद्धे शेषिनिरूपिते शेषत्वे प्रयोजकनिरूपितं प्रयोज्यत्वमिह निरूप्यते । तच्च परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । कृतिव्याप्यत्वञ्चानुष्ठाप्यत्वरूपं कालादिव्यावृत्तं वाजपेयाधिकरणे कौस्तुभ एव निरूपितम् । अतश्च कालादेः कृतिकारकत्वघटिताङ्गत्वसत्त्वेऽपि प्रयोज्यत्वाभावः । अङ्गत्वाच्च प्रयोज्यत्वस्य भेदः ।

तेन यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यस्य, तत्तत्प्रयोज्यम् । यथा दध्यानयनप्रयाजा आमिक्षादर्शपूर्णमासादेः । यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताश्रयि यत्तत्तस्य प्रयोजकम् । यथाऽऽमिक्षादर्शादि दध्यानयनादेः । उद्देश्यता चात्रानुपादेयपश्चकसाधारणी ग्राह्या । तेन कालनिमित्तादेः प्रयोजकत्वाविघातः ।

यद्यपि विधिरेव सर्वस्यानुष्ठापकः । प्रवर्त्तनारूपत्वात् । प्रवर्त्तनारूपो हि विधिरिष्टसाधनत्वमिव कृतिसाध्यत्वापरपर्यायप्रयोज्यत्वमपि विषयस्याक्षिपतीति भवति प्रयोजकः । तथापि स यदुद्देशेन प्रयोजयति तस्यापि प्रयोजकत्वव्यवहारः शास्त्रे ।

अत्र च यद्यपि न प्रयोज्यत्वावच्छेदेन तन्निरूपणं प्रति शेषत्वनिरूपणस्य हेतुत्वम् । निमित्ताद्यङ्गत्वाभावेऽपि नैमित्तिकस्य तत्प्रयोज्यत्वेनाङ्गत्वे व्यापकत्वस्यैव पुरोडाशकपालादेस्तुषोपवाप प्रति

यदंशे अप्राप्तिस्तदंश एव कल्पनात् फलस्य च रागप्राप्तत्वेन तत्कल्पने प्रमाणाभावाद्विधेयत्वम् । प्रयोजनं, पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम् । सिद्धान्ते तु रागप्राप्तत्वात् हिंस्यादिति निषेधविषयत्वम् ।

न च हिंसाशब्दस्य मरणानुकूलव्यापारवाचित्वात्तस्य च वैरिमरणाख्याभिचारफलकश्येनरूपस्य विहितत्वात्कथं निषेधविषयत्वमिति वाच्यम् । अभिचरन् यजेतेति सामानाधिकरण्याच्छ्येनसमानकर्तृत्वावगतेरभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदानादिव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावधारणाद्रागप्राप्तस्य तस्य निषेधविषयत्वोपपत्तेः । एवञ्चावश्यं श्येनेन विषदानाद्युत्पत्तिस्तेन वैरिमरणम् । न तु श्येनेनैव साक्षादिति ध्येयम् ।

यत्तु वैरिनिष्ठो मरणानुकूलव्यापार एवाभिचारपदार्थः। तत्र च यजमानस्य श्येनद्वारा प्रयोजककर्तृत्वमिति तस्य निषेधाविषयत्वेऽपि यजमानस्य पापोपपत्तिरिति केनचिदुक्तम् । तत् श्येनस्यैव तथा सति प्रयोजकव्यापारत्वात्तस्य च विहितत्वात्तत्कर्तृत्वेन यजमाने पापोत्पत्त्यनुपपत्तेरुपेक्षितम् । यत्र तु वैरिमरणकामो यजेतेति श्रुतं, तत्र वैरिमरणानुकूलकर्तृनिष्ठलौकिकव्यापाराभावेऽपि वैरिमरणरूपपरानिष्टचिन्तनादेव पापमिति ध्येयम् । अभिचारार्थकर्मसमाप्तमधर्मस्मरणाद्वा तथा । प्रकृतेऽपि तथैव वाऽस्तु ।

यदा गोदोहनादीनां षष्ठीश्रुत्या पुरुषार्थत्वावगमेऽपि प्रकरणात् क्रत्वङ्गत्वम् । इतरथा, प्रणयनस्य चमसलोपेनाङ्गाभावादेगुण्यापत्त्या विगुणप्रणयनाश्रिताद्गुणादपि फलानापत्तेः । अत उपजीव्यत्वाद्दुर्बलमपि प्रकरणं विनियोजकम् ।

च्छाविषयत्वम्। स्वर्गकाम्यादौ हि इष्टसाधनता न शास्त्रगम्या। इदञ्च स्वर्गस्य देशविशेषरूपत्वे। सुखविशेषरूपत्वे तु शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वं बोध्यम्। यागकर्तृप्रकारादौ तु शास्त्रगम्येति। तेन स्वयं प्रार्थिताः स्वर्गादयश्च तथा। अतस्तदुद्देशेन विधीयमानं यागादि भवति पुरुषार्थम्। फलस्य च पुरुषार्थत्वव्यवहारो भाक्त इत्युक्तमेव फलं पुरुषार्थत्वादित्यत्र।

उद्देश्यताविधेयते च स्वरूपसम्बन्धविशेषात्मिके लक्षणघटके न तु साध्यत्वानुष्ठेयत्वात्मिके। तेन निषेधस्थले नरकाभावोद्देशेन निवृत्तिविधानात्फलोद्देशेन च कालविधानान्नाव्याप्तिः। पुरुषार्थेष्वभ्यनुज्ञाविधिषु च दोषाभावोद्देशेन तत्तत्क्रियाविधानान्नाव्याप्तिः। एवञ्च स्वयं प्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वमेवेह क्रत्वर्थत्वम्। क्रतुशब्दो ह्यस्मिन् प्रकरणे स्वयमप्रार्थितपरः। तेनाधानाध्ययनयोर्ज्योतिष्टोमाद्यर्थत्वाभावेऽपि तादृशाग्न्यर्थज्ञानार्थत्वात्क्रत्वर्थत्वोपपत्तिः।

क्रत्वर्थनिषेधेषु चोक्तविधया क्रतुवैगुण्यपरिहारोद्देशेन निवृत्तेर्विधेयत्वान्नाव्याप्तिः। नातिरात्र इत्यादौ तु क्रतुसाद्गुण्यस्याज्ञानान्तरत्वेऽपि षोडशिग्रहणाभावं प्रत्युद्देश्यत्वाविधानान्न सा। एवं क्रत्वर्थाभ्यनुज्ञाविधिष्वपीति सर्वं समञ्जसम्।

यद्वा, नानेन लक्षणकरणम्। अपि तु फलस्यापौनरोम्यस्याद्गा- दनाविशेषणत्वाद्विधेयत्वम्। न ह्यन्यांशयोरपि विशेषणत्वातिरिक्तं विधेयत्वम्। यदि तु विशिष्टभावनाविधावर्थादितरांशयोर्विधिरित्युच्येत, तत्फलस्याप्यविशिष्टमिति प्राप्ते।

विशिष्टभावनाविधाने आर्थिकविशेषणविधेरावश्यकत्वात्तस्य च

अथ वा षष्ठीसम्बन्धमात्रवाचिनी ब्रीह्यादिन्यायेन सार्वकाम्यवाक्यप्राप्तपशुप्रयोजकप्रणयनजनकलसम्बन्धेनैव प्रकरणानुरोधेन पशूद्देशेन गोदोहनं विधत्ते। न तु साक्षादिति प्राप्ते।

दुर्बलप्रकरणानुरोधेन परम्परासम्बन्धाङ्गीकारे प्रमाणाभावाद्व्रीह्यादिवन्नियमविधित्वाघवाभावाच्च साक्षादेवोद्देश्यत्वं पशूनाम्। प्रणयनवैगुण्यस्य च परप्रयुक्तगोदोहनजन्योपकारमात्रोपजीवनेन प्रणयनस्य तत्प्रयोगे अनङ्गत्वमपाषाहितया अनारभ्याधीतत्वात्पुरुषार्थत्वमेव तस्येति पशुप्रयुक्तमेव गोदोहनमिति स्वतन्त्रपशुकामनयैव कर्त्तव्यम्।

यत्तु भाष्यकारादिभिर्ब्राह्मणः प्रतिग्रहादिना द्रव्यमर्जयेत्क्षत्रियो जयादिना राजन्य इत्यादिविधिसुदाहृत्यानारभ्याधीतस्यापि प्रतिग्रहादिनियमस्य फलकल्पनाभिया क्रत्वर्थत्वावगमात् तादृग्विशिष्टोपार्जितद्रव्यमपि सर्वं क्रत्वर्थमेव। अत एवाद्यभिचरितहिरण्यादिसम्बन्धात् तथाग्न्याद्यादीनामपि क्रत्वर्थत्वसिद्धिरिति पूर्वपक्षयित्वा। श्रुत्याद्यभावाद्दृष्टकल्पनस्य च क्रत्वर्थत्वपक्षेऽपि तुल्यत्वान्नियमस्य क्रत्वर्थत्वानुपपत्तेरर्जनस्य च रागप्राप्तत्वेनाविधेयत्वात् तदर्जितद्रव्यस्य दृष्टार्थत्वाद्विहिताविहितसाधारणपुरुषकृत्यमात्रोपयोगित्वमेव। इतरथा जीवनपरिलोपात् सर्वतन्त्रपरिलोपापत्तेः। किञ्च द्रव्यार्जनक्रत्वाङ्गत्वपक्षेण सर्वकद्धनासुपपत्तौ दर्शपूर्णमासयाजी सद्यमावास्यां वा पौर्णमासीं वाऽतिपातयेदित्यनारभ्यपातिपातनदर्शनानुपपत्तिः। अतो द्रव्यार्जनं तावत्पुरुषार्थम्। नियमोऽप्यदृष्टार्थत्वेऽपि पुरुषार्थ एव। एवञ्च ग्रामवयादयोऽपि पुरुषार्था एव। क्रत्वर्थत्वे प्रमाणा-

क्षणभावनायाः प्रतिषेध एवाय पुरुषार्थः कलञ्जभक्षणादिप्रति-षेधवत्।

अतश्च निषेधेनेक्षणस्यानिष्टसाधनत्वाबोधेऽपि फलान्तराकाङ्क्षा-भावान्नैतावता क्षेत्रेणा युक्तो भवतीत्याद्यार्थवादिकाधवयफलकल्प-नानुपपत्तेर्नार्थवादिकफलप्रयुक्तत्वम्। अर्थवादस्त्वीक्षणजन्यप्रत्यवाया-भावबोधनद्वारा ईक्षणनिन्देति प्राप्ते।

तस्य व्रतमिति व्रतशब्देनोपक्रमस्थेनानुष्ठेयक्रियाप्रतिपादनात् तदनुरोधेनोपसंहारस्थो निषेधोऽप्यनुष्ठेयामेव क्रिया विधत्ते। अत-एव नञ्-ईक्षतिभ्यामीक्षणाभावसंकल्परूपा क्रियैव लक्षणया विधी-यते। मानससंकल्पस्य प्रवृत्त्यविनाभूतत्वात्। ईक्षतिरेव वा लक्षको-नञ्पदं तात्पर्यग्राहकम्। न चैवमुद्यदादित्यस्य पदार्थैकदेशे ईक्षणे अन्वयानापत्तिः। कारकाणां प्रथमतो भावनान्वयस्यैव स्वीकारेणै-कदेशेऽन्वयाप्रसक्तेः। अन्यते हि सोमादीनां प्रथमत एव धात्वर्थ-त्वमन्यमानैः एवेदं दूषणं न त्वस्माभिः। अतोऽनीप्सितकर्मत्वेन सक्तुवच्चिन्तकरणत्वेनैव वा भावनान्वयः। पार्ष्ठिकान्वये तु समस्त-पदघटितवाक्यस्यैव कल्पनान्न कोऽपि दोषः।

अतश्चादित्यक्षणाभावसंकल्पभावनैवोदये निमित्ते विधीयते। यमुद्यादित्यत्रत्प्रत्ययेन निमित्तत्वाभिधानात्। तत्फलञ्चार्थवादि-काधवयः। अतः सिद्धं भावनाभिन्ने नञः सम्बन्धात्पर्युदासः, स च फलप्रयुक्त इति।

नन्वेवमपि नञोभेदवाचित्वस्य तदन्य-तद्विरुद्ध-तदभावेषु नञ् इति प्रसिद्धेरुदयत्पदेनैव सम्बन्धादीकारादुपाङ्गिसादित्येक्षण-

प्रतिषिद्धत्वाभावान्मुख्यार्थत्वमेव । सोऽपि च यौपि कर्माणि जीवि-
केत्यादिवचनात्मकरणाद्यभावाच्च पुरुषार्थः ।

न्यायागतेन द्रव्येण कुर्यात् कर्माणि वै द्विजः ।
अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः ॥
धर्माकाङ्क्षी तु यजते न धर्मफलमश्नुते ।

इत्यादिवचनैश्च मुख्यगौणसाधारणत्वद्रव्यपायानामधिकारितार-
तम्येन क्रत्वर्थस्यापि बोधनात् संयोगपृथक्त्वन्यायेनोभयार्थत्वेऽपि न
दोषः । यदि तु शिलोञ्छादेः कश्चित्फलश्रवणं भवेत्, तदा जीव-
नाश्रितयावज्जीवशिलोञ्छनियमस्यैव फलजनकत्वं बोध्यं, न तु प्रति-
षेधरूपेति व्यर्थोऽयं विचारः । क्रत्वाधिकाराले वा बोध्यः ॥४॥१॥२॥

तद्व्रतं ॥ तस्य व्रतमित्युपक्रम्य,

नेक्षेतोद्यन्तमादित्यमस्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इत्यादि प्रजापतिव्रतं श्रुतम् । तत्रापि भाष्यकारादिभिः प्रति-
षेधत्वे पर्युदासत्वे चोभयथापि फलकल्पनादिभिया क्रत्वर्थत्वमा-
शङ्क्य, अनारभ्याधीतत्वात्क्रत्वाद्यभावेन च क्रत्वर्थत्वानुपपत्तेः पर्यु-
दासत्वमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितम् । तदपि कलञ्जभक्षण-
प्रतिषेधस्थिरसाधारणन्यायेन क्रत्वर्थत्वशङ्कानुपपत्तेरुपेक्षितम् ।

विचारस्त्वयमेवात्र कर्तव्यः । किमयं प्रतिषेधः पर्युदासो
वेति । सिद्धान्ते चार्थवादिकफलप्रयुक्तत्वात् प्रतिषेधपक्षे च तद-
भावात् गुरुत्वापत्तिः । तत्र मन्त्रः प्रधानाम्वयत्वत्यक्तेर्धात्वर्थाद्य-
न्वयश्च सत्यपाभियाऽनुपपत्तेः पर्युदासत्वायोगाद्रागप्राप्तोद्यदादित्ये-

लक्षणकत्वाभावाद्यग्रभ्देऽपि तदनापत्तेर्नैतस्य स्फ्यादिविधायकत्वम्। तदेतदर्थवादत्वस्य तृतीयलिङ्गत्वेन पूर्वपक्षोत्थानाभावेऽपि शिष्यहितार्थमुक्तमिति द्रष्टव्यम्।

यत्तु भाष्यादिभिः लिङ्गमुक्तं स्फ्याद्याकारस्य शवदानेन विकल्पत्वात् पूर्वपक्षे परिधानीये कर्मणि आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति यज्ञपात्रकरणकदाहानुपपत्तिरिति। तत्पूर्वपक्षे उद्धननाद्यर्थपाषाणां पृथक्सत्त्वात्तेषाञ्च यज्ञसाधनत्वाभावेऽप्यायुधशब्दाभावेन प्रयोजकतयैव यज्ञपात्रत्वोपपत्त्या दाहोपपत्तेरुपेक्षणीयम्॥ ४॥२॥४॥

तचैकत्वं॥ पशुना यजेतेत्यादौ यत्रोपादेयपश्वादिगता संख्या विभक्त्युपात्ता सा किं विवक्षिता न वेति चिन्तायाम्। सत्त्वप्रधानानि नामानीति स्मृत्या प्रातिपदिकार्थस्य पश्वादेर्विभक्त्युपात्तसंख्याविशेष्यत्वरूपप्राधान्यसमाख्यया विभक्त्युपात्तसंख्यायाः प्रातिपदिकार्थं प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वावगमाद्वाक्यीयक्रियान्वयानुपपत्तेस्तदभावेऽपि क्रियाया अवैगुण्याच्च विवक्षिता संख्या।

न चैकत्वादेः पश्चन्वयेऽपि तद्विशिष्टस्यैव पशोः कारकान्वयद्वारा क्रियासम्बन्धात्कोहितोष्णीषादिवत्पश्वङ्गविशेषणस्यापि विवक्षोपपत्तिः। संख्याकारकत्वयोर्विभक्त्या युगपदुपादानेन संख्यायाः प्रथमतः पश्वन्वयमभिधाय पश्वादिविशिष्टस्य पशोः कारकान्वयाभिधाने विरम्य व्यापारतापत्तेः। न च तथापि संख्यायाः पदश्रुत्या पश्वन्वयाङ्गीकाराद्युगपदन्वयद्वयस्य शाब्दबोधस्य च विरुद्धत्वात् प्रथमतः शुद्धस्य पशोः कारकान्वयमङ्गीकृत्य पश्चात्संख्यायाः पश्वन्वयाङ्गीकारे तथापि

स्यैवाघघयफककलेन विधानोपपत्तेर्न संकल्पलक्षणा। न च सुबन्तसमस्तेन नञः समासापत्तिः। नानुयाजेष्विति वदुपपत्तेः। न च नञ्श्रादित्यपदेन वा सम्बन्धः उद्यत्पदेन वेत्यत्र विनिगमकाभावः। विशेष्यसाकाङ्क्षत्वस्यैव विनिगमकस्य सत्त्वादिति चेत्।

तथात्वेऽपि नोद्यन्तमिति सुबन्तपदस्य निपातान्वयव्युत्पत्त्यभावेन उद्यत्त्वेऽपि पदद्वयलक्षणाया आवश्यकत्वात्। तथात्वे स्वभावेनैव तादृशादित्येक्षणस्य सर्वदा जायमानत्वेनाघघयोपपत्तेर्विधिवैफल्यात्। स्वरसतः प्रतीयमाननिषेधस्य संकल्पलक्षणयाऽप्यपरित्यागेन भवदुक्तपर्युदासानुपपत्तेश्च। अस्मिन्नुदाहरणे तथाङ्गीकारेऽपि न वारिस्थमित्यचैकादश्याम् भुञ्जीतेत्यादौ च संकल्पलक्षणाया आवश्यकत्वाच्च। प्रयोजनं स्पष्टम्। सूत्राण्यप्यस्मिन्नेव विचारे सुधीभिर्योज्यानि॥ ४॥१॥३॥

द्रव्याणि॥ स्रुवेणेत्याद्युपक्रम्य श्रुतस्य यज्ञायुधवाक्यस्य तृतीये उदाहृतस्यैव साक्षात्प्रधानभूताग्नेयाद्युद्देशेनोत्पत्तिवाक्याविहितद्रव्यकोपांशुयाजोद्देशेनैव वा स्फ्यादिद्रव्यविधायकत्वम्। इतरथा समस्तवाक्यवैयर्थ्यापत्तेः। यज्ञशब्दस्य सत्याधनोद्धननादिलक्षकत्वापत्तेश्च। तस्मादुद्धननादिवाक्यैः स्फ्यादीनामुद्धननाद्यर्थत्वेऽप्यानेन सह विकल्पेनोपांशुयाजार्थत्वमपीति प्राप्ते।

प्रकरणविध्येकवाक्यत्वादस्य तदर्थवादत्वेनाप्युपपत्तेः अग्न्यग्रोपभूतेन सर्पणे येति वाक्येन विहितस्याज्यस्य पाक्षिकत्वापादकत्वानुपपत्तेरुद्धननादिक्रियाभेदेऽपि च दृष्टत्वस्य प्रकरणस्यैकक्रियासमन्वादेवोपपत्तेरायुधशब्दस्य प्रयोजकत्वलक्षणयाऽप्युपपत्तौ साधन-

श्वादीनामपि बाधप्रसङ्गात् तन्निवृत्त्या दानाश्रितस्यैव गोरुद्देशेन विधानार्थमेकग्रहणोपपत्ते। अतो विवक्षितैव सख्या। अत एव कर्णायामा अवलिप्ता रौद्रा नभोरूपा पार्जन्यास्तेषामैन्द्राग्नौ दशम-इति दशमत्वदर्शनमुपपन्नम् ॥४॥१॥५॥

तथा च॥ भवतु सख्या शब्दार्थत्वादिवक्षिता। लिङ्गन्तु उपादेयगतमपशब्दार्थत्वादविवक्षितम्। न हि तत्प्रातिपदिकार्थं। सिहादिपदात् तदप्रतीते। तस्य लिङ्गत्रयसाधारण्येन लिङ्गसामान्यव्यभिचाराच्च। नापि प्रत्ययार्थं। व्यभिचारादेव। नापि टादिसु ब्विकाराणा तस्माच्छब्देन पुमौत्यादीनाम्। विलिङ्गे वृक्षादौ विपरीतलिङ्गे वृदसचिकादौ च प्रयोगेन व्यभिचारादेव। अत शब्दानुशासनमात्रमिदं, न लिङ्गं नाम कस्यचिच्छब्दस्यार्थ इत्य विवक्षितमिति प्राप्ते।

सिद्ध तिष्ठतीत्यादावनन्यथासिद्धलिङ्गप्रतीतेर्लिङ्गमपि कचि ट्टादिसुब्विकाराणां क्वचित्तिष्ठचतस्रादिप्रातिपदिकविकाराणा वाच्यम्। अत सुवर्थत्वेन सख्यावत् क्वचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम्। यत्र तु बाधस्तत्र साधुत्वार्थं तच्छब्दप्रयोग॥ ४।१॥६॥

आश्रयिषु॥ यजति जुहोतीति वा यत्र श्रुत, तत्र यजेस्तावद्देवतोद्देशविशिष्टद्रव्यत्यागवाचित्वात्त्यागांशस्यादृष्टविधया आरादुपकारकत्वम्। उद्देशांशस्य त्वदृष्टविधया तदुपकारकत्वमेव। अत-एवोद्देशाङ्गभूतदेवतायास्त्यागाङ्गभूतद्रव्यापेक्षया दुर्बलत्वम्। प्रक्षेपस्तु तत्र त्यागाङ्गद्रव्यसंस्कार एव। जुहोतिस्थले तदङ्गमेवादृष्टविधये

विरक्त्यव्यापारतापत्तिरिति वाच्यम् । तथापि भावनान्वितकारकविशेषणविशेषणस्यासमस्तपदस्थत्वे भावनान्वयव्युत्पत्त्यभावेनाविवक्षोपपत्तेः । इतरथाऽरुणस्याप्यानुशासनिकमत्वर्थलक्षणया एकहायनीं प्रत्येव विशेषणत्वोपपत्तौ प्रथमतः क्रियान्वयमभ्युपगम्य पार्ष्ठिकैकहायनीसम्बन्धसिद्धान्तभङ्गापत्तेः ।

अत्र च लौहित्यादेर्भावनान्वितकारकविशेषणविशेषणत्वेऽपि समस्तपदत्वान्न क्षतिः । वारवन्तीयादेस्तु हृत्वा शब्दोक्तभावनायामेवान्वय इति न कापि क्षतिः । अत एव सोमाहरणादीनामपि न प्राथमिको धात्वर्थान्वयोऽपि तु भावनान्वय एवेत्युक्तं तत्र तत्र ।

किञ्च न प्रत्ययार्थस्यैकत्वस्य प्रकृत्यर्थं पशुं प्रति प्रकारता । प्रत्ययार्थप्राधान्यभङ्गापत्तेः । अपि तु पशोरेव करणत्वं प्रतीवैकत्वं प्रत्यपि प्रकारता । अतश्चैकत्वस्य करणत्ववद्विधेयभावनायामप्रकारत्वादविवक्षेति प्राप्ते ।

पशोः करणत्व इवान्वयो न त्वेकत्वेऽपि, प्रमाणाभावात् । अतश्च पशोस्तद्द्वारा भावनान्वयवत् सङ्ख्याया अपि बलीयस्या समानाभिधानश्रुत्या आधेयत्वेन सामानाधिकरण्येन वा प्रथमतः कारकान्वयस्यैवाङ्गीकारात्पश्चाच्च पदश्रुत्यादिना आधारत्वसम्बन्धेन पश्वन्वयोपपत्तेर्निरूढव्युत्पत्त्यैव सङ्ख्याया भावनासम्बन्धित्वाद्विवक्षितत्वम् ।

न चैवं यदि सोमसपहरेयुरेकाङ्गां दक्षिणां दद्यादित्यादावेकपदवैयर्थ्यम् । गामित्यनेनैवैकत्वविधानोपपत्तेरिति वाच्यम् । एकत्वविधिवद्गोत्वविधेरपि प्राप्तदक्षिणाऽनुवादेन धेनुर्दक्षिणेति वत् त्रिविधकारकान्तरविधानेनापत्तौ दादगातमत्याक्षत्वामान्यविद्धिा-

स्वाहाकारयागः। प्रकृतौ तु द्रव्यनाम्ने यस्य सर्वाणि हवींषि नश्ये-युर्दुष्येयुरपहरेयुर्वाऽऽज्येनैतादेवताः परिसंख्याय यजेतेति वचनादाज्येन समापनम्। सन्निपत्त्योपकारकत्वे तु संस्कार्याभावादिडादिवल्लोप एवेति विशेषः ॥४॥१॥७॥

अर्थे ॥ एवं तावत्कत्वर्थपुरुषार्थविचारद्वारेण प्रयोजकत्वं चिन्तितम्। इदानीन्तु साक्षादेव तच्चिन्त्यते। तत्सिद्ध्यर्थस्तु कश्चित्कोऽङ्गाङ्गिभावविचार इति सुखग्रहणार्थं प्रतिज्ञामात्रमिदम् ॥४॥१॥८॥

एकनिष्पत्तेः॥ चातुर्मास्येषु प्रथमे पर्वणि तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रुतम्। तत्र दध्यानयनस्यामिक्षा वाजिनञ्चेत्युभयं प्रयोजकमुतामिक्षैवेति चिन्तायाम्।

दध्यानयनवाक्ये तावत्तप्तपयोऽधिकरणकं दध्यानयनमात्रं श्रुतं न तु पयसो दध्नो वा प्राधान्यम्। सप्तम्या प्राधान्यानभिधानात्। तयोरुद्देश्यविशेषणत्वेन तापस्याविवक्षापत्तेश्च। न चानयतेर्द्विकर्मकत्वात् पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः। द्विकर्मकधातुस्थले हि अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारकसम्बन्धमात्रविवक्षायाञ्च सम्बन्धसामान्ये षष्ठीप्राप्तौ अकथितञ्चेति सूत्रेण कर्मसंज्ञाकरणाद्द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्। प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षावगतेर्द्वितीयकर्मप्रसक्त्यभावाच्च।

दध्नस्तूपयोगाभावादेव सुतरान्न प्राधान्यावगतिः। न ह्यामिक्षा नाम दधिपयोरूपा। रसघनीभावादिधर्मभेदेनार्थान्तरत्वात्। तस्मै घृत तस्मै दधि तस्यै आमिक्षा तस्यै वाजिनमिति भेदेन

तरौ । समप्रधानौ वा । अत एवोभयत्र मन्त्रस्तत्तदङ्गभूतदेवतादि-प्रकाशनार्थ एवेति स्थितिः ।

यत्र तु स्वाहाकारस्विष्टकृत्सूक्तवाकपशुपुरोडाशपिष्टलेपादि-होमवाजिनेज्यादौ परकीयं द्रव्यं देवता वा प्रक्षेपांशेनोद्देशांशेन मन्त्रेण वा संस्क्रियते । यथा स्वाहाकारसूक्तवाकपशुपुरोडाशादा-वाग्नेयादिमन्त्रदेवतोद्देशाभ्यां स्विष्टकृति प्रक्षेपांशेन तदीयं द्रव्यं, मन्त्रेणैव तदीया देवता । उद्देशांशस्य स्विष्टकृद्देवताकत्वात् । पिष्ट-लेपादौ प्रक्षेपेण तदीयं द्रव्यमेव । सर्वत्र प्रमाणं तत्र तत्रोक्तं वक्ष्यते । यस्तु तत्र त्यागांशः सोऽदृष्टार्थ एव । न च तस्य पदार्थैकदेशत्वा-त्स्वप्रयोजनकल्पेऽपि न क्षतिः । विहितपदार्थान्यथानुपपत्त्या तद-वयवानामपर्यालोचितत्वेन प्रयोजनाकाङ्क्षोपपत्तेः । अत सोऽप्यदृष्टार्थ एव प्रफलवत्प्रक्षेपाद्यङ्गं तत्संस्कार्यद्रव्याद्यङ्गमेव वेति तत्संस्कार्य-द्रव्यदेवतादाविव प्रोक्षणादिवददृष्टं जनयतीति सन्निपत्योपकारक-त्वमयुक्तमेवेति प्राप्ते ।

विशेष्यतया श्रुतौ तस्य त्यागांशस्य प्रक्षेपाद्यङ्गत्वे प्रमाणाभावा-द्देवतादेश्च दृष्टमात्रापेक्षत्वेनादृष्टोपकारानपेक्षत्वात् प्रकरणात्स्वर्गा-ग्न्यारादुपकारकत्वमेव प्रयाजादिवत् । तच्च लेतावान्विशेषः । यत्परप्रयुक्तद्रव्यदेवतोपजीवि, तत्र परप्रयुक्त्यभावे स्वातन्त्र्येण तद्द्रव्य देवताऽऽक्षेपकम् ।

अत एवैककपालस्य सर्वहोमे स्विष्टकृत्यागस्य लोप एव । लोपकारकद्रव्यस्य नाशादिनिमित्ताभावेनान्येनापि समापना-योगात् । एवमादावयागे वाचनिकप्रयाजादिविनियोगेऽपि च न

आमिक्षायागाङ्गत्वानापत्तेस्तदिकारेऽतिदेशो न सिद्धेत्। अष्टौ हवींषीत्यस्य च विनिगमनाविरहेणावयुत्यानुवादत्वस्य त्वन्मते* आपत्तेः। यत्तु भाष्यकारादिभि: पूर्वपक्षे वाजिनलोपे आमिक्षानाश इव पुनर्दध्यानयनेन वाजिनोत्पत्तिः भिन्नाग्नौ त्वाज्येन समापनमिति प्रयोजनमुक्तम्। तत् षष्ठे हविर्नाशादिनिमित्ते आज्येन समापनस्य विधित्वेन वक्ष्यमाणत्वेन पूर्वपक्षेऽपि तुल्यत्वादुपेक्षितम्। ४। १॥८॥

पदकर्म॥ सोमक्रयार्थमेकहायनीं विधाय क्रयदेशे तन्नयने क्रियमाणे, तस्याः षट् पदान्यनुनिष्क्रामति सप्तमं पदं स्फ्येन लिखेत्। हिरण्यमन्तर्धाय पदे जुहोति। ततः सप्तम पदमध्वर्यु-रञ्जलिना गृह्णाति। यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाक्षमुपांज्यादिति श्रुतम्†।

तत्राक्षाभ्यञ्जनमपि क्रयवदेवैकहायनीनयनस्य प्रयोजकम्। जन्यत्ववदङ्गित्वस्याप्युभयत्र समत्वात्। अक्षाभ्यञ्जने हि तच्छब्देनैव पदपांशवो निर्दिष्टा इति ते तदङ्गम्। पदस्य चैकहायनीनिरूपितत्वम्, तस्याः सप्तमं पदमित्युपपदाच्छाखान्तरवचनाच्चावगत-मिति साऽपि तदङ्गम्।

अतश्च नीयमानसंस्कारार्थस्य नयनस्याप्युभयार्थत्वादुभयप्रयोज्यत्वम्। न च प्रकरणादेवैकहायनीलाभात् तच्छब्दस्यानुवादकत्वम्। प्रकरणप्राप्तेः पूर्वप्रवृत्तत्वाङ्गीकारेण प्रयोजकत्वफलकाङ्गत्वविध्युपपत्तेः। न च तथापि क्रयप्रयुक्तत्वविशिष्टैकहायन्या एव तच्छब्देन परामर्शात्

* त्वन्मते,—इति भवितुमुचितम्।

† तेनाक्षमभ्यञ्ज्यादिति,—इति भाष्यधृत पाठः।

व्यपदेशाच्च। गोपयसोर्यदिति विकारवाचि-यत्प्रत्ययान्तपयस्याशब्द-पर्यायत्वाच्च। जुषतां युक्तं पय इति तु धान्यशब्दवद्विकारपरम्। अतश्च दध्यानयनस्य वाक्ये उद्देश्याभावात् सामर्थ्येन दधिसंसृष्टपयोजन्यामिक्षार्थत्वाङ्गीकारे च अन्यत्वाविशेषेण वाजिनार्थत्वस्याप्यवगतेः उभयं प्रयोजकमिति प्राप्ते।

सा वैश्वदेवीति सर्वनाम्नः प्रकृतपरामर्शित्वात् पूर्ववाक्ये यत्सा-धान्येन निर्दिष्टं तदामिक्षेत्यवधार्यते, न त्वर्थान्तरम्। रसश्च मधु-राम्लरूपयोस्तयोरेवावधार्यत इति न ततोऽप्यर्थान्तरम्। घनीभावस्तु पीयूषादिवदभेदेऽप्युपपन्न एव। पृथङ्निर्देशोऽप्यवस्थान्तरात्। विकारार्थ-यत्प्रत्ययस्मृतिरपि तच्छब्दाद्यनुरोधेनावस्थापरैव। तस्मा-दामिक्षाऽर्थान्तरमपि तु दधि पयो वा। तथापि विशेषनिर्णय-स्सूत्रेऽतिदेशविद्यार्थं निरूपयिष्यते।

तत्सिद्धं स्ववाक्य एवामिक्षारूपोद्देश्यसम्बन्धित्वावगतेर्दध्यानयनं तत्प्रयुक्तमेव। न तु वाजिनप्रयुक्तम्। तस्य तच्छब्दाद्यभावेनार्था-न्तरत्वप्रतीतेः। तज्जन्यत्वेऽपि शेषित्वानवगमात्। अतश्च तस्यानु-निष्पन्नत्वात्, तथात्वस्य खिष्टकृदादिवदनुनिष्पन्नप्रतिपत्तित्वावगमेन परप्रयुक्तदध्यानयनोपजीवित्वावगतेर्न तत्प्रयोजकत्वं वाजिनस्य कल्प-नीयं गौरवात्।

प्रयोजनं, पूर्वपक्षे वाजिनयागस्यार्थकर्मत्वेन समप्राधान्यापत्तेरा-मिक्षायागविकारेऽनतिदेशः, सिद्धान्ते त्वनुनिष्पन्नप्रतिपत्तित्वेना-मिक्षायागाङ्गत्वात् तद्विकारेऽतिदेशः।

सोमेश्वरस्य तु सिद्धान्तेऽपि वाजिनयागे अर्थकर्मत्वं वदत-

द्वैधमित्यप निराकृतत्वात् पुरोडाशार्थकपालनियम इत्याशङ्क्योत, ततोऽस्तु नाम पुरोडाशसम्बन्धविशिष्टस्यैव विधानम्। तत्फलञ्च तद्विशकपालव्यावृत्तिरेव न तत्प्रयोजकत्वमपि। सम्बन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन प्रधानभूतकपालबाधानुपपत्तेश्चर्वादौ तन्नियमाभावरूपस्याप्रयोजकत्वफलस्यासम्भवादिति प्राप्ते।

पुरोडाशसम्बन्धस्य प्रमाणान्तरगम्यस्यालोचने तत्प्रयुक्तत्वस्याप्यवगतेर्न पुनरुपधानविधिरपि तत्प्रयुक्ते। अतो साधनादवघातकालीनमुपोपवाप परप्रयुक्तकपालोपजीवितया न कपालोपादानाधादनयो प्रयोजक। निनयनकालीनन्तु कपालधारणस्य प्रयोजको भवत्येव। उपादानस्य तु सोऽप्यप्रयोजक'। प्रयोजन, चर्वादौ न कपालनियम। अग्निहोत्रहवण्यान्तु वक्ष्यते ॥४।१।११॥

पश्वावदानाभावात्॥ पशौ, शकृत्पत्रविधूति लोहित निरस्यतीति श्रुत निरसन, पश्वालम्भस्य शकृल्लोहितस्यैव वा प्रयोजकम्। न ह्येव तस्य प्रतिपत्ति। हृदयादीनामेव हविष्ट्वेन तस्यानुपयुक्तत्वादपूर्वसाधनत्वाभावाच्च। अतश्चार्थकर्मैवेद शकृल्लोहितस्य तावत्प्रयोजकम्। पश्वालम्भोऽपि च विशसनवाक्य श्रुत प्रयोजनाकाङ्क्ष सन हृदयादेरिव लोहितादेरपि पशुप्रकृतिकत्वमाचिपति। न हि हृदयादेस्तदुत्पत्तिवाक्याधीनम्। तस्य तदभाव हविष्ट्वेनैव तद्विधायकत्वात्। अतस्तवत्यपाउपदमपि देवतासम्बन्धसिद्ध्यर्थं वस्तुतोऽनुवाद एव।

अस्तु वोत्पत्तिवाक्यावगत पशोर्यागसाधनत्वम् विशसनवाक्यासुरोधात् हवीरूपहृदयादिप्रकृतिरूपमेवेति विशसनवाक्यस्यापि

पुरोडाशकपालन्यायापत्तिः। तथात्वे फलाभावेन तच्छब्दवैयर्थ्या-पत्तेस्तस्यैकहायनीस्वरूपमात्रपरत्वाङ्गीकारादिति प्राप्ते।

विधिगौरव-प्रयोजकशक्तिकल्पनागौरवाभ्यां तच्छब्दस्य पूर्व-परामर्शित्वस्वभावेनोपजीव्यप्रकरणप्राप्तानुवादकत्वावगतेस्यैकहायन्याः क्रयमात्राङ्गत्वावसायात् तदङ्गभूतनयनस्यापि तन्मात्रार्थत्वप्रतीते-रक्षाभ्यञ्जनं पदहोमादिकं वा क्रयप्रयुक्तैकहायनीतन्नयनलाभेन चरितार्थं नैकहायन्यास्तन्नयनस्य वा प्रयोजकम्।

अतश्चैकहायन्यां क्रयार्थं नीयमानायां दैवाद्व्याघ्रेण सप्तमपद-पातेऽक्षाभ्यञ्जनार्थं पुनर्न तदानयनम्। यथाशक्तिप्रयोगादौ क्रय-लोपेऽपि वा नैकहायनीप्रयुक्तिः। अक्षाभ्यञ्जनार्थन्तु ये केचिद्गावो-ग्राह्या एव। गुणलोपे मुख्यलोपानुपपत्तेः। होमस्तु आरादुपकार-कत्वाद्व्याघ्रलोप एव। यथाशक्तिप्रयोगे लाघवनीये निरधिकरणक एव वेत्यन्यदेतत् ॥४॥१॥१०॥

अर्थाभिधान॥ दर्शपूर्णमासयोः पुरोडाशकपालेन तुषानुपवप-तीति श्रुतम्। तत्र कपालस्य, कपालेषु पुरोडाशं श्रपयतीति श्रपणे विनियुक्तस्यापि तृतीयया तुषोपवापार्थत्वेनाप्यार्थिकविशेषण-विधिना विनियोगात् उभयप्रयुक्तत्वम्। न च पुरोडाशार्थकपाल-त्वेनैव तुषोपवापे विनियोगाच्च तुषोपवापप्रयुक्तत्वम्। प्रकृतिविकार-भावाभावेन तादर्थ्यसामानाधिकरण्यायोगात्। षष्ठीसमासे च सम्बन्धमात्राव-गतेस्तस्य च कपालत्वेनैव विनियोगेऽपि पुरोडाशार्थोपात्तस्यैव प्रसङ्गेन तद्धर्मोपपत्तेरनुवादकत्वात्।

यदि तु प्रसङ्गलक्षणाभावादुपादेयस्याप्रकृतपदस्य च तानि

चार्या यावत्प्रकृतप्रतिसम्बन्धित्वाभक्तावन्यान्याचेपकत्वकम् । गौरवात् । अस्ति च प्रकृते प्रतिपत्त्यपेक्षा. शेषः । अतस्तदुपजीवकत्वमेव । अत एव शेषात्स्विष्टकृत इत्यपि लिङ्गमुपपद्यते । एवञ्चोत्तरार्द्धस्य त्यागं प्रति गुणत्वेन विनियुक्तस्यापि प्रधानगतप्रतिपत्त्यपेक्षानुरोधेन वाक्यान्तरकल्पनया प्रक्षेपांशं प्रति प्राधान्येऽपि न चतिः । श्रुतयाग-विधिनाऽपि धारणप्रयोजकत्वकल्पनाभिया तदनुपपत्तेश्च ।

अत एवानुमितप्रतिपत्तेरेव धारणप्रयोजकत्वादिकल्पना । दोषो नानुमिते ह्यभाविति न्यायात् । अनुमानस्य फलमुख-त्वाच्च । अत एव सर्वाणि हवींषि समवद्यतीति लिङ्गमपि प्राधान्या-दुपपन्नम् । अत एव स्विष्टकृत्प्रक्षेपोऽपि प्रधानाङ्गभूतस्त्यागयुक्त एव सन् स्विष्टकृत्यागस्याप्यङ्गं तत्प्रयुक्तश्च । प्रतिपाद्यत्वाविशेषात् । अतः स नावयविनो नोत्तरार्द्धस्य वा प्रयोजकः । आद्यप्रक्षेपस्य तु प्रयोजको भवत्येवेति सिद्धम् । ४॥१॥१२॥

अभिघारणे ॥ दर्शपूर्णमासयोः, प्रयाजशेषेण हवींष्यभिघारय-तीति श्रुतम् ।

तत्र प्रयाजशेषोऽभिघारणस्य तृतीयाद्वितीयाभ्यामुपयुक्तसंस्कारा-पेक्षया चोपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाद्धवि संस्कारकत्वमेव । न तु प्रयाजशेषप्रतिपत्त्यर्थत्वं, लक्षणाप्रसङ्गात् । न च हविःसंस्कार-कत्वे अदृष्टकल्पनापत्तेरपेक्षितदृष्टरूपप्रतिपत्त्यर्थत्वलाभाय लक्षणा-दयाङ्गीकरणमपि न दोषायेति मिश्रमत युक्तम् । निषादस्थ-पत्यधिकरणन्यायेनादृष्टकल्पनादेः फलमुखत्वात् । किञ्च द्वितीयायाः समन्यर्थत्वचकत्वे हविषामभिघारणं प्रत्युपादेयत्वापत्तेरुद्देश्यत्वस्य

तत्परत्वमेव । तथापि निरसनस्यार्थकर्मत्वाज्जाघनीवल्लौकिकशकृल्लोहितप्रयोजकत्वे न किञ्चिद्बाधकमिति प्राप्ते ।

द्वितीयया निरसनस्य प्रकृतत्वावगमाच्च लोहितादिप्रयोजकत्वमपि । उपयुक्तत्वाभावेऽपि चानुनिष्पन्नत्वेन प्रतिपत्तिसापेक्षत्वात् परम्परयाऽपूर्वसम्बन्धस्य सत्त्वेन चानर्थक्याभावात् प्रतिपत्तिकर्मत्वोपपत्तेः । प्रयोजनं, पशुलोहिताद्यभावनाशयोस्तल्लोपः । प्रायश्चित्तं परं तल्लोपनिमित्तं भवत्येव । सोमेश्वरलिखितरक्षोभागत्वपक्षे तु त्यागांशस्यान्येन येन केनचिद्वा द्रव्येण समापनं भवत्येवेति द्रष्टव्यम् ॥४॥१॥१२॥

एकदेश ॥ यत्रोत्तरार्द्धात् स्विष्टकृते समवद्यतीत्यादौ न द्वितीयादिनिर्देशस्तत्र प्रतिपत्तित्वे प्रमाणाभावादपादानत्वेन श्रुतस्योत्तरार्द्धस्य यागं प्रति गुणत्वादुत्तरार्द्धस्य तावद्यागः प्रयोजको भवत्येव । तस्य च सम्बन्धित्वेन स्वप्रतिसम्बन्धियत्किञ्चिद्द्रव्याक्षेपकत्वं सुलभमेव । न च प्रकृतपुरोडाशरूपावयवविशत्वे न स्वतन्त्राक्षेपकत्वम् । प्रकृतस्य स्वकार्ये सर्वस्य विनियुक्तत्वेनान्यत्र विनियोगासम्भवात् । न च तस्य प्रतिपत्त्यपेक्षत्वात्प्रक्षेपांशेनास्य प्रतिपत्तिकर्मत्वम् । प्रक्षेपांशस्याग्नेयादिप्रक्षेपवत्स्वयागाङ्गत्वेनैव प्रयोजनानपेक्षत्वात् । उत्तरार्द्धस्यांशभेदेनापि गुणत्वप्रधानत्वयोरङ्गीकारे वैरूप्यप्रसङ्गाच्च । प्रधानमात्रत्वस्वीकारेऽपि लक्षणायास्तावदनिवारणाच्च । अतः स्विष्टकृद्यागोऽर्थकर्मैव प्रयाजादिवदुत्तरार्द्धतदवयविनोः प्रयोजक इति प्राप्ते ।

यद्यपि तावदर्थकर्मैव स्यात्तथापि सम्बन्धित्वात्प्रतिसम्बन्ध्यपे-

विवक्षापत्तौ विरुद्धैव करणापत्तिः । तथा च यद्येकत्वाधिकरणे तद्विवक्षाऽभिधानं वार्त्तिककारीयं नोपपद्येत ।

यत्तु अभिघारणे प्रत्याधारत्वेनान्वितानामपि ध्रुवियामाधारतानियमं प्रत्युद्देश्यत्वाद्विशेषणाविवक्षेति । तन्न । श्रुताभिघारणं प्रत्युपादेयत्वेन विवक्षितत्वे आर्थिकाधारतानियमं प्रत्यपि त्रयाणामेवोद्देश्यतापत्तेः । किञ्च यदर्थं नियमाश्रयस्तदर्थं नियम इति सर्वत्र सृष्टेराधारतानियमोऽपि अभिघारणनियमवत्तद्द्वारा प्रयाजेष्वेवोपयुज्येत । इतरथा पशुस्वत्ताघनीतुषोपवापादिवाक्येष्वपि करणतानियमस्य आघनीप्रतिपत्त्यर्थत्वकपालसंस्कारकत्वापत्तेरेकत्वादिविवक्षापत्तिः । एतेन यद्द्वयेऽपि लक्षणामनङ्गीकृत्याधारतानियमोद्देश्यताभावेनैव हविःसंख्याविवक्षामुक्तवतो भट्टसोमेश्वरस्यापि मतं प्रत्युक्तम् ।

यत्तु केचित् तृतीयाया एव द्वितीयार्थे लक्षणामङ्गीकृत्याभिघारणस्योभयार्थत्वे विजातीयानेकोद्देश्यकत्वाच्च न वाक्यभेदइत्युक्तम् । तदपि न । निषादस्थपत्यधिकरणविरोधस्य तादवस्थ्यात् । श्रुतोद्देश्यत्वे लाक्षणिकत्वस्यान्याय्यत्वाच्च । न्याय्यत्वेऽपि वा श्रुतध्रुवीद्वयोद्देश्यसंस्कारस्यैव धारणप्रयोजकत्वापत्तेश्च ।

किञ्च वैजात्यं न तावन्निमित्तफलादिवत् । उभयोरपि स्फीतत्वात्तयोरुद्देश्यत्वस्य समानत्वात् । अथ वैजात्याभावेऽपि साकाङ्क्षत्वादेव नानेकोद्देश्यता । तथात्वे गोदोहनादेरपि पशुप्रणयनाद्युभयोद्देश्यतापत्तेः । अतोऽभिघारणस्य केवलहविःसंस्कारार्थत्वान्नियमकालीनतुषोपवापपुरोडाशकपालन्यायेन शेषोत्पादना-

स्याप्यविशेषेण सर्वप्रयाजार्थत्वादौपभृतेन विकल्पः। चिरतः प्राचीनं प्रयाजान्यजतीति तु अत्रयुक्तानुवादमात्रमिति प्राप्ते।

कालविशिष्टसमानयनस्यानूयाजान्यसंस्कारकत्वे अदृष्टार्थत्वापत्ते-र्विशिष्टविधिगौरवात् चिरित्यस्याप्ययुक्तानुवादत्वापत्तेश्च प्रयाजार्थ-त्वेदं समानयनम्। तच्च जुह्वा जुहोतीति वचनादर्थप्राप्तमेवेति तदनुवादेन कालमात्रमनेन विधीयते। अतश्च प्रयाजानूयाजेभ्य-इत्यत्र प्रयाजाभ्यामनुयाजेभ्य इत्यपि विग्रहे न दोषः। अत एव जौहवमपि परिशेषादाद्यप्रयाजत्रयार्थमेवेति न विकल्प-प्रसङ्गोऽपि।

एवञ्चातिथ्यायामिडान्तत्वेनानूयाजाभावेऽपि चतुर्गृहीतान्याज्या-नीति बहुवचनं जौहवौपभृतचतुर्गृहीतयोः प्रयाजेषु समुच्चयात् ध्रौवचतुर्गृहीतमादाय सङ्गच्छते। इतरथा तयोर्विकल्पादनूयाजा-भावे ध्रौवमादाय चतुर्गृहीतद्वित्वापत्तेर्बहुवचनानुपपत्तिः। अतश्च प्रयाजद्वयं समानयनस्य तत्संस्कृताज्यस्य च प्रयोजकमिति सिद्धम्। सत्रादौ तु समानयनपदं तत्कालीनप्रयाजद्वयपरम्। आज्यसंस्कारस्य समानयनस्याज्यप्रयोजकत्वसिद्धान्तानुपपत्तेः ॥४॥१॥१५॥

तत्र॥ एवं तावदौपभृतस्य प्रयाजार्थत्वमङ्गीकृत्य प्रयोज्यत्वं विचारितं, तदेव चाक्षिप्य समाधीयते। चतुर्जुह्वां गृह्णाति अष्टावुपभृति गृह्णाति चतुर्ध्रुवायां गृह्णातीत्यसंयुक्तोत्पन्नान्या-ज्यानि लिङ्गप्रकरणाभ्यां यावत्सर्वप्राकराणिकद्रव्यापेक्षकार्यार्थत्वेन विनियुज्यन्ते, तावच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदष्टावुपभृति गृह्णाति अनूयाजेभ्यस्तत्सर्वस्मै वा एतद्यज्ञाय गृह्यते तत् ध्रुवाया-

श्रौतविधेरेव तत्कल्पकत्वौचित्यमिति वाच्यम् । पूर्वाधिकरणवदेवा-नुमानिके तत्कल्पनस्यादौपत्वात् । अनुमानस्य फलमुखत्वाच । अतश्च प्रतिपत्तिवलेनैवाचित्रस्य धारणस्योपजीवनादिनिगमनाविरहेण सन्निहितसर्वहविःषु अभिघारणोपपत्तावपि न कालान्तरीयहविर्थं धारणमिति । अत एव प्राजापत्यवपानां मातुपशुभिः सह करणपक्षे सह पशूनालभते वपानामभिहूतत्वायेति लिङ्गं सह्यामकालीनत्व-पक्षे तदभावं दर्शयति । स्पष्टञ्च सद्या वा एतर्हि वपा यर्हि अनभिहुता इति ऋचत्वाख्यं सद्यत्वमस्मिन्पक्षे दर्शयति । न चाभि-घारणान्तरेण ऋचत्वनिवृत्तिः । तस्य तापमात्रनिवर्त्तकत्वेन ऋच-तायाअनिवारणात् ॥४॥१॥१४॥

समानयनं ॥ दर्शपूर्णमासयोः प्रयाजार्थे जुह्वां चतुर्गृहीतं विधाय, अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्त्विति वचनेन चौपभृत विधाय पुनर्ध्रुवायां चतुर्गृहीतं विहितम् । तत्रैव चाति-हायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतमिति श्रुतम् ।

तत्र किं प्रयाजाः समानयनस्य तत्संस्कृताज्यस्य प्रयोजकास्तदर्थ-श्चेदमुभयं, उत ते अप्रयोजकाः अनूयाजा एव तु तयोः प्रयो-जकास्तदर्थश्चेदमुभयमिति चिन्तायाम् ।

प्रयाजानूयाजेभ्यस्त्विति द्वन्द्वान्ते श्रुतस्य बहुवचनस्य प्रत्येकं सम्बन्धादुद्देश्यगतस्याप्राप्तत्वेनानुवादायोगादौपभृतस्य न्यायत एव सर्वप्रयाजार्थत्वप्रतीतेः प्रयाजार्थस्याष्टस्य सर्वप्रयाजादौ समानीतत्वा-द्बर्हिःप्रयाजकाल उपभृति अनूयाजार्थस्यैव सत्त्वेन तस्यैवेदं समानयनं तत्संस्कारार्थमनूयाजप्रयुक्तं न तु प्रयाजप्रयुक्तम् । अत एव औद्व-

माज्यमित्यादिवचनैस्तत्तत्कार्य्यार्थत्वेन विनियोगादौपभृतस्यानूयाज-मात्रार्थत्वम् । यत्तु अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तदिति वचनम् । तच प्रयाजत्वानूयाजत्वरूपोद्देश्यतावच्छेदकभेदे वाक्य-भेदापत्त्याऽनूयाजानां प्रयाजोत्तरत्वानुवादमात्रमिति प्राप्ते ।

उभयतोऽप्यनुवादावश्यकत्वे समानयनादिविधिदृष्टार्थत्वाद्यनु-रोधेन गुह्वानुवादवचनस्यैवानुवादत्वम् । न च वाक्यभेदः, यद्वैकत्वा-धिकरणन्यूत्यादितकौस्तुभोक्तरीत्याऽध्वर्युयजमानौ वाचं यच्छत इति वद्वाक्यभेदात् । अत औपभृतं प्रयाजानूयाजार्थमिति सिद्धम् ॥ ४॥१॥१५॥

तदष्टत्वं ॥ अष्टावुपभृतीत्यनेनाष्टसंख्याकं ग्रहणं विधीयते, उत चतुःसंख्याकग्रहणद्वयमिति चिन्तायाम् । श्रुतत्वादष्टसंख्यैव विवक्षिता न चतुःसंख्याद्वय, लक्षणापत्तेः । न चानारभ्याधीतेन चतुर्गृहीतं जुहोतीत्यनेनानिर्दिष्टद्रव्यकसर्वहोमानुवादेन चतुर्गृही-तविधानात्प्रयाजादिष्वपि तत्प्राप्तेः प्रयाजानूयाजार्थचतुर्गृहीतद्वयो-द्देशेनोपभृत्पात्रमात्रस्यात्र विधिप्रतीतेरष्टपदं चतुष्कद्वयलक्षणार्थ-मिति वाच्यम् । अनारभ्यविधिना जुहोतिचोदनाविहितप्रधान-भूतहोमोद्देशेन चतुर्गृहीतविधानेऽपि प्रयाजादिषु यजतिचोदना-चोदितेषु प्रक्षेपाख्यहोमस्य तदीयद्रव्यसंस्कारकत्वेन तमुद्दिश्य चतु-र्गृहीतविधानानुपपत्तेः । अत एवोपांशुयाजादौ चतुर आज्यस्य गृह्णात आहेत्यादिविध्यन्तरादेव ध्रुवादितश्चतुर्गृहीतविधानम् ।

अस्तु वैतादृशविषये तत्प्राप्तिस्तथापि वाचनिकेन प्राकरणिकेन वा अष्टत्वेन बाधात् तस्य प्रयाजाद्यतिरिक्तविषयत्वमेवावश्यकम् ।

च द्वितीयवाक्येन विनियोगः। अस्तु वा द्वितीयवाक्याच्छिन्नस्वरुकर्मकभावनानुवादेन यूपधर्ममात्रविधिरिति न विशिष्टविधिरपि।

न चैवमपि शकलशब्दस्य सम्बन्धिकत्वादेवोत्तरार्धादिवद्यूपोयत्वोपपत्तेरप्रयोजकत्वोपपत्तिः। स्वतन्त्रकाष्ठाप्रयोजकत्वेऽपि स्वरुनिष्ठाञ्जनप्रोक्षणादिधर्मप्रयोजकत्वोपपत्तेः। अतएव धर्मप्रयोजकत्वेन काष्ठान्तरप्रयोजकत्वशङ्कायां तन्निवर्त्तकत्वेन, यदन्यस्य* वृक्षस्य स्वरुं कुर्यादन्योऽस्या लोकमभ्यारोहेयुरिति निन्दाऽपि सङ्गच्छते। धर्मप्रयोजकत्वेऽपि च यूपैकादशिन्यां यथानुपूर्व्यं स्वरुभिः पशून् समंज्येति यूपभेदेन स्वरुभेदे दर्शनं नानुपपन्नम्। न चैवमपि षष्ठ्या यूपावयवत्वसम्बन्धेनाप्युपपत्तेर्यूपधर्मत्वयूपसम्बन्धपरत्वे एव नियामकाभावः। शकलकरणकत्वादेव यूपीयत्वसिद्धेरात्वाक्यवैयर्थ्यापत्तेरेव नियामकत्वादिति प्राप्ते।

—न-यूपधर्मत्वसम्बन्धः षष्ठ्यर्थः। आनुमानिकयूपावयवत्वसम्बन्धस्येव तदर्थत्वोपपत्तेः। अतएव यथाशक्ति प्रयोगादौ यूपाभावेऽपि स्वर्वर्थमेव वनगमनादिसिद्धिः पश्चारब्धत्वसिद्ध्यर्थम्। न च शकलश्रुत्यैव प्राप्तत्वात्तद्विधिवैयर्थ्यम्। एतद्विध्यभावे यूपपदरहितानां परश्वादान-वनगमन-वृक्षच्छेदन-ध्यानाञ्जनादीनां यूपार्थत्ववत् स्वर्वर्थत्वस्यापि प्रमाणेन शकलश्रुतेर्यूपप्रतियोगित्वेनैवोपपत्तेः। द्वितीययूपच्छेदनादि, यूपच्छिन्नस्तोम्यादिवाक्येन विहितं यूपाभावे परं निवर्त्तताम्। न तु वनगमनाद्यपि। अनन्यशिष्टविधायकयूपानु-

* यदन्यस्य,—इति भाष्यपुस्तके पाठः।

† यदन्यस्य, इत्यादर्शपुस्तके पाठः।

अतस्तद्बलेन व्याप्तिकल्पनाया यत्र यत्रानूयाजसामान्याभावोऽन्यत्रापि, तत्र चतुर्थचतुर्गृहीतनिवृत्तिरूपसाध्यसिद्धि । अतश्च व्यतिरेकसुखेन चतुर्थचतुर्गृहीतमनूयाजार्थमितरच्च प्रयाजार्थमिति सिद्धं भवति । तथाष्टत्वस्य चतुष्कद्वयलक्षणार्थत्वे उपपद्यत इति तत्सिद्धि । इतरथा ह्यनूयाजाभावेऽप्यष्टगृहीतस्यानिवृत्तत्वेन औपभृतौवरूपचतुष्कद्वयस्यैव प्राप्तेर्विकल्पानुवादानुपपत्ति । कथञ्चित् प्राप्तावपि वा समस्तवाक्या नर्थक्यम् । न च वाचनिकवत्त्वे विधेरेवायमर्थवाद हेतुपरत्वे सम्भवति । स्तुतिलक्षणाभावात् । वस्तुतस्तु नाष्टपदेऽपि लक्षणा । हेतुवत्त्वेनैवार्धस्यानूयाजार्थत्वेऽर्धस्य प्रयाजार्थत्वे चावगते आतिथ्यादा वनूयाजाभावेनैवाष्टत्वस्य बाधोपपत्ते । अस्तु वा मा । प्रयोजन, पूर्वपक्षे प्रयाजद्वयार्थे अर्धन्यूनसमानयनम् । अष्टगृहीतस्य सम स्यादश्रुतत्वादिति न्यायेन पक्षत्वपि विभागात् । सिद्धान्ते त्वर्धं समानेयम् ॥ ४॥१॥१६ ॥

इति भाट्टदीपिकायां चतुर्थस्य प्रथम ॥

स्वरु ॥ दैवे पशौ, यूपस्य स्वरु करोति स्वरुणा पशुमनक्तीति श्रुतम् । तत्र स्वरुशब्दवाच्यस्याप्रसिद्धत्वादाद्यवाक्येन स्वरुकर्मका* भावनैव विधीयते । तत्र च साधनीभूतद्रव्यापेक्षाया, तत्र च प्रथम शकल परापतेत्तत् स्वरुरिति वचनेन शकलस्य साधनत्वावगमा- दितिकर्तव्यतापेक्षायां यूपपदेन तद्धर्मलक्षणया अञ्जनप्रोक्षणादयो- विधीयन्ते । अथ वा यथैव यूपावयवत्व सिद्धान्ते षष्ठ्यर्थस्तथैव मन्मते यूपधर्मकत्वसम्बन्ध षष्ठ्यर्थ इति न लक्षणा । एवमुत्पन्नस्य

* इत्यमेव पाठ सर्वत्र । स्वरुकर्मिका,-इति तु भवितु युक्तम् ।

प्राग्देशभवत्वमात्रविधानफलकत्वाच्च लाघवम्। तत्र तु शाखाहरणोद्देशेन प्राग्देशभव विहारावधिकत्वविधाने गौरवम्। याज्ञिकास्तु द्विवाद्मेव वदन्ति ॥ ४॥२॥९॥

शाखायां ॥ तत्रैव, शाखामाच्छिनत्ति, शाखामाहरति, मूलतः शाखां परिवास्योपवेशं* करोतीति श्रुतम्। तत्र शाखाशब्दस्तावदाद्यवाक्ययोः समूलस्यैव वाचको न त्वग्रमात्रस्य। अतस्तृतीयवाक्येऽपि तत्पर एव। तदर्थं च परिवासन अग्रमूलविभागार्थम्। अतस्तृतीयवाक्ये मूलत इति पदं द्वितीयार्थे तृतीयार्थे वा तर्हि व्याख्यायोपवेशं करोतीति इत्यत्रान्वेति। न त्वपादानार्थकं सत्परिवासने। तथात्वे अग्रस्याप्युपवेशत्वप्रसङ्गेन मूलत इत्यस्योत्तरत्रान्वयावश्यकत्वात्। अतः परिवासनेनाग्रं मूलं च शाखापदाभिधेयं विभज्य मूलमुपवेशमग्रमुपादद्यादिति तृतीयवाक्यार्थः। तस्य च विनियोगापेक्षायामग्रस्य वत्सापाकरणादौ मूलस्य कपालोपधानादौ वचनादिविनियोगः। अत उभयमपि छेदनाहरणपरिवासनादीनां प्रयोजकम्।

अस्तु वा शाखाशब्दोऽग्रमात्रवाची। तथापि मूलत इति द्वितीयार्थे परिवासनस्य कर्मेति परिवासनमुभयमयुक्तम्। तथा वा मूलापादनकपरिवासनमुपवेशकरणार्थं विधीयत इति सोऽपि प्रयोजक इति प्राप्ते।

मूलत इति तसि. पञ्चम्यर्थक एव। सार्वविभक्त्यर्थकत्वानुशासनं तु लाक्षणिकम्। अन्यथा विशिष्य पञ्चम्यर्थकत्वानुशासनवैयर्थ्य-

* उपवेषशब्दो मूर्द्धन्यषकारयुक्तो भाष्ये सर्वत्र।

निष्पन्नत्वसिद्ध्यर्थं यूपावयवकत्वविधिर्यथावेव। अतएव यूपानु-निष्पन्नप्रथमशकलनाम्ने येन केनचित्काष्ठेनाञ्जनं पशोः। तेन प्रोचणादेः स्वर्वधत्वे प्रमाणाभावात् स्वरुस्तेषां प्रयोजकः। सूत्राणि च सुधीभिरस्मिन्नेवार्थे व्याख्येयानि न तु भाष्यकारोक्ते॥ ४॥२॥१॥

शाखायां॥ दर्शपूर्णमासयोः शाखामधिकृत्य, प्राचीमाहरतीति श्रुतम्। तच्च प्राचीशब्दस्तावद्दिग्विशेषवाची। प्राचीमुदेति सवितेति प्रयोगात्। देशवाची वा, न तु तद्देशस्थशाखावाची। अतश्चोप-क्रमस्थप्रातिपदिके लक्षणाऽपेक्षया वरं द्वितीयैव सप्तम्यर्थे व्याख्यातुं युक्ता। प्रतिशब्दाध्याहारो वा। [१]कर्माकाङ्क्षायां च प्रकृतत्वादेव शाखा तत्त्वेन सम्बध्यते। प्राग्देशस्य च पूर्वोत्तरावध्यपेक्षायां प्रत्यचो-पस्थितत्वात्सामर्थ्याच्च वन-विहारदेशौ तत्त्वेन सम्बध्येते। तेन वना-द्विहारोपलक्षितप्राचीं प्रति शाखामाहरतीति वाक्यार्थो न तु वृक्षस्य प्राचीं शाखामिति। तथात्वे छिनत्तीति स्यान्न त्वाहरतीति प्राप्ते।

प्रधानभूतविभक्तौ लक्षणायाः प्रतिशब्दाध्याहारस्य वा कर्माध्या-हारस्य पूर्वोत्तरावध्यध्याहारस्य चाङ्गतस्यापेक्षया एकस्मिन् प्रातिप-दिकएव प्रकृतशाखालक्षणया वाक्यार्थोपपत्तेः, प्राक्त्वस्य वृक्षावयव-विशेषलक्षणशाखात्वेनैवोपस्थितवृक्षावधिकतयाऽप्युपपत्तेः शाखावाद-एवायम्। तेन वृक्षस्य प्राग्देशभवां प्राचीं शाखां छित्वा आहर-तीत्यर्थः। प्रयोजनानुरोधात्तु विहारदेशं प्रतीति लभ्यते। शाखायां

(१) प्रतिशब्दाध्याहारे प्राचीं प्रति ध्याहरतीति लभ्यते। तत्र च किमाहरतीत्यस्याहरणस्य कर्माकाङ्क्षा। तत्र प्रकृता शाखैव कर्मत्वेन संबध्यते इति भावः।

प्रसङ्गात्। अतो मूलापादानकं परिवासनं द्वितीयाश्रुत्या शाखासंस्कारकमेव। न तु वाक्यादुपवेशकरणाङ्गम्। न चोभयसंस्कारकम्। द्वितीयाश्रुतेर्बलीयस्त्वात्। उद्देश्यानेकत्वप्रसङ्गाच्च। अतः शाखाशब्दोऽपि मूलापादानकपरिवासनसिद्धार्थं न विरुध्यते। अतएव वत्सापाकरणादौ शाखापदेनैवाग्रविनियोगः। अतो मूलं परिवासनाङ्गमेव। एवं च व्यवहितकल्पनाऽपि न प्रसज्यते। अतएव परिवासनानुनिष्पन्नमूलस्यैवोपवेशरूपं संज्ञान्तरकरणम्[1]। अग्रस्य शाखापदेनैव सर्वत्र विनियोगेन संज्ञान्तरवैयर्थ्यापत्तेः। अतो न व्यवहितकल्पनाया आवश्यकत्वम्। अतः संज्ञाकरणमात्रफलक उपवेशं करोतीत्ययमनुवादो ध्यवन्तापेक्षितक्रियान्तरप्रदर्शनार्थः। अतो न मूलं छेदनादीनां प्रयोजकम्। प्रयोजनं, पौर्णमास्यां शाखाऽभावेन येन केनचित्काष्ठेन कपालोपधानं न तूपवेशकरणम्॥ ४॥२॥३॥

हरणे॥ तद्वैव, सूक्तवाकेन प्रस्तरं प्रहरतीति सह शाखया प्रस्तरं प्रहरतीति च श्रुतम्। तत्राद्यवाक्ये तावन्मान्त्रवर्णिकदेवताप्रस्तरहोमविधिरित्युक्तम्[2]। न तु द्वितीयवाक्यविहितप्रहरणानुवादेन प्रस्तरमुद्दिश्य सूक्तवाकविधिरिति तन्त्ररत्नोक्तम्। यागस्यापि विधौ वाक्यभेदापत्तेः। यागविधायकवाक्यान्तरकल्पने गौरवाच्च। अतश्च द्वितीयवाक्ये प्रहरतिना होममनूद्य शाखासाहित्यमात्रविधिः। सहशब्दस्य निपातत्वेन परस्परान्वयव्युत्पत्तेश्च न शाखा साहित्यं

---

(१) योऽयं समाहृतायाः पलाशशाखायाः परिवासनानुनिष्पन्नो मूलभागः प्रादेशमितः, तस्यैवोपवेशसंज्ञेत्यर्थः।

(२) तृतीयाध्यायस्य द्वितीयपादे सूक्तवाके चेति पञ्चमाधिकरणे।

कर्मणा यमभिप्रैति स सम्प्रदानमिति सूत्रया क्रियां प्रति व्याप्यमानं कर्मकारकं प्रत्यपि सम्प्रदानस्य व्याप्यमानत्वावगतेर्विधिबलेन कस्य चिद्व्याप्यमानस्येप्सितत्वे कल्प्यमाने व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमिति न्यायेन मैत्रावरुण एव तदवगतेस्तस्यैवोद्देश्यत्वम्। सम्भवति च मैत्रावरुणस्योपयोगादुद्देश्यत्वम्। वेदविदादौ तु बाधात् स्वर्गादेरेवोद्देश्यता। दृष्टस्यावलंबनं दण्डस्य प्रयोजनमिति भाट्टप्रार्थत्वमपि। न चैवं दण्डमिति द्वितीयाऽनुपपत्तिः, सक्तुवत्कारणत्वलक्षणार्थत्वात्।

यत्तु मूलेऽनीप्सितकर्मत्वेन तदुपपत्तिरित्युक्तम्। तज्जुहोतेरपि, तृतीया च होष्यन्दमैत्र्यादिश्रुत्या* सकर्मकत्वावगतेः सक्तुष्वपि तदापत्तेरनीप्सितकर्मत्वेऽपि चोद्देश्यानेकत्वनिमित्तकवाक्यभेदापरिहार्यत्वस्य कौस्तुभ एवोक्तत्वादुपेक्षितम्।

अस्तु वा दण्डस्यानीप्सितकर्मत्वेनैवान्वयः। सम्प्रदानस्य च सत्यपि प्राधान्ये सम्प्रदानत्वेनैवान्वयात् न द्विकर्मकत्वापत्तिरित्यपि बोध्यम्। अतश्च दण्डविशिष्टदानस्योपयोगापेक्षायां दण्डी प्रैषान्वाहेत्यादिना प्रैषानुवचनार्थत्वेन विनियुज्यते। अतो निरूढपश्वादौ दीक्षासोमक्रयाभावेऽपि दण्डदानानुष्ठानं तस्य प्रैषानुवचनप्रयुक्तत्वात्तानुपपन्नम्।

इदन्त्विह वक्तव्यम्। प्रदानस्य दण्डं प्रत्यर्थकर्मत्वे दीक्षादण्डस्य कथं दानाङ्गत्वम्। न हि स्वत्वत्यागे कृते यजमानेन पुनः स्वयं

* इत्यमेव पाठः सर्वत्र। सूत्रया इति तु भवितुमुचितम्। तृतीया च होश्छन्दसि इति हि पाणिनिसूत्रम्। न त्विय श्रुतिः।

शङ्का। कुशलेनाध्वर्युणा यावत्संयवनोपयोगिनीनामेवापां प्रणयनेन शेषाभावात् प्रतिपत्तिविध्यनुपपत्तेः। अतः प्रकृन्यायेन निनयनस्यार्थकर्मत्वात् प्रयोजकत्वमिति प्राप्ते।

द्वितीयासंयोगादाकीर्णकराणां प्रतिपत्तिरेवेयम्। न च शेषाभावः, तस्यावर्जनीयत्वात्। अनन्यथासिद्धप्रतिपत्तेर्धारणप्रयोजकत्वाच्च। अतः संयवनमेव प्रयोजकम्। अच चाग्नेयादिहविःपाकत्वेनैव संयवनस्य उद्देश्यता। तेन चर्वादावपि प्रणीताः भवन्त्येव। अत एवाग्युदितेष्टौ दधिपयसोरपि प्रणीताधर्माविद्धत्वे। वस्तुतस्तु कपालं प्रति खोपजन्यपाकत्वेनैव पिण्डसंयवनत्वेनैवोद्देश्यता। अतिप्रसक्तधर्मेण तदङ्गीकारे प्रमाणाभावात्। दधिपयसोः प्रणीताधर्मास्तु छत्वाचिन्तया। याज्ञिकास्तु चर्वादावपि प्रणीताः कुर्वन्ति। प्रयोजनं, संयवनोत्तरं प्रणीतानाशे निनयनार्थं तदनुत्पत्तिः॥ ४॥२॥५॥

प्रासनवत्॥ सोमे, दण्डेन दीक्षयतीत्यनेन दण्डस्य दीक्षाभिव्यञ्जकत्वं विधाय, क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति श्रुतम्। तत्र पूर्ववदेव द्वितीयासंयोगात् मैत्रावरुणसम्बन्धि दानं दण्डप्रतिपत्तिः चतुर्थी यष्टधर्थलक्षका*। वेदविदे गान्ददातीति यद्वा प्राधान्याभावेऽपि सम्प्रदानार्थिकैव। अतश्च दीक्षितदण्डस्य दानमात्रेण प्रतिपत्तिसिद्धेर्नाश्यं स एव दण्डो दण्डी प्रैषानन्वाहेत्यनेन प्रैषानुवचने विनियुज्यते। तेन स प्रैषानुवचन दण्डान्तरस्य प्रयोजकमिति निरूढपशादावपि स तदनुष्ठेयमिति प्राप्ते।

---

* इत्यमेव पाठ सर्वत्र। कल्पिता,—इति तु भवितुमुचितम्।

दीक्षितपदरहितवाक्ये प्रतिपत्तिविध्यन्तराकल्पनेऽपि न क्षतिः। तैत्तिरीयवाक्येनैव मैत्रावरुणपदाश्रवणेन दानस्य प्रतिपत्तित्वसिद्धेः। क्रौतवाक्ये तु मैत्रावरुणपदश्रवणेन तत्प्राधान्यावगतेः तदुपकारार्थत्वमेव। अतश्च तैत्तिरीयवाक्ये श्रुतसम्प्रदानापेक्षया क्रौतवाक्ये स्वतन्त्रदण्डाक्षेपशक्तिकल्पनागौरवपरिहारार्थं च परस्परापेक्षिततया दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वसिद्धिः।

न च क्रौतवाक्यविहितदण्ड एव तैत्तिरीयवाक्येन दीक्षासम्बन्धविधानोपपत्तेः न प्रतिपत्तिविधायकत्वमिति वाच्यम्। तथात्वे दण्डोद्देशेन दीक्षितत्वविधावेकप्रसरताभङ्गापत्तेः। न चैवमपि तद्वाक्यविहितप्रतिपत्त्यनुवादेन क्रौतवाक्ये राजक्रयोत्तरकालत्वस्यैव विधानोपपत्तेर्नार्थकर्मत्वम्। मैत्रावरुणसम्प्रदानस्यापि विधौ वाक्यभेदापत्तेः। अत उभयत्रापि दानविधिः। तत्र च दीक्षितवाक्ये प्रतिपत्तिविधिः। सम्प्रदानाश्रवणात्। दीक्षितपदश्रवणाच्च। क्रौतवाक्ये उक्तयुक्त्यार्थकर्मत्वमेव। उभयप्रयोजनं पूर्ववत्।

वस्तुतस्तु क्रौतवाक्येऽपि प्रैषानुवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्येति दण्डस्यापीप्सिततमत्वमेव। न चैतावता दण्डप्रतिपत्तित्वम्, उपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वात्। मैत्रावरुणस्य तु सम्प्रदानत्वेनैवान्वय इति न कश्चिद्दोषः। यद्वा मैत्रावरुणोद्देशेनैव दण्डदानं मैत्रावरुणसंस्कारकम्। कल्प्यतेन विधिना उपयोक्ष्यमाणदण्डसंस्कारकमपि। अपेक्षावशात्। मते प्रैषादौ दण्डैकत्वं तु दण्डी प्रैषानन्वाहेति दण्डिपदे प्रथमातिक्रमे कारणाभावादेकवचनान्तेन युत्पत्तिमङ्गीकृत्य समर्थनीयमिति दिक्॥४॥२॥६॥

कर्मत्वम् । न च प्रतिपत्त्यपेक्षत्वाद्दृष्टार्थत्वलाभाय तल्लक्षणायामप न दोषः । निषादस्थपत्यधिकरणन्यायेन लक्षणानुपपत्तेः । यत्तु केषांचिद्भावनाभेदमात्राङ्गीकारेण तस्मिन्नेवावभृथे समुच्चयेन निवेशः पूर्वपक्षितः, तदाजिनेऽपि तथापत्तेरुपेक्षितम् । अतोऽवभृथस्यापि दीक्षोन्मोचनरूपैककार्यत्वेन विकल्पापत्तेः द्रव्याणामपि विकल्पः । अदृष्टार्थत्वे तु तन्त्रेणानुष्ठानात्समुच्चय इति प्राप्ते ।

कर्मान्तरत्वेऽवभृथशब्दस्य नामातिदेशकत्वे गौणत्वापत्तेः वाचकत्वेऽनेकशक्तिकल्पनाप्रसङ्गाद्देवताऽभावेन धात्वर्थत्वापत्तेः(१) वारुणेनेत्यनुषङ्गस्य देशलक्षणयाऽप्युपपत्तावन्याय्यत्वात्स्नानरूपधात्वर्थ एव सोमलिप्तप्रतिपत्तित्वेन विधीयते । एवं च धात्वर्थाविवक्षा परपदार्थसम्बन्धविधानं कर्मान्तरत्वादिकल्पना च नाश्रिता भवति । न च तेनेत्यनेन करणत्वत्यागेन कर्मत्वलक्षणा । आनुमानिकसहयोगतृतीयाऽङ्गीकारेण साहित्यमात्रोक्तौ कर्मत्वेनैव तदाश्रयणाल्लक्षणायाअप्रसक्तेः । अवभृथपदं परं देशलक्षणार्थमिति न कश्चिद्दोषः ॥४॥ २॥८॥

कर्तॄ ॥ तत्र तत्र कर्तारोऽध्वर्य्वादयः, कालाः पौर्णमास्यादयो, देशाः समादयो, द्रव्याणि सोमादीनि, गुणाः शुक्लादयः, संस्कारा-अवघातादयस्तत्तद्वाक्ये श्रुताः कर्मचोदनयैवाक्षेपेण प्राप्तत्वान्न विधीयन्ते । अतो न कर्मविधिभिर्नियमेन प्रयुज्यन्त इत्याशङ्काऽऽभावे प्राप्ते ।

(१) इष्टदेवते हि यागस्य रूपमित्यनुपदं वक्ष्यते ।

उत्पत्तौ ॥ सोमे, कृष्णाविषाणया कण्डूयते इति कण्डूयनाङ्गत्वेन कृष्णाविषाणां विधाय पुनराम्नातम् । नीतासु दक्षिणासु चात्वाले कृष्णाविषाणां प्रास्यतीति । तत्र निनयनवत्प्रासन प्रतिपत्तिरेव, द्वितीयासंयोगात् । न च दक्षिणादानोत्तरकालमपि दीक्षितस्य कण्डूयनसम्भवात् कृतकार्यत्वाभावेन न प्रतिपत्त्यर्हता । अनन्यथासिद्धप्रतिपत्तिविधिबलादेव दक्षिणादानप्राक्कालीनकण्डूयनस्यैव कार्यत्वावधारणात् ।

न च प्रतिपत्तिमात्रे कार्यस्य ज्ञातत्वेन संस्कारवैयर्थ्यापत्तेर्विनियोगभङ्गेन सक्तुवदर्थकर्मत्वमेव स्यादिति वाच्यम् । ज्ञातेऽपि कार्ये उपयुक्तादि क्व निक्षेप्तव्यमिति अपेक्षाऽस्त्येवेति प्रतिपत्तिनियमविधेरुपयोगोपपत्तेः । तत्रान्यनियमादृष्टस्य चोत्पत्त्यपूर्वे ज्ञातेऽपि तदव्यवहितकार्योत्पत्त्युपयोगियागापूर्वनिष्ठयोग्यताजनन एवोपयोगः । न तु एतदकरणस्य तत्कार्यनाशकत्वकल्पनम् । प्रयाजादावप्यकरणस्याग्नेयादिकार्यानुत्पादकत्वकल्पनापत्तेः । अकरणस्यादृकारणतावच्छेदकत्वादिकल्पने गौरवाच्चेत्यादि कौस्तुभे अपूर्वाधिकरणे स्पष्टम् । अत एवाहिताग्नेः परिधानीये कर्मणि पात्रासादनादिरूपप्रतिपत्तेरपि ऐहिककर्मातिरिक्तकर्माङ्गत्वस्यैव फलवत्त्वेन कल्पनादैहिकफलोत्पत्तावपि न क्षतिरित्यपि तत्रैव स्पष्टम् ॥४॥२॥७॥

कौशिके च ॥ सोमे, एव वारुणेनैककपालेनावभृथं यन्ति इत्यनेनावभृथसंज्ञकं कर्म विधाय, यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्तीति श्रुतम् । तत्र तृतीयया सोमलिप्तस्य करणत्वावगमात्तस्य च पात्रेऽसम्भवेऽप्यवभृथे प्रत्युपपत्तेः न द्वितीयार्थत्वलक्षणया प्रतिपत्ति-

देशप्राप्तधर्मादिलोपे प्रमाणाभावाचास्त्विह विधानानुपपत्तेराति-थ्यायामुपयुक्ताया एव बर्हिर्व्यक्तेरुभयोद्देशेन निरिष्टिकोपदेशः । ततश्च बर्हिर्धर्माणामातिथ्यार्थं कृतानामन्तदुपूर्वोत्पत्तौ नाशात्तस्यामेव व्यक्तावुपसदार्थं पुन' पुनरुपादानवर्ज्यं करणम् । यद्यपि च कृप्तो-पकारकप्राकृताधारपुन श्रवणादुपसदामपूर्वत्वं वच्यते, तथापि प्रकृतौ बर्हिषोऽङ्गप्रधानसाधारणत्वात् सौत्राधारार्थमेव तत्करणम् । बर्हि-र्व्यक्तेरपि च तेनैव सम्बन्धेनोपसदुद्देशेन विधानम् । इतरथा प्राकृत-कार्यकारितापत्तेः । बर्हिःप्रतिपत्तिस्तु दाशाख्यायाः प्रकृतावृत्त्यपूर्व-निष्ठयोग्यतामस्यादकतयेह तस्य नाशादग्नीषोमीयान्ते करणेऽपि नातिथ्योपसदर्थत्वम् । खण्डेष्टिलाद्वा तयोस्तल्लोपः । तेन निरिष्टि-कोपदेश इति द्वितीयः पक्षः ।

विना वचनमन्यथोपयुक्तस्यान्यथोपदेशे शिष्टाचारविरोधादति-देशप्राप्तलवनादिबाधे प्रमाणाभावाच्च आतिथ्याप्रकरणपठिततदङ्गाश्व-वालादिबर्हिर्धर्माणामुभयोरतिदेशो वाचनिक इति तृतीयः पक्षः । अस्मिंश्च पक्षे न त्रिष्वपि व्यक्त्यैक्यम् ।

सिद्धान्तस्तु । बर्हिःपदे लक्षणायां प्रमाणाभावात् त्रिष्वपि व्यक्त्यैक्यविधानम् । ततश्चातिथ्योपक्रमे श्रूयमाण बर्हिस्त्रितयसाधा-रणमिति तच्च क्रियमाणधर्मा अपि प्रतिपत्तिवर्ज्यं सर्वसाधारणाः । न चाश्ववालादिधर्माणां प्रकरणेन तन्मात्रार्थत्वापत्तेः प्रसङ्गे स्वोप-कारकत्वेऽपि* इतरार्थत्वे प्रमाणाभावः । आश्ववालादिवाक्यानामेत-

* इत्थमेव पाठ सर्वत्र । मम तु प्रसङ्गेनोपकारकत्वेऽपि,—इति पाठः प्रतिभाति ।

यावदाक्षेपेणानियताः प्राप्यन्ते, तावद्वचनेन नियमफलकविधिकरणान्नियमेनैव प्रयोजकत्वम् । नियमविधिप्रकारश्च सर्वोऽप्यनागतावेक्षणन्यायेनात्र कौस्तुभे च मन्त्राधिकरण एव दर्शितः ॥४॥२॥८॥१०॥११[१] ॥

यजतिचोदना ॥ प्रसङ्गाद्यागादिपदार्थाविष्यनुद्राव्याः के इति विचार्यन्ते । यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते, स यागपदार्थः । प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमाद्यं विशेषणम् । तत्र यागाक्षेपेणैव प्रक्षेपसिद्धिः । शक्यतावच्छेदकं चोक्तविधत्यागत्वसमव्यापक जातिरूपमखण्डोपाधिरूपं वा सामान्यमित्युक्तमेव । प्रक्षेपप्रधानक उक्तविधस्त्यागो होमपदार्थः । सम्प्रदानस्वत्वापादनपूर्वको द्रव्यत्यागोदानपदार्थः । उभयत्रापि शक्यतावच्छेदकं तत्तद्धर्मसमव्यापकं पूर्ववदेव सामान्यम् । एतत्सूत्रव्याख्यानान्तराणि तु गतार्थत्वान्न लिखितानि ॥४॥२॥१२॥१३॥

विधेः ॥ सोमे, यदातिथ्यायां बर्हिस्तदुपसदामिद्मीषोमीयस्येति श्रुतम् । तत्र देवदत्ताय गौर्यज्ञदत्ताय दीयतामिति वद्यदातिथ्यायां बर्हिस्तत्तत आच्छिद्य उपसदार्थं विधीयते । तेनातिथ्यायां बर्हिष उपादानमात्रं प्रयुज्यते । अन्ये धर्मा आस्तरणादिकार्यस्येतराभ्यामिति प्रथमः पक्षः ।

उपादानमात्रस्यातिथ्याप्रयुक्तत्वे अप्राकृतकार्यकारित्वापत्तेरति-

(१) अत्र भाष्यकारैरत्र चौष्यधिकरणानि कल्पितानि । प्रथम कर्तृदेशकालानां नियमार्थम्, द्वितीय मयागुणयोः, तृतीय संस्कारविधानस्य । प्रयोजकता तु नयमेकत्र शास्त्रदर्शितम् । एवमुत्तरापि संग्रहो द्रष्टव्य ।

# अथ चतुर्थोऽध्यायः ।

## तृतीय पाद ।

द्रव्य ॥ अनारभ्य, यस्य पर्णमयी जुहूर्भवति न स पाप श्लोक शृणोतीति श्रुत द्रव्यम्, सोमे, यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इति श्रुत संस्कारो, वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानूयाजा इज्यन्ते वर्म भ्रातृव्याभिभूत्यै इति श्रुत कर्म च, नापापश्लोकश्रवणादिरूप-फलार्थम्। कामशब्दाद्यभावेन वर्त्तमानापदेशस्य फलपरत्वानुपपत्त्या-ऽर्थवादत्वस्यौदुम्बराधिकरणे साधितत्वात् । न च स्तुतिपरस्याप्यस्य लक्षणया फलपरत्वम्। एकस्यार्थद्वयपरत्वे वाक्यभेदात्। न च रात्रि-सत्रवदुपस्थितत्वेन कामयुक्तपदान्तरकल्पनया फलार्थत्वम् । तद्दिह वाक्यादिप्रमाणेन जुह्वाद्यर्थत्वस्यावगततया फलाकाङ्क्षाविरहात् ।

न च कर्मोदाहरणे प्रकरणगम्यक्रत्वर्थत्वापेक्षया स्ववाक्योप-स्थितफलपदकल्पनायामेव वैमृधवल्लाघवमिति वाच्यम्। विजातीय फलसद्भावकल्पनात क्लृप्तकल्पकारस्यैव फलस्यौचित्यात् । इत्थत-एव हि प्रबलप्रमाणेनोपस्थापितसाकाङ्क्षावश्यकत्वैकताङ्गत्यागेनापि दुर्बलनिराकाङ्क्षप्राकृताङ्गग्रहण विकृतौ क्लृप्तत्वमात्रेण। अतो नैते फलप्रयुक्ता उभयप्रयुक्ता वा, अपि तु क्रतुप्रयुक्ता एवेति फल-कामनायामसत्यामप्यनुष्ठेया । औदुम्बराधिकरणसिद्धस्याप्यस्यार्थ-प्रयुक्तत्वरूपप्रयोजनसूचनार्थं पुनरुक्ति ॥४॥३॥१॥

नैमित्तिके ॥ काम्य गोदोहनादि कामाभावेऽपि नित्यप्रयोगे

द्वाक्याव्यवधानेन चितयापूर्वसाधनीभूतैतद्ग्रहणोद्देश्यत्वात्। अत्र च लक्षणया एतत्त्विलमेवोद्देश्यतावच्छेदकम्। अतो न वाक्यभेदः। बर्हिःपदेन च तद्ग्रहणैक्यं लक्षणया विधीयते। न चैवं लक्षणाद्वया-वश्यकत्वे धर्मातिदेशपक्षात्कोविशेषः। जहल्लक्षणाया विशेषात्। आश्ववालादिधर्माणामुपसदाद्यर्थत्वस्य वाक्यीयत्वेन प्राकरणिकाति-थ्यार्थत्वबाधापत्तेश्च। अतत्सुदुद्देशेनापि विधाने त्रिष्वपि पदेषु चित्वरूपोद्देश्यतावच्छेदकलक्षणाया आवश्यकत्वाच्च। यथा च व्याप-ज्यद्वृत्तिधर्मस्योद्देश्यतावच्छेदकत्वेऽप्येकैकविकारेऽतिदेशस्तथा कौसुम्भे षडैकत्वाधिकरणे निरूपितम् ॥४॥२॥१४॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
चतुर्थस्य द्वितीयः पादः।

वैश्यस्येति श्रुतम् । ज्योतिष्टोमापूर्वसाधनीभूतब्राह्मणादिरूपाधिकारिसंस्कारार्थत्वेन विहितं पयोव्रतादि तत्प्रयुक्तमित्यविवादमेव । अत्र च न बार्हद्गिरादिवद् ब्राह्मणस्य निमित्तत्वम् । दृष्टविधया तस्योद्देश्यत्वे सम्भवति निमित्तत्वकल्पने प्रमाणाभावात् । अत एव रागप्राप्तभक्षणद्वारैव पयोनियमस्याप्य रोगादिनाऽशनाप्रसक्तिः, तस्य न पयःप्रयोजकतेति ध्येयम् ॥४॥२॥४॥

चोदनायां॥ विश्वजिता यजेतेत्येकाहकाण्डपठितविश्वजिदादावश्रुतफलके भावनायां भाव्यापेक्षायां समानपदश्रुत्युपनीतोऽपि यागो न भाव्यः । ततोऽप्यन्तरङ्गविधिश्रुत्यवगतप्रवर्त्तकत्वबलेन पुरुषार्थस्यैव भाव्यत्वावगतेः[१]। *ततो यागनामधेयसामानाधिकरण्येन* यागस्य करणत्वावगतेश्च । अतोऽश्रुतेऽपि फले तद्वाचककामपदान्तफलपदाध्याहारेण पुरुषार्थफलकत्वमेव । तच्च पदमध्याहृतमपि वेदाकाङ्क्षयाऽध्याहृतत्वाद्वैदिकमेव । वेदतुल्यं वा ।

तच्च फलमेकमेव कल्प्यते न सर्वाणि, एककल्पनयैव निराकाङ्क्षत्वात् । तदप्येकं स्वर्ग एव न तु पुत्रपश्वादि । यन्न दुःखेन सम्भिन्नमित्यादिवाक्यात् स्वर्गशब्दस्य सुखविशेषमात्रवाचित्वेन विजातीयस्वर्गत्वस्यैव[२] जन्यतावच्छेदकत्वे लाघवात् । पुत्रादीनान्तु सुखसाधनतया पुरुषार्थत्वस्य विलम्बोपस्थितिकत्वाच्च । स्वर्गस्य

(१) यागस्य स्वेमरूपतया स्वतः पुरुषार्थत्वाभावेन फलस्यैव भाव्यत्वमुचितमिति भावः ।

(२) इत्थमेव पाठः सर्व्वत्र । विजातीयसुखत्वस्यैव इति तु समीचीनः प्रतिभाति ।

उपस्थितत्वेऽपि न ग्राह्यम् । तथा, बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात् पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्येति ब्राह्मणत्वाधिकारकत्वे निमित्ते द्वादशाहसम्बन्धि-ब्रह्मसामस्तोत्रोद्देशेन विहितं बार्हद्गिरादि नैमित्तिकं निमित्ताभावेऽसत्त्वोमाधिकारके प्रयोगे न ग्राह्यम् । निमित्ताभावेऽप्यनुष्ठाने निमित्तसम्बन्धस्य वैयर्थ्यापत्तेः ।

न च कामाभावे तत्साधनानुष्ठाने फलानुत्पत्तावपि क्रतुसाद्गुण्योपपत्तेर्न कश्चिद्विरोध इति वाच्यम् । तस्य क्रत्वर्थत्वे प्रमाणाभावेन तदा तदनुष्ठाननैयत्ये प्रमाणाभावात् । क्रत्वपेक्षायास्तार्णाचिन्न-यत्किञ्चित्-साधनग्रहणेनैव निवृत्त्युपपत्तेः । अत एव प्रबलप्रमाणेनाङ्गत्वेऽवगतेऽपि माहेन्द्राङ्गानां विकल्पाङ्गत्ववदस्यापि नित्यप्रयोगार्थत्वमित्यपास्तम् ।

यदा तु कामनिमित्तसम्बन्धरहितं वारणाभीवर्त्तादाम्नातमेव, तदा कः प्रसङ्गः काम्यनैमित्तिकग्रहणस्य । यत्र तु तथाम्नात, तत्रार्थाक्षिप्तस्य यस्य कस्यचिद् ग्रहणम् । सिद्धोऽप्ययमर्थः प्रयोज्यत्वरूपप्रयोजनकथनार्थमुच्यत इति न विरोधः ॥४॥३॥२॥

एकस्य ॥ यत्र तु विधन्तर दध्ना जुहोतीत्यादि श्रुतम्, तत्र काम्यस्यापि द्रव्यान्तरेण विकल्पः । द्रव्यान्तरविध्यभावे तु तस्यैव ग्रहणम् । न च दध्ना जुहोतीत्यादिर्दध्यादेरुत्पत्तिविधिः । उक्थ्यग्रहादिवदस्यालौकिकत्वाभावात् । नापि काम्यदध्यादेराश्रयविधिः । तस्य प्रकरणाम्नानेन वैद्यत्वात् । अतो नित्यप्रयोगेऽङ्गताबोधार्थमेव स विधिरिति तस्योभयप्रयुक्तत्वम् ॥४। ३। ३॥

द्रव्याणां ॥ सोमे, पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्यामिक्षा

चोदनया कर्मशब्दस्य सर्वकर्मपरत्वावगमाद्युतफलकविश्वजिदादि-मात्रपरत्वे प्रमाणाभावः।

न चैवमपि कर्मान्तरमाधारत्वेनाप्यापि तत्फलकल्पोपपत्तेर्विश्व-जिदादावुत्पत्तिपरत्वेनापि चरितार्थत्वात् फलकल्पनाऽनुपपत्तिरिति वाच्यम्। उक्तवाक्येन कल्पनालाघवानुरोधेन क्लृप्तप्रयोगविधिका-नामेव कर्मणां मोक्षफलकत्वावगमेनाक्लृप्तप्रयोगकस्य विश्वजिदादे-र्ग्रहणे वैरूप्यप्रसङ्गेन विश्वजिदादावपि प्रयोगविधिसिद्ध्यर्थं फल-कल्पनाया आवश्यकत्वात्। एतेन विविदिषन्ति यज्ञेनेत्यादिवाक्या-त्कर्मणा पितृलोक इत्यादिवाक्याद्वा विविदिषादिमात्रार्थत्वं पितृ-लोकमात्रार्थत्वं वा विश्वजिदादेरपास्तम्। अत एव प्रयोगान्तर-कल्पनाभियैव प्रयाजादीनां न विविदिषाद्यर्थत्वम्। एतेन धर्मेण पापमपनुदतीत्यादि वाक्येन पापक्षयफलकत्वं विश्वजिदादेरपास्तम्। तस्य नित्यस्थले निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वेन विश्वजिति प्रयोजकत्वकल्पने वैरूप्यापत्तेः॥४॥३॥५॥६॥७॥

क्रतौ॥ ज्योतिर्गौरायुरित्यादिवाक्योक्तादितानि गौत्यानि कर्माणि विधाय, प्रतितिष्ठन्ति ह वा य एताराचौरुपयन्तीत्यादि श्रुतम्। तत्र रात्रिसत्रादौ पूर्ववत् स्वर्गकल्पने स्वर्गोपस्थितिस्तद्वा-चकपदोपस्थितिः कामपदान्तरकल्पना चेति गौरवापत्तेर्लाघवात् श्रुतप्रतिष्ठादेरेव भाव्यत्वकल्पनम्।

तत्र स्थितिर्व्यवस्था। यत्र श्रुतानामेव पदानां लक्षणया फल-परत्वमसम्भवो यथोदाहृते वाक्ये तिप्प्रत्ययस्य लडर्थत्वं कल्पयित्वा भविष्यत्कालस्यक्तित्वेन साध्यत्वावगतौ प्रतिष्ठादिस्वाभाव्यादौचितत्व-

बहुभिः प्रार्थ्यमानतया शास्त्रस्य महाविषयत्वलाभाच्च। लाघवाद्य-विशेषेऽपि च न सुखत्वस्यैहिकामुष्मिकसाधारणस्य, विलम्बोप-स्थितिकत्वाच्च जन्यतावच्छेदकत्वम्। स्वरसतोदुःखासम्भिन्नसुखस्यैव इच्छाविषयत्वाद्दुःखसम्भिन्नसुखस्य फलत्वानुपपत्तेः[१]। व्याप्यधर्मेण जन्यत्वसम्भवे व्यापकधर्मस्यान्यथासिद्धत्वाच्च व्यभिचारेण सुखत्वस्य स्वर्गत्ववदेव कार्यतावच्छेदकत्वानुपपत्तेः[२]। अतो विश्वजित्त्वावच्छिन्न-कारणतानिरूपितजन्यतावच्छेदकत्वं विजातीयस्वर्गस्यैव[३] युक्तम्।

मोक्षोऽपि च यद्यपि दुःखध्वंसरूपस्तदा पापक्षयादिवदेव न विश्वजिज्जन्यः जन्यतावच्छेदकत्वे गौरवात्[४]। यदि त्वानन्दावाप्तिरूप-स्तदा तस्य ज्ञानैकजन्यत्वान्न विश्वजिज्जन्यत्वम्[५]। यद्यपि हि,

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।

इत्यादिवचनात्कर्ममात्रजन्यत्वं ज्ञानकर्मसमुच्चयो वा प्रामा-णिकः[६], तदापि त्यक्त्वा कर्मफलासङ्गम् इत्याद्युपक्रमोपसंहारपर्या-

---

(१) ऐहिकसुखन्तु दुःखसम्भिन्नमेवेत्याशयः।

(२) अन्यथासिद्धत्वं व्यभिचारे, व्यभिचारश्च जन्यतावच्छेदकत्वानुपपत्तौ हेतुः। विजातीयसुखत्वपर्य्यवसितं स्वर्गत्वं यथा कार्य्यतावच्छेदक-मुपपद्यते, तथा सुखत्वं नेति व्यतिरेके दृष्टान्तः।

(३) इत्थमेव पाठः सर्व्वत्र। विजातीयस्वर्गत्वस्येति भवितुमुचितम्। विजातीयसुखत्वस्यैति तु युक्तं प्रतिभाति।

(४) अभावस्य प्रतियोगिज्ञानाधीनज्ञानविषयत्वेन तस्य जन्यतावच्छेदकत्वे गौरवमिति भावः।

(५) ज्ञानादेव मुक्तिरिति हि वेदान्तसिद्धान्तः।

(६) मोक्षस्य कर्म्ममात्रजन्यत्वमिति मतन्तु दार्शनिकैर्नादृतं। समुच्चित-ज्ञानकर्म्मकार्य्यत्व प्राचामनुमतमपि शङ्कराचार्य्येण निराकृतम्। इत्यत उक्तं यद्यपि प्रामाणिक इति।

पदाध्याहारेण सर्वफलार्थत्वेन विनियोगः। न चैवं स्वर्गार्थत्वबोधकविधिवैयर्थ्यम्। गोबलीवर्दन्यायेन भिन्नविषयत्वकल्पनयाऽभ्युदयशिरस्कत्वार्थत्वोपपत्तेः।

अत्र चाविशेषत्वात् सर्वफलानि ज्ञेयानि। न तु यान्यर्थवादगतानि अन्यशब्दस्य सद्भावाच्चित्राज्ज्योतिष्टोमदर्शपूर्णमाससद्यस्सोमयागान्तरेष्वन्तरजन्यफलानि, तन्मात्रपरत्वात् तत्र यथायोगं सर्वशब्दः। अर्थवादस्य स्तुत्यर्थत्वेनैवोपपत्तौ हारियोजनगतसर्वशब्दन्यायेन सङ्कोचकत्वानुपपत्तेः। अत एव सर्वशब्दस्य सर्वनामत्वाद्वैदिकफलमात्रपरत्वमपि नाशङ्क्यम्। वैदिकानामपि पूर्वमनुपस्थितत्वात्। कथञ्चिदुपस्थितेर्लौकिकेऽप्यविशेषात्। यानि तु शशविषाणप्राप्त्यादीनि केनापि प्रमाणेनाप्रसिद्धानि, तेषां न सर्वशब्देन ग्रहणम्।

यत्त्वतीन्द्रियार्थापरोक्षज्ञानलक्षणमणिमाद्यादेरपि न सर्वशब्देन ग्रहणं, तस्य लोकवेदयोः क्वचिदप्युपायान्तरजन्यत्वादर्शनादित्युक्त तत्प्रसार-तत्परत्वादौ। तत् शास्त्रालोकन्यायात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानं, भुवनज्ञानं सूर्यसंयमादित्यादिपातञ्जले;

चक्षुर्महीद्रि यथोऽत्र सहारमपि पश्यति।
मां तथ मनसा ध्यायन्निह पश्यति चक्षुषा॥

इत्यादिपुराणेषु च सिद्धिमार्गे योगधारणाविशेषस्य साधनत्वोपलम्भादुपेक्षितम्। चिरविप्रकृष्टार्थप्रत्यक्षज्ञानेऽपि भुवनज्ञानादेः प्रकारेण दृष्टत्वोपपत्तेः। न चैवमपि शब्दादीनामपि सर्वज्ञत्वोपपत्तेः दुर्निवारं वेदप्रमाण्यानर्थक्यम्। षट्कारकसाधनस्य प्रमाणान्तरेणासिद्धौ चोदनयापि ज्ञातुमशक्यत्वात् [illegible]

सिद्धा भाव्यत्वम्। धातोरेव वा मन्त्रतत्त्वं परिकल्प्येच्छाविषयत्वावगतौ स्वर्गादिवदेव साध्यत्वावगतिः। तत्र प्राथमिकफलापेक्षायां 'श्रुतवाक्यस्यैव लक्षणया फलपरत्वे प्रमिते पश्चात् स्तुत्यपेक्षायां अप्राप्तिफलसम्बन्धविधेरेव स्तावकत्वम्।

यत्र श्रुतेष्वर्थवादपदेषु न स्तावकत्वकल्पनां विना फलपरत्वमात्रेणोपपत्तिः, यथा यदष्टाकपालो भवति गायत्रियैवैनमित्यादौ। तत्र तेषां स्तावकत्वमेव। फलाकाङ्क्षायां तु उपस्थितपदसमानजातीयपदान्तरस्यैव कामपदयुक्तस्य कल्पनेति न सर्वथा स्वर्गप्रयुक्तत्वम् ॥४॥३॥८॥

काम्ये॥ यत्र श्रुतब्रह्मवर्चसादिफलकेष्वपि शास्त्रस्य महाविषयत्वलाभाय स्वर्गफलकत्वकल्पना। ब्रह्मवर्चसादिकन्त्वायुरादिवदानुषङ्गिकम्। तत्र किं वाच्यम्। रात्रिषत्र इति शङ्कामन्दविषन्यायेन निष्प्रश्नितार्थं परिहर्तुं सूत्रम्। फलाकाङ्क्षायाः श्रुतपदेनैव शान्तेरुद्देश्यानेकत्वनिमित्तकवाक्यभेदप्रसङ्गाच्च न स्वर्गकल्पना। महाविषयत्वाभावस्तु विशेषश्रवणे न दोषः। आयुरादौ प्रमाणद्वयसत्त्वादानुषङ्गिकत्वेऽपि प्रकृते तदनुपपत्तेश्च॥४॥३॥८॥

सार्वकाम्यं॥ एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो-ज्योतिष्टोमः, एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो-दर्शपूर्णमासाविति श्रुताभ्यां वचनाभ्यां संयोगपृथक्त्वन्यायेन सर्वफलार्थत्वम्। न तु तत्तत्प्रकरणस्थगुणकामानामपि दर्शादिप्रयोज्यत्वात्तदभिप्रायेणानुवादत्वम्। वैयर्थ्यादौपचारिकत्वाङ्गीकारे ताद-र्थ्यस्य प्रमाणाभावाच्च। अतोऽप्राप्तार्थत्वादेव विधिभावनावाचि-

तदा तेषा कामनाऽभावेऽप्यायुरादिवदुत्पत्तौ नैव किञ्चिद्बाधकम्। वस्तुतस्तु सर्ववाक्यस्याभ्युदयभिरस्कलेनाप्युपपत्तेरर्थवादस्य च साध्यत्व-समुच्चायकत्ववन्मुख्यत्वसमुच्चायकत्वस्याप्युपपत्तेरिदं मतमुपेक्षितमिति पूर्वोक्तयुक्त्यैव सर्वोत्पत्तिः। अस्तु वा अकाम्यमानस्यानुत्पत्तिः। तथापि यत्र द्विरात्राणामेव फलानां कामना, तत्र तावतामुत्पत्तिः केन वार्यते। न चायमेव सिद्धान्त इति तन्त्रसारोक्तं युक्तम्। भाष्यादिष्वकथनेनापसिद्धान्तात्।

अत एव यद्यप्यनुपस्थितत्वान्न पुत्रत्वादिकमुद्देश्यतावच्छेदकम्। सर्वशब्दस्य विशेष्याकाङ्क्षत्वान्न सर्वत्वमपि। अपि तु पूर्ववाक्ये कामशब्दोपादानात्तस्यैव सर्वशब्देन सर्वनाम्ना परामर्शात्कामना-विषयत्वमेवोद्देश्यतावच्छेदकं कार्यतावच्छेदकं चेत्याश्रीयते। तदापि यत्र समूहालम्बनात्मिकाऽनेकविषयिणी कामना, तत्र तावता-मुत्पत्तिरनिवार्यैवेति प्राप्ते।

उक्तयुक्त्या प्रवृत्तिप्रयोजककामनाविषयत्वमेवोद्देश्यतावच्छेदकम्। अनुष्ठानोत्तरकालभाविकामनाविषयत्वावच्छिन्नस्योत्पत्तिवारणाय प्रवृत्तिप्रयोजकतया क्लृप्ताया एवोद्देश्यतावच्छेदककोटिप्रवेशार्थं प्रवृत्ति-प्रयोजकेति कामनाविशेषणम्। अतश्चानुष्ठानोपक्रमे या कामना तद्विषयत्वावच्छिन्नस्यैकस्यैवोत्पत्तिर्नान्यस्य।

न च समूहालम्बनस्थले विषयताया व्यासज्यवृत्तित्वादनेको-त्पत्तिप्रसङ्गः। समूहालम्बनज्ञान इव समूहालम्बनेच्छायामपि प्रत्येकविषयत्वस्यावश्यकत्वात्। इतरथा तादृशकारणात् समूहा-लम्बनात्मकयोरेव स्मृतिफलयोरुत्पत्त्यापत्तेः। अत एककार्यताव-

तत्र सर्वे ॥ एकस्मिन् प्रयोगे किं सर्वाणि फलान्युत्पद्यन्ते उतैकमिति चिन्तायाम् । सर्वत्रैवोद्देश्यतावच्छेदकत्वेन कार्यतावच्छेदकत्वात्कारणेन च तदवच्छिन्नोत्पत्तिनियमात्सर्वाण्युत्पद्यन्ते । अस्तु वा तच्छब्दादावित्र पुत्रत्वादिनैवोद्देश्यता । सर्वत्वस्य तद्विशेषणत्वाद्विवक्षितम् । तथाप्येकस्मिन् प्रयोगे कारणसत्त्वात्सफलकार्योत्पत्तौ बाधकाभावः । न ह्येकं कारणं कार्यद्वयं नोत्पादयति । एकस्मादपि* घटाद्रसरूपक्रियाद्यनेकोत्पत्तिदर्शनात् ।

एककार्यतावच्छेदकावच्छिन्नोत्पत्तौ तदवच्छिन्नान्तरस्यानुत्पत्तिदर्शनात्तु पुत्राद्यन्तरस्योत्पद्यताम् । कार्यतावच्छेदकान्तरावच्छिन्नस्य तु पश्चाद्युगपत् क्रमेण वोत्पत्तौ बाधकाभावः । न च सर्वेषां युगपत्कामनाऽभावादनुत्पत्तिः । कामनायाः कर्माङ्गत्वे फलं प्रति जनकत्वे वा प्रमाणाभावेन तदभावेऽप्युत्पत्तौ बाधकाभावात् । प्रवृत्तिं प्रति परं फलेच्छायाः कारणत्वादन्यतरफलेच्छामात्रेण प्रवृत्तौ जातायां कारणसत्त्वेन सर्वकार्योत्पत्तौ न किञ्चिद्बाधकम् । अतएव विषयगतसमीहितसाधनत्वमप्यन्यतरसमीहितत्वबोधनेनोपपन्नम् । न च सर्वफलोत्पत्तौ तेषां भोक्तव्यत्वेन मोक्षानुपपत्तिरिति तन्त्रसारोक्तं युक्तमिति वाच्यम् । ज्ञानेन तदपूर्वाणां नाशात् ।

यदा स्वर्गवाक्यवैयर्थ्यापत्तेस्तस्यैव मुख्यफलत्वम् । अन्येषाम्वैकैकस्मै कामायेत्यर्थवादादन्ये अतएव एकैकस्मै, अयन्तु नैकैकस्मा एव, किन्तु सर्वेभ्योऽपीत्यर्थावगतेरानुषङ्गिकत्वमिति तन्त्रसारोक्तमाश्रीयते ।

---

* इत्थमेव पाठ सर्वत्र । एकस्मादपि,—इति तु भवितुमुचितम् ।

भोगप्रतिबन्धकदुरितसत्त्वे तु आमुष्मिकत्वम्। तदभावे लैहिकत्वमेव। न च कर्मणां शरीरान्तरारब्धदारैव फलसाधनतेत्यत्र किञ्चिन्नियामकमस्ति। येन केवलामुष्मिकत्वं भवेत्। न चैषां केवलैहिकत्वम्। इह जन्मनि पुत्रपशुराज्यादिसत्त्वे तदयोग्यत्वे वा जन्मान्तरे तन्मे स्यादिति कामनायादुरपह्नवत्वात्। अतो-मुमूर्षुणाऽपि पश्वाद्यर्थं चित्राद्यनुष्ठेयमेव। यत्र तु वृष्ट्यादावैहिक्येव कामना, तत्र केवलैहिकत्वम्। अस्तु वा वृष्ट्यादेरपि तादृशकामनासत्त्वे उभयरूपत्वम्। केवलैहिकत्वं तु पुत्रगतपूतत्वादावाद्यवनीयादौ च द्रष्टव्यम् ॥४॥३॥१२॥

समवाये॥ अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यग्नि-वाजपेयप्रकरणे श्रुतम्। तत्र प्रकरणान्तरन्यायेन प्रसिद्धसौत्रामणी-बृहस्पतिसवापेक्षया कर्मान्तरमेव तत्तद्धर्मकं अग्नि-वाजपेय-पूर्वकालत्वविशिष्टं विधीयते। तस्य च फलापेक्षायां प्रकरणादिनाऽग्नि-वाजपेयाङ्गत्वमविवादमेवेति तत्तत्प्रयुक्तत्वं तत्तत्कर्मान्तरस्य। समासेऽपि बृहस्पतिसवाद्यतिरिक्ताङ्गविशिष्टवाजपेयादिप्रयोगे तदुत्तराङ्गमिदं फलानुकूलयोग्यतायाः परमापूर्वनिष्ठायाजननार्थं न विरुध्यते।

यत्र च पूर्वपक्षोनिर्बीजोगतार्थश्चेति नातीव तत्रादरः। तत्तदधिकरणादे प्रयोजनमात्रं तु शिष्यहितार्थं कथ्यत इति द्रष्टव्यम्। एवं यत्राप्यन्यत्र पूर्वपक्षानुक्तिः, तत्रेदमेव प्रयोजनम्॥ ॥४॥३॥१३॥

उभयार्थे॥ दर्शपूर्णमासयोः, सत्राय पौर्णमासीं वैमृधमनुवर्त्त-

च्छेदकावच्छिन्नस्यैवोत्पत्तिनियमादेकमृदादिभ्यो घटान्तरानुत्पत्तिवत्फलान्तरस्याप्यनुत्पत्तिरित्येकप्रयोगे एकमेव फलम् ।

निमित्तश्रवणे च तस्यैव प्रवृत्तिप्रयोजकत्वात्पापक्षयकामनायास्तत्राभावेन पापक्षयप्रयोजकविधिकार्यतावच्छेदकावच्छिन्नत्वाभावेन युगपन्नित्यकाम्यप्रयोगे पापक्षयेण सह स्वर्गादिफलोत्पत्तावपि न क्षतिः ।

अत एव स्मृतिशास्त्रेण यत्र विविदिषापरमेश्वरप्रीत्याद्यर्थत्वेन तत्तद्विधित्वेन यज्ञानुष्ठानं, तत्र कारणत्वेन स्वर्गाद्युत्पत्तौ प्रसक्तायां, त्यक्त्वा कर्मफलासङ्गमित्यादि स्मृत्या फलान्तरस्यापि तत्त्यागेन विधानाद्विस्तरफलाभावविशिष्टविविदिषादेरेव वा, प्रकाशः सर्वकामोऽश्वमेधादिना फलत्वाभिधानात् न तदुत्पत्तिः । सार्वकाम्यवाक्येन यथाद्यन्यतरत् स्वर्गवाक्येन स्वर्ग इति तु दृष्टमेव । इदमपि तु स्वर्गवाक्यस्य प्रयोजनमित्यपि ध्येयम् । प्रयोजनं, तत्तत्कामोक्तिः ॥४॥३॥११॥

एवं वा—

स्वर्गत्वादामुष्मिक एव ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इति वाक्यशेषगतनिरतिशयप्रीतिरूपस्य तस्यैव अवगम्यमानत्वात् । तथार्थवादादौ* देवविशेषभोगस्थानविशेष । पशुपुत्रादीनां मैहिकामुष्मिकत्वम् । न तु केवलामुष्मिकत्वम् । तथापि

* इत्यत्र पाठ एव । तथार्थवादादौ—इति तु पुस्तकान्तरे दृश्यते ।

कालक्रमयोराम्नानात्। अतोऽमावास्याविकारेष्वतिदेशः प्रयोजनम्। यदा तु पार्वणहोमवदस्यापि विकृतावतिदेशो नेष्यते, तदा सङ्ख्ये उभयोरुल्लेखः, सिद्धान्ते पौर्णमासस्यैवेति द्रष्टव्यम् ॥४॥३॥१४॥

अनुत्पत्तौ ॥ सोमे, प्रहृत्य परिधीन् हारियोजनं जुहोति, आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति श्रुतम्। तत्र प्रहरणन्तावद्-द्वितीयया परिधिसंस्कारकम्। परिधयश्च यद्यपि न सोमयागाङ्गं, तथापि तदङ्गभूतसवनीयाद्यङ्गत्वेन प्राप्ता एवेति तेषां फलवत्त्वम्। अतश्च हारियोजनस्यापि यद्यपि नेदमुत्पत्तिवाक्यं, तथापि तदु-त्पत्तिवाक्ये फलाश्रवणात्तस्य परिधिप्रहरणाङ्गत्वम्। यद्यपि चायं सोमयागाभ्यास एव, तथाप्येतदभ्यासस्य परिधिप्रहरणाङ्गत्वम्। अभ्या-सान्तराणां स्वर्गाद्यर्थत्वेऽपि उद्गातृपच्छेदनिमित्त-पुन.प्रयोगस्येव न विरुध्यते।

एवं द्वितीयवाक्ये अनूयाजा यद्यपि न सोमयागे प्रकृताः, तथापि तदङ्गसवनीयाद्यङ्गत्वेन सन्त्येव फलवन्तः। आग्निमारुतश-स्त्रस्य तु यागवत्प्रकरणात्[1] क्रत्वङ्गत्वं कल्प्यते, तावद्वाक्येनैवानूया-जाङ्गत्वम्। न वा तत्र वैमृधवत्पदान्तरकल्पनाऽपि। अङ्गभूतका-लविधेयत्वेनैवाङ्गत्वोपपत्तेः। न च वैमृधवदस्यानुत्पत्तिवाक्यत्वा-दुत्पत्तिवाक्ये च फलाकाङ्क्षायां प्रकरणात् क्रत्वङ्गत्वकल्पनेति सूक्तोक्तं युक्तम्। उत्पत्तिवाक्ये तदपेक्षायामपीष्टमामान्यस्य भाव्य-

(१) इत्ययमेव पाठः सर्वत्र। मम तु, यावत्,प्रकरणात्,—इति पाठः प्रतिभाति।

प्रतीति श्रुतोवैमृधोऽपि प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गम् । न च वाक्येन पौर्णमासीमात्राङ्गत्वावगमः । वाक्यस्य पौर्णमासीपदस्य त्वप्रत्ययोपात्तकालप्रतियोगिमस्वापदवाच्यमासिविशेषणत्वेनाङ्गि-परत्वाभावात् । तत्त्वेऽपि वा सत्त्वार्थेतिपदस्य साकाङ्क्षताऽऽपत्तेः । न च फलार्थेवायामङ्गार्थमप्युपात्तस्योपस्थितत्वाद्गाचिप्रतिष्ठावत्तद्वाचक-पदान्तरकल्पनया पौर्णमासीमात्राङ्गत्वमिति वाच्यम् । प्रयाजादि-वत्प्रकरणेनोभयार्थत्वक्लृप्तौ भ्रातृव्याभिभूतिवदेव पदान्तरकल्पनाऽनुप-पत्तेः । अत स्वतन्त्रकालविधानात् पौर्णमास्युत्तरमेव तद्दिने क्रिय-माणोऽयमुभयाङ्गमुभयप्रयुक्त इति प्राप्ते ।

प्रयाजेष्वक्लृप्तभ्रातृव्याभिभूतेः कल्पने गौरवात् युक्तं विलम्बोप स्थितस्यापि क्लृप्तकतूपकारस्यैव फलत्वम् । प्रकृते पौर्णमास्युपकारस्यापि क्लृप्तत्वाद्युक्तं स्ववाक्योपस्थिततत्पदकल्पनया वाक्येनैव तन्मात्रार्थत्वम् । अतश्चात्र पौर्णमासीप्रयोगसमाप्त्युत्तरकालविशिष्टं कर्मैव पौर्ण मास्युद्देशेन विधीयते । न चैव तथापि विकृतित्वादतिप्रयेन य इष्टेति वचनेन वा अमावास्याकालकत्वापत्तिः । अनुग्राह्येन पौर्णमास्यानन्तर्यस्यापि विधेयत्वेन तद्बाधात् । न चैवमथानुनि-र्वाप्यदेविकाहविर्वत् प्रधानमात्रोत्तरत्वस्यैवापत्तेः प्रयोगबहिर्भावापा पत्तिः । सम्याप्येत्यस्य वैयर्थ्यापत्तेः यच्चक्षुषात्तद्धादिति दक्षिणा-भेदाभावाच्च, प्रयोगभेदस्य सङ्कर्षे वक्ष्यमाणत्वात् ।

उपयोगस्तु परमापूर्वजननानुकूलायां फलानुकूलायामेव वा समुदायापूर्वनिष्ठायां योग्यतया द्रष्टव्यः । प्रयोजनं पूर्वपक्षे अमा-वास्याया तन्त्रमध्ये वैमृधः कार्य इति तन्त्रसार । तत्र स्वतन्त्र-

विधेयपूर्वकालविशेषणतया विधानम्। न चात्र वाक्यभेदः। परस्परान्वयस्य व्युत्पन्नत्वादिति प्राप्ते।

सर्वेभ्यो दर्शपूर्णमासावित्यादौ आख्यातासमानाधिकरणत्वेन व्यवहितपरामर्शकत्वस्य कौस्तुभादौ स्थापितत्वात्कर्मान्तरत्वानुपपत्तेः स्वफलप्रयुक्तदर्शपूर्णमासपूर्वकालत्वस्यैव सोमयागोद्देशेन विधानमिति कालार्थ एवायं संयोगः। प्रयोजनं, पूर्वपक्षे सोमारम्भात् पूर्वस्मिन् पर्वणि दर्शपूर्णमासधर्मकं कर्मान्तरं सद्यस्कालं कृत्वा शुद्धकाले दर्शो वा पूर्णमासो वा कार्यः, सिद्धान्ते नेति॥४॥३॥१६॥

फलसंयोगः॥ वैश्वानरेष्टिन्यायवत् पूतत्वाद्यर्थवादिकफलार्था। सत्यपि निमित्तसंयोगेनाकरणे प्रत्यवाये भावनाभाव्यत्वेन पापक्षयापेक्षया पूतत्वादेरेव लघुभूतस्याश्रयात्।

तत्र पुत्रगतपूतत्वादिफलप्रयुक्ता सा, उत कर्तृगतपूतत्वादिप्रयुक्तेति चिन्तायाम्। विधानात् कर्तृसमीहितस्यैवाक्षेपादाधानगताक्षेपदेन चाधिप्रयोज्यफलस्याधानगामित्वावगतेरिष्टिकर्तुरेव फलम्। न च यस्मिन् जात इत्यादिना धर्मिग्राहकप्रमाणेन पूतत्वादेः पुत्रगतत्वावगमः। तस्यापि स तेजस्वीति सर्वनाम्ना निर्वपतिकर्तुरेव समानाधिकरणविभक्तिनिर्दिष्टस्य परामर्शेनाविरोधित्वादिति प्राप्ते।

यच्छब्दसमभिव्याहारे सति तच्छब्दस्य तदर्थपरामर्शित्वनियमेन पुत्रगतपूतत्वादेरेव फलत्वावगमात्तस्यापि कर्तृसमीहितत्वेन विध्याक्षेपदयोरविरोधात् पुत्रगतपूतत्वादिप्रयुक्तैव सा। प्रकरणे

त्वमङ्गीकृत्य वाक्यान्तरेण विनियोगोपपत्तौ दुर्बलप्रमाणेनाङ्गत्वकल्प-नाऽनुपपत्तेरिति प्राप्ते।

हारियोजनस्य तावज्ज्योतिष्टोमत्वेनैव स्वर्गादिरूपस्य फलस्य क्लृप्तत्वात् वैश्वदेव्यन्यायेन पदान्तरकल्पनया प्रकरणाङ्गत्वे प्रमाणमस्ति। आग्निमारुतस्य यद्यपि विशिष्य वाक्येन न क्रत्वङ्गत्वम्, तथापि दादशस्तोत्रोऽग्निष्टोम इत्याद्यनन्यथासिद्धलिङ्गोपष्टम्भप्रकरणवशेनैव क्रत्वङ्गत्वमस्य वाक्येनाङ्गत्वकल्पनाऽयोगात्।

वस्तुतस्तु, प्राधान्यूयाजोद्देशेनोर्ध्वत्वस्याग्निमारुतस्य च विधौ वाक्यभेदापत्तेः परस्परान्वयवादिनां मतेऽपि विशेषणविधि-कल्पनागौरवापत्तेर्वानेन वाक्येनाग्निमारुतस्यानूयाजाङ्गत्वेन विधा-नम्। अत एवाग्निमारुतादूर्ध्वमित्यत्र पदद्वयेन लक्षणया तत्प्र-तियोगिकोर्ध्वकाल एवानूयाजोद्देशेन विधीयते। दर्शपूर्णमा-साभ्यामिष्ट्वेत्यादौ तु तृतीयान्तस्थेष्ट्वेत्यनेनैवाग्भावान्न लक्षणेति ध्येयम्।

वस्तुतस्तु, न प्रकृतेऽपि लक्षणा, तां चतुर्भिरितिवद्विशिष्ट-भावनाबोधेऽप्यूर्ध्वत्वमात्रविधिफलतया विधेयानेकत्वाभावात्। प्रयो-जनं, पूर्वपक्षे मरुत्वीयविकारे सोमयागानङ्गे हारियोजनाग्निमा-रुतयोः करणं, सिद्धान्ते नेति ॥४।३।१५॥

उत्पत्ति॥ सोमप्रकरणे एव, दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति श्रुतम्। तत्र यद्यपि फलार्थतया सोमयागस्य क्लृप्तत्वात् प्रकृते प्रत्यभिज्ञानबलेन न कर्मान्तरत्वशङ्का, तथापि प्रकरणान्त-रन्यायेन दर्शपूर्णमासधर्मकस्यैव कर्मान्तरस्य फलवत्सोमयागोद्देशेन

प्रत्यवायस्तु कर्त्तृनिष्ठ एव। प्रयोजनं, पुत्रमरणेऽपि जातेष्टिः पितृरि फलिसंस्काराद्य पूर्वपक्षे, सिद्धान्ते नेति ॥४॥३॥१७॥

एवं वा—

इयमिष्टिः पुत्रजननानन्तरमेव कार्या सप्तम्या जननस्य निमित्तत्वावगमेन निमित्तानन्तरं नैमित्तिकस्योचितत्वात्। न चात्र सप्तम्या जननोत्तरकालविधिरिति तन्त्रसारोक्तं युक्तम्। पुत्र इति सामानाधिकरण्यानुपपत्तेः। अतोऽभिन्न इतिवन्निमित्तपरैव सप्तमी। सापेक्षत्वाच्च हविरार्त्तिन्यायेनोभयविवक्षा। यद्यपि पुत्रमात्रं निमित्तं स्यात्तथापि निमित्तानन्तर्यत्यागेन नैमित्तिकस्याशौचकालबाधेनाप्यनन्तरमेव करणम्।

न च स्तन्यपानाभावे पुत्रमरणेन श्रेयिविरोधापत्तिः। जातकर्माङ्गभूतस्य घृतमधुप्राशनपूर्वकस्य वैधप्राथमिकदक्षिणस्तन्यप्राशनस्योत्तरकालिकत्वेऽपि रागतोयत्किञ्चित्प्राशनस्य सम्भवेन मरणानापत्तेः। न च जननानन्तर्यस्य जातकर्मण्यावश्यकत्वाद्विनिगमनाविरहः। प्रत्यक्षश्रुतिविहितत्वस्यैव विनिगमकत्वादिति प्राप्ते।

जातकर्मणो नालच्छेदपूर्वभावविधानात्, अच्छिन्ननालस्य च प्राशननिषेधाद्दिष्टेर्जननानन्तरमेव करणे मरणापत्तेः श्रेयिविरोधापत्त्योत्कर्ष एव। तच्च निमित्तश्रुत्यनुरोधेन स्मार्त्तनिषेधस्यानाहिताग्निपरत्वम्[१]। श्रुतनिमित्तत्वस्य निमित्तस्य नैमित्तिकानुष्ठाप-

---

(१) इत्थमेव पाठः सर्वत्र। मम तु, ततश्च निमित्तश्रुत्यनुरोधेन स्मार्त्तनिषेधस्य नानाहिताग्निपरत्वम्,—इति पाठः प्रतिभाति।

## अथ चतुर्थस्याध्यायस्य
## चतुर्थः पादः।



प्रकरण॥ राजसूयप्रकरणे, इष्टिपशुसोमयागा श्रयागाश्च होमविदेवनादय सर्वे फलाकाङ्क्षा अपि श्रुतेन न स्वाराज्येन फलेन सम्बध्यन्ते। भावार्थाधिकरणन्यायेन यजेरेव फलभावना-करणत्वादयागानामङ्गत्वोपपत्तेः। राजसूयपदस्य यजिसामाना-धिकरण्येन तन्नामधेयत्वाच। न च राजा सोम सूयतेऽभिषूयते अस्मिन्निति व्युत्पत्त्या राजसूयशब्दस्य सोमयागमात्रवाचित्वात्तेषा-मेव फलसम्बन्धोऽस्त्विति वाच्यम्। राज्ञा क्षत्रियेण सूयते निष्पाद्यत इति व्युत्पत्त्या सर्वेष्वप्युपपन्नत्वेन[1] यजिसङ्कोचे प्रमा-णाभावात्। अत एव राजा क्षत्रिय सुनोति स्नाति यत्रेति व्युत्पत्त्याऽभिषेचनीय एव तत्राऽभिषेचकाले अभिषेकवत्त्वसम्बन्धेन राजसूयपदप्रसिद्धिस्तस्यैव फलसम्बन्ध इत्यपास्तम्। उक्तव्युत्पत्त्या सर्व-परत्वसम्भव यजिसङ्कोचे प्रमाणाभावात्। अत सर्वे यागा एव फलप्रयुक्ता इति विदेवनादीनामत्तत्तदङ्गतावतिदेश ॥१॥४॥१॥

मध्यस्थ॥ विदेवनादीनामङ्गत्वे सिद्धे सन्निधानादवान्तरप्रक-

(१) असमीचीनोय पाठ सर्वेष्वप्युपपन्नत्वेन,—इति तु समीचीन प्रतिभाति।

इति तृतीयया च बृहस्पतिसवस्य तद्बुद्धिर्भावावगतेस्तत्र प्रत्-
दिव्यभावात्कालापेक्षाया नामातिदेशप्राप्तवसन्तादिकालबाधे प्रमा-
णाभावः । एवं सौत्रामण्यामपि पर्वबाधे । अग्निं चित्वेत्यनेन हि
चयनेन फलपूर्वसाधनीभूताग्निं सम्पाद्येत्यर्थावगतेस्तस्य चयनभाव-
नोत्तरकालत्वसिद्धिः । न चानुपयोगः । चयनप्रयोज्यफलपूर्वं एवो-
पयोगेऽपि चयनाङ्गत्वोपपत्तेः । न चैतावता फलाङ्गत्वमिति तत्त्वसा-
रोक्तं मन्तव्यम् । प्रमाणाभावात् । फलाङ्गं वा चित्यङ्गत्वेनोपपद्यत-
इति सङ्कर्षसूत्रं फलपूर्वोपयोगाभिप्रायं व्याख्येयम् । अत एतेऽपि
कालप्रयोजकाः ॥४ ३। १८॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
चतुर्थस्य तृतीयः पादः ॥

भावेऽपि सन्निधानादेव तदङ्गत्वोपपत्तेः । यत्प्रयाजानां पुरस्ता-च्छुङ्क्यादहिरात्मनः सजातानां ध्यायदनूयाजानामुपरिष्टाच्छुङ्क्यात् स्वर्गलोकमपक्रामेत्मध्ये जुहोतीति प्रकृताङ्गमध्यवर्त्तित्वश्रवणादपि तदुपपत्तेश्च ।

वस्तुतस्त्वकाङ्क्षाऽनुवृत्तौ प्रमाणाभावान्नेदं प्रकरणमिति ध्येयम् । एवं प्रयोजनवत्त्वोपपत्तौ न यामकामपदानुषङ्गेण स्वतन्त्रफलार्थत्व-कल्पना । प्रमाणाभावात् । इध्माङ्गपरिधिपरिधानाङ्गभूतवैशेषिक-मन्त्रैर्थवायाच्च । अतः सांघदर्णीप्रयुक्ता एव ते । न तु सौम्यवत्फ-लप्रयुक्ताः । अतः सर्वदैव प्रयाजानूयाजमध्येकर्त्तव्यान तु यामान्त-रकामनायामेव ॥४॥४॥४॥

दधिग्रहः ॥ सोमे, यां वै काञ्चिदध्वर्युश्च यजमानश्च देवता-मन्तरितस्तस्या आवृश्च्यते प्राजापत्यं* दधिग्रहं गृह्णातीति दधि-ग्रहो नैमित्तिक एव । यद्यपि चायं यच्छब्दो न निमित्तत्वप्रतिपा-दकः, देवतापदसमभिव्याहृतस्य तस्यान्तरायनिष्ठनिमित्तत्वाप्रतिपा-दकत्वात् । देवतायाश्चान्तरायान्वितायानित्यायाः स्वरूपेण निमि-त्तत्वायोगाच्च । तथापि देवतान्तरायनिमित्तदोषपरिहारफलत्वाव-गमात्तस्य च कादाचित्कत्वान्नैमित्तिकत्वम् । अर्थवादान्यथार्थ यदा तदा पदाध्याहारस्यावश्यकत्वाद्वा नैमित्तिकत्वम् । ज्येष्ठोह वा एष ग्रहाणां यद्दधिग्रह इति तु वैगुण्यपरिहारार्थत्वेनापि श्रेष्ठत्वादुपपन्नमिति प्राप्ते ।

---

* तस्या आवृश्च्येत यत्प्राजापत्यं,—इति भाष्यधृत पाठः

रणाद्राऽभिषेचनीयमात्राङ्गत्वस्य द्वितीये एव निराकृतत्वात्सर्वराज-सूयाङ्गत्वेन महाप्रकरणाद्वगतेः सर्वप्रयुक्तत्वम् । तार्त्तीयाधिक-रणप्रयोजनकथनार्थञ्चेदमधिकरणम् ॥ ४ ॥ ४ ॥ २ ॥

प्रकरणविभागे ॥ राजसूये एव, सौम्यश्चरुर्भवेद्दक्षिणेति विधाय, पुरस्तादुपसदां सौम्येन प्रचरतीति श्रुतम् । तत्रापि सत्यप्युपसदां राजसूयान्तर्गतदशपेयाख्यसोमयागाङ्गतया फलवत्त्वे पश्चा. पुरस्ता-च्छब्दवैयर्थ्यप्रसङ्गेन पञ्चम्यन्तमर्थप्रत्ययेनेति सूत्रानुसारात् दिग्योगनि-मित्तायाश्चाद्यर्थपरत्वाभावात्सौम्यस्यैतदर्थत्वानुपपत्तेर्वैमृधवत्पदान्तर-कल्पनया तदर्थत्वस्य चानुत्पत्तिवाक्यतयाऽनुपपत्तेरुत्पत्तिवाक्ये च फलापेक्षायां सामान्यविधिनाऽपि क्लृप्तेन स्वाराज्यफलार्थत्वस्यैवावगमा-त्फलार्थ एव प्रयोगः ।

वस्तुतस्तु, उत्पत्तिवाक्येऽपि सर्वस्मान्न्यायेन तच्छिष्टफलवत्त्वज्ञानस्य स्वाराज्यवाक्याधीनत्वात्तदर्थत्वमेव युक्तम् । अत सौम्य फलप्रयुक्त-एव पाठक्रमात् स्वपूर्वपठितकर्मानन्तरं कर्त्तव्यत्वेन प्राप्नोति देश-प्राप्त्यपेक्षतूपूर्वं विधीयते । ततश्च न तदिष्टतौ कर्त्तव्य । पूर्वपक्षा-स्यापि तदिष्टतौ कर्त्तव्यता प्राप्तःपोद्यत इति सङ्गतिः । तेन सङ्गत्यभावादिदमधिकरणं विदेवनाधिकरणात् पूर्वं द्रष्टव्यमिति तत्स्वमारोक्ति परास्ता । आचार्यासक्तादिति क्षेपक्तिस्त्वनुपलब्धि-याधितैव ॥ ४ । ४ ॥ ३ ॥

फलवदा ॥ वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति प्रकृत्याभनमस्याभनस्य देवा इति त्रिंस आङ्क्षीदैत्तीति श्रुतम् । तत्रामनहोमानां सांग्रहण्यङ्गत्वम् । तस्याविकृतिलेन प्रकरणा-

मित्तिकैव। यत्तूपसंहारे प्रष्ठीमिति षष्ठ्यां पूरणार्थकः प्रत्ययः, सोऽभिधानापेक्षो न त्वनुष्ठानापेक्षः। पञ्च चितयः पूर्वमभिहिता इदानीमियं षष्ठ्यभिधीयत इति। तस्मादग्निचयनोत्तरमप्रतिष्ठायां निमित्ते एकैव चितिरियमदृष्टार्था, चयनाङ्गतया प्रयोगभेदेन प्रतिष्ठाफलार्थतया वा विधीयते ॥४॥४॥७॥

पितृयज्ञः ॥ अनारभ्य श्रुतममावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति। तत्रायं पिण्डपितृयज्ञः दर्शाङ्गम्। अमावास्यापदेन कर्मवाचिना तत्र जर्या जुहुयादितिवदाख्याद्दर्शाङ्गत्वप्रतीतेः। यद्यपि चायं कालेऽपि मुख्यस्तथापि फलकल्पनाभिया अत्र कर्मपरत्वमेव युक्तम्। यद्यपि काले एव मुख्यः कर्मणि तद्योगाश्रि-रूढलक्षणा, प्रकृते च कालपर एव अपराह्णसामानाधिकरण्यात्। तथापि तस्मात्पितृभ्यः पूर्वेद्युः करोतीति वाक्ये दर्शेष्टिपूर्वेद्युः-कालश्रवणादेतद्धन्यायेन दर्शेष्टेरुपस्थितत्वात्तदङ्गत्वमिति प्राप्ते।

अमावास्याशब्दस्य कर्मपरत्वं भवतैव निराकृतम्। लक्षणा तु प्रमाणाभावात्कालसामानाधिकरण्यविरोधाच्च दूरापास्तैव। पूर्वेद्यु-र्वाक्यमपीष्टेरनुपस्थितत्वान्न तत्प्रतियोगिकं कालं विधत्ते। अपि तु तिथिद्वैधे पूर्वेद्युः कालम्,

यया ऽस्तं सविता याति पितरस्तामुपासते।

इति स्मृतिप्राप्तमनूद्य देवतामात्रम्। केचित्तु द्वैधे चन्द्रदर्शनात् पूर्वेद्युरिति व्याख्याय खण्डपर्वणि परेद्युः पितृयज्ञमनुतिष्ठन्ति।

सर्वथा न दर्शाङ्गं पितृयज्ञः। एवञ्च पौर्णमासीमेव यजेत भ्रातृव्यवतीममावास्यां इत्वा भ्रातृव्यममावास्यया यजेत पिण्ड-

यूप परिव्ययतीति श्रुतेन वचनेन पशुचयार्थसाधारणयूपपरिव्याणा-पेक्षया यूपपरिव्याणान्तर मन्त्रनीयाङ्गतया प्रकरणान्तरन्यायेन दार्ढ्यप्रयोजनक[१] विधीयते। आश्विनोत्तरकालता उपनिष्क्रमणञ्च पाठादर्थाच प्राप्तमनूद्यत इत्युक्तमेव। अतश्चाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति उत्पत्तिवाक्ये पुनः श्रुतं परिव्याणं न यूपसंस्कारार्थम्। वैयर्थ्यापत्तेः। किन्तु यूपमिति द्वितीया सप्तम्यर्थे। परिवीयेत्यस्य कर्माकाङ्क्षायां पशुमित्यस्यानु-षङ्गः। तथा च त्रिवृत्करणक-यूपाधिकरणक-पशुसंस्कारक-परि-व्याणोत्तरकालविशिष्टयागविधानात्पश्वर्थमेव परिव्याणं पश्वुप-क्रमणार्थमिति प्राप्ते।

द्वितीयया परिव्याणस्य दृष्टविधयैव यूपार्थत्वे सम्भवति लक्ष-णाऽनुषङ्गयोः प्रमाणाभावः। न च वैयर्थ्यम्। रशनाधर्माणां दर्भमयीत्वादीनां एतत्परिव्याणसाधारणसिद्ध्यर्थमनुवादत्वस्य तृतीये साधितत्वात्। अन्यथा रशनाधर्माणामौपवसथ्येऽहन्यनुष्ठीयमानयू-पपरिव्याणाङ्गत्वेनैवानुष्ठानसादेश्यादापत्तौ अप्राकृतकार्यतत्परिव्या-णार्थत्वासिद्धेः। सति तस्मिन् त्रिवृत्करणकयूपपरिव्याणानुवादत्व-लेनैव प्रकृतयागीययूपव्यक्तिमन्त्रविपरिव्याणमात्रस्यैवोद्देश्यताऽवगमा-त्साधारणसिद्धिः। अस्तु वा निर्वपतिवदेव प्रकृतिलिङ्गसादृश्येन प्राकृतपरिव्याणातिदेशसिद्ध्यर्थमस्मिन् यूपपरिव्याणे त्रिवृत्त्वानुवादः। सर्वथा न परिव्याणं पशुसंस्कारार्थम्। प्रयोजनं, यूपे दैरशन्यमन्त्वेऽपि

(१) यूपस्य दृढतासम्पादकमित्यर्थः।

पितृयज्ञेनैवामावास्यायां प्रीणातीति दर्शेष्ट्यभावेऽपि पिण्डपितृयज्ञदर्शनं सङ्गच्छते। एतद्बलेनैव पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुत इत्यादि पिण्डपितृयज्ञार्थवादे यज्ञोपस्थितावपि न क्षतिः। यत्तु,

न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः।

इति मनुवचनम्। तच्छ्राद्धं कृष्णपक्षश्राद्धं दर्शेनामावास्यया विनाऽऽहिताग्नेर्न भवति अनाहिताग्नेरिव तिथ्यन्तरेष्विति व्याख्येयम्। न तु दर्शेष्टिं विना श्राद्धं पितृयज्ञो न भवतीत्येवं व्याख्येयम्। दर्शपदे लक्षणायां प्रमाणाभावात्। तेनायं स्वर्गार्थ इति मूलानुयायिनः।

वस्तुतस्तत्करणे मन्त्रहोत्रहोमरूपप्रायश्चित्तस्यापस्तम्बादिभिः स्मरणात् ज्योतिष्टोमादिक्रतुभिस्तुल्यत्वश्रवणाच्च नित्य एवायम्। प्रयोजनं, दर्शाभावेऽपि करणम्, तद्विकारेषु च नातिदेशः।

यत्तु भाष्यकारेण पौर्णमास्यामाधाने कृतेऽग्निमावास्यायां दर्शेष्ट्यभावात् पूर्वपक्षे अकरणमित्युक्तम्। तद्बादरायणेष्टिषु पञ्चानेष्टिपक्षे आधानोत्तरदिने पौर्णमासकालाभावे च बोध्यम्। यदा तु तदुत्तरदिने कालसत्त्वं पौर्णमासस्य, तदाऽऽधान एव सेष्टि माधारमणीयं पौर्णमासान्वाधानं कृत्वा श्वोभूते पौर्णमासेनेष्ट्वाऽग्निमद्दर्शेष्टिकृतयैव पिण्डपितृयज्ञानुष्ठाने न कश्चिद्विरोधः॥४॥४॥८॥

पयङ्गम्॥ मवनीयमस्निधावाग्निं यद्दं गृहीत्वोपनिष्क्रम्य*

* इत्यमेव पाठः सर्वत्र। निष्क्रम्य,—इति तु भवितुमुचितम्। भाष्ये तु पाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति,—इति पठितम्।

न्तो न सोमयागस्यैव। अपि तु प्रायणीयादीनां सर्वेषामेव। यागत्वविशेषेण सर्वेषामेव यजिना फलोद्देशेनोपादानात्। सर्वेषां ज्योतिष्टोमनामकत्वाविशेषाच्च।

न च स्ववाक्यविहितस्यैव ज्योतिष्टोमसंज्ञकस्य फलोद्देशेन विधानादितरेषान्तदङ्गत्वमिति वाच्यम्। अग्नीषोमीयाद्यपेक्षया कर्मान्तरे प्रमाणाभावात्। अत एवैतद्वाक्यविहितकर्मणोऽप्रसिद्धत्वादग्नीषोमीयाद्यनुवादेन च सोमविधानायोगात् सोमवाक्येऽपि सोमविशिष्टयागस्यैव विधानम्।

न च विशिष्टविधिगौरवभिया लाघवसहकृतवाक्यान्तरोपात्तगुणादेव ज्योतिष्टोमवाक्येन कर्मविध्यङ्गीकारः। तथात्वेऽपि नित्यवाक्येऽपि कर्मान्तरस्य विनिगमनाविरहेणापत्तौ सोमवाक्ये एवोत्पत्त्यन्वयिगुणेन विशिष्टविध्यङ्गीकारस्य न्याय्यत्वात्। अतश्च प्रकृतत्वाविशेषाद्राजसूयवत्सर्वेषां फलसम्बन्ध।

न च तानि वा एतानि ज्योतींषि य एतस्य स्तोमा इति वाक्यशेषात्सोमयागस्यैव ज्योतीरूपत्रिवृदादिस्तोमसम्बन्धेन ज्योतिष्टोमनामत्वमत्रैव प्रसिद्धार्थकत्वाद्दर्शपूर्णमासपदवद्यवच्छेदकत्वोपपत्तेस्तस्यैव फलसम्बन्धोपपत्तिरिति वाच्यम्। एतस्यार्थवादत्वेन गौणतयाऽप्युपपत्तौ अर्थान्तरवाचिनो ज्योतिःशब्दस्य स्तोमवाचित्वाभावात्। ज्योतीरूपस्तोमाङ्गत्वस्य च फलसम्बन्धोत्तरकालीनत्वेनाविशेषात्।

न च यद्वं वा गृहीत्वा चमस वोन्नीय स्तोत्रमुपाकरोतीत्यनेन वाक्येन, स्तोत्रेषु कत्स्य सोमयागाङ्गत्वावगमात् स्तोमा-

पशावपि दैरसम्य पूर्वपक्षे प्रकृतौ विकृतौ च, सिद्धान्ते तु नेति॥ ४॥४॥९॥

स्वरश्च ॥ यूपस्य स्वरुङ्करोतीति षष्ठ्या स्वरोर्यूपार्थत्वावगमात् स्वरुणा पशुमनक्तीत्यञ्जन प्रतिपत्तिर्थत्किञ्चित् सोमलिप्त तेनावभृथ यन्तीति वदिति प्राप्ते । स्वरोर्यूपार्थत्वेऽदृष्टार्थत्वापत्ते षष्ठ्यास्वार्थवत्वेनाप्युपपत्ते स्वरुणेति तृतीयादिबलात्पश्वञ्जनार्थत्वमेव । सोमलिप्ते तु अवभृथपदे गौणत्वाद्यनेकदोषभिया तदङ्गीकरणमित्युक्तमेव । प्रयोजनं, पूर्वपक्षे एकयूपके पशुगणे एकस्यैव पशो समञ्जनं, सिद्धान्ते सर्वेषामिति । पार्थसारथिमते तु प्रयाजशेषाभिघारणन्यायेनाधारनियमस्य पशुसंस्कारार्थत्वोपपत्ते पूर्वपक्षेऽपि सर्वेषामञ्जनप्रसङ्गात् प्रयोजनानुपपत्तिरिति । भाष्यविरोधोऽपि ॥४॥४॥१०॥

दर्शपूर्णमासयो ॥ प्रयाजादिसर्वयागसाधारण्येन दर्शपूर्णमासाभ्यां स्वर्गकामोयजेतेत्यनेन वचनेन राजसूयवद्यजिना न सम्बन्ध, किं त्वाग्नेयादीनां षण्णामेव । दर्शपूर्णमासनाम्ना अग्नेयादिषड्यागेष्वेव प्रसिद्धार्थकेन यजेरवच्छेदात् । तथा च* दर्शपूर्णमासनाम्न प्रसिद्धार्थकत्व, तथोपपादित पौर्णमास्यधिकरणे । तदधिकरणप्रयोजनकथनार्थन्त्विदमधिकरण प्रयुक्तिसिद्ध्यर्थं न विरुध्यते । राजसूयनामस्य यथा प्रकृतसर्वयागपरत्व, तथा तदधिकरणे स्पष्टमेव । अतश्च प्रयाजादीनामङ्गत्वादिकृतावतिदेश ॥४॥४॥११॥

ज्योतिष्टोमे ॥ ज्योतिष्टोमेन स्वर्गकामोयजेतेत्यनेन स्वर्गफलसम-

---

* इत्यमेव पाठ सर्व्वत्र । यथा च,—इति तु भवितुमुचितम् ।

श्रीगणेशाय नमः।

# पञ्चमोऽध्यायः।

## प्रथमः पादः।



श्रुति ॥ तदेवमङ्गप्रधानसाधारणेन प्रयोज्यवर्गेऽवगतेऽधुना-प्रयोगाश्रितः क्रमो निरूप्यते। एकादशे ह्यङ्गानां प्रधानानाञ्चैकेनैव प्रयोगविधिना विधानमिति वक्ष्यते। अतश्चैकविधिविधयत्वेन सर्व-साहित्यस्य विवक्षितत्वादेकेन कर्त्रा युगपत्सर्वकरणाशक्तेरवश्यम्भाविनि कस्मिंश्चित्क्रमे नियामकानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि प्रमाणानि निरूपयिष्यन्ते।

तत्र क्रमो नामाव्यवहितोत्तरत्वरूपमानन्तर्य्यम्। तच्चैकप्रति-योगिकमेकवृत्ति। यथा वेदं कृत्वा वेदिं करोतीत्यत्र वेदकरण-प्रतियोगिकमानन्तर्य्यं वेदिकरणवृत्ति। अत्र दर्शपूर्णमासोत्तरत्वस्यापि सोमांगत्वात्तद्व्यावृत्त्यर्थमव्यवहितेति विशेषणम्। तत्र दर्शपूर्णमास-पूर्वकालतामात्रं क्त्वार्थः न त्वव्यवहितांशोऽपि।

न च सोमविधेस्तदपेक्षा। येनाव्यधान एव तात्पर्य्यमवसीयेत। सोमविधेर्भिन्नप्रयोगविधिविधेयदर्शपूर्णमासप्रतियोगिकक्रमानपेक्ष-त्वात्। अतस्तत्रोत्तरकालत्वमेव विधेयं न क्रमः। क्रमश्च सर्वचो-त्तरपदार्थाङ्गम्। तस्यैव, कार्य्यं कर्त्तव्य इत्यपेक्षणात्। न तु पूर्व-पदार्थाङ्गम्। मदुत्तरं कः पदार्थः कर्त्तव्य इत्यपेक्षायाः कस्यचिद्य-

नामपि स्वसाध्यस्तोत्रोपाकरणद्वारा सोमयागसम्बन्धावगतेर्विशेषकत्वोपपत्तिरिति वाच्यम् । उपाकरणस्य दृष्टविधया स्तोत्रोपकारकत्वेन द्वितीयया च स्तोत्राङ्गत्वावगमेनास्य कालार्थत्वात् ।

न च कालद्वारैव सम्बन्धेन विशेषकत्वम् । कालस्य फलसम्बन्धोत्तरापेक्षत्वात् तस्य च स्तोत्रगतफलवत्त्वज्ञानाधीनत्वात्तस्यापि च यागगतफलवत्त्वबोधकवाक्याधीनत्वेन तत्प्रवृत्तेः पूर्वमेतद्वाक्यप्रवृत्त्यभावेनैतत्सम्बन्धानवगतेर्नास्तोत्रविशेषकत्वाभावात् । यद्यपि च पदार्थानां प्राप्तत्वेनास्य वाक्यस्य क्रमविधायकत्वं स्यात् । तथापि वेदं कृत्वा वेदिं करोतीतिवच्छ्रौतक्रमविधायकत्वात्तस्य च प्रातिस्विकविधिविधेयत्वेनेतरक्रमवत्प्रयोगविधिविधेयत्वाभावेऽपि क्रमस्यानुष्ठानावगमोत्तरापेक्षत्वात्तस्य च फलवत्त्वज्ञानोत्तरकालीनत्वेनोक्तविधया न विशेषकत्वमिति प्राप्ते ।

क्रमादेरुत्तरकालमाकाङ्क्षायामपि निराकाङ्क्षत्वज्ञानाभावमात्रेण वाक्यस्य पूर्वप्रवृत्त्युपपत्तेस्तेन च कालस्य क्रमस्य वा विधेयत्वेन विशिष्य तद्घटितसम्बन्धस्य सोमयागेऽवगमान्नाधः प्रसिद्धार्थकत्वेन तस्यैव फलसम्बन्धावगमेन प्राधान्यम्, अन्येषां च तदङ्गत्वमिति तद्दिक्षनावतिदेशः । तदेवं प्रयोज्यवर्गो निरूपितः ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
चतुर्थाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

ङ्गत्वाङ्गत्वम् । वेदं कृत्वेत्यादौ तु वेदिकरणस्य वाक्यान्तरेण प्राप्तत्वात् तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रविधानाद्वाक्यादेव तदङ्गत्वम् ।

यत्र तु पाठादिप्रमाणेन सम्भवत्प्राप्तिकता, धात्वर्थस्य सम्भवत्प्राप्तिकोऽपि भावार्थाधिकरणन्यायेन प्रयोजनार्थं विधीयते । तत्र क्रमबोधिका श्रुतिरप्यनुवाद एव । न तु क्रमे प्रमाणम् । विशिष्टविधिगौरवापत्तेः । यथैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन् । हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इत्यादौ । अत्र हि ग्रहणावदानादेरेव फलार्थं हृदयादिमात्रस्य विहितसिद्ध्यर्थस्य विधिरिति वक्ष्यते ।

यत्र तु धात्वर्थस्य सूत्रप्रमाणेन प्राप्त्यभावेऽपि कथञ्चित् सम्भवत्प्राप्तिकस्य पुनर्विधाने न किञ्चित्प्रयोजनं विधेयान्तरञ्च नान्यत्किञ्चित्, तत्र क्रम एव श्रुत्युक्तो विधीयते । यथा सत्त्रात्मके दाद्शाहेऽध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुर्मैत्रावरुणं होतुः ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति आग्नीध्रं ब्रह्मणः प्रतिहर्तारमुद्गातुरच्छावाकं होतुस्ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः सुब्रह्मण्यमुद्गातुर्ग्रावस्तुतं होतुस्ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाऽऽचार्यप्रेषित इति श्रुते वाक्ये । अत्र हि न दीक्षायाः स्वरूपेण तत्तत्संस्कारकत्वेन वा विधिरतिदेशप्राप्तत्वात् । प्रकृतौ हि यजमानसंस्कारार्था दीक्षाऽतिदेशेनैव सत्त्रे प्राप्यते । सत्त्रे च ये यजमानास्त ऋत्विज इति वचनेन ऋत्विक्षार्थत्वेन

दर्शनात्। पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणं, दर्शपूर्णमासादिरिव पूर्वकालतया। एतेनोभयपौर्वापर्यरूपक्रमः पदार्थद्वयाङ्गमिति केषाञ्चिदुक्तमपास्तम्। प्रमाणाभावात्। अस्तु वा प्रथमभक्ष इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेव क्रमपदार्थः।

तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थवृत्तिपौर्वापर्यसमुदायरूपविततिरेव क्रम इति तु मूलोक्तः पक्षोऽशाब्दत्वाद्विकृतौ क्वचिदेकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्यासम्भवाद्व्युत्-क्रमेणानुष्ठानेऽपि वैगुण्यानापत्तेरुपेक्षितः।

अस्य च क्रमस्य प्रयोज्यनिष्ठत्वात् तन्निरूपणोत्तरमारम्भः। तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि। तेषां लक्षणानि तत्तन्निरूपणावसरे वक्ष्यन्ते। तत्र श्रौतः क्रमः प्रातिस्विकविधिना-विधीयते, आर्थादिक्रमास्तु प्रयोगविधिनैवेति मूलानुयायिनः। वस्तुतस्तु श्रौतक्रमस्थले क्त्वादिनाऽवगतेरुत्पन्नस्य वाक्येन विनियोगः। क्रमान्तरे त्वर्थादिनोत्पन्नस्य प्रकरणादिकल्पितश्रुत्या विनियोगः। प्रयोगस्तु सर्वत्रैवाङ्गान्तरवत्प्रयोगविधिनैव। इदञ्च तत्र तत्र स्फुटी करिष्यते। युज्यतेऽत्र क्रमस्यापि द्रव्यगुणादिवत्पदार्थविशेषणत्वेन विधानम्।

तदिह श्रुतिर्नाम वृत्त्या क्रमबोधकः क्लृप्तः शब्दः। स चाथ-शब्दादिः। तथाथशब्दस्यानन्तर्यवाचित्वं प्रसिद्धम्। क्त्वाप्रत्ययादीनान्तु पूर्वकालत्वाभिधानसापेक्षाऽनुरोधात् क्रमपरत्वं लक्षणया। अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेति विशेषणम्। तत्र वषट्कर्त्तुः प्रथमभक्ष इत्यादौ क्रमविशिष्टभक्षविधानात् प्रथमपदोक्तक्रमस्य वाक्या-

वाक्ये तु वैकल्पिकब्रह्मचारिविधानाद्धृदयादिन्यायेन पाठादेव क्रमसिद्धेस्तत इत्यनुवादः। निपातत्वाच्च वा-शब्दस्य ब्रह्मचारिविशेषणत्वेन न वाक्यभेदः। अभावपक्षे च ब्राह्मणानामेवार्त्विज्यविधानाद्ब्राह्मण इत्याद्यनुवादः। ब्रह्मचारिणश्चाचार्याधीनत्वस्मृतेराचार्यप्रेषित इत्यपि।

यत्तु मूले विततिरूपक्रमपक्षमङ्गीकृत्य सर्वस्याप्येकवाक्यत्वमुक्तम्। तदग्रान्दाया विततेर्विधेयत्वायोगादनेकदीक्षोद्देशेन विधाने वाक्यभेदापत्तेरुत्सेदहीक्षायां कर्तृविधेरावश्यकत्वाच्चायोपेक्षितम्। वस्तुतस्तु आनन्तर्यरूपक्रमपक्षेऽपि तत्तत्संस्कार्यविशिष्टदीक्षोद्देशेन क्रमविधाने वाक्यभेदापत्तेः संस्कार्यमात्रोद्देशेन विधौ च दीक्षानिष्टत्वलाभादुत्सेदवाक्य एव तदुद्देशेन कर्तृविधिः। इतरस्तु सर्वोऽपि पदसमुदाय औचित्येन तत्प्राप्त्यर्थोऽनुवादः। कर्तृदीक्षानिष्टत्वलाभस्त्वनुवादबलादिरापदस्येव नानुपपन्नः। एवञ्च सर्वस्याप्येकवाक्यत्वलाभः। क्रमस्त्वनुवाद एव तादृशपाठादवधेयः। निषादस्थपत्यधिकरणन्यायेन श्रूयमाणवाक्ये वाक्यभेदाभावेन पाठगम्यानेकवाक्यकल्पनस्यादोषत्वात्। अन्यथा हृदयादिवाक्येष्वपि विशिष्टविध्यापत्तेः। न च श्रौतक्रमस्य पाठक्रमस्य च कश्चिदनुष्ठाने विशेषः। अतो मूलोक्तं श्रुतिक्रमोदाहरणमनादरणीयमिति ध्येयम्॥ ५॥ १॥ १॥

अर्थाच्च॥ अर्थः प्रयोजनम्। तच्च व्युत्क्रमेऽनुपपद्यमानत्वात्क्रमे प्रमाणम्। यथाऽग्निहोत्रं जुहोति यवागूं पचतीति यवागूपाकस्य पाठक्रमेण पश्चात्करणे पाकसंस्कृतायाः यवाग्वाः होमरूपस्य यवाग्वाऽग्निहोत्रं जुहोतीति वचनसिद्धस्य प्रयोजनस्यानिष्पत्तेः

यजमानविधानादुद्गात्रादीनां यजमानत्वेनैव प्रतिप्रधानावृत्तिन्यायेन तत्तत्संस्कारकत्वप्राप्तिः ।

न च ऋत्विक्कार्ये यजमानविधानादेव वरणादिनिवृत्त्या भक्ष्याद्यप्राप्तिः । तद्विधानेन वरणादिनिवृत्तावपि ऋत्विक्त्वनिवृत्तौ प्रमाणाभावेनाध्यवसायमात्रेणैव भक्ष्यत्वादेरुपपादितत्वात् । न च प्राप्यमानाया अपि दीक्षाया अपूर्वत्वार्थं पुनः श्रवणम् । भक्ष्यादिप्राप्त्यर्थमतिदेशस्यावश्यकतया निवारयितुमशक्यत्वात् । न च दीक्षायामध्वर्युविधिः । अतिदेशादेव सिद्धेः । न च दीक्षान्तरेऽध्वर्युनिवृत्त्या प्रतिप्रस्थात्रादिविधानम् । अध्वर्युदीक्षायामध्वर्योस्थित्यतिस्त्वा पुनातिति मन्त्रवर्णविरोधाद्वाप्राप्तेः । न चाध्वर्युकर्तृकत्वानुरोधेनोहेन मन्त्रप्रयोगः । कर्तुः शास्त्रप्रधानाङ्गत्वेन चरमापेक्षित्वेन च कर्त्रनुरोधेन त्वापदोहायोगात् । अतो मन्त्रमनूहितमेव प्रयुञ्ज्याध्वर्युकर्तृकत्वबाधावश्यम्भावे इतरमन्त्रेष्वेव यतो विशेषः स्यादिति न्यायेनाध्वर्युपुरुषाणामाद्य. प्रतिप्रस्थात्रैवाध्वर्युदीक्षाया प्राप्नोति ।

ब्राह्मणाच्छंस्यादिदीक्षासु तु अध्वर्योर्न पूतः मावयेदिति वचनेन सत्रप्रकरणपठितेन दीक्षासु दीक्षाख्यसंस्काररहितपुरुषकर्तृविधायकेन पर्युदासात्प्रतिप्रस्थात्रप्राप्तिः सुलभैव । एवं प्रतिप्रस्थात्रादिदीक्षासु नेष्टुः प्रतिप्रस्थात्रनन्तरस्य, नेष्ट्रादिदीक्षासु चोन्नेतुर्नेष्ट्रनन्तरस्य प्राप्तिर्न्यायादेवेति न विधेयान्तराशङ्का । अतः क्रम एवात्राप्राप्तत्वाद्दीक्षोद्देशेन विधीयते श्रौत स्त्राप्रत्ययोक्तः ततःपदोक्तश्च । अत एवैतानि द्वादश वाक्यानि श्रौतक्रमविधायकानि । अधिकारोद्देश्यतावच्छेदकमङ्गीकृत्य पक्षे वा । उन्नेतृदीक्षा-

पाकस्य च यवागूत्पादकत्वेऽपि अनुपयुक्तायास्तस्याः प्रयोजनत्वानुपपत्तेस्तदन्यथाऽनुपपत्त्या पूर्वं पाकः पश्चाद्धोमः। न च तृतीया च होश्छन्दसीति स्मरणाद्धोः कर्मणि तृतीया चकाराद्द्वितीया चेत्यर्थाद्यवाग्वा जुहोतीत्यत्र यवाग्वाः तृतीयया कर्मत्वावगमेन होमस्य प्रयोजनत्वासिद्धिः। तथात्वे यवाग्वा अन्यत्रोपयोगाभावेन होमवाक्य एव सक्तुन्यायेन विनियोगभङ्गाङ्गीकारात्। पाकस्य तु दृष्टार्थकत्वात् संस्कारकर्मत्वमेव।

वस्तुतस्तु करणत्वे एव तृतीयायाः शक्तिः। कर्मत्वे तु आनुशासनिकी लक्षणा। न चात्र तद्बीजमस्ति। अत एव यत्र चतुरवत्तादौ उपयोगकॢप्तिस्तत्रैव चतुरवत्तेन जुहोतीत्येतादृशवाक्यस्थलेऽपि कर्मत्वप्रतीतिरित्येवम्परं स्मरणम्।

अत्र चार्थोपस्थितः क्रमः प्रयोगविधिनैव विधीयते। एव पाठादिष्वपीति प्राञ्चः। अङ्गान्तरवत्तु अर्थकल्पितश्रुत्या विनियोगः, प्रयोगभावे प्रयोगविधिनैत्यपि शक्यं वक्तुम्। वस्तुतस्तु प्रयोजनवशेन पदार्थानुष्ठाने विहिते आनुषङ्गिकः क्रम इति न तदंशे विधानमिति ध्येयम्।

अर्थोऽपि क्रमनियामक इति प्राञ्चः। वस्तुतस्तु अर्थाविरोधिपाठस्थले अन्यलभ्यत्वादनुवाद एव। विरोधिस्थले चापूर्वस्यैव तस्य ज्ञापक इत्यप्यनुसन्धेयम्॥ ५॥१॥२॥

अनियमोऽन्यत्र॥ यत्रोक्तवक्ष्यमाणक्रमनियामकप्रमाणाभावस्तत्रानियम एव। यथा प्रयाजानुमन्त्रणानां वसन्तमृतूनां प्रीणामीत्यादीनां एको ममेत्यादीनाञ्च शाखाभेदेनाम्नातानां परस्परम्।

पेक्षा यथा सान्नाय्यादौ । एकप्रयोगविधिपरिग्रहेऽपि सम्प्रतिपन्नदेवताकत्वेन सहानुष्ठीयमानत्वात् । यत्र वा भिन्नप्रयोगविधिपरिग्रहः यथा तत्तत्काम्यकर्मणाम् । तत्र न पाठोऽपि नियामकः । तत्र तु स स्वाध्यायत्वसिद्ध्यर्थं एवोपयुज्यत इति द्रष्टव्यम् ॥५।१।४॥

प्रवृत्त्या ॥ एवं सप्तदश प्राजापत्यान्पशूनालभतेत्यादावेकैकस्मिन्पशौ उपकरणादीनां पदार्थानामावर्त्तनीयानां पदार्थानुसमयस्य वक्ष्यमाणत्वादाद्य उपाकरणपदार्थो येन क्रमेण कृतस्तेनैव क्रमेण नियोजनादिद्वितीयप्रभृतिपदार्थाः कर्त्तव्याः । अन्यथा प्रकृतिप्राप्तस्योपाकरणनियोजनयोरव्यवहितानन्तर्यस्यौपदेशिकपशुसाहित्यानुरोधेन षोडशक्षणव्यवधानेऽप्यधिकक्षणव्यवधानापत्तेः । अथ उपस्थितवाक्ये वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति प्रयोगवाक्ये च पशूनां सप्तदशानां साहित्यावगमादङ्गसाहित्यानुरोधेनैकैकाङ्गेन सप्तदशयागानां युगपदुपकर्त्तव्यत्वावगतेरावर्त्तनीयाङ्गेषु चैकेन कर्त्रा युगपदुपकारासम्भवादवश्यं षोडशक्षणव्यवधानेऽपि तदधिकव्यवधाने औपदेशिकसाहित्यस्यातिदेशिकानन्तर्यस्य च बाधः स्पष्ट एव । अत एव केषु चित्पशुषु न्यूनक्षणव्यवधानमपि दोष एव ।

अत एव पूर्वपदार्थक्रम एव प्रयोगविध्यवगतप्रत्यासत्त्यनुगृहीतोत्तरपदार्थक्रमनियमे प्रमाणम् । अथ प्रवृत्त्युपलक्षणम् । उत्तरपदार्थप्रवृत्तिक्रमेणापि पूर्वपदार्थक्रमनियमस्य न्यायतौल्येन वक्ष्यमाणत्वात् । अयञ्च प्रवृत्तिक्रमो मुख्यक्रमबाधकोऽपि प्रयोगविधिप्रवृत्तेः पूर्वमपेक्षितत्वादवगम्यमानक्रमस्य-प्रवृत्त्यापत्त्यनुगृहीतः पदार्थानाम-क्रमं बोधयति । ततश्च प्रतिनियोजनवाक्यकल्पनया तत्प्राप्तेन-

परिधेहे पदार्थानुसमयासम्भवादेकैकस्मिन् प्रयाजे द्वयोर्द्वयोर्मन्त्रयोः पठनीयत्वाच्च प्रयाजान्तरीयमन्त्रस्य प्रयाजान्तरीयमन्त्रेण प्रवृत्तिक्रमः ।

न च नानाशाखास्थयोः क्रमक्रमत्वाभावेऽपि एकशाखास्थानां पञ्चानामपि मन्त्राणां पाठेन क्रमक्रमत्वाच्छाखान्तरीयेणाप्यनियत-व्यवधाने प्रवृत्तिक्रमबाधापत्तिः। पञ्चानां मन्त्राणां पञ्चप्रयाजाङ्गत्वे-नैकप्रयोगाङ्गत्वाभावादवान्तरप्रयोगविधिभेदेन भिन्नप्रयोगविधिपरि-गृहीतानां पाठेन क्रमानियमात् । दृश्यते च पाशुकानूयाजानामै-ष्टिकपिष्टलेपफलीकरणहोमस्य च महाप्रयोगैकत्वेऽपि भिन्नावान्तर-प्रयोगविधिपरिगृहीतत्वेनाक्रमक्रमत्वम् । तस्मादनियम. ॥५॥१॥२॥

क्रमेण ॥ पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमनियामकः । न च विधीनां तत्पदार्थविधायकत्वात् क्रमस्य च स्वाध्यायत्व-सिद्धार्थत्वेनाध्ययनविध्युपयुक्तत्वान्न पदार्थक्रमनियामकत्वम् । पदा-र्थानामनुष्ठानकाले स्मारकापेक्षायां मन्त्रादीनामुपस्थितत्वेन स्मार-कत्वनियमात् तत्क्रमेणैवानुष्ठानक्रमनियमोपपत्तेः । अत एव यत्र मन्त्राम्नानं, तत्र तत्क्रम एव नियामकः। यत्र तु न तत्तत्र विधा-यकत्वेनोपयुक्तस्यापि विधिवाक्यस्यैवोपस्थितस्य स्मारकत्वेन नियमात् तत्क्रमस्यापि पदार्थक्रमनियामकत्वम् । पाठोपस्थितस्य च क्रमस्य विनियोजकवाक्यकल्पनयाऽङ्गत्वेऽवगते प्रयोगविधिना प्रयोगविधा-नम् । सर्वत्र पदार्थबोधकत्वञ्च क्वचिदनुष्ठेयपदार्थबोधकत्वं क्वचित्-सम्बन्धद्रव्यदेवतादिबोधकत्वम् । तेन च द्विविधेनापि अनुष्ठेयपदार्थ-क्रमनियम । अत एव देवताबोधकयाज्यादिक्रमादपि यागक्रमः । अतः पाठोऽपि क्रमनियामकोऽपेक्षितत्वात् । अत एव यत्र न क्रमा-

प्रधानसहितेष्वपि प्रवृत्त्यैव क्रमसिद्धेर्न स्थानोदाहरणता। प्रधाने स्थानाभावाच्च नोपाकरणे मुख्यक्रमाशङ्का। अत स्थानादेव सवनीयस्य प्रथममुपाकरण, तदुत्तर दैवस्य, तदुत्तरमानुबन्ध्यस्य। प्रकृतिदृष्टपूर्वापर्यस्यैव* नियामकान्तराभावे नियामकलाङ्गीकारात्। अत्रापि स्थानावगतस्य क्रमस्य कल्पितवाक्येन विनियोगेऽवगते प्रयोगविधिना प्रयोगविधानम् ॥५॥१॥६॥

मुख्यक्रमेण॥ मुख्यक्रमोऽप्यङ्गक्रमनियमे प्रमाणम्। मुख्यत्वञ्च प्रधानत्वम्। यत्र ह्यनेकेषां साङ्गानां प्रधानानां सहकर्त्तव्यता, तत्र प्रयोगविधिनाऽङ्गप्रधानयो साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुष्ठानव्यवधानस्वीकारेऽपि तदधिकव्यवधाने प्रमाणाभावात् प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैवाङ्गे क्रमनियम। अत एव प्रवृत्तावङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम्, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रह इति तयोर्भेदो वैपरीत्येन बलाबलञ्चेति वक्ष्यते।

मुख्यक्रमोदाहरणञ्च सारस्वतौ भवत एतद्वै दैव्य मिथुन यत्सरस्वती सरस्वांश्चेति वाक्यविहितप्रधानद्वयक्रमात् तन्निर्वापक्रम। अत्र हि द्रव्यसामान्याधिकरण्याभावेऽपि सम्बन्धसामान्यवाचिनस्तद्धितस्य दैव्यमिति वाक्यशेषाद्देवतापरत्वोपपत्तेर्द्विवचनेन देवता कल्पितयागद्वय विधीयते। अत एव न यागद्वयेऽपि सरस्वानेव देवता। अर्थवादस्य विरूपैकशेषतात्पर्यग्राहकत्वेन सरस्वतीसरस्वद्देवत्यत्वादगमात्।

* इत्थमेव सर्वत्र पाठ। पौर्व्वापर्यस्यैव—इति तु सविशुमुचितम्।

धारितेः प्रयोगविधिना प्रयोगविधानम्। तदुत्तरञ्च प्रयोगविधेः पर्यवसानमिति ध्येयम्।

न चेद् सर्वमाह्नित्यानुरोधेन स्यात् तदेव प्रमाणाभावो बोधक-शब्दाभावादिति वाच्यम्। एकेन पदेनानेकोपस्थितौ क्रियान्वये एककालावच्छिन्नत्वरूपमाहित्यस्यानुभूयमानस्य शाब्दत्वमिद्ध्यर्थं लक्षणाऽङ्गीकारात्। प्रतीयते हि शतावधानवाक्येन पृथिव्यां राजानो बहव इत्यादौ बहुत्वावच्छिन्नानामवधानादीनां चैवाद्य न्वयोऽयमिति बाधके एककालावच्छिन्न। अत प्राजापत्यपदादौ तल्लक्षणेत्यपि ध्येयम् ॥५॥१॥५॥

स्थानाच्च ॥ स्थानं च क्रमनियमे प्रमाणम्। तच्च क्रमक्रमकपूर्व-पदार्थोपस्थिति। सा चैकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणमिति न्यायेनोत्तरपदार्थस्य झटित्युपस्थापिका। अतस्तात्साहित्येन विहि-तानामन्येषां पदार्थानां तदनन्तरानुष्ठानसिद्धिः। यथा प्रकृतावग्नी-षोमप्रणयनानन्तरमौपवसथ्याहे दैव पशु, आश्विनग्रहणोत्तरकालञ्च सौत्याहे सवनीय, उद्यनीयानन्तर सुत्योत्तरमानुबन्ध्य, साद्यस्क्रे च सर्वमग्नीषोमप्रणयनादि सौत्ये उह्न्येव क्रियते।

तदाचनिकातिदेशाभावेऽपि तत्र सह पशूनालभत इति श्रुतम्। तच्च प्रधानेनात्यन्तप्रत्यासत्तिलाभादाश्विनोत्तरमेवेति स्थित तृतीये। अतस्तदाश्विनस्योपस्थापकस्य सत्वात्सवनीयस्यैव स्थानात्प्रथमत-उपाकरणम्। न तु दैवस्य। तदुपस्थापकस्य अदृष्टत्वेन स्थाना-भावात्। प्राकृतपाठस्य च व्यवधायकपदार्थान्तरसत्वेन नियाम-कत्वाभावात्। अत एवोपाकरणोत्तरभाविनियोजनादिपदार्थेषु

क्रम । तच पाठस्य स्मारकवाक्यद्वत्तित्वेन प्रथमत्वाच्छीघ्रोपस्थितेश्च बलवत्त्वम् । मुख्यक्रमस्तु मुख्ययोरेव प्रथम केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसम्पत्तये कल्प्यमानो विलम्बित इति दुर्बल ॥ ५॥१॥८॥

मन्त्रतस्तु॥ पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्न तु ब्राह्मणपाठ । तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविधयैव क्रमनियामकत्वोक्तेः मन्त्रपक्षे च तस्यैव स्मारकतया विधानोपयुक्तस्यासमर्थस्य च विधेः स्मारकत्वाभावान्मन्त्रपाठक्रम एव बलीयान् । तेन याज्यानुवाक्यादिमन्त्रपाठक्रमादाग्नेयस्य प्रथमानुष्ठानं पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य । न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथम पश्चादुपांशुयाजोत्तरमाग्नेयस्य । अत एव तत्र पाठक्रम स्वाध्यायादावुपयुज्यते । ५॥१।८॥

वचनात्तु॥ इदानीमातिदेशिकपाठक्रमापेक्षया विकृतौ मुख्यक्रमस्य बलाबलं चिन्त्यते । अध्वरकल्पायामाग्नावैष्णवमेकादशकपाल निर्वपेत्सरस्वत्याज्यभागावार्हस्पत्यस्य चरुरिति श्रुतम् । अत्र सत्यपि वाक्यत्रयेण यागत्रयविधाने, एतयैव यजेताभिचर्यमाण इति वाक्यान्तरेणाभिचाराख्यफलोद्देशेन संहितानां विधानात्त्रयाणाम् एकप्रयोगविधिपरिग्रह ।

अत्राद्यस्य यागस्य द्विदेवत्यत्वौषधद्रव्यकत्वादैन्द्राग्नाग्नीषोमीयान्यतरविधन्त । केचित्समानाचरतद्धितान्तपदकत्वसादृश्यादग्नीषोमीयस्यैवेति वदन्ति । द्वितीयस्याज्यद्रव्यकत्वादुपांशुयाजविधन्त । तृतीये एकदेवताकत्वौषधद्रव्यकत्वादाग्नेयविधन्त । तत्राज्यद्रव्यक-

न चैवमपि सरस्वती सरस्वाश्च सरस्वन्तौ, सरस्वन्तौ देवते यथोक्तौ इति व्युत्पत्त्या एकैकस्य द्विदेवत्यत्व किं न स्यादिति वाच्यम् । एकैकदेवत्ययाज्यानुवाक्यापाठेनैकैकदेवत्यत्वावगते । अत-एव प्राजापत्यवत्प्रतिपन्नदेवताकत्वाभावेन मन्त्रपाठक्रमात्प्रधानक्रमे सति मुख्यक्रमेणैव तन्निर्वापयो क्रम ।

वस्तुतस्तु तुल्यन्यायतया पूर्वपदार्थप्रवृत्तेरिवोत्तरपदार्थप्रवृत्तेरपि पूर्वपदार्थक्रमनियामकत्वस्योक्तत्वात् प्रकृते च याज्यानुवाक्यादिरूपो-त्तरपदार्थप्रवृत्त्यैव निर्वापक्रमोपपत्तेर्यद्यपि नेद मुख्यक्रमस्याप्रकीर्ण-मुदाहरणम् । तथापि दध्न पूर्वं प्राशाहरणादयो धर्मा पठिता पश्चादाग्नेयस्य निर्वापादय, याज्यानुवाक्ययोस्तु विपरीत पाठ, ततश्च पूर्वोत्तरभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणेऽनियम-प्रसक्तौ मुख्यक्रमेणाग्नेयस्य प्रथममभिघारण पश्चाद्दध्न इत्युदाहरण वक्ष्यमाण द्रष्टव्यम् ॥५॥१॥७॥

प्रवृत्तौ ॥ तदेव षट् प्रमाणानि निरूपितानि । तेषाञ्चास्याधि-करणोक्तक्रमेण पारदौर्बल्य द्रष्टव्यम् । न तु सूत्रक्रमेण । तत्र श्रुति-विरोधेऽर्थस्यैवान्यथाकल्पनाद्दौर्बल्यम् । अर्थविरोधे पाठस्य वक्ष्यते । एव वैकृतपाठविरोधे प्राकृतस्थानबाधोऽपि । प्राकृतक्रमस्थान-विरोधे प्रधानप्रयोगविध्याश्रितमुख्यक्रमस्य दौर्बल्य वक्ष्यत एव । मुख्यक्रमविरोधे प्रवृत्तिक्रमस्यापि दौर्बल्य तथैव ।

तदिह पाठक्रममुख्यक्रमयोर्बलाबल चिन्त्यते । दर्शपूर्णमास-योराग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमादाज्यस्योपांशुयाजीयस्य प्रथम निर्वाप पश्चादग्नीषोमीयद्रव्यस्य । पाठक्रमात्तु विपरीत

धर्मानुष्ठानोत्तरमेव द्वितीयप्रधानधर्मानुष्ठानमित्याग्नावैष्णवस्य प्रथमं निर्वापः पश्चादाग्नेयस्य । एवं साद्यस्के स्थानगम्यत्वकृतप्रसङ्गकोपाकरणस्य वाचनिकातिदेशवत्यां कस्यांचिदिष्टौ वाचनिकोपाकरणव्यत्यये व्यत्यस्तोपाकरणप्रवृत्त्यैव नियोजनादिक्रमः । एवं च केषाञ्चिदेतादृशविषयद्वयेऽपि याज्ञिकाचारे मूलं चिन्त्यमिति प्रकृतिक्रमाक्रमेणैव सिद्धान्तकरणं मूलस्योक्तत्वादुपेक्ष्यम् । अत आतिदेशिकपाठविरोध एव मुख्यक्रमादेर्दौर्बल्यमिति स्थितम् ॥ ५ ॥ १ ॥ १० ॥

विकृतिः ॥ चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तत्र कार्त्तिक्यां पौर्णमास्यां काश्चिदिष्टयो विहितास्तासु वक्ष्यमाणेनैव न्यायेन यदहेति वाक्यशेषेणान्येद्युर्विकल्पसद्यस्काल एवेत्यविवादम् । यानि तु शुद्ध साकमेधेन यजेतेति वचनेन तत्पूर्वदिनकर्तव्यानि कर्माणि—अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमित्येवंविधवाक्यत्रयविहितानि, तानि किं शुद्धकालान्युत सद्यस्कालानीति क्रमविशेषोपदिष्टतया सन्देहे, प्रकृतिप्राप्तत्वात् शुद्धकालत्वम् । न चाचान्यविकृतीष्टिन्यायः । तत्र हि यदहेत्यादिवाक्येन साङ्गप्रयोगस्य पौर्णमास्यादिकालविधानादातिदेशिकशुद्धकालत्वानुपपत्तेः च तद्बाधप्रसङ्गाद्युक्तं सद्यस्कालत्वम् । प्रकृते तु प्रातरादिकालकलस्य दिनद्वयेऽपि सम्भवात् शुद्धकालत्वमेव ।

अतश्च त्रयोदश्यां प्रातरादिकालेषु त्रयाणामप्यन्वाधानं कृत्वा चतुर्दश्यां प्रातरादिकालेषु याग इति द्रष्टव्यम् । कर्ममध्ये कर्मा-

यागधर्मापेक्षया आग्नावैष्णवस्य धर्माः आतिदेशिकपाठमुख्यक्रमयो-
रविरोधादेव प्रथमतः कार्याः । बार्हस्पत्यस्य तु मुख्यक्रमात्पश्चा-
त्कार्या उतातिदेशिकपाठक्रमात्पूर्वमिति चिन्तायाम् ।

मुख्यक्रमस्यौपदेशिकप्रयोगविध्युपात्तत्वेनौपदेशिकत्वात्तस्याति-
देशोत्तरकालकत्वे शरादिवद्बाधोपपत्तेर्मुख्यक्रमस्य बलवत्त्वमिति
प्राप्ते ।

प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्पना-
च्छरन्यायानुपपत्तेः कल्पनायाश्चापेक्षायामूलत्वेन प्रयोगविध्युपजीव्य-
प्राथमिकातिदेशप्रापितपाठक्रमेणैवाकाङ्क्षाया उच्छेदात् श्येनादावा-
तिदेशिकनानर्त्विक्त्वादिवदेवातिदेशिकपाठक्रमप्रापितक्रमस्यैव बली-
यस्त्वम् । तदेतत्सिद्धमपि चोदकस्य प्रयोगविध्यपेक्षया बलवत्त्व
स्पष्टीकरणार्थं क्रमलक्षणे पुनरुच्यते इति मन्तव्यम् ।

न चैवमाग्नावैष्णवबार्हस्पत्यधर्माणामपि प्राकृतक्रमक्रमेणैवाश्राना-
पत्तेर्याजिकानां वैकृतमुख्यक्रमानुरोधेनाग्नावैष्णवस्य प्रथम निर्वा-
पाद्यनुष्ठानं विरुध्येतेति वाच्यम् । प्रकृतौ हि यत्र पाठादिप्रमाणकः
क्रमस्तत्र तत्पदार्थानन्तरं तत्पदार्थः कार्य इति विशिष्यैव वाक्य-
कल्पनम् । मुख्यक्रमे तु लाघवाद्धर्मिग्राहकप्रमाणबलात्प्रधान-
धर्मानन्तरमुत्तरप्रधानधर्मा अनुष्ठेया इत्येव कल्पनम् । न तु
विशिष्य, न वा आग्नेयत्वादिप्रवेशः ।

अत एव विकृतावपूर्वाङ्गप्रवेशेऽपि न वाक्यान्तरकल्पनमित्यपि
साधयम् । एवं प्रवृत्तिक्रमेऽपि क्रमप्रमाणाङ्गप्रवृत्तिप्रवेशेनैतरे पदार्थाः
कर्तव्या इत्येव वाक्यकल्पनम् । अतश्च विकृतावपि आद्यप्रधान-

प्रकृतौ पाठादिक्रमेण पदार्थानां क्लृप्तक्रमत्वात्पूर्वपदार्थोपस्थापितस्यैवोत्तरपदार्थस्यानुष्ठेयत्वावगतेः श्रुतवचनयोस्तन्मात्रविषयत्वेऽप्यनूयाजोत्तरपदार्थस्य सूक्तवाकादेरनूयाजानन्तर्यानूयाजोपस्थापितत्वादिधर्मानुग्रहलोभेनोत्कर्षः। न च प्रधानप्रत्यासत्त्यनुरोधेन तदभावः। तस्याः प्रयोगविधिना क्लृप्तप्रमाणगम्यक्रमानुरोधेनैव प्रकृताविव विकृतावपि कल्पनीयत्वात्। एवमपकर्षेऽपि प्रयाजानामाघारादिरूपपूर्वपदार्थानन्तर्यस्य तदुपस्थापितत्वस्य च बाधे प्रमाणाभावेन पूर्वपदार्थभाविनामपि तदुपपत्तेः। न चापकर्षे पूर्वभाविनां काचित् क्षतिः। प्रधानप्रत्यासत्तेः प्रकृताविवाकिंचित्करत्वात्। न चापकर्षे हविरासादनोत्तरक्रियमाणपदार्थस्य सामिधेन्यादेस्तदानन्तर्यतदुपस्थापितत्वादिरूपधर्मबाधापत्तेरपकर्षानुपपत्तिः। तद्बाधस्योत्तरकालिकत्वेनाविरोधात्। सामिधेनीनाञ्च प्रयाजाङ्गत्वादपि हविरासादनानन्तर्यादिबाधेऽप्यदोषः॥ ५॥ १॥ १२॥

प्रकृत्या॥ सोमे सुत्यायां प्रातरनुवाकप्रैषं प्रातर्यावभ्यो देवेभ्योऽनुब्रूहीत्येवंविधं होत्रे दत्वा प्रतिप्रस्थातः सवनीयान् निर्वपस्वेति प्रेष्यतीति प्रैषं विधाय होत्रा प्रातरनुवाके उच्यमानेऽध्वर्योरुपास्तिर्विहिता आप्रातरनुवाकसमाप्तेः। सा च वचनादेव वैकल्पिकी। ततो यत्र होतुरभिजानादभूदुषाऽरुशत्पशुरिति तत्प्रचरण्यां स्रुचि चतुर्गृहीतं जुहोतीत्यादिना प्रचरणीहोमादिकान् पदार्थान्विधाय सवनीयहविर्विधिः। ततो वक्ष्यमाणमानायन्ते अग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशानलंकुर्विति प्रैषः समाम्नातः। तत्र सवनीयहविष्षु धानादिषु दार्शिकविध्यन्ते निर्वापप्रोक्षणादिरूपे.प्राप्ते

न्तरारम्भस्तु द्व्यहं साकमेधेन यजेतेति वचनादेव दुष्यति । यदि तु प्रसङ्गसिद्धिरभ्युपेता, तदाऽस्तु* त्रयोदश्यां प्रातः सकृदेवान्वाधाय चतुर्दश्यां प्रातरादिकालेषु यागाः । अङ्गानुष्ठानं तु पूर्वाङ्गानामनीकवत्या महोत्तराङ्गानां सान्तपनीयया । गृहमेधीयस्य त्वपूर्वत्वादेव नाङ्गापेक्षा । अन्वाधानं त्वन्यभागार्थमिति द्रष्टव्यम् । केचित्तु एकादशीप्रभृतिद्व्यहकालं पृथक्प्रयोगमिष्टित्रयं पूर्वपक्षे कर्त्तव्यमिति वदन्ति । तेषां द्व्यहं साकमेधेनेति वचनानुपपत्तिरिति प्राप्ते ।

एकस्मिन् प्रातरादिकाले विहितस्य साङ्गतत्प्रयोगस्य द्व्यहकालत्वपक्षे औपदेशिककालैकत्वबाधापत्तेः सद्यस्कालत्वम् । न च सायंप्रातःशब्दयोरव्ययत्वेनैकवचनान्तत्वे प्रमाणाभावः । एकवचनान्तमध्यन्दिनपदप्रायपाठादेवैकवचनान्तत्वनिर्णयोपपत्तेः । द्व्यह साकमेधेनेति साङ्गस्यैव द्व्यहकालत्वश्रुतेश्च । अतश्च विशेषणस्यैकत्वस्य विवक्षितत्वात् सद्यस्काला एवैता इष्टयः ॥ ५ ॥ १ ॥ ११ ॥

आङ्गानां ॥ दैक्षपशौ प्रकृतितो हविरासादनोत्तरभाविनां प्रयाजानां अपकर्षस्तिष्ठन्तं पशुं प्रयजन्तीति वचनेन श्रुतः । तथा सवनीये हविरासादनोत्तरभाविनामनूयाजानामुत्कर्ष आग्निमारुतादूर्द्ध्वमनूयाजैश्चरन्तीति श्रुतः । तौ किमुत्कर्षापकर्षौ तन्मात्रविषयावुत तदन्तस्यापकर्षस्तदादेश्चोत्कर्ष इति चिन्तायां, प्रयाजादिपदस्य लक्षणत्वे प्रमाणाभावात् पूर्वोत्तरपदार्थानां च प्रयाजाद्यनङ्गत्वेन तदुत्कर्षापकर्षयोरुत्कर्षापकर्षप्रसक्तावनुपपत्तेस्तत्तत्पदार्थानां प्रधानप्रत्यासत्तिबाधापत्तेश्च तन्मात्रस्यैवोत्कर्षापकर्षाविति प्राप्ते ।

* इत्थमेव पाठः सर्वत्र । तदा अस्तु,—इति तु भवितुमुचितम् ।

नाङ्गतया क्रमबाधे प्रमाणाभावात् प्रोक्षणादीनां सौमिकपदार्थो-त्कर्षस्य प्रतिप्रस्तावकर्तृकत्वस्यैव वाऽऽपत्तेरुपेक्षितम्। दर्शपौर्णमासिकप्रचारेऽपि तस्या एव प्रतिप्रस्तावकर्तृकत्वापत्त्या प्रोक्षणादौ तद-नापत्तेश्च।

यत्तु ऐष्टिकानां बहुत्वादधृदुबेल्येतदुत्तरमपि तदापत्तेः प्रचरणी-होमकालवाक्यस्य सङ्कोच इत्युक्तम्। तदस्तु नाम तथा। तथापि यावन्त एवैष्टिकास्तत्कालावधि कर्तुं शक्यास्तावतां पूर्वं करणापत्ते-रन्येषां च तदुत्तरं प्रतिप्रस्तावा वा करणापत्तेर्वाक्यसङ्कोचे प्रमाणा-भावः। वस्तुतस्तु सर्वं पूर्वं कर्तुं शक्या एवेत्युक्तम् ॥ ५ ॥ १ ॥ १३ ॥

असंयोगात्तु ॥ सौमिकाग्नीषोमप्रणयनानन्तरं यथाङ्गतया यूपञ्छि-नत्ति इत्युत्पन्नं यूपच्छेदनं दीक्षासु यूपच्छिनत्तीत्यनेनापकृष्ट प्रया-जन्यायेन प्राचोऽपि पदार्थानग्नीषोमप्रणयनादीनपकर्षतीति प्राप्ते।

भिन्नप्रयोगविधिपरिच्छिन्नत्वेनाच पाठस्य क्रमानियामकत्वा-भ्यस्त्रप्रयोगविध्यैक्येऽपि वा उत्पत्तिविधिवेलायां प्रयोक्तृत्वानवगमेन क्रमानाकाङ्क्षत्वात् पाठस्य क्रमाकल्पकत्वेन सङ्क्रमत्वाभावाद्दीक्षा-कालविधिवाक्ये च प्रयोक्तृत्वावगमेन तत्रैव क्रमापेक्षतया भिन्न-प्रयोगपरिच्छिन्नैरपि सोमाङ्गदीक्षाकालीनपदार्थैः पाठेन क्रम-कल्पनात्तत्रैव मन्त्रहोत्रहोमानन्तरं यूपच्छेदनमात्रं यूपोत्पादकधर्म-मात्रं वाऽपकृष्य कार्यं, न तु तदन्तापकर्षः। एतेन यूपच्छेदनस्य दीक्षान्ते करणमिति केषाञ्चिदुक्तमपास्तम्। दीक्षासु यूपं छिनत्ती-त्यस्य मन्त्रहोत्रहोमानन्तरं पठितत्वात् ॥ ५ ॥ १ ॥ १४ ॥

प्रासङ्गिकञ्च ॥ सवनीयपश्वतन्त्रं सवनीयहविष्षु प्रसज्यते, ऐच-

निर्वापान्तस्य प्रैषविधानादपकर्षोऽलङ्करणादेश्चोत्कर्षोऽविवाद एव। मध्यतनानां प्रोक्षणादीनां त्वलङ्करणात्प्रागेव करणं न तु निर्वापोत्तरं, प्रधानाङ्गानां प्रचरणीहोमादीनां क्लृप्तकालत्वेन तैर्व्यवधानादिति प्राप्ते।

प्रोक्षणादीनां निर्वापरूपपूर्वपदार्थोपस्थितानामतिक्रमे प्रमाणाभावान्निर्वापोत्तरमेव करणम्। न च सौमिकैर्व्यवधानम्। उपांशुपक्षे तावत्प्रधानाङ्गभूतायामुपांशावध्वर्युकर्तृकत्वस्यातिदेशप्राप्तनिर्वापसमानकर्तृकत्वानुरोधाच्च प्रोक्षणादावितरमन्य इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वावगते सौमिकस्य व्यवधायकत्वानुपपत्तेः।

न चैवं सति निर्वपणेति प्रैषे प्रोक्षणादिलक्षणापत्तिरित्यादितन्त्ररत्नोक्तदूषणावकाशः। न्यायेनैव तत्प्राप्त्यङ्गीकारेण लक्षणादावापादकाभावात्। उपांशुभावपक्षे तु यद्यप्यध्वर्युरेवातिदेशप्राप्तप्रोक्षणादौ कर्तेति निर्वापेण भिन्नकर्तृकेण न शक्यते प्रोक्षणादिकमुपस्थापयितुं, तथापि अध्वर्योरपि निर्वापे प्रैषद्वारा प्रयोजककर्तृत्वेन समानकर्तृकत्वोपपत्तेर्युक्तमेव निर्वापोपस्थापितत्वं प्रोक्षणादौ। न चास्मिन् पक्षे प्रधानाङ्गप्रचरणीहोमादिभिर्व्यवधानम्। तस्याभूदुषेत्यादिप्रातरनुवाकपरिधानीयाकालकत्वेन प्रोक्षणाद्युत्तरत्वात्। प्रातरनुवाकर्चामपि बहुत्वेन तन्मध्य एवेष्टिकपदार्थसमाप्त्युपपत्तेश्च।

यत्तु तन्त्ररत्नस्वरसादन्यैरपि वक्ष्यमाणामैष्टिकपदार्थानां बहुत्वात् प्रचरणीहोमकालविधिरुपांशुपक्षाभिप्रायेणैवेत्युक्तम्। तत् प्रचरणीहोमस्य उपांश्वभावपक्षे कालविध्यभावे प्रतिप्रस्थातरित्यादिप्रैषोत्तरभाविपाठक्रमेण क्लृप्तक्रमकाणां प्रचरणीहोमादीनां प्रधा-

क्रतुत्वाभावेन समानतया आक्षेपप्रतिबन्धायोगात्। इतरथा दधि-यागपयोयागयोरपि पाठेन क्रमापत्तेः। अतश्च प्रकृतेऽप्यनूयाजो-त्तरत्वप्राप्तेः पुरोडाशाद्यङ्गेडाभक्षणोत्तरमेव पिष्टलेपफलीकरण-होमौ ॥ ५ ॥ १ ॥ १५ ॥

तथाऽपूर्वम् ॥ दर्शपूर्णमासयोर्हविरभिवासनोत्तरं वेदिकरणमा-म्नातम्। तस्य च पूर्वेद्युरमावास्यायां वेदिं करोतीति वचनेनाप-कर्षः अतः पूर्वभाविनोऽपि हविरभिवासनादीनपकर्षेत्। एक-प्रयोगविधिपरिगृहीतत्वेन पाठस्य क्रमकल्पकत्वात्। अमावास्या-पदस्य कर्मपरत्वे लक्षणाप्रसङ्गेन कालपरत्वावगमाद्धविरभिवास-नोत्तरभाविवेदिकरणविधेरेव पौर्णमासाङ्गताबोधकत्ववद्दर्शाङ्गता-बोधकत्वाच्च। न च कालद्वयविधाने वाक्यभेदः। सामर्थ्यादिदं कृत्वा वेदिं करोतीति श्रुतवेदकरणानन्तर्यवत्त्वेनैव च पूर्वेद्युष्ट्वस्य प्राप्तत्वेनानुवादात्। प्रधानप्रत्यासत्तिलाभात् पौर्णमासप्रत्यासत्तित्वाच्च दार्शिकवेदिकरण एवायं विधिः। अतश्च पौर्णमाससाधारण्येन पाठस्य क्रमकल्पकत्वावश्यम्भावात्। अत एव च यूपच्छेदनवैलक्षण्या-त्तदन्तापकर्षे प्राप्ते।

कालपरत्वेऽपि कालविधेः प्रयोगविधित्वेन दार्शिकवेदिकरणस्य तत्रैव प्रयोज्यत्वावगमात्तदवगमोत्तरञ्च क्रमापेक्षायां पाठस्य नियाम-कत्वासम्भवाच्छ्रौतक्रमान्तरसत्त्वाच्च न हविरभिवासनेन मद्‌क्रम-त्वम्। अतश्च पाठोऽपि परिशेषात् पौर्णमासविषय एव। यदि तु खण्डपर्वणि चतुर्दश्यां प्रातरग्न्याधानदिने वेदिकरणसिद्ध्यर्थं लक्षणा-मपास्यैतत्यामावास्यापदेन कर्मैवोच्यते, तदा दार्शिकवेदिकरणस्याय-

पशुतन्त्रश्च पशुपुरोडाशे इति वक्ष्यते। प्रकृते च ये उपकाराः प्रयाजानूयाजादिजन्यास्तत्त्रितो लब्धास्तज्जनकीभूतपदार्थाश्च नातिदेशापेक्षा। ये तु न लब्धा आज्यभागपिष्टलेपफलीकरणहोमादिजन्यास्तत्पदार्थांश्चैवातिदेश इत्यपि वक्ष्यते। तदिह पाशुकानूयाजानां हृदयादियागोत्तरत्वात् सवनीये चाग्निमारुतशस्त्रोत्तरत्वात्तत्पूर्वभाविसवनीयहविःपशुपुरोडाशादीनामङ्गभूताः पिष्टलेपफलीकरणादिहोमाः किमनूयाजोत्तर उत्कर्ष्टव्या उत नेति चिन्तयाम्। प्रकृतौ दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमानां परप्रयुक्तानूयाजैरेव बद्धक्रमत्वादिहापि सत्यपि भिन्नप्रयोगविधिपरिग्रहे अङ्गभूतस्यान्याङ्गभूतानूयाजोत्तरत्वस्यापि सम्भवेनोत्कर्षे प्राप्ते।

न तावदिहतावेव क्रमक्लृप्तिः। भिन्नप्रयोगविधिपरिग्रहात्। पुरोडाशादिप्रयोगविधिना विहितानां पिष्टलेपफलीकरणहोमेडाभक्षणानां व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य क्रमकल्पकत्वेनोत्कर्षे तत्क्रमबाधप्रसङ्गाच्च। पाशुकप्रयोगविधिविहितानां समिष्टयजुःपत्नीसंयाजानामुक्तप्रमाणेनैव क्रमक्लृप्तेस्तद्बाधस्यापि प्रसङ्गाच्च। नापि प्रकृतितोऽनूयाजोत्तरत्वक्लृप्तिः। प्रकृतौ हि पाठकल्पितवाक्येन क्रमनियम एव विधीयते, न तु क्रमोऽपि। तस्य प्रयोगविध्याक्षेपादेव प्राप्तेः। अतश्च प्रकृते भिन्नप्रयोगविधिपरिगृहीतानां सामान्यतः क्रमस्याप्राप्तौ तदाश्रितस्य नियमस्याप्राप्तिः। न स्वाक्षेपात्पूर्वमेवावघातविधिवत्प्रहृत्यङ्गीकारेण कल्पितवाक्यस्य क्रमविधायकत्वमेवेति शक्यं वक्तुम्। तदिह पाठकल्प्यस्य विधेः

सान्तपनीया कर्त्तव्येति सान्तपनीयाङ्गानां नैव क्रम आदरणीयः। अत्र च सान्तपनीयेत्युपलक्षणं प्रारब्धकर्ममात्रस्य, अग्निहोत्रेऽपि आवश्यकमात्रस्य। अनावश्यकविषये अपवाद* एतद्यस्य क्रियते यद्न्यस्य तन्त्रे वितते ऽन्यस्य तन्त्रं प्रतायत इति निषेधात्। न चैवमनीकवत्युत्कर्षेऽपि मध्यन्दिने सान्तपनीयाऽऽपत्तिः। तथात्वे सान्तपनीयाया अनीकवत्युत्तरकालत्वस्यैकप्रयोगविध्यवगतस्य प्रणयनस्य च बाधेन वरमेकस्यैव मध्यन्दिनकालस्य बाधात्।

केचित्तु निमित्तविशेषणीभूतकालस्यैवानुवाद्यत्वं न तु कालमात्रस्येत्यङ्गीकृत्य सान्तपनीयायाः काम्यवन्माध्येऽनावश्यकत्वादकरणमिति वदन्ति। तन्न चातुर्मास्यानामपि नित्यत्वान्मध्यन्दिनस्यापि निमित्तविशेषणत्वापत्तेरुपेक्ष्यम्॥ ५॥ १॥ १०॥

षोडशी॥ दैवान्मानुषाद्वाऽपराधादेवोक्थ्येषूत्कृष्टेषु षोडशग्रहः क्रियते न वेति चिन्तायां, समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोतीति वचनविहितसमयाध्युषितकालबाधे प्रमाणाभावादुत्कर्षः। न च तं परागुक्थ्येभ्यो गृह्णाति षोडशिनमिति वचनेन ग्रहणे उक्थ्यपरभावस्य विहितत्वात् स्तोत्रस्य च ग्रहं वा गृहीत्वेति वचनेन ग्रहग्रहणोत्तरकालत्वात्तदनुरोधेन समयाध्युषितकालबाधः। तं परागित्यनेन षोडशिग्रहयागाभ्यामस्यैवोक्थ्यपरभावविधानेन ग्रहग्रहणस्तोत्रपूर्वकालत्वेऽपि बाधकाभावात्। अतएवाह गृह्णाति

---

* इत्यमेव पाठः सर्वत्र। मम तु अप वा,—इति पाठः प्रतिभाति। वै,—इति प्रसिद्धियोतकोनिपातः। अपच्छिद्यते इति यावत् क्वितेन संबन्धः।

मेव विनियोगविधिरिति हविरभिवासनेन दार्शिकवेदिकरणस्य सुतरां न यद्धक्रमता। न चैवं पूर्वेद्युःकालविशिष्टवेदिकरणस्य दर्शाङ्गतया वाक्येन विनियोगात् प्रकरणेन पौर्णमासाङ्गत्वायोगः। वेदेः सर्वसाधारण्येन तत्करणस्याप्यङ्गतयाऽपेक्षासद्भावात्पौर्णमासप्रकरणेन गर्दभाभिधान्यां आदानस्येवाक्षेपोपपत्तेः। अत एव वाक्येन श्रुत्या वोभयत्र न प्रकरणस्यार्थाक्षेपस्य वा बाधः। तयोः पूर्वेद्युःकालमन्त्ररूपगुणमात्रविधिफलकतया क्रियाविधिफलकत्वाभावात्। अतो न प्रकृते तदन्तापकर्षः ॥ ५ ॥ १ ॥ १६ ॥

सान्तपनीया ॥ दैवान्मानुषाद्वा प्रतिबन्धान्मध्यन्दिने क्रियमाणसान्तपनीयाया उत्कर्षे स्वकालेऽग्निहोत्रहोमः कर्त्तव्यो न वेति चिन्तायां, स्वकालकरणे सान्तपनीयायां प्रणीतस्याग्नेः* पुनः प्रणयनासम्भवान्मन्त्रवत्प्रणयनलोपेन वैगुण्यापत्तेः कालस्य च पदार्थगुणत्वेन प्रयोगविधिविशेषणतयोत्तरकालप्रतीतिकत्वेन च लोपेऽपि वैगुण्याभावादुत्कर्ष इति प्राप्ते।

अनुपादेयत्वात्कालस्य नित्ये यथाशक्ति उपादेयाङ्गत्यागस्यैव तदनुरोधेन पक्षे वक्ष्यमाणत्वात् प्रणयनलोपेनापि कालानुग्रह एव न्याय्यः। कालस्य निमित्तविशेषणत्वेन सुतरामनुपादेयत्वाच्च। वस्तुतस्तु अग्निहोत्रस्यान्यतः प्रणयनजन्योपकारलाभे तदनाक्षेपकत्वस्य दर्शादौ क्लृप्तत्वात्तल्लोपेऽपि न वैगुण्यम्। अतः स्वकाल एवाग्निहोत्रं कृत्वा

* प्रणीतस्याग्नेः,—इत्यस्य [illegible] पाठो लिपिकरप्रमादत इत्यनुमीयते।

## अथ पञ्चमोऽध्यायः ।

### द्वितीयः पादः ।

सन्निपाते ॥ यत्रानेकेषां प्रधानानामङ्गानां वा एकेन प्रयोगविधिनोपसङ्ग्रहात् साङ्गानां साहित्यावगमः, तत्र दर्शपूर्णमासप्राजापत्यादौ किं एकस्य प्रधानस्य सन्निपत्योपकारकाङ्गकाण्डं कृत्वेतरस्य कर्त्तव्यमित्येवं काण्डानुसमयोऽथ वा एकैकमङ्गं एकैकस्य कृत्वेतरस्य कर्त्तव्यमित्येवं पदार्थानुसमय इति चिन्तायां, प्रधानप्रत्यासत्त्यनुग्रहात् प्रकृतितः परस्परसंश्लिष्टानामेवोपाकरणनियोजनादीनामेकैकस्मिन् पशौ प्राप्तत्वाच्च काण्डानुसमयः । एकप्रयोगत्वञ्च आरादुपकारकाङ्गाभिप्रायेणेति न कश्चिद्विरोध इति प्राप्ते ।

प्रत्यक्षवचनेनैकस्मिन् काले साङ्गानां सर्वेषां प्रयोगविधानात् प्रधानसाहित्यवदङ्गेष्वपि साहित्यावगमादेकैकाङ्गेन सर्वप्रधानानां युगपदुपकर्त्तव्यमित्यर्थावगमेनैकमुपाकरणाख्यमङ्गं सर्वपशूनां कृत्वा नियोजनं कार्य्यम् । प्रधानप्रत्यासत्तिस्तु प्रत्यक्षवचनावगतोक्तसाहित्यानुरोधेनैव कल्पनीया । उपाकरणानन्तरमेव च नियोजनमिति यथाप्रकृत्येवानुष्ठानम् । आवृत्तानावृत्तत्वं तु प्रधानसाहित्यानुरोधेनेति न कश्चिद्विरोधः । अतः पदार्थानुसमयः । प्रवृत्तिक्रमविचारस्त्वेतदधिकरणोत्तरं द्रष्टव्यः ॥ ५ ॥ २ ॥ १ ॥

कारणात् ॥ यत्र तु प्रधानविरोधो यथाऽश्वप्रतिग्रहेष्ट्यां शते सहस्रे वाऽश्वदाने तावत्सु पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषा-

निर्वपतिवद्यागपर एव* । अस्तु वा ग्रहणपरस्यापि तैत्तिरीय-शाखायां योऽग्निः सवनत्रयेऽपि आग्नानात्तवनान्तरविषयकं तं पराग्नमिति वाक्यम् । अस्तु वैतदपि सर्वविषयं, तथापि पञ्चं चैत्यस्य सामान्यविषयत्वादकृष्योत्तरकालं ग्रहणेऽपि समयाध्युषिते स्तोत्रकरणे न कश्चिद्विरोधः ।

यदि तु सामान्यविशेषरूपबाधस्य यथावस्थितशास्त्रार्थविषयत्वेन दैवादपराधे अप्रवृत्तेः सर्वपदार्थानां तुल्यबलत्वमुच्यते । तथाप्यकृष्यपरभावस्य क्रमवेनोपादेयत्वात् पूर्वाधिकरणन्यायेन बाधोपपत्तेः समयाध्युषितकालानुग्रहो न्याय्य एव । न च कालस्याङ्गत्वेन प्रधानाङ्गक्रमापेक्षया दौर्बल्यम् । उभयोरप्यङ्गत्वात् । न च ग्रहणस्याधावदागवत् प्रदानोपक्रमता । तद्वदिहैकपदार्थत्वाभावादिति प्राप्ते ।

ग्रहणस्य षोडशियागाभ्यासरूपत्वेनान्तरङ्गत्वात्तत्रमस्य प्राबल्यम् । वस्तुतस्तु न पराग्नमित्यस्यापि कालपरत्वमेवेत्यन्तरङ्गतद्वाधीन्याय्य एव । न च ग्रहणस्योत्तरकाल करणेऽपि स्तोत्रस्यैव कालानुग्रह* ग्रहणः । तथात्वे स्तोत्रग्रहणोत्तरकालत्वस्य प्रधानप्रत्यासत्तेः बाधप्रसङ्गेनैकस्यैव समयाध्युषितकालबाधस्य न्याय्यत्वात् । अतदाख्याप्युत्कर्ष इति सिद्धम् । ५ । १ । १८ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
पञ्चमस्य प्रथमपादः ॥

---

* इत्यमेव पाठः सर्वत्र अस्य तु, प्रकृतिनिर्वपतिवद्यागपर एव — इति पाठः प्रतिभाति ।

मधिगमनं हत्वोदाहरणं क्रियेत, ततो दद्योरन्। अतएव काण्डानु-समय एव कतिपयाङ्गानाम्।

यत्तत्र वार्त्तिके निमित्तगतस्य यावत्त्वस्याविवक्षितत्वान्नैमित्तिक-गतस्य च तावत्त्वबहुत्वादेः पृथक्समनीयन्यायेनानुवाद्यगतत्वेनाविव-क्षितत्वात्साहित्यबोधकवचनाभावेनानेकेष्वपि अवदानेषु प्रत्येक-प्रयोगेणैव वारुणेष्टिकर्त्तव्यतावगतेर्भाष्यस्थमेतदुदाहरणं साहित्य-बोधकवचनान्तरसम्भावनयेत्युक्तम्।

तन्न। सत्यादुद्वसाय पृथक्समनीयेन यजेरन्नित्यत्र हि उद-वसानसमानकर्तृकत्वपरत्वेनैव पृथक्समनीये बहुत्वादेः प्रसक्तत्वादुक्ता साहित्याविवक्षा। प्रकृते तु निमित्तसमसङ्ख्याकत्वस्यैव तावच्छब्दा-र्थस्य नैमित्तिकविशेषणतया अप्राप्तस्य विधेयत्वादुक्तमेवानेक-निमित्तसन्निपाते नैमित्तिकसाहित्यम्। तावच्छब्दाभावे हि युगपदनेकनिमित्तसन्निपाते सकृदेव नैमित्तिकेष्टिरेकैव प्रसज्येतेति युक्त एव तावच्छब्दार्थविधिः।

यद्यपि हि पुरुषार्थतया न क्रत्वन्तःपातित्वं यथा युगपदनेक-चाण्डालादिस्पर्शादावनेकाश्वदाहादौ च, तथापि नैमित्तिकस्य सहप्रयुक्तत्वम्। किमुत क्रतुप्रयोगमध्यवर्त्तितदङ्गवारुणेष्टेः। अतएवा-ग्नेयादिभेदेऽपि प्रयाजाद्यङ्गतन्त्रत्ववद्युगपदनेककपालभेदने होम-तन्त्रत्ववच्च वारुणेष्टितन्त्रत्वप्रसक्तौ निमित्तसमसङ्ख्याकत्वविधानेन तावत्प्रतीतावपि एकप्रयोगविधिपरिगृहीतत्वेन साहित्यप्रतीतेर्युक्त-मेवोदाहरणत्वम्।

तच चारादुपकारकेषु सङ्ख्या समस्त एव। सन्निपातेषु सङ्ख्या

चतुरवत्तं जुहोतीत्यनेनावत्तोद्देशेन होमाख्यसंस्कारविधानादर्थादेवावदाने प्राप्ते द्विर्हविषोऽवद्यतीत्यनेन द्वित्वमात्रविधानादुक्तविधचतुरवत्तहोमस्यैवैकपदार्थत्वेनावदानादिप्रदानान्तेनानुसमयः। वस्तुतस्तु अवत्तस्योद्देश्यत्वेन ततः पूर्वमवदानप्राप्तेर्दुरुपपादत्वाद् ध्रुवदानवाक्ये चावदानमात्रे द्वित्वविधानेऽलङ्करणार्थत्वाद्यावदानेऽपि स्रुववद्वित्वप्राप्त्यापत्तेर्हविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेर्हविर्विशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेरवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽपि उपस्तरणादिविधिन्यायेन दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्यावश्यङ्गीकारादवदानादिप्रदानान्तस्यैवैकपदार्थत्वावगमेन तेनैवानुसमयः॥ ५॥ २॥ ४॥

वचनात्तु॥ यूपधर्माञ्जनोच्छ्रयणसमानपरिव्याणादयो यूपगणेऽतिदिष्टप्राप्ताः पृथक्पदार्था अपि न प्रत्येकमनुसमेयाः। अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गस्य विहितत्वेहायतिदेशात्। न चानेन रागप्राप्ते कादाचित्कयूपसंयोगे सति त्यागनिषेधविधिः। पाक्षिकत्वापत्तेः। अपि तु संयोगाभावाभावरूपसंयोगाख्यस्यानवसर्गस्यैव माहात्म्यार्थं नियमविधिः। अतश्च तदनुरोधेन समानतिरिक्ते यूपगणे तावत्काण्डस्यानुसमयः। सर्वे तु येन केनापि यजमानेन धारणसम्भवात् पदार्थानुसमय एव। अन्यत्रापि तावदतिरिक्तपदार्थानां प्रत्येकमेवानुसमय॥ ५॥ २॥ ५॥

पशुगणे॥ प्रकृतौ स्वाहाद्येऽवदानादिप्रदानान्तस्यैकपदार्थत्वादतिदेशेन दैवेऽपि तथैव प्राप्तौ, दैवतान्यवदाय न तावत्येव होतव्यं, सौविष्टकृतान्यवद्यति, सौविष्टकृतान्यवदाय न तावत्येव होतव्यं,

वक्ष्यमाणकल्पाभिधानान्तरन्यायेनैकपदार्थत्वं सर्वोपधानस्य द्रष्टव्यम्। अतः आग्नेयस्य सर्वाण्युपधायाग्नीषोमीयस्योपधेयानि।

एवं द्विर्हविषोऽवद्यतीत्यत्रापि द्वित्वविशिष्टावदानविधानाद्द्विरवदानेनानुसमयो न त्वेकैकावदानेन। न च मध्यादवद्यति पूर्वार्धादवद्यतीति वाक्याभ्यामेव द्विरवदानसिद्धेर्द्विविधेर्वैयर्थ्यम्। एतद्विध्यभावे चतुरवत्तवाक्यस्य चतुःसंख्या मध्याद्द्विः पूर्वार्धाद्द्विरित्येवं हविष एव सम्पाद्येत। एतत्सत्त्वे तु तद्विरोधादुपस्तरणाभिघारणाभ्यामिति तद्वाक्यस्था चतुःसंख्याऽनुवाद एव।

इदञ्च सान्नाय्यविषयं द्विरवदानानुसमयकथनम्। आग्नेयादावदानादिसदानान्तेनानुसमयस्य वक्ष्यमाणत्वात्। सान्नाय्ये तूपस्तरणाभिघारणयोरसत्त्वाद्दध्नोऽवदानं गृहीत्वा पयसो ग्राह्यम्। कल्पसूत्रेषु तु पयसोऽवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तम्। तैत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात्। सोमसाम्येनैव सम्प्रतिपन्नदेवताकत्वात्।

एवमञ्जनाभ्यञ्जनपवनपावनेष्वपि तत्तद्विधिसत्त्वादेकैकेन सेचन शरीरावयवेन चानुसमयोऽपि तु अनेकयजमानकेऽहीने एकस्य नेत्रद्वयेऽप्यञ्जनं कृत्वा यजमानान्तरे तत्कार्यम्। मन्त्रवत्त्वोपेताभ्यञ्जनादिना च प्रत्येकमनुसमयः। सत्रे अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिना तत्तत्संस्कारकदीक्षोत्तरकालविधानात् काण्डानुसमय एव ॥ ५ ॥ २ ॥ ३ ॥

सत्युक्ते॥ सान्नाय्यवदाग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि अवदानेनानुसमय इति प्राप्ते।

ऐडान्यवद्यतीति* वचनेन प्रमान्यचविधायिना पदार्थभेदावगतिः। न ह्यसम्बन्धिपदार्थान्तरव्यवधाने प्राकृतैकपदार्थता सम्भवते। अतस्तैकदेवत्ये पशुगणे प्राजापत्यन्यायेन दैवतावदानादिना प्रत्येकमनुसमयः। अन्ते च तन्त्रेण दैवतहोमः।

न च प्रकृतावेकस्य पशोर्दैवताद्यवदानत्रयमानन्तर्येण हृतमितीहापि तथैव कार्यमिति शङ्क्यम्। प्राजापत्यन्यायेनैव पश्वेकत्वस्य प्रकृतावार्थिकत्वेन चोदकविरोधाभावात्। अत एव यत्र विभिन्नदेवताके पशुगणे चोदकविरोधस्तत्रावदानत्रयं होमश्चैकस्य हृत्वाऽपरस्याप्यवदानत्रयपूर्वकप्रदानान्तं कार्यम्। स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव। तथापि पदार्थानुसमये द्वितीयहोमस्यातिदेशप्राप्तैडावदानानन्तर्यबाधापत्तेः।

वस्तुतस्तु असम्बन्धिपदार्थान्तरव्यवधानेऽपि पश्वावत्तहोमसम्पादकत्वेन दैवतावदानस्यात्रापि प्रदानावयवत्वोपपत्तेर्विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेनानुसमयः। एकदेवताके तु पदार्थावयवानामेवानुसमय इति न कोऽपि विरोधः॥१॥२॥६॥

नानाबीजेषु॥ राजसूये, अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकञ्चरुमिति नानाबीजेष्टिराम्नाता। तत्रातिदेशप्राप्तानि कृष्णाजिनास्तरणोलूखलाधिवर्त्तनबीजावापावघातपरावपनविवेचनफलीकरणाद्यधिकरणकतण्डुल-

* इत्थमेव पाठः सर्वत्र। भाष्ये तु, देवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवदेयानि सौविष्टकृतान्यवदाय न तावत्येव होतव्यं ऐडान्यवदेयानि,—इति प्रकृतौ श्रूयते, इत्युक्तम्।

विकारे ॥ दैवे पशावनूयाजानां पृषदाज्येनानूयाजान्यजतीति पृषदाज्यं श्रुतम्। प्रयाजानां शुद्धमेवाज्यं प्रकृतिप्राप्तम्। प्रकृतौ चोपभृत्येकस्मिन्नेव पात्रे प्रयाजाद्यर्थं चतुर्गृहीतं गृहीत्वा तस्मिन्नेव कालेऽनूयाजार्थे चतुर्गृहीतं गृहीतमासीत्। अत्रापि तथैव ग्रहणे प्रयाजाज्यस्य दधिसंसर्गेणोत्पवनावेक्षणयोरदृष्टार्थत्वप्रसङ्गेनाप्राकृत-कार्यकारिताऽऽपत्तेः। समानयनवेलायां प्रयाजाज्यस्य न्यूनत्वापत्तेश्च। अतोऽत्रत्यं पात्रैकत्वमनुरुध्य क्रमो बाध्यतां, विपरीतं वेति चिन्तायाम्।

पात्रैकत्वस्य श्रुतत्वात् पदार्थत्वाच्च बाधानुपपत्तेः क्रमस्यैव मन्त्र-पाठक्रमपदार्थगुणस्य च दौर्बल्यात् शिष्टाकोपाधिकरणन्यायेन बाधः। एवमष्टावुपभृतीत्येतद्वाक्यावगतचतुष्कद्वयसाहित्यग्रहणस्यैक-कालत्वस्यापि। न च प्रकृतौ तयोः कुम्भस्थत्वादिना [illegible] विकृतावतिदेशेन प्राप्तयोस्तयोः समत्वाच्च यथावत्त्वमिति वाच्यम्। कुम्भस्थत्वादिरूपयथावत्त्वस्य विकृतावसम्भवेऽपि पदार्थत्वश्रुतत्वादि-रूपयथावत्त्वस्य विकृतावपि नियामकस्योपपत्तेः। असम्भवति च विकृतौ नियामकान्तराभावे प्राकृतस्यापि यथावत्त्वस्य सम्प्रदाये न्तौ चतुर्गृहीतद्वयस्य सहग्रहणस्यैव नियामकता। अत-स्मिन्नेव पात्रे अनूयाजहरणवेलायां पृषदाज्यग्रहणमिति सिद्धे।

पात्रैकत्वस्य पदार्थत्वेऽपि अनुष्ठेयपदार्थस्वरूपानिरूपकत्वस्य तद्धर्म-ताभावात् प्रत्युत साक्षात्पदार्थाङ्गभूतक्रमापेक्षया परम्पराङ्ग-त्वात् सम्बन्धस्यैकवाक्यत्वानुरोधमात्रेण दौर्बल्यादैकालाद्य सत्याप शुद्धं दधि पृषदाज्यं चतुर्गृहीतं स्यात् ॥ १ ॥ ७ ॥ ८ ॥

तदङ्गजपादिमन्त्राणामदृष्टविधयोपकारकत्वेनावयवत्वाभावापत्तेश्च। किं च सत्यप्यवयवत्वे कृष्णाजिनास्तरणोपस्तरणादीनां विहितत्वेनाङ्गत्वात् प्रयोगविध्युपसङ्ग्रहेण साहित्यावगतेः प्रत्येकानुसमयः किं न स्यात्। एवं स्रुवदानस्यापि होमवद्धविःसंस्कारकत्वात्पेषणावघातन्यायेन प्रत्येकानुसमयः किं न स्यादिति चेत्।

न। यद्यपि कृष्णाजिनास्तरणादीनां स्वतन्त्रविधिविधेयत्वे अङ्गत्वेन प्रयोगविधिप्रयोज्यत्वे वा अवघाताद्यङ्गत्वेन तद्द्वारैव प्रयोज्यत्वावगमात्तदनुसमयेनैवानुसमय इति न प्रत्येकमनुसमयः प्रत्येकं साहित्यानवगतेः। एवं, परावपनादिप्रक्षालननिनयनान्तानामपि तण्डुलरूपावघातफलोपयोगितयाऽवघातार्थत्वान्न पृथक्पदार्थता। अत एवादृष्टार्थमपि तदङ्गं न पृथक्पदार्थः। एवमुपस्तरणादेरपि स्रुच्यसंघर्षणद्वारा होमार्थत्वान्न स्वातन्त्र्येण प्रयोज्यतेति न पृथगनुसमयः। स्रुवदानस्य तु हविःसंस्कारकत्वाद्यवत्तोद्देशेन होमविधानाभावेनावत्तहोमस्यैव प्रयोज्यत्वेऽवदानांशेऽपि पृथक्प्रयोज्यताकल्पनान्न पृथक्पदार्थत्वम्। अत एव पदार्थत्वं नाम स्वातन्त्र्येण प्रयोगविधिविधेयत्वम्। पदार्थावयवत्वेन सम्मतानां हि कृष्णाजिनास्तरणादीनां नावघातादिनिष्ठप्रयुक्तिविषयत्वज्ञानं विना प्रयुक्तिविषयत्वं ज्ञायते। अवघातादीनां तु नान्यनिष्ठप्रयुक्तिविषयत्वज्ञानोत्तरकालत्वनियतत्वज्ञानम्। प्रयोगविधिनाऽङ्गप्रधानोभयविशिष्टभावनाप्रयुक्तिज्ञापनेनाङ्गप्रयुक्तेरपि प्रधानप्रयुक्त्यन्यथानुपपत्तिप्रसूतत्वाभावात्। अतश्च यत्प्रयुक्त्यन्यथानुपपत्तिं विनैव यत्प्रयुक्तिविषयत्वज्ञानं, स ततः पदार्थान्तरमिति सिद्धम्॥५॥२॥७॥

क्रमत्वाभावात्। अभिषेचनीयोत्तरमपि पाठस्य सत्त्वेन पूर्व्ववत् प्राकृताङ्गोत्तरमेव करणमिति प्राप्ते।

पूर्व्वं प्रयाजादिवद्बहुक्रमत्वाकॢप्तावपि इदानीमेव प्रत्यक्षेण पाठेन एकराजसूयप्रयोगविधिपरिगृहीतानां विदेवनाद्यभिषेकान्तानां बहुक्रमत्वोपपत्तौ अभिषेचनीयपाठेन प्राकृताङ्गानामानुमानिकत्वेन तैः सह विदेवनादीनां भिन्नप्रयोगविधिपरिगृहीतानां क्रमकल्पनानुपपत्तेरभिषेकापकर्षेणापकर्ष एव विदेवनादीनाम् ॥ ५ ॥ २ ॥ १० ॥

प्राकृताच्च ॥ दीक्षणीया ज्योतिष्टोमप्रकरणे समाम्नाता, चयनसामारभ्याधीतं, वैकल्पिकं सोमयागाङ्गम्। तत्प्रकरणे च सावित्रहोमाख्यासम्भरणाद्यचयनाङ्गभूताधर्माः श्रुताः। पश्चाच्च सचयनज्योतिष्टोमाङ्गदीक्षणीयाप्रयोगोद्देशेन केचिद्गुणाः श्रुताः। तदत्र दीक्षणीयायाः सामान्यतः सोमप्रकरणाम्नातदीक्षणीयाऽपूर्व्वपदार्थैः सह पाठेन यद्बहुक्रमत्वावगमाच्चयनप्रकरणे दीक्षणीयाया गुणमात्रश्रवणेन पाठाभावाच्च सावित्रहोमाद्यागन्तुकानां दीक्षणीयादिसमस्तान्ते निवेश इति प्राप्ते।

गुणेनापि गुणिन उपस्थितेस्तदाक्षेपे गुणिन उद्देश्यतया सङ्कीर्त्तनाच्च गुणगुणिनोरेकवाक्यतावगतेः प्रत्यक्षेण विधेयरूपेण च पाठेन सामान्यरूपस्य पाठस्य बाधात् पूर्व्वं सावित्रादयः पश्चाद्दीक्षणीयेति सिद्धम् ॥ ५ ॥ १ ॥ ११ ॥

सन्निपाते ॥ चयनप्रकरण एव तत्रैव दीक्षणीयागुणश्रवणानन्तरं रुक्मप्रतिमोचनादि चयनाङ्गं श्रुतम्। ज्योतिष्टोमप्रकरणे च सामान्यतो दीक्षणीयोत्तरं दीक्षितसंस्कारा दण्डदानादयः। तदत्रापि

प्रकृते: ॥ अग्नये कृत्तिकाभ्य: पुरोडाशमष्टाकपालं निर्वपेदिति नवत्रेष्टिं विधाय सोऽत्र जुहोतीत्युपहोमा विहिता: । प्रकृतौ च प्रधानस्विष्टकृतोर्मध्ये वाचनिकानारिष्ठहोमा:* समाम्नाता: । तद्-वोपहोमानां नारिष्ठेभ्य: पूर्वमनुष्ठानम् । औपदेशिकप्रधानपाठ-क्रमेण प्रधानानन्तर्यस्य विहितत्वात् । उपहोमानामौपदेशिकत्वेन नारिष्ठेभ्य: प्रथमसम्बन्धितत्वाच्चेति प्राप्ते ।

उपकारसाकाङ्क्षया विकृतिभावनया क्लृप्तोपकारणामातिदेशि-कानामङ्गानां प्रथमं गृहीतत्वेनोपहोमानामन्यतराकाङ्क्षया पश्चादन्व-यादतिदेशस्य च प्रधानवाक्यशेषत्वस्यैव लाघवादभ्युपगमेनोपहोमा-नामातिदेशिकाङ्गयुक्तप्रधानोत्तरमेव पाठेन क्रमावगते: पश्चादेव करणम् । तत्रापि ब्राह्मणतर्पणान्ते कर्त्तव्यत्वे प्राप्ते मध्ये जुहोतीति वचनेनोपहोमसमाख्यया चात्रेति स्थाननिर्देशाच्च नारिष्ठेभ्योऽनन्तर कार्या ॥ ५ ॥ १ ॥ ८ ॥

कृतदेशात्तु ॥ राजसूये अभिषेचनीयसोमयागानन्तरं वाग्द-शपेयादिदेवनाद्योऽभिषेकान्ता राजसूयधर्मा अक्षैर्दीव्यति राजा-नञ्जिनाति शौन:शेपमाख्यापयति अभिषिच्यत इत्यादिभिर्विहिता: । तत्राभिषेकस्तावद्वचनादेव माहेन्द्रस्य स्तोत्र प्रत्यभिषिच्यत इत्यभि-षेचनीयमाहेन्द्रकालेऽपकृष्ट: । तदपकर्षेऽपि च न तत्पूर्व्वपठिताना-मपि विदेवनादीनामपकर्ष: । वेदिकरणन्यायेनापूर्व्वाणामेषां बहु-

* पाठे चैत्रियोऽस्यायमास्तारिष्टक्ते च नारिष्ठहोमा इति पाठ । दश ते तनवो यज्ञयज्ञिया इत्यादिमन्त्रैराम्नाता आज्याहुतयो-नारिष्ठहोमा इति माधवाचार्य्या ।

# अथ पञ्चमोऽध्यायः।

## तृतीय पाद।

---

विवृद्धिः॥ विकृतावेकादश प्रयाजान्यजति षडुपसद इत्यादिवैकृतौ अनेकव्यक्तित्वाधिकसंख्या श्रुता। सा प्रतिप्रधानं गुणावृत्ति न्यायेन पृषदाज्यादिवदेकैकस्मिन् प्रयाजादौ प्रत्येकमभिसम्बध्यत इति एकैक एकादशवारमावर्त्तनीय इति प्राप्ते।

द्वित्वादिसंख्यायाः पृथक्त्वनिवेशित्वादेकैकस्मिन् पञ्चस्वपि वा पृषदाज्यवदावृत्तिं विना एकादशत्वानुपपत्तेरुत्पन्नवाक्यगतत्वेन च कर्मभेदकत्वायोगादावश्यके जघन्ये प्रयाजपदे प्रयोगलक्षणया संख्याविधौ वर सहितैरेव प्रयाजैस्तल्लक्षणाः सहितप्रयाजप्रयोगाणां सहितानामेवोद्देश्यात्सर्वेषपाद्या संख्येति प्राप्ते।

वस्तुतस्तु प्रयोगो नाम न पदार्थान्तरं येन लक्षणा स्यात् अपि तु प्रयाजानामेव व्यक्त्यन्तरम्। अतश्च यथैव प्रकृतौ पञ्च प्रयाजा इत्यादौ तत्तद्व्याप्यजात्यवच्छिन्ना एव व्यक्तय प्रयाजत्वरूपव्यापकजात्यवच्छेदेनोच्यन्ते। तथाऽत्रापि एकादशत्वसंख्यासम्पत्त्यर्थं तावद्व्यक्तीनामुक्तौ क्व लक्षणा। अतस्तदभावेऽपि व्यापकधर्मावच्छिन्नोद्देशेन विहितैकादशत्वादिसंख्या अनेकत्र व्यासज्यवृत्तित्वस्वाभाव्यात् व्यक्त्यन्तराण्याक्षिपन्ती लाघवात् प्रकृतिकृतव्यक्त्यधिकव्यक्तीः पडेवाक्षिपति नाधिका इति सर्वसम्पाद्यसिद्धिः। न चैव प्रयोगलक्षणाभावे नित्य आग्नेयीरित्यादावपि व्यक्तिभेदापत्तिः। तत्र

वाक्यात्पङ्क्तिदर्शनेन प्रकृतेऽप्युपसदामेकवारं कृत्वा पुनः कार्यमिति दण्डकलितवदावृत्तिरिति प्राप्ते ।

प्रथमद्वितीययोर्हि तृतीयात्पूर्वं करणं श्रुतं, तद्दण्डकलितवदावृत्तौ बाध्येत । अतः प्रथमां द्विःकृत्वा द्वितीयाञ्च द्विरभ्यस्य तृतीयाऽपि तथैव कार्येति स्वस्थानविवृद्धिरेवेति सिद्धम् ॥५॥१॥२॥

समिध्यमानवतीम् ॥ पञ्चदशसामिधेनीनां यथैकविंशतिरनुब्रूयादित्यधिका संख्या श्रुता, तथागमेन संख्यापूरणं दशमे वक्ष्यते । तदर्थागम्यमानानां यद्यपि न्यायेनान्ते निवेशः प्रसज्यते, तथापीयं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्या इति धाय्याप्रविष्टमन्तरालेन स्तुतस्य समिध्यमानवतीसमिद्धवत्यन्तरालस्याभिधानकल्पितविधिविहितस्य सत्त्वात्तदन्तरालएव सर्वासामागम्यमानानां निवेशः । न च धाय्यापदपरिभाषितानामेव सप्तविंशत्यादीनामन्तरालनिवेशोऽन्येषां अन्ते इति वाच्यम् । यौगिकत्वयोगेन सर्वासामेव धाय्यापदवाच्यत्वादिति प्राप्ते ।

नायं यौगिकः, सोमादावागम्यमानास्वपि धाय्याशब्दप्रयोगापत्तेः । याज्ञिकानां सामिधेनीष्वेव धाय्याशब्दस्यानुशिष्टत्वात् । अतो रूढ एवायम् । योऽपि यत्रैव वेदे पृथुपाजवत्यौ धाय्ये इत्यादिना परिभाषितस्तत्रैव । तेषामेव चान्तराले निवेशः, अन्येषां अन्ते इति । अत एव विधानपरामधाय्याशब्दवाच्या अपि योग एव ह्यध्यावर्धितुम परिस्थानीयनिवेशदर्शनमुपपद्यते ॥५॥१॥३॥

सोम ॥ अहनी अभिप्लवमासे षडहाः सोमीयोऽन्यदय पृष्ठ्यरूढमहः । विवृद्धसोमकाराय विहनौ अभिप्लवमासे

विधेयतावच्छेदकविजातीयद्रोमलर्वैकस्य पूर्वमङ्गृष्टत्वेन भेदप्रतियोगितावच्छेदकतया त्र्याणामेव तेषां कल्पनयोपपत्तौ तत्तद्वृत्तित्वस्य प्रतियोगितावच्छेदकीभूतस्य विधेयतावच्छेदकत्वकल्पने गौरवात्। प्रकृते तु क्लृप्तप्रयाजत्वस्योद्देश्यतावच्छेदकत्वात् संख्यायाश्च विधेयत्वाच्च काचित्कल्पनेति विषमम् ॥ ५ ॥ २ ॥ १ ॥

स्वस्थानात्तु ॥ तत्र प्रयाजैकादशत्वादिसंख्या स्वसम्पत्त्यर्थं व्यक्त्यन्तराण्याक्षिपन्ती चतुर्थोत्तमप्रयाजजातीयान्येवाक्षिपति। तदङ्गभूतयोः प्राकृततदङ्गदेवताप्रकाशकयोरपूर्वयोः प्रैषयोर्मध्ये पञ्चानामेवाम-प्राकृतदेवत्यमन्त्राणां पठावाम्नानात्। तद्यथाद्यानां त्र्याणामभ्यास स्यात्ततो मन्त्राणामपकर्षापत्तिः। सन्निधानात्वस्थानुपस्थितेश्च। अतः सन्निधानाविशेषाच्चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुर्वारं आवृत्तिः। उभयत्राभ्यासपक्षे च प्राकृतदेवताबाधो लक्षणया वा तद्देवताप्रकाशनमित्यन्यदेतत्।

एवमनूयाजेष्वपि मन्त्रलिङ्गवशादेव प्रथमानुयाजस्याश्वत्वारोदशमस्य द्वितीयस्याष्टमपर्यन्तं पञ्चमप्रभृत्यष्टास्य नवमैकादशौ तृतीयस्येति। यत्र तु न किञ्चिद्गमकं, तत्र विषमसङ्ख्याकस्थले अवश्यकल्प्याया अधिकाया आवृत्तेरन्तिमविषयत्वात् सर्वस्याप्यन्तिमविषयकत्वमेवेत्यपि वक्ष्यते।

यत्र तु समसङ्ख्याकैवावृत्तिर्यथा तिसृष्वपसत्सु षट्त्वश्रवणे, तत्रैकैकस्य द्विरावृत्त्याऽपि षट्त्वसम्पत्तौ नान्तिमाया एव चतुरावृत्तिः। समुदाये विहितकार्यान्यथानुपपत्त्या कल्प्यमानाया आवृत्तेः सर्वविषयत्वौचित्यात्। तत्र च चिरनूवाक पचतामित्यादौ सम्पूर्णानु-

धारायहेभ्यः पूर्वमेव। यत्र त्वनारभ्याधीतस्यैव तेषां यागाङ्गतयाऽपि विनियोजकं वाक्यं, तत्र ग्रहणस्य यागाभ्यासोपकारकस्य सामर्थ्यादभ्याससमुदायात्मकसवनद्वारकतयैव यागाङ्गत्वाद्द्वारीभूतसवनभेदेन प्रतिसवनं ग्रहणानुष्ठानं निर्वापाङ्गस्य मन्त्रस्येव मुष्टिरूपद्वारभेदेन। एवमनारभ्याधीतानां चित्रिणीरुपदधातीत्यादीनामपि प्रतिचिति भेदेनानुष्ठानम्। चित्रिण्यादीष्टकानां हि अनारभ्याधीतानामपि उपधानसंस्कृतानामुपयोगापेक्षायां तस्मादग्निचित्सर्वमायुरेतीत्याद्यर्थवादवशादग्न्यङ्गत्वप्रतीतावपि अग्निपदाभिधेयस्थण्डिलाकारकचितिद्वारकतयैव तदङ्गत्वावगतेः प्रतिचित्यावृत्तिः। यां कांचिदिति वचनन्तु प्राकरणिकेष्टकाभिप्रायमिति प्राप्ते।

ऐन्द्रवायवादिग्रहणवदेवाभ्याससंपादनद्वारा यागोपकारकत्वस्यैव सिद्धेः सवनारम्भ्यानुषङ्गित्वेऽपि द्वारत्वे प्रमाणाभावात्स प्रतिसवनमावृत्तिरपि तन्त्र एवानुष्ठानम्। एवं चित्रिण्यादेरपि न प्रतिचित्यनुष्ठानम् ॥ ५ ॥ ३ ॥ ६ ॥

अस्ति॥ चित्रिण्यादीनामन्तु यां कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादिति वचनेन मध्यमचितावुपधानम्। अथ प्रभिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वादाकार्थवत्वाच्च प्रत्यक्षब्राह्मणविहितेष्टकोद्देशेन मध्यमचितिरूपदेशविधानम्। उपधानन्तु प्रकरणमात्रमाश्रयः। प्रत्यक्षब्राह्मणत्वस्य इष्टकावाचिग्रहणपदतिनियुक्तमस्योपधेयत्वमित्युक्तमेव भूमाधिकरणे। न च प्रिययेब्राह्मणवत्त्वस्योद्देश्यविशेषणता। मध्यमेन विशिष्टरा-

ष्वागमनो वक्ष्यते। तत्रागम्यमानानामृचां प्राक् पर्यासात् निवेशः। पर्यासशब्दस्य नदीपर्यासः क्षेत्रपर्यास इत्यादावन्तवचनत्वेन प्रसिद्धेः समाम्नायैवान्तिमस्थानत्वावगतेस्तदबाधार्थं प्राक् पर्यासादागन्तूनां निवेशकल्पना। अत एव द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि पञ्चदशस्तोमके स्तोत्रीयानुरूपौ पठित्वा वृषण्वन्तौ तृचौ समाम्नाय पश्चात्पर्यासः पठित इति भाति।

प्रकृतिकॢप्तस्यानुरूपानन्तर्यस्य पर्यासे बाधे प्रमाणाभावात् समाम्नायाच्च प्रकृतौ पाठप्राप्तान्तिमस्थानत्वानुवादकत्वेन स्थानविधिकल्पकत्वाभावादन्त एवागन्तूनां निवेशः। द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि तु वाचनिकं वृषण्वतोस्तृचयोः प्राक् पर्यासादनुष्ठानं, तदपि तयोरेव। तद्विकारेष्वन्येषामागमस्त्वन्त एव ॥ ५ ॥ ३ ॥ ४ ॥

अन्ते तूत्तरयोः ॥ यत्र तु विवृद्धस्तोमकेष्वेव क्रतुषु उत्तरयोर्माध्यन्दिनार्भवपवमानयोर्वक्ष्यमाणः सामागमस्तत्र स नान्ते। अनारभ्याधीतेन त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्च अत्रैवावपन्त्यत एवोद्वपन्तीति वचनेनाप्राप्तिबललब्धविधिशक्तिकेन गायत्र्यादिष्वेव सामावापविधानात्। अतो नान्त इति प्रत्युदाहरणमात्रमिदम् ॥ ५ ॥ ३ ॥ ५ ॥

प्रहृष्टकम् ॥ यानि प्राकरणिकानि ग्रहणान्यैन्द्रवायवादीनि, तानि यथापाठमेव व्यवस्थितानीति न तेषु चिन्ता। यानि त्वनारभ्याधीतानि तेष्वपि यदांशवदाभ्यादौ प्राकरणिको विनियोगस्तत्र विनियोगविधिपाठबलादेवानुष्ठानसिद्धेर्न चिन्ताविषयत्वम्। अत एव न तयोरन्ते करणम्। अपि तु प्रातःसवन एव

गमादाधानमात्रेणैवाग्निनिष्पत्तिरिति सिद्धत्वादग्नीनामाधानमात्रानन्तरमेवोत्तरक्रतूनां प्रवृत्तिः। पवमानेष्टयस्तु यदि भाष्यकारमतादग्न्यङ्गं, तदा च षष्ठिद्रेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया संमार्गवत्संस्कारविशेषाधायकाः। यदि तु वार्त्तिककारमतादाधानाङ्गं, तदा बृहस्पतिसववदेवैता अग्नीनां स्थापका इति न केषाञ्चित्क्रतूनामाधानानन्तरमेव करणेऽपि पवमानेष्टीनां वैयर्थ्यापत्तिः। अग्निं वै सृष्टमग्निहोत्रेणानुद्रवतीति पवमानेष्टिभ्यः प्रागेवाग्निहोत्रप्रवृत्तिं दर्शयति। अतश्चाहिताग्निर्न क्षिप्रन्दर्शाभ्यादृथ्यादित्याद्याहिताग्निमात्रवदेवाधानोत्तरमेव क्रतुप्रवृत्तिरिति प्राप्ते।

भाष्यकारमते तावत्तत्तद्वाक्ये नैरपेक्ष्यश्रवणेऽपि एकस्योत्पादकत्वमितरस्य संस्कारकत्वमित्यत्र प्रमाणाभावः। प्रत्युत पवमानेष्टीनामेव स्वविनियोजकवाक्ये आहवनीयोत्पादकत्वावगतेराधानस्य गुणवाक्यावगताहवनीयोत्पादकत्वं विप्रकृष्टोपस्थितिकम्। न चैवमस्तूभयोरुत्पादकयोर्विकल्पः। यतो निर्वपेद्द्वादशरात्रिषु निर्वपेदित्यादिकालविधिवशादेव समुच्चयसिद्धेः। वार्त्तिककारमते चाङ्गस्यैवाधानस्याग्न्युत्पादकत्वाच्च तदभावेऽग्निसिद्धिः। न च स्थापकत्वं बृहस्पतिसववत्। पवमानेष्टीनामाधानप्रयोगवहिर्भावेऽपि तदङ्गाधानकरणभावनावहिर्भावस्याश्रुतत्वेन स्थापकत्वकल्पनानुपपत्तेः। अतः पवमानेष्टिव्यतिरेकेणाहवनीयनिष्पत्तेरभावात्तदुत्तरमेवाग्निहोत्रादीनि। आहिताग्निमात्रेषु तु आधानोत्तरमेव पुरुषस्याहिताग्निपदवाच्यत्वोपपत्तेस्तदनन्तरं करणम्।

यत्तु निदर्शनमुक्तं, तत्तूष्णीं होमस्याधानाङ्गभूतस्य स्तुत्यर्थं

मन्त्रेण विशिष्टोद्देशोपपत्ते । अतो मध्यमचितावेवोपधानम् । न चेद् प्राकरणिकविषयम् । अविशेषात् ॥ ५ ॥ २ ॥ ७ ॥

प्राक् लोकम्पृणाया ॥ मध्यमायामपि प्राकरणिकेष्टकोपधानानन्तरमेवोपधान चिचिण्यादीनाम् । न तु प्राक् लोकम्पृणाया । आगन्तुकत्वात् । न च यदेवास्तोन यच्छिद्र तदेतया पूरयति लोक पृण छिद्र पृणेति वचनेन लोकम्पृणाया, पूरणार्थत्वात्तत्प्राक्तन्ते निवेशावगतेः तत प्राङ्निवेशश्चिचिण्यादीनाम् । लिङ्गादेव मन्त्रस्य छिद्रपूरणार्थत्वे अस्य वचनस्य तदर्थताविधायकत्वाभावात् । कथञ्चिन्मन्त्रस्य तद्विधायकत्वेऽपीष्टकायास्तदर्थत्वे प्रमाणाभावाच्च ।

अस्तु वा मन्त्रे छिद्रपूरकत्वस्येष्टकायास्तत्पूरकत्व विनाऽनुपपत्तेस्तस्या अपि तत् । तथापि तस्य चित्यन्तरे सावकाशत्वाच्च चिचिण्यादीनामन्ते निवेशन्यायस्य निरवकाशस्य बाध । न च लोकम्पृणाया अपि प्रत्यक्षब्राह्मणवत्त्वात् मध्यमचितिमात्रविषयत्वम् । इति करणविनियुक्तत्वेनास्य मन्त्रस्येष्टकावाचिश्रुतपदविनियुक्तत्वाभावात् । न च तथापि तत्तच्चित्यवान्तरप्रकरणपठितत्वेन तत्रैव निवेशापत्तेश्चयनमहाप्रकरणपठितत्वे चाग्निमचितावेव निवेशापत्ते कथ सावकाशत्वमिति वाच्यम् । पूरणार्थत्वलिङ्गादेव द्वारभेदेन भेदोपपत्ते सर्वविषयत्वादिति प्राप्ते ।

चिचिण्यादीनामन्ते निवेशे लोकम्पृणाया छिद्रपूरणरूपफलस्यैव बाधापत्तेर्वर पूर्वपठितेष्टकोपधानोत्तरत्वरूपक्रमबाधेन चिचिण्यादीना प्राक् लोकम्पृणाया अनिवेश ॥ ५ ॥ २ ॥ ८ ॥

सन्ततेः ॥ आधानस्य नैरपेक्ष्येणोत्पत्तिवाक्येऽग्निनिर्माणिकाभाव-

नाग्निहोत्रस्य पूर्वप्रवृत्तिसूचकम्। तूष्णीं होमो हि नाग्निहोत्र-होमः। प्रमाणाभावात्। नाप्यग्निहोत्रधर्मकः। अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात्। एतद्धोमस्याधानद्वाराऽग्निप्रयोजकत्वाग्नि-सम्बन्धित्वाविशेषात्रायणीयादिपदवदनतिदेशकत्वाच्च। अतोऽपूर्वस्यैव होमस्यैवं स्तुतिरिति नाग्निहोत्रस्य पूर्वप्रवृत्तौ लिङ्गम्। भिन्न-प्रयोगपरिगृहीतानामपि च पौर्वापर्यमात्रं प्रसङ्गान्निरूपितम्। व्यवहिताव्यवहितसाधारण्येन पौर्वापर्यमेवाध्यायार्थ इत्यपि ध्येयम्॥ ५॥ २॥ ८॥

चित्ते॥ वर्षति न धावेदित्यादौन्यग्निचिद्व्रतान्यामरणं वर्षमात्रं वा चयने निमित्ते पुरुषार्थतया, आधाने निमित्ते आहिताग्निव्रतवदेव विहितानि। अत्र व्रतपदश्रवणादेवोभयथापि संकल्प*लक्षणा। पुरुषार्थत्वञ्च वाचनिकफलश्रवणादृष्टत्वम्। तदिद-मग्निचिद्व्रतं भूतचयनमात्रस्यैव भूताधानवन्निमित्तत्वाच्चयनमात्रे कृते कर्त्तव्यमाहिताग्निव्रतवदिति प्राप्ते।

कर्मणि, भूत इति चानुवर्त्तमानेऽग्नौ चेरिति सूत्रेण कर्त्तरि-चिनोतेः क्विप्प्रत्ययविधानात्कर्मत्वाद्यन्यथानुपपत्त्या च भावनाक्षेपा-दग्निकर्मकचयनकरणकभावनाया एव भूताया निमित्तत्वावगतेरग्नि-शब्दवाच्यस्य च ज्वलनाख्यस्याग्नेः स्वरूपेण चयनकर्मत्वाभावाच्चयन-निष्पादितस्थण्डिलाधारत्वद्वारा कर्मत्वावगतेराधारतायाश्च साङ्ग-यागसमाप्तिं यावदनिवृत्तेः प्राक्तन एवाग्निकर्मकचयनकरणक-

* संकल्प,—इत्यशुद्ध पाठ आदर्शपुस्तकेषु।

पत्निकम्। अत एव दण्डादीनां दीक्षाऽभिव्यक्तौ समुच्चयः। अतः दृश्यन्त एव दीक्षितधर्मादीक्षितो न जुहोति न दीक्षितस्यान्नमश्नीयादित्यादयः। न चैवमावेदनवैयर्थ्यमभिव्यक्तिवैयर्थ्यञ्चेति वाच्यम्। तद्विध्याम्नानबलेन तन्त्रपठितधर्माणामेव तदुत्तरत्वप्रतीतेः॥ ५॥ ३॥ ११॥

अङ्गवत्॥ काम्यानामुद्भिज्ज्योतिरादीनां नैमित्तिकानाञ्च भेदनहोमादीनां समिदादिवदेव पाठक्रमात्क्रमे प्राप्ते।

उपायप्रवृत्तिलावच्छिन्नं प्रति फलेच्छायाः कारणत्वान्नैमित्तिकानुष्ठानस्य च निमित्ताधीनत्वात्तदनुरोधेनैव क्रमावगतेर्न पाठस्य नियामकता। वस्तुतस्तु यत्रैकप्रयोगविधिपरिग्रहोऽनेकेषां, तत्रैव क्रमापेक्षायां पाठादीनां क्रमनियामकता। न तु यत्र भिन्नप्रयोगविधिपरिग्रहः। अत एव तादृशस्थले पाठः पारायणादावुपयुज्यते॥ ५॥ ३॥ १२॥

य एतेन॥ स्थिते भिन्नप्रयोगविधिपरिगृहीतानां क्रमानियमे क्वचिद्वचनात्पौर्वापर्यम्। यथा एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः य एतेनानिष्ट्वाऽन्येन यजते गर्त्तपत्यमेव तद्भवतीति। तत्रैतच्छब्दो यद्यपि ज्योतिष्टोममात्रपरामर्शी, तथापि न सर्वसंस्थस्य ग्रहणम्। अपि त्वग्निष्टोमसंस्थस्यैव। संस्थान्तराणामन्यशब्देनाभिधानस्याग्रिमाधिकरणे वक्ष्यमाणत्वेन तास्वपि ज्योतिष्टोमोत्तरत्वस्यावश्यकत्वात्परिशेषादेवाग्निष्टोमसंस्थस्य पूर्वकरणसिद्धेः। अत एवातिरात्रमस्याकस्मातिरात्रमेके प्रथममाहरन्तीति वचनादेव प्रथमं करणम्।

दीक्षाया अदृष्टरूपत्वाभिधानाच्च । अतो दण्डादीनामपि दीक्षार्थत्वात्सर्वान्ते सा । न चैवं नैरपेक्ष्यश्रवणादिकल्प्यापत्तिः । अदृष्टार्थनयैकप्रयोगविधिपरिग्रहेण समुच्चयावगतौ अवान्तरकार्ये नैरपेक्ष्योपपत्तेरिति प्राप्ते ।

दीक्षणीयावाक्ये दीक्षिष्यमाण इति लृट्प्रत्ययेन तस्यादीक्षार्थत्वं तावदवगन्तव्यम् । दण्डादीनां तु णिजन्त दीक्षयति पदश्रवणात् दीक्षार्थत्वमवगम्यते । अपि तु तदनुकूलव्यापारार्थत्वमेव प्रथममवगम्यते । पश्चात्तु तत्सम्बन्धात्प्रयोज्यव्यापाररूपदीक्षार्थत्वं दण्डेन घटं कारयतीत्यादिवत्कथञ्चित्कल्प्येत । न च णौ प्रागवगतदीक्षणीयैव कृतार्थत्वाद्दीक्षायाद्दण्डादिजन्यत्वकल्पनाऽवसरः । सिद्धरूपत्वाच्च दण्डादीनां न क्रियाव्याप्तत्वज्ञानमन्तरेण दीक्षार्थत्वसम्भवः ।

न च प्रथमावगतप्रयोजकव्यापारार्थत्वमेव यथैव कारयतीत्यादिवत्तद्धस्त्विति वाच्यम् । तथात्वे साक्षाद्दीक्षणीयार्थत्वाङ्गीकारेऽदृष्टार्थत्वापत्तेः । तदरं दीक्षाफलीभूतयमनियमपरिग्रहोपयोगि दीक्षावत्त्वज्ञानजनकतयैव दीक्षणीयार्थत्वम्, दीक्षार्थत्वमेव वाऽङ्गीकर्त्तुमुचितम् । अगम्येति मन्त्रस्य यागफलप्रकाशकतया यागाङ्गत्वमिव । अत एव परम्परासम्बन्धस्य सम्बन्धविधयैव बोधोपपत्तेर्न लक्षणाऽपि । ज्ञानजनकत्वञ्च स्मारकविधया । सम्बन्धस्य च मानान्तरादनवगमेऽपि विध्यन्यथानुपपत्त्यैवावगमात् स्मारकत्वोपपत्तिः । तत्तद्विध्यन्तरैरेव च दण्डादीनां धारणकण्डूयनादिरूपक्रियाविधानाच्चाक्रियाविष्टानां स्मारकत्वसम्भव इति मद्धनीयम् ।

अत एव तत्तत्क्रियार्थानामप्येषां दीक्षाऽभिव्यञ्जकत्वमप्यनु-

नार्थवादेनोद्भिदादीनां यज्ञान्तराणां सन्निहितत्वात् । न च तत्रैव कर्मान्तरत्वशङ्का । तस्मोत्तरकालत्वाचिप्तप्राथम्यस्यावकत्वेनोपादेयत्व-सामानाधिकरण्येन विधेयत्वानाचेपकतया कर्मान्तरानापेचकत्वात् । अतः सिद्धमग्निष्टोममध्याकज्योतिष्टोमान्यतद्विचारमाचे तदुत्तर-कालत्वविधिरिति ॥ १ ॥ ३ ॥ १४ ॥

एकस्तोमो वा* ॥ ननु यो वै चिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशः स तं यः सप्तदशः स तं य एकविंशः स तमिति वाक्यशेषे एकस्तोमकानामेव संकीर्त्तनात्तेषामेवान्यशब्देन ग्रहणात्तेवोत्तरकालत्वविधिरक्राधिकरणन्यायेनेति चेन्न । वाक्य-शेषस्यान्यथाऽप्युपपत्तेः । यो हि चिवृत्स्तोमः प्रकृतावनुष्ठितः चोदके-नान्य क्रतुमापद्यते प्राप्नोति स स्तोमस्तं यज्ञक्रतुमभ्यस्तत्वाद्दीपय-तीति तस्यार्थः । सम्भवति च स्तोमान्तरसत्त्वेऽपि चिवृदादेरपि सत्त्वादनेकस्तोमकक्रतुदीपकत्वम् । पुत्रान्तरसत्त्वेऽप्येकस्य गुणवत्त्वविव-चया पितृदीपकत्ववत् ।

वस्तुतस्तु गुणविशेषस्य प्रकृते अविद्यमानत्वात्त्रिणवादिमात्रस्तोम-कक्रतौ च चिवृदादेरभावेन दीपकत्वानुपपत्तेर्वाक्यशेषस्य क्रतु-विशेषोपस्थापकत्वेऽपि विधौ प्रतिप्रधानावृत्तिन्यायेन सर्वार्थत्वप्रतीतेः सन्देहाभावेनाकाधिकरणन्यायाभावाच्च वाक्यशेषस्य विधिसंकोच-कत्वकल्पनाऽवसरः । अतस्त्रिवृदादिग्रहणं ज्योतिष्टोमीयाङ्गमात्रोप-लक्षणम् । तदङ्गमात्रस्य तद्विकृतावभ्यस्तत्वेन तद्विकृतिदीपकत्वा-

* एकस्तोमे वा,—इति भाष्यपुस्तके पाठः ।

अस्तु वाऽग्निष्टोमसंस्थाकज्योतिष्टोमपरामर्शकत्वमेवैतच्छब्दस्य । अग्निष्टोमसंस्थामभिप्रेत्यैव ज्योतिष्टोमे सकलधर्मविधानात् । अत एव तस्य सवनिगतं स्तोत्रियाः इत्युपपद्यते । अग्निष्टोमसंस्थाकज्योतिष्टोम एव हि तावन्तः स्तोत्रिया न संस्थान्तरयुक्ते । एवञ्चातिरात्रप्रथमाहारोत्तरमपि(१) अग्निष्टोमसंस्थां कृत्वा एवोद्भिदादयः कार्या इति द्रष्टव्यम् ॥ ५ ॥ ३ ॥ १३ ॥

अथान्येनेति ॥ एतच्छब्दार्थे निरूपितेऽन्यपदार्थो निरूप्यते । अन्यशब्दस्य पूर्वप्रकृतादितरपरत्वनियमात् तदार्भित्वात्संस्थानाञ्च सन्निहितत्वेन तास्वेवाऽग्निष्टोमोत्तरत्वस्य विधिरिति प्राप्ते ।

न तावत्संस्थानां प्रकरणेन सन्निधानं विहृतत्वात् । अधिकारोऽपि ज्योतिष्टोमस्यैव । एष वावेत्यादिवाक्यशेषे तस्यैव संकीर्त्तनाच्च । यज्ञानां ज्योतिष्टोमोद्भिदादीनां मध्येऽग्निष्टोमसंस्थाक एव प्रथममित्युक्तेऽन्येषामप्युद्भिदादीनां यज्ञपदेनोपादानाच्च ।

न चैवं संस्थानामयज्ञत्वादग्रहणम् । तासामप्याश्रयस्य यज्ञत्वात् । अतश्चाग्निष्टोमसंस्थाकज्योतिष्टोमान्य-तद्विकारमात्रे तदुत्तरकालत्वविधिः । न च ज्योतिष्टोमे यज्ञान्तरापेक्षया प्राथम्यमेव प्रकरणानुग्रहाय विधीयतामिति वाच्यम् । एष वावेत्यस्यार्थवादत्वेनाविधायकत्वात् । अथान्येनेत्यनेन तृतीयविधिप्रकारत्वापत्त्या यागान्तरेष्वेवाग्निष्टोमपूर्वकालकत्वस्य तदुत्तरत्वमनियतस्य विधानसम्भवे प्रकरणबाधस्यादोषत्वाच्च ।

न च प्रकरणान्तरन्यायेनात्र कर्मान्तरत्वशङ्का । एष वावेत्यने-

(१) अतिरात्रस्य प्रथमं च आहार आहरणं तदुत्तरमपीत्यर्थः ।

# पञ्चमोऽध्यायः ।

## चतुर्थः पादः ।



क्रमकोप ॥ तदेव निरूपितेषु क्रमप्रमाणेषूत्तरोत्तरस्य दौर्बल्यं प्रागेवाकाभिर्निरूपितम् । सुबोधत्वात्तु न सूत्रकारेणोच्यते । शिष्यानुग्रहार्थन्तु क्वचिदुच्यते । श्रुतिविरोधे पाठस्य दौर्बल्यम् । यथाऽऽश्विनो दशमो गृह्यते तं तृतीयं जुहोतीत्यत्र । पाठादैन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति आश्विनं गृह्णातीत्येवंविधादाश्विन-ग्रहणस्य तृतीयस्थाने प्राप्तस्य श्रुत्या दशमस्थानेऽनुष्ठानम् । त तृतीयमिति तु पाठप्राप्तानुवाद एव । प्रवृत्तेः पाठेन बाधात् । एवमर्थेनापि पाठस्य बाधः । यथाऽग्निहोत्रं जुहोति यवागू पचतीति । व्याख्यातं पूर्वमिदम् ॥ ५ ॥ ४ ॥ १ ॥

अवदान ॥ एवं मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधः । यथा दर्श पाठादर्थाच्च पूर्वं धर्मादोहनादयः, पश्चादाग्नेयस्य निर्वापादयः । तत्प्रवृत्तिक्रमेणैव हविरासादनप्रयाजशेषाभिधारणस्विष्टकृदवदाना-न्यपि कर्त्तव्यत्वेन प्राप्तानि मुख्यक्रमात्प्रथममाग्नेयस्य कार्याणि पश्चाद्ध्रः । प्रधानानां हि पाठादेव प्रथममाग्नेयस्य पश्चात्सान्नाय्य-स्यानुष्ठानम् ।

यद्यपि चासादनादीनां याज्यापुरोऽनुवाक्याप्रवृत्तिक्रमात्ताद्-ग्राम्नुष्ठानमपि प्रसज्यत इति भूतभाविप्रवृत्तिक्रमाभ्यामनियमप्रसक्तौ मुख्यक्रमस्य नियामकत्वमात्रमिति नेदं विरोधोदाहरणं सम्भवति,

माद्युत्तरकालत्वस्त्युपपत्ते । अत एवान्यपदेन न सौर्यादिग्रहणम् । तत्र सौमिकाङ्गाभ्यासाभावात् । अतस्तद्विकृतिमात्रस्योत्तरकालतेति सिद्धम् ॥ ५ । ३॥ १५॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

पञ्चमस्य तृतीय पाद ।

यच्छब्देन निमित्तत्वावगतेः सकलकारकाणामन्वयस्य न्याय्यत्वाच्च न विशिष्टोद्देशे वाक्यभेदः। अतश्च सिद्धवन्निर्देशान्यथानुपपत्त्या कल्पितेन विध्यन्तरेणोपरि हि देवेभ्यो धारयतीति वक्ष्योमाङ्गतया आधानानन्तर्यं विधीयते।

अथवा अहतपाप्मानो वा एतत्र अग्नौ खलु वाव आदित्य-उद्यच्छेर्वा पाप्मानमपघ्नन्ति तस्मादुद्दरेवैन अङ्गोपनमेद्यादधीताथ यजेतेति वचनेनाथ यजेतेत्यनेनाधानानन्तर्यं सोमे विधीयते। यजेतेत्यनेन सोमस्यैव परामर्शात्। अत एवाथादधीतेत्यनेनाधानएव कालबाध इति वक्ष्यते। अतश्च निमित्तश्रुत्यन्यथानुपपत्त्याऽपि न विध्यन्तरकल्पनम्।

अत एवेष्टिपूर्वत्व एव यदेष्युत्तरमग्निविनाशादिनिमित्ताधानाव्यवहितोत्तर सोमकरणं, तदा सोमे कालानादरविधानोपपत्तेर्न विध्यन्तरकल्पनया विकल्पाङ्गीकरणं युक्तमित्यपास्तम्। प्रत्यक्षविधिनैवापूर्वाधानानन्तर्यस्य विहितत्वात्। न ह्यथादधीतेत्यत्र पुनराधानप्रसङ्गोऽस्ति। तस्य निमित्तवशवर्त्तित्वेन तत्र कालानादरविधिवैयर्थ्यात्। अतश्चापूर्वाधानानन्तर्य एव कालानादरविधानादिष्टिपूर्वत्वस्य सोमपूर्वत्वेन युक्त एव विकल्प।

केचित्तु सोमेन यक्ष्यमाण इति भिन्न वाक्यम्। नर्तु इत्येदिति भिन्नम्। तत्राद्येन प्रकरणान्तृतीयविधिप्रकारे लाघवाच्चाधानोद्देशेन सोमाव्यवहितपूर्वकालता विधीयते। सोमपूर्वकालमात्रविधाने वाक्यवैयर्थ्यात्। अतश्च वाचनिकेन सोमपूर्वत्वेनेष्टिपूर्वत्वस्य विकल्पइत्याहुः।

तथाप्यन्यदेतादृशमुदाहरणं मृग्यम्। दूषकतावीजन्तु मुख्यक्रमे प्रधानप्रत्यासत्त्यनुग्रहः। प्रवृत्तिक्रमे लङ्गानां परस्परप्रत्यासत्तिः। अतस्तस्य बाधः। अत्र च न प्रधानावदानमुदाहरणम्। तस्य प्रधानैकपदार्थत्वस्य स्थापितत्वात्॥ ५॥ ४॥ ९॥

वचनात्॥ आधानप्रकरणे यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्त्तु प्रतीक्षेत नक्षत्रमिति श्रुतम्। न च तेन सोमस्याधानानन्तर्यं विधातुं शक्यम्। आनन्तर्यस्याश्रवणात्। आधानानन्तर्य-कालानादरोभयविधाने वाक्यभेदप्रसङ्गाच्च। अतो विहितकालानादरमात्र-माधानोद्देशेन विधीयते। सोमेन यक्ष्यमाण इति त्वनुवादः। तेन दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्येतद्वाक्यविहितदर्शपूर्णमासो-त्तरकालत्वमेव सोमस्येति प्राप्ते।

आधानमात्रोद्देशेन विहितकालानादरविधाने सोमेन यक्ष्यमाण-इत्यस्य वैयर्थ्यापत्तेः, आधानकर्त्तुश्च सर्वस्यापि सोमाधिकारित्वाद्वि-शेषणस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः, सोमेनाधानान्तरं यक्ष्यमाणो-ऽग्निमित्यर्थावगतिः। न च रथकाराधानव्यावृत्त्यर्थं विशेषणोपपत्ते-र्नानन्तर्यकल्पना युक्तेति वाच्यम्। यक्ष्यमाण इत्यद्यतनधात्वर्थप्रत्यय-श्रवणेनानन्तर्यस्याकल्पनीयत्वात्। रथकाराधानस्यादृष्टार्थत्वेनाग्नि-मिति द्वितीयाऽनुपपत्तेश्च। रथकाराधाने कालानादरस्य यदृच्छ-यैवमिति वचनेनैव सिद्धतया तस्य प्रसक्त्यभावेन निवारणीयत्वा-नुपपत्तेश्च।

अतोऽत्र सोमाव्यवहितपूर्वकालीनाधाने निमित्ते विहितकाला-नादरो विधीयते। कर्ममसामाधिकरण्येन भाष्यकारोदाहृतेन

स सोमेनेष्टाऽग्नीषोमीयो भवति यद्देवाद् पौर्णमास हविरुत्सृजेनु* निर्वपेदिति वचनेन ब्राह्मणकर्तृकत्वे निमित्ते एकदेशोत्कर्षेण समस्त दर्शपूर्णमासोत्कर्षप्रतीतेर्ब्राह्मणस्य सोमपूर्वत्वमेव। न हि सहितयाग-साध्यत्वेन श्रुत फल एकदेशाद्भवितुमर्हति। न च सोमोत्तर तत्त्वेण क्रियमाणोत्तरहविसाधसद्दशपूर्वयागेभ्य फलसिद्धि। दर्शपूर्ण-मासाभ्यामिष्ट्वा सोमेनेत्यनेन दर्शपूर्णमासपदवाच्यसर्वयागोत्तरत्वस्यैव सोमे विहितत्वेन तथा कल्पनाऽनुपपत्ते। दर्शपूर्णमासाभ्यामिति तृतीयाबलेन परमापूर्वोत्पत्तेरप्यवगतत्वाच्च। अत इतरयो हविर्-विशेषयो कल्पद्वयमिष्टिपूर्वत्वमेवेति प्रथम पक्ष।

द्वितीयस्तु नैकदेशोत्कर्षेण सर्वदर्शपूर्णमासोत्कर्ष। प्रमाणा-भावात्। साद्याय्याधिकरण ऐन्द्राग्नविधानुपपत्त्या फलवाक्ये सर्व-साहित्यस्याविवक्षितत्वाच्च। अतो यस्य यावत्स्वधिकारस्तस्य तावद्भ्य एव फलसिद्धि। अतश्च ब्राह्मणस्याप्युत्तरहविर्भिर्यागकरणोपपत्ते कल्पद्वयम्। उत्कर्ष परमौर्णमासीहविर्मात्रस्य। विधावविशेषश्रुत-स्योद्देश्यपरस्य पौर्णमासपदस्यार्थवादेन सङ्कोचानुपपत्ते। यद्देवेत्य-नेन साकल्यप्रतीतेरेवेति प्राप्ते।

पौर्णमासीमात्रस्यत्वेनात्र पौर्णमासपदव्यपदेशादाग्नेयस्योभयत्र विद्यमानत्वेन विशिष्य तात्पर्यग्राहकाभाव व्यपदेशानुपपत्ते, प्रत्यु-तोपक्रमस्यार्थवादस्यैवाग्नीषोमीयहविमात्रतात्पर्यग्राहकस्य सत्त्वेन तस्यैवोत्कर्ष। यद्देवेत्यनेकापेक्षन्तु वचनमुपांशुयाजस्याग्नीषोमी-यदेवताकत्वात्तदभिप्रायेण न विरुध्यते।

---

* व्यवद्यनु,-इति भाष्ये पाठ

तच । वाक्यभेदे प्रमाणाभावात् । आधानाङ्गभूतसोमपूर्वत्वेन सोमाङ्गभूतेष्टिपूर्वत्वस्य विकल्पापादनायोगाच्च । किञ्चैवमस्मिन्नेव वाक्ये विशिष्टाधानविधिराधानमात्रविधिर्वाऽस्तु । सोमेन यक्ष्यमाण इत्यस्यैन्द्रवायवाग्रानितिवदनुवादोपपत्ति । न चेष्टापत्तिः । वसन्तादिवाक्याना निमित्तार्थत्वापत्ते । न च यच्छब्दस्य धात्वर्थाश्रय एव विधिप्रतिबन्धकत्व न विशेषणाश्र इत्यत्र प्रमाणमस्ति । आश्रमात्र एव तस्य विधिप्रतिबन्धकत्वात् ।

न चास्याधानोत्पत्तिविधित्वे अग्निमित्येकवचनादाधानस्यैकाग्न्युत्पादकत्वापत्ति । *अग्निगतस्यैकत्वस्य बहुत्वस्येवोद्देश्यगतत्वेन प्रमा-*णान्तरसिद्धसंख्योपलक्षणार्थत्वात् । अनेकाग्न्युत्पादकत्वन्तु आयतनेषु सस्कारान्निद्धातौत्यायतनबहुत्वविवक्षावत्वादित्युक्त ग्रहैकत्वाधिकरणे कौस्तुभे ।

किञ्चैव विहितकालानादर शुद्धाधानेऽपि स्याच्च सोमाव्यवहितपूर्वाधान एव । उत्तराधिकरणवक्ष्यमाणरीत्या कालानादरस्य सोमाङ्गत्वेऽपि चेष्टिपूर्वत्वपक्षेऽपि स्याच्च सोमपूर्वत्वपक्ष एव । अतश्चास्मदुक्तप्रकार एव श्रेयान् । आधानानन्तर्येऽपि न पवमानेष्टिभिर्वा अधिकारपशुना व्यवधानम् । तेषा सोमोपकारकत्वात् । अत एव सोमाधानपक्षे पवमानेष्टीना सद्य एव करणम् । सोमेनायक्ष्यमाणस्यैव सवत्सरादिकालाम्नानात् ॥ ५ ॥ ४ ॥ २ ॥

उत्कर्षात् ॥ एव स्थिते कल्पद्वये आग्नेयो वै ब्राह्मणो देवतया

अत्र चानुपादेयगुणयोगेऽपि न कमान्तरत्वाशङ्का । दर्शपूर्णमासप्रकरणपठितत्वात् ॥५॥४॥४,६*॥

स्वकाले ॥ एवं, य सोमेन यक्ष्यमाणोऽग्निमादधीत नर्त्तु प्रतीक्षेताधानर्त्तुमित्यनेन विधीयमानः कालानादरोऽपि प्रकरणादाधानोद्देशेनैव विधीयते । न तु सोमोद्देशेन । अङ्गगुणविरोधन्यायेनोपकारके आधान एव कालबाधस्य न्याय्यत्वाच्च । तेन स्वकाले सोमं कुर्वता अव्यवहितपूर्वमाधाने क्रियमाणे नाधानकालप्रतीक्षा कार्येति प्राप्ते ।

अस्यामेव शाखायां यदहरेवैनं श्रद्धोपनमेदथादधीतेति वचनान्तरेणाधानमात्रे कालानादरस्य विहितत्वात्तत एव सोमाव्यवहितपूर्वाधानेऽपि कालानादरप्राप्तेरेकवाक्येन स्ववाक्योपस्थितस्य सोमस्यैवोद्देश्यवाचकपदकल्पनयोद्देश्यत्वमिति तस्यैव कालानादरः ।

यत्तु शतपथे अपहतपाप्मानो वेत्यादिवचनेनोभयोरपि कालानादरविधानम् । तच्छाखान्तरत्वादाधानकालबाध इव न दोषः । वस्तुतस्तु तत्राथ यजेतेति वचनेनाधानानन्तर्यमेव सोमस्य विधीयते । अथादधीतेति पूर्ववचनेन त्वाधान एव कालबाध इत्युक्तमेव । अत्र चार्थमन्तर्वेदीतिवल्लक्षणया विहितकालमात्रस्यानादरविधा-

* कात्यस्य यावत्कर्षाधिकरणे षष्ठ भाष्ये शुल्वादितम् । अनेन तु अत्रैवाधिकरणे तद्विधारितमित्यनुमन्धेयम् ।

† नर्त्तु स प्रतीक्षेत,–इति भाष्ये पाठ । नर्त्तु दृत्सेन,–इति जैमिनीयन्यायमालाविस्तरे पाठ दृत्सतिर्धातुर्दर्शनार्थे वर्त्तत इति तत्रैव व्याख्यातम् ।

अत्र च सोमोत्तरकालत्वविधावुद्देश्यसमर्पकं पदं समभिव्याहृतसर्ववाचि-तच्छब्द एव। न त्वग्नीषोमपदं हविःपदं वा। तस्यार्थवादस्थत्वेन पौर्णमासपदवत्तच्छब्दार्थतात्पर्यग्राहकत्वात्। विशिष्टोद्देशे वाक्यभेदप्रसङ्गाच्च। उद्देश्यतावच्छेदकमपि च नाग्नीषोमदेवताकत्वविशिष्टम्। तथात्वे यागे उत्तरकालतायाः अङ्गत्वानापत्तेः। नापि तद्देवताकयागत्वं तद्देवताकप्रकृतयागत्वं वा। तद्देवताकत्वस्य विशेषणत्वे तदिकृतौ देवतान्तरयुक्तायां सोमोत्तरत्वस्यातिदेशानापत्तेः। उपलक्षणत्वे च विष्णुप्रजापतिदेवत्यस्याप्युपांशुयाजस्य सोमोत्तरत्वापत्तेः। किन्त्वग्नीषोमदेवतानिष्ठकारणतानिरूपितकार्यतावच्छेदकीभूतो यस्तत्तदपूर्वसाधनतावच्छेदकव्याप्यो धर्मस्तद्वत्त्वम्। अस्ति हि व्रीहियवादिवैकल्पिकसाधनस्थले व्यभिचारपरिहारायाग्नेयत्वोपांशुयाजत्वादिव्याप्योधर्म इत्युक्तं तेषामर्थाधिकरणे कौस्तुभे।

तस्य यद्यपि मान्यत्वावघातादिसंस्कारविधावुद्देश्यतावच्छेदककोटिप्रविष्टत्वं गौरवात्तथाप्यत्रार्थवादवशात्तस्योद्देश्यतावच्छेदकत्वाविघातः। अतश्च विष्णुप्रजापतिजन्यतावच्छेदकव्याप्यधर्मयोर्व्यापकधर्मोपांशुत्वस्य च स्वव्याप्यस्याप्यग्नीषोमजन्यतावच्छेदकत्वाभावान्नोद्देश्यतावच्छेदकत्वम्।

अग्नीषोमीयपुरोडाशे तु अपूर्वसाधनतावच्छेदकीभूतस्याग्नीषोमीययागत्वस्यैवाग्नीषोमजन्यतावच्छेदकत्वात्स्वव्याप्यत्वाच्च नोद्देश्यतावच्छेदकत्वविघातः। तत्तद्विकृतौ देवतान्तरयुक्तायां तत्तद्विकृतित्वस्यैव तत्तद्देवताजन्यतावच्छेदकस्य तत्तद्व्याप्यधर्मस्यानापन्नतयोक्तविधव्याप्यत्वसत्त्वान्नोद्देश्यतावच्छेदकत्वविघात इति ध्येयम्।

तत्र पूर्णपर्वण्यपराह्णसन्धौ वा विकृतिं कृत्वा प्रकृतेरन्वाधानं निर्विवादमेव। अन्वाधाने प्रातःकालस्तु उपदिष्टोऽपि अङ्गगुणत्वादतिदेशिकेनापि विकृतिप्रधानाङ्गभूतकालेन बाध्यते। पूर्वाह्णसन्धावपि औदयिकपर्वणः प्रकृत्यवरुद्धत्वात्पूर्वपर्वण्येवोपदिष्टपर्वकालत्वानुरोधेनातिदेशप्राप्तप्रातःकालं द्वादशकालत्वञ्च बाधित्वा विकृत्यनुष्ठाने ततः प्रकृत्यन्वाधानमिति बोध्यम्। एवं सोमेऽपि। पूर्वेद्युरेवाधिककालव्याप्तिलाभात्।

यत्तु धूर्तस्वाम्यादिभिर्वैदिकैरावर्त्तन-तत्पूर्वसन्ध्योः प्रकृत्यनुष्ठानानन्तरं सन्धिदिन एव विकृत्यनुष्ठानम्। पौर्णमास्यादिशब्दानां पर्वान्यवचनत्वात्। यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी, यः परमः सन्निकर्षः साऽमावास्येति गोभिलसूत्रात्। अतश्च सन्निकर्षविप्रकर्षलक्षणावच्छिन्नाहोरात्रस्यैव पौर्णमास्यमावास्यापदवाच्यत्वात्तस्य च पूर्वाह्णसन्धौ द्वितीयदिन एव सत्त्वात्तत्रैव विकृत्यनुष्ठानम्। तदपि न प्रकृतेः पूर्वन्तस्या द्वादशकालत्वेन विकृतौ प्रसङ्गसिद्ध्यापत्तेः। अतोऽगत्या प्रातःकालबाध एवेत्युक्तम्।

तन्न। सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन्नामामावास्याञ्च पौर्णमासीञ्च नोपैदित्याद्यर्थवादादापामरप्रसिद्धेः ज्योतिःशास्त्रादिवशाच्च पौर्णमास्यादिशब्दानां तिथिवचनत्वात्। न हि सूर्याचन्द्रमसोः परमसन्निकर्षविप्रकर्षलक्षणावच्छिन्नाहोरात्रवाचित्वे पौर्णमास्यादिशब्दाना,

पर्वणो यश्चतुर्थोऽंश आद्याः प्रतिपदस्त्रयः।

इत्यादिर्व्यवहारस्य, द्वैधे पूर्वविद्धाशाखत्वाज्ज्वलादिव्यवहारस्य

नात्पौर्णमास्यादिपर्वणोऽप्यनादर इति केचित् । तन्मृद्वयाख्यान-वैयर्थ्यात्तु वाक्यभेदमप्यङ्गीकृत्य तच्चतुर्नवचमाचानादर एव । अन्यथा पञ्चाहलादेरपि बाधापत्तेरिति तत्त्वम् ॥ ५ ॥ ४ ॥ ५ ॥

विकृतेः ॥ य इष्ट्येति वचनेन न तावत्प्रकृतौ पौर्णमास्यादि-कालविधिः । पञ्चान्ता उपवसथ्याः पञ्चाद्योऽभियष्टव्या इत्यादि-वचनैस्तस्याः प्रतिपत्कालत्वविधानात् । अत एव पौर्णमास्या पौर्ण-मास्या यजेतेत्यादिवचनेषु पौर्णमास्यादिशब्दावपि आरम्भदारकौ, पर्वप्रतिपत्समुदायलक्षकौ वा । अत एव प्रकृतौ शुक्लकालत्वं प्राकर-णिकम् । अतश्चेदमनारभ्याधीतं वचनं विकृतौ विशेषपरं विकृति-पशुपरञ्च । अग्नीषोमीयस्यौपवसथ्येऽहनि विहितत्वात् ।

अतिदेशप्राप्तोऽपि च विकृतौ पौर्णमास्यादिकालोयथा पौर्णमासीविकाराणां पौर्णमास्यां करणं अमावास्याविकाराणाममा-मावास्यायां करणमित्येव व्यवस्थया प्राप्तानां कृष्णवस्थाणं, तथा प्राप्तानाम्नामां पौर्णमास्यादिकालविधानादातिदेशिकशुक्लकालत्व-बाधार्थमपि ।

न च तत्तद्विकृतीनां तद्विधावेव प्रयोगस्य प्राप्तत्वाद्व प्रयोग-विध्यभावेन प्रधानमात्र एव पौर्णमास्यादिकालविधानोपपत्ते प्रतिपत्कालत्वादिबाधेऽपि चतुर्दश्यामग्न्याधानकरणेन प्राकृतशुक्ल-कालत्वबाधे प्रमाणाभाव इति वाच्यम् । कालस्य प्रयोगान्वयितया प्रयोगसम्बन्धित्वेन विधानादग्न्याधानेऽपि पौर्णमास्यादिकालस्यौप-देशिकत्वात् । अतः साङ्गमपि विकृतिप्रधानं पौर्णमास्यादियागे कर्तव्यम् ।

साम्नाय्य ॥ नासोमयाजी संनयेदिति असोमयाजिनः साम्नाय्य-पर्युदासः। तेन तस्याप्यग्नीषोमीयवत्सोमोत्तरत्वमेव। अतस्तदुभय-विकारेष्वपि सोमोत्तरत्वमेव। न ह्यत्रासोमयाजिनोऽधिकारपर्युदासो-ऽनेन विकृतौ नातिदिश्येत। कर्तृसामानाधिकरण्यात्तु यागकर्तृत्व-पर्युदास एव। अतश्च युक्तोऽतिदेशः।

अत्र च दैवस्य नोदाहरणत्वम्। औपदेशिकसोमप्राक्कालत्व-विधानात्। तद्विकाराणाञ्च प्रकृतावनङ्गत्वाच्च सोमोत्तरत्वनियमः। न चान्वाहार्यस्येव प्रकृतावभावेऽपि प्रकृति-प्रकृतितो ग्रहणमिति वाच्यम्। अपेक्षितविषय एव तथा ग्रहणेन सोमोत्तरत्वस्यानपेक्षि-तत्वात्। वस्तुतस्तु अपेक्षाया उपायान्तरेणापि निवृत्त्युपपत्तेर्नान्वा-हार्यांशेऽपि ग्रहणम्। अन्यथा पितृमेधविकारे श्रोत्रियवरणस्याप्यति-देशापत्तेः। न चैवं दैवविकाराणामनिर्दिष्टकालविशेषाणामौपव-सथ्यकालकत्वापत्तिः। तस्याङ्गत्वनिबन्धनतया तदभावे अप्राप्तेः। अतस्तद्भिन्नविकाराणां सोमोत्तरत्वमेव।

यत्तु याज्ञिकानां प्रागप्यनुष्ठानं, तच्छाखान्तरे साम्नाय्याग्नी-षोमीययोः प्रागपि विधानादवगन्तव्यम्। एवमैन्द्राग्नविकाराणामपि सोमप्राक्कालकत्वमेवेति सूत्र तस्याप्युपलक्षणमिति केचित्। वस्तुतस्तु असन्नयत इत्यस्य षष्ठ्यन्तस्य कर्तृसामानाधिकरण्याभावादधिकारि-विशेषणत्वस्यैव प्राधान्यादवगतेस्तस्य चानतिदेशाद्युक्तं तद्विकाराणा-मनियतकालत्वम् ॥ ५॥ ४ ॥ ८॥

तथा सोमे* ॥ सोमे इष्टिपूर्वत्वमाधानाव्यवहितोत्तरत्वञ्च

* तथा सोमविकारा दर्शपूर्णमासाभ्याम्,– इति भाष्यशेषे सूत्रपाठः।

च कथमप्युपपत्तिं सम्भवति। द्वैधस्यैवासम्भवः। अतस्तिथिपरा एवैते शब्दाः। तिथिर्नामामासञ्ज्ञकचन्द्रकलाव्यतिरिक्तचन्द्रकलानां मध्ये एकैकस्याः कलायाः सूर्यमण्डलेन आद्यावयवविप्रकर्षादारभ्यान्त्यावयवविप्रकर्षे आद्यावयवसन्निकर्षादारभ्यान्त्यावयवसन्निकर्षे वा[1]यावता कालेन जायते, तावान्कालो यथाक्रमं शुक्लकृष्णपक्षगतः प्रतिपद्द्वितीयादिशब्दप्रतिपाद्यः ।

अमा षोडशभागेन देवि. प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ॥
तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥
पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदशैव ताः ।
दर्शान्ताः कृष्णपक्षे तु पौर्णिमान्ताश्च शुक्लके ॥

इत्यादि वचनात् । अत एव तिथिशब्दः प्रतिपदादिशब्दाश्च कलास्वेव शक्ताः काले तु निरूढलक्षणयेति ध्येयम् ।

एवञ्च पौर्णमास्यमावास्याशब्दावपि न योगेनान्तिमक्षणवचनौ तदवच्छिन्नाहोरात्रविषयौ वा। गोभिलसूत्रमपि उक्तविधसन्निकर्षविप्रकर्षकालोपलक्षणेनैव व्याख्येयम्। तस्मिंस्तु स विहृतीनां शुक्लकालत्वमिति ॥ ५॥ ४ ॥ ७॥

---

(१) अत्र विप्रकर्षं सन्निकर्षौ शुक्लकृष्णपक्षीयतिथ्यभिप्रायेण द्रष्टव्यौ ।

श्रीगणेशाय नमः।

# षष्ठोऽध्यायः।

## प्रथमः पादः।



द्रव्याणाम्॥ एवं षञ्चमके प्रयोज्यवर्गे निरूपितेऽधुना तत्राधिकारी निरूप्यते।

तत्राधिकारो नाम फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम्। श्राद्धादौ पित्रादेर्ऋत्विजाद्यधिकारव्यावृत्त्यर्थं विशेषणद्वयम्। न चैवं जातेष्टौ पितुः फलभोगाभावादधिकारानापत्तिः। मत्प्रयुक्तप्रत्यवाये करणस्य पूतत्वादिफलकत्वेन पापक्षयफलकत्वाभावादिति वाच्यम्। प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणकर्तृत्वस्यैव विवक्षितत्वात्। जातेष्टिश्राद्धादावपि फलस्यान्यनिष्ठत्वेऽपि तदिच्छाया यजमाननिष्ठत्वादधिकाराविघातः। ऋत्विजामपि यजमानस्य फलं भूयादितीच्छया स्वनिष्ठकर्तृत्वसमानाधिकरणत्वात् अधिकारापत्तिरतः प्रवृत्तीत्युक्तम्। दक्षिणाप्राप्तिर्मे भूयादितीच्छाया एव ऋत्विक्प्रवृत्तिजनकत्वेन यजमानेच्छाया प्रवृत्तिप्रयोजकत्वाभावात्।

अयञ्चाधिकारो विध्याक्षिप्तस्येष्टसाधनत्वसमानाधिकरणस्वकृतिसाध्यत्वस्य लाभस्यादिप्रमाणकः। अयमेव चाधिकारविधिरित्युच्यते। तत्र चाधिकारस्येष्टरूपप्रवृत्तिफलघटितत्वात्तदेवेष्टरूपं फलं भावनायामस्ति न वेति प्रथमं विचार्यते।

वैकल्पिकमङ्गम् । अतस्तद्विकारेषु नैवातिदेशप्राप्तावपौर्वापर्यंत्वमेव । एष वाव प्रथम इति वाक्यविहितज्योतिष्टोमोत्तरत्वबलेनाधाना- व्यवहितोत्तरत्वस्य तेषु कर्तुमशक्यत्वात् । अतश्चाधानानन्तर्यस्य प्रकृत्य- सङ्गत्वेनानतिदेशादपौर्वापर्यकत्वमेवातिदेशिके तेष्वपीति सिद्धं क्रमस्य पदप्रमाणकत्वम् ॥ ५ ॥ ४ ॥ ८ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां पञ्चमस्य

चतुर्थः पादोऽध्यायश्च समाप्तः ।

च पुरुषप्रवृत्तिसिद्धेर्न विधिवैयर्थ्यमपि । सर्वथा यागस्यैव भाव्यते-ष्टसाधनत्वाभावाय प्रवृत्तिप्रयोजकप्रवृत्तिविषयजन्यफलेच्छामात्र-साधिकरणकर्तृत्वरूपाधिकारसिद्धिरिति प्राप्ते ।

न प्रवृत्तिस्वरूपयोग्यत्वमात्र विध्यर्थः । वैयर्थ्यापत्तेः । नापीष्ट-साधनत्वानुमितेर्भ्रमत्वम् । ज्ञानानां स्वतः प्रमाणत्वेन बाधकं विना भ्रमत्वानुपपत्तेः । अतश्चोत्सर्गसिद्धप्रमात्वनिर्वाहार्थं यागे इष्टसाधनत्व विषयोऽपि वक्तव्य एवेति भावनायामिष्टभाव्यकत्वमनपभ्रष्टमेव ।

यदपि कामनायानिमित्तत्वमङ्गीकृत्य विधेरकरणजन्यप्रत्यवा-याद्यपेक्षकत्वेन प्रवर्तकत्वमित्युक्तम् । तन्न । कामनाया प्रवृत्ति-जनकत्वेऽपि निमित्तत्वे प्रमाणाभावात् । स्त्रीकाम इत्यादावपि न तस्यानिमित्तत्वम् । प्रायश्चित्ताकरणे प्रत्यवायान्तरप्रसङ्गात् । अपि तु प्रमाणान्तरसिद्धकामनाजनितप्रत्यवायनाशार्थत्वमेवेति तत्रापीष्ट-साधनत्वापेक्षकत्वमेव विधेः ।

अतश्च सर्वत्रानैमित्तिकस्थले अकरणे प्रत्यवायापेक्षकत्वापेक्षया लाघवादिष्टसाधनत्वमेव विधिना आक्षिप्यत इति तद्वशाद्भावनायां इष्टभाव्यकत्वसिद्धिः । यथा चैव सति नैमित्तिकस्थले पापक्षय-भाव्यकत्वं तथा यावज्जीवाधिकरणे निरूपितम् ।

तच्चेष्टं स्वर्गपुत्रादि स्वर्गकामादिपदैः समर्प्यते । योग्यत्वात् । कामशब्दयोगाच्च । कामना हि स्वरसतः फले, द्रव्ये त्वौपचारिकी । अत एव स्वर्गशब्दोऽपि श्रुतिस्मृतिपुराणादिवशाद्दुःखासम्भिन्नसुख-योग्यदेशविशेषवाची । आकृत्यधिकरणन्यायेन वा तादृशसुखमात्र-वाची । न तु चन्दनादिवाची । तत्रत्याधुनिकप्रयोगस्त्वौपचारि-

तत्र भावनायाभाव्यापेक्षायां पदश्रुत्या धात्वर्थस्यैव सर्वत्र भाव्यत्वं न स्वर्गादेः। अपि तु तस्य साधनत्वस्यैव योग्यत्वात्। पश्वादिपदादेरिव स्वर्गशब्दस्यापि चन्दनं स्वर्गं इत्यादिप्रयोगात् द्रव्यवाचित्वमेव। सुखविशेषदेशविशेषवाचित्वयाचकस्यान्यपरत्वाच्च। कामशब्दस्तर्गमकामनानुवादः। अथवा स्वर्गकामशब्दः कर्तृविशेषणमेव यागाङ्गत्वेन विदधद्विशेषणीभूत कामनामपि तदङ्गत्वेन विधत्ते इति न कश्चिद्विरोधः। न च विधिश्रुतिविरोधादिष्टभाव्यकत्वावगमः। विधेः प्रवृत्तिजननस्वरूपयोग्यत्वस्यैव वाच्यत्वेन फलोपधानस्यत्वाभावात्* वृत्तिविरहेऽपि अरण्यस्थदण्डवद्विधेः प्रवृत्तिजनकत्वोपपत्तेः। न हि फलोपहितप्रवृत्तिजनकत्वं विध्यर्थः। विधिशब्दश्रवणेऽपि केषाञ्चिदप्रवृत्त्यदर्शनात्। अत एव प्रवृत्तिविषयस्येष्टसाधनत्वाक्षेपकत्वमपि विधेर्न प्रामाणिकम्। यदि तु प्रवृत्तिस्वरूपयोग्यत्वमात्रोक्तौ वाक्यस्य वैयर्थ्यापत्तिः शङ्क्येत, ततो यागस्य समासपदश्रुत्या भाव्यत्वावगमेऽपि यागे अप्रसमासाधारणप्रवृत्तिकारणेष्टसाधनत्वज्ञानस्यैवाक्षेपात्। अस्मात्मकेष्टसाधनताज्ञानादेव प्रवृत्तिसिद्धेर्नेष्टसाधनताऽऽक्षेपकत्वम्।

अथ वा, अस्तु स्त्रीकाम प्रायश्चित्त कुर्यादिति वत्स्वर्गकामना अपि निमित्तत्वम्। ततश्च निमित्ते[1] नैमित्तिकाकरणे प्रत्यवायमात्र, न तु करणे किञ्चिदिष्टम्। अकरणे प्रत्यवायमियैव

---

* इत्थमेव पाठः सर्वत्र। स च लेखकप्रमादजः। फलोपधानस्यैव्या भावात्,—इति तु भवितुमुचितम्।

(१) निमित्ते सतीत्यर्थः।

स्वर्गकामत्वाविशेषाच्चेतनमात्रस्याधिकारः । न च तिरश्चां स्वर्गादिकामनाऽसम्भवः । परकीयेच्छाया अप्रत्यक्षत्वेन तदभावनिश्चयानुपपत्तेः । श्येनादीनामप्युपवासादिदर्शनेन तदनुमानाच्च । न चाङ्गकरणासामर्थ्यादनधिकारः । शक्यमात्रस्यैव करणोपपत्तेरिति प्राप्ते ।

भावनाया अन्वयाम्बयोत्तरं यागादिविषयत्वेनाधिकारिकल्पनात्पूर्वावगतसाङ्गप्रधानभावनाऽनुष्ठानसमर्थ एवाधिकारी । अतस्त-समर्थत्वादविद्वत्त्वादद्रव्यत्वाच्च तिरश्चामधिकारः । विष्णुक्रमणाद्यसमर्थत्वाच्च न पंग्वन्धबधिरमूकादीनाम् । देवादीनां तु विग्रहाद्यभावादेव नाधिकारः । ऋष्यादीनां तु अनादित्वात्संसारस्य* प्रवरवरणादौ आर्षेयान्तरस्यापि सम्भवादधिकारोऽस्त्येवेति भाष्योक्तमनधिकारप्रतिपादनमनादर्त्तव्यम् ॥ ६ ॥ १ ॥ २ ॥

लिङ्ग ॥ क्रतुषु पुंस एवाधिकार उत स्त्रिया अपीति चिन्तायाम् ।

स्वर्गकाम इति पुंलिङ्गश्रवणात्पुंस एव । न ह्रीदमधिकारिविशेषणम् । कर्तृसमानाधिकरणत्वेन तद्विशेषणस्याश्रुतत्वादधिकारिविशेषकत्वानुपपत्तेः । अतश्चाग्न्याधेयपाशुकत्ववदेव पुंस्त्वस्याप्यविवक्षा नानुपपन्ना । किञ्च अद्रव्यत्वादपि स्त्रिया नाधिकारः ।

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्यैते† तस्य तद्धनम् ॥

* अनादित्वात् संसारस्येत्यधिकः पाठ आदर्शपुस्तकेषु वर्तते । तत्राभिप्रेतोऽयम्,—'अनादि हि कालोऽपारं संसारस्तत्त्वात्",—इति ।

† इत्थमेव पठन्ति मन्वादयः । आदर्शपुस्तकेषु [illegible]"—इत्यमरकोषोक्त पाठः ।

कत्वात्। अत एव स्वर्गकामादिपदमपि लक्षणया स्वर्गपरं, प्रथमा च कर्मत्वपरेति भावनान्वयोपपत्तेर्नान्वयोपसर्जनत्वेन स्वर्गस्य तदन्वयाशङ्का(१)।

स्वर्गकामोऽधिकारित्वेनान्वीयेत* इति स्वर्गादिवाचकद्वितीयान्तपदाध्याहारेण तदन्वय इति केचित्। तन्न। फलापेक्षायाः प्राथमिकत्वात्। लक्षणाया अध्याहारापेक्षया लघुत्वाच्च। एवञ्च बलवत्तरविधिश्रुत्याद्यनुरोधेन स्वर्गादेरेव भाव्यत्वावगतेः सामान्यप्रवृत्ता पदश्रुतिरपि यागादेः करणत्वमेव लक्षणया प्रतिपादयतीति सिद्ध उक्तरूपाधिकारः। अत्र चोक्तविधेच्छाफलान्यतरसमानाधिकरणं कर्तृत्वं अधिकार इति बोध्यम्। तेन नित्यस्थले पापक्षयेच्छायाः प्रवृत्तिप्रयोजकत्वाभावेऽपि नाधिकारविघातः॥ ६॥ १॥ १॥

फलार्थत्वात्॥ सिद्धेऽधिकारे स केषामिति चिन्त्यते। तत्र

* इत्थमेव प. ठ. सर्व्वत्र। नान्वीयते इति तु समीचीनं प्रतिभाति।

(१) इदमत्र बोध्यम्। विधिवाक्येषु भावनैव विधिप्रत्ययार्थः। भावना चोत्पादना भावयितुर्व्यापारः। भावना च किं, केन, कथमित्यंशत्रयमपेक्षते। तत्र किमिति फलाकाङ्क्षा। सैव भाव्याकाङ्क्षेत्युच्यते। फलस्य भाव्यत्वात्। केनेति करणाकाङ्क्षा। करणस्योपकारकं इतिकर्त्तव्यतापरनामधेयं यत्, कथमिति तस्याकाङ्क्षा। तत्र स्वर्गकामपदेन लक्षणयाऽवगतः स्वर्गः भाव्यत्वेनान्वेति। स्वर्गकामपदोत्तरवर्त्तिनी प्रथमा कर्मत्वमवगमयति। सुपां सुलुगित्यादिना द्वितीयैकवचनस्य स्वादेशसम्भवात्। भावार्थाः यागादयः करणत्वेनान्वियन्ति। प्रयाजाद्यङ्गकलापश्चेतिकर्त्तव्यतात्वेन। तथा च प्रयाजादिभिरुपकारं सम्पाद्य यागेन स्वर्गं भावयेदित्यर्थः पर्यवस्यति। इत्थमर्थभावनाबोधः। शब्दभावनाबोधस्तु प्रकृतानुपयोगादिह न प्रदर्शितः।

यत्तु भार्या पुत्रश्चेति वचनं, क्रीतत्वादिवचनं च तत्, न स्त्री स्वातन्त्र्यमर्हतीति वचनान्तरानुसारादस्वातन्त्र्यपरम् । मौल्यदानं त्वदृष्टार्थम् । कन्यायाः कन्यात्वातिरिक्तस्वत्वाभावस्य वक्ष्यमाणत्वेन तद्दानस्याप्यौपचारिकत्वाच्च । आत्रेयी चात्रिगोत्रोत्पन्ना न त्वात्रस्य गर्भा । यद्यपि च स्त्रिया काचित्ककर्माधिकारे भवति गमकान्तरे जपादिसकलवैदिककर्मानधिकारात् । अविज्ञातलिङ्गदर्शनं पुंवधे प्रायश्चित्तविशेषविधानार्थम् । तस्माल्लिङ्ग स्त्रिया अप्यधिकारः ॥ ६ ॥ १ ॥ २ ॥

स्ववतो ॥ सिद्धे दयोरधिकारे किं दम्पती पृथक् पृथक् यजेयातामुत सहेति चिन्तायाम् । स्वर्गकामपदोपात्तस्यैकत्वस्य पुंस्त्ववदविवक्षितत्वेऽपि आख्यातोपात्तस्य तस्य गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकस्य प्रयोग इति प्राप्ते ।

प्रत्येकप्रयोगे अन्यतरकर्तृकावेक्षणान्वारम्भादिपदार्थलोपेन वैगुण्यापत्तेरन्यतरेणान्यतरस्य परिक्रयादिनोपादाने च फलभोक्तृत्वाभावात् स्वामित्ववाचिपत्नीयजमानशब्दप्रयोगानुपपत्तेरङ्गमात्रकन्यायं सहैव प्रयोगः । न हि आज्यावेक्षणादीनां कर्तृसंस्कारकत्वं येन तत्तत्प्रयोगे व्यवस्था लभ्येत । क्रतुधर्मत्वात्तूभयकर्तृकमवेक्षणादय अदृष्टविधया क्रत्वङ्गम् ।

यत्र त्वन्यतररोगनिष्टत्त्यर्थमेव इष्ट्यादिप्रयोगस्तत्रेतरस्य पत्नीत्वाद्यभावेऽपि गुणलोपे चेति न्यायेन परिक्रयाद्युपात्तेतरकर्तृकाज्यावेक्षणेऽपि न सर्वत्र तथा कल्पनायां प्रमाणमस्ति । स्वामित्वस्य पुत्रफलेष्वपि पत्न्यादिसमितत्वात् धर्मे चेत्यादिवाक्यपर्या-

इति वचनात्। शतमधिरथं दुहितृमते*ऽद्यादार्षे विवाहे गोमिथुनमित्यादिना पित्रा भर्त्रे मौल्येन दानवद्विक्रीतत्वाच्च। अत एव गर्भिण्यविज्ञातेन हतेन भ्रूणहेति यज्ञसाधनपुङ्गर्भहननशङ्कया भ्रूणपदवाच्ययज्ञहन्तृत्वलिङ्गमवकल्पते। अन्यथा स्त्रीत्वेन विज्ञातेऽपि यज्ञहन्तृत्वाविशेषात्। तथाऽऽत्रेयीं हत्वा भ्रूणहेति लिङ्गम्। आत्रेयी सगर्भा। अतः पुमानेवाधिक्रियत इति प्राप्ते।

यद्यपि कर्तृविशेषणं पुंस्त्वं, तथापि प्रमाणान्तरेण स्त्रिया अपि अधिकारावगतेर्विधिलाघवानुरोधेन साधुत्वार्थमवयुत्यानुवाद एव पुंस्त्वम्। यथा वसन्ते ब्राह्मण इत्यादौ[1]। प्रकृते त्वनपेक्षितत्वाच्चास्य कर्तृविशेषणत्वमपि तु योग्यत्वादधिकारिविशेषणत्वमेव। ततश्च तस्य फलं प्रत्यपि प्राधान्यादुद्देश्यत्वेन तद्विशेषणाविवक्षा।

वस्तुतस्तु। प्रथमापेक्षितत्वात्स्वर्गकामादिपदस्य फलपरत्वमेवेति न पुंस्त्वस्य विवक्षाप्रसक्तिः। न चाद्रव्यत्वम्। कर्त्तनादिभिरर्जनसम्भवात्। पित्रादिदत्तस्य दायस्य वा स्मृत्युक्तत्वाच्च। धर्मे चार्थे च कामे च नातिचरितव्येति सत्याऽर्जितस्याप्युभयसाधारणत्वाच्च। अपदा वा एता परस्त्रीणामैश्वर्यमवरुन्धत इति स्मरणाच्च। सपत्नी पत्या सुकृतेन गच्छतामित्यादि मन्त्रवर्णात्पाणिग्रहणाद्धि सहत्वं कर्मसु, तथा पुण्यफलेष्विति स्मृतेश्च पत्न्या अप्यधिकारः। पत्युर्नो यज्ञसंयोगे इति सूत्रे पत्नीशब्दस्य स्वामित्वाभावेऽनुपपत्तेश्च।

---

* दुहितृमते,—इत्यसमीचीनो लेखकप्रमादजः पाठः आदर्शपुस्तकेषु।

---

(१) आधाने दम्पत्योः सहाधिकारस्याप्युपदेशेन बहुमात्रत्वात् वसन्ते ब्राह्मणोऽग्निमादधीत इत्यत्र ब्राह्मण इति पुंस्त्वमवयुत्यानुवादो यदीयर्द्ध।

वाधानेऽधिकारिणौ, एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता-मितिवत् ।

न चात्र कुक्कुटानानय मिथुनं करिष्याम इतिवत् पुमान् स्त्रियेत्याद्यनुशासनानुरोधेन स्त्रीसहितीयतया विरूपैकशेषस्याप्युपपत्तेर्वाक्यस्य चौमविधिमात्रपरत्वेनाप्युपपत्तावुत्पत्तिशिष्टकर्त्रैकत्वबाधानुपपत्तिरिति वाच्यम्। सरूपैकशेषस्य सम्भवे लक्षणाऽऽपादकविरूपैकशेषस्यान्याय्यत्वात् ।

तथा हि। श्रौकारस्तावद्द्वित्वं पुंस्त्वं चाभिधत्ते इत्यरुणैकहायनीवद्द्वित्वावच्छिन्ने पुंस्त्व पुंस्त्वावच्छिन्ने च द्वित्वमिति परस्परनियमात् पुंद्वयप्रतीतिः सुलभा । विरूपैकशेषे तु पितरावित्यादौ मातृत्वादेः कुक्कुटौ इत्यादौ स्त्रीत्वस्य च प्रत्यायकाभावाल्लक्षणा श्रावश्यकीति तस्मात्तो दौर्बल्यम् ।

न च भवन्मतेऽप्युपक्रमस्थ-चौमपदे मलिनत्वसादृश्याद्गौणी ढुघु शब्दे इत्यनुसाराद्वा युवयोग इति जघन्यवृत्त्याश्रयणमनुवादवैयर्थ्यमुत्पत्तिवाक्यस्यैकवचनस्य च साधुत्वमात्रार्थत्वमित्याद्यनेकदोषत्वादवस्थमिति वाच्यम् । चौमवाक्य एवोभयविशिष्टाधानविधानाङ्गीकारात् । वसन्तादिवाक्ये तु ब्राह्मणादिकर्तृकत्वे निमित्ते वसन्तादिकालविधानम् ।

अतएव ब्राह्मण इत्येकत्व पुंस्त्व चाविवक्षितम् । आदधीतेत्यपि च ब्राह्मणो यदि शूद्रसहित आदधीत तदा वसन्त इत्येव कादाचित्कब्राह्मणैकत्वादनुवाद. । तस्माद्द्वौ पुमांसौ सस्त्रीकावधिकारिणौ ।

यत्तु भाष्यादौ सरूपैकशेषसाधक प्रमाणान्तरमुपन्यस्त, द्वन्द्वाप-

योषनया च तयो सहृष्टद्रव्यत्वादिभागप्रतिषेधाच्च सहैव प्रयोग । अतएव उभयस्वत्वस्य सहृष्टत्वाद्द्रव्यत्यागे दक्षिणादानादौ चोभयोरेव कर्तृत्वम् ।

यत्तु भाष्ये द्वादशशते यट्पञ्चाशदेकेनापरेणापि तावदेवेत्येव विभाग कथित । स द्वादशशतस्यैव विहितत्वात्तचाप्युभयो सहृष्टत्वोपपत्तेरुपेक्षितम्*। यदपि तत्कारणात् पुंस एव त्यागेऽपि कर्तृत्व तस्यास्त्वनुमतिद्वार तदिति केषा चिन्मतम् । तदनुमते फलसम्बन्धाश्रवणात्तद्वारकत्वे प्रमाणाभावेन पूर्वाधिकरणव्युत्पादिताधिकारभङ्गापत्तेरुपेक्षितम् ।

यत्त्वाख्यातोपात्त एकत्व महाधिकारे नावकल्पत इति । तन्न, एकवचनश्रवणादेव दम्पत्योर्व्यामिज्याष्टपेकस्यैव कर्तृत्वस्य कल्पनात् । इतरथा कर्तृभेदात्त्वचवह्रवचनाद्यापत्ते । अतएव क्रियाऽऽश्रितयो कर्तृत्वतदाश्रययोर्मध्ये आवश्यकत्वात्कर्तृत्वाश एव शाब्दत्वसिद्ध्यर्थं करणामङ्गीकृत्य तत्रैव पार्थिक एकत्वाद्यन्वय । चौमे वसानाविप्यादौ लगत्या क्वचित्तदाश्रयेऽपि ।

अत्र च कर्तृत्व कृत्याश्रयत्वसमनियत अखण्डोपाधिरूप द्रष्टव्यम् । न तु कृत्याश्रयत्वमेव । तस्य प्रत्यात्म कृतिभेदेन भेदात् व्यासज्यवृत्तित्वानुपपत्ते । तस्मात्सह प्रयोग ॥ ६ ॥ १ ॥ ४ ॥

ह्याधान ॥ आधानप्रकरणे, चौमे वसानावग्निमादधीयातामिति श्रुतम् । तेन चाधाने कर्तृत्वद्वित्वविधानात् द्वौ पुमांसौ सस्त्रीका-

* इत्यमेव पाठ सर्वत्र । उपेक्षित इति तु समीचीन प्रतिभाति ।

† वसोमसि,—इत्यशुद्ध पाठ आदर्शपुस्तकषु । भाष्यस्थ समीचीन-पाठ एवोपरि विन्यस्त ।

तरयोग एव द्वन्द्व । अतएव चार्थानामनेकत्वेऽपि इतरेतरयोगरूप-चार्थे द्वन्द्व इति चार्थे द्वन्द्व इति सामान्यसूत्र महाभाष्यकारादिभिर्विशेषपरतया व्याख्यातम्। अतश्च युगपदधिकरणतावाचि-द्वन्द्वापवादत्वादेकशेषस्यापि तदाचित्वप्रतीतेर्वर्त्तमानावियच पुदय-प्रतीतिरिति ।

नन, विरूपैकशेषाङ्गीकारेऽपि स्त्रीमहिसपुंस पुंसमहितस्त्रियाश्च युगपदभिधानोपपत्ते । न चैव पुदय स्त्रीदय चेति चतुष्टयापत्ति ।, धवखदिरदयवत् स्त्रीपुंद्वयोपपत्ते ।

वस्तुतस्तु कात्यायनोक्त युगपदधिकरणतावाचित्व पतञ्जलिनैव दूषितम्। तस्यायमाशय । धवपदे खदिरपदे च लक्षणायां प्रमाणाभावात् । इतरेतरयोगस्य च शब्देनैव तात्पर्ये सति बोधोपपत्ते । अतएव धव च खदिर चेत्यादौ तात्पर्यानुरोधेन धवखदिरवृत्ति-व्यासक्तकर्मत्वे लब्धेऽप्यपि बोध्यम्। द्वन्द्वे तु विभक्तेरेकत्वादेश्चेतरेतर-योगो लक्षणां विनैव निरपवाध । यत्तु अमित्रयोर्वरुणयोरिति वेदे क्वाचित्क विग्रहप्रदर्शनम् । तच्छान्दसम् । अतएव विभक्तेर्व्यासज्य-वृत्तिधर्मपरत्वे द्वन्द्व एव तादृशस्थले तात्पर्यग्राहक इत्यपि बोध्यम्।

किं च द्वन्द्वापवादत्वेऽप्येकशेषस्य न तदुत्तरविभक्त्यर्थाभ्यासज्यवृत्ति-धर्मपरत्व वचनान्वयस्य विभक्त्यर्थान्वयोत्तरकालीनत्वेन तत पूर्वमेक-शेषत्वग्राहकप्रमाणाभावात् ।

वस्तुतस्तु एकशेषानुशासनमपि परिभाषामात्रमेव सरूपद्वन्द्व-निराकरणार्थम् । एकप्रातिपदिकार्थस्यैव द्विवचनादिबलेनानेकत्व-प्रतीत्युपपत्ते । विरूपैकशेषे तु तात्पर्यग्राहकानुरोधेनानुशासनिकी

वादत्वादेकशेषस्य द्वन्द्वार्थं एवैकशेषार्थं इत्यवगम्यते । द्वन्द्वस्य युगपदधिकरणे द्वन्द्वो भवतीति कात्यायनस्मरणाद्युगपदधिकरणता वाची । अधिकरण शब्दप्रतिपाद्योऽर्थ । स यत्रानेकोयुगपदेकेन पदेन बोध्यते, तत्र द्वन्द्व ।

तथा च धवखदिराविव्यत्र धवपद लक्षणया खदिरसहितधवपरम् । इतरसहितधवपरमेव वा । इतरन्तु खदिरपदान्निर्णीयते । एव खदिरपदमपि । सेय युगपदधिकरणता । इतरेतरयोगोऽप्ययमेव । अस्मिन्नेव चार्थे द्वन्द्व । चकारस्य हि चत्वारोऽर्था समुच्चयान्वाचयेतरेतरयोगसमाहारा । तत्र विभक्त्यर्थान्वये परस्परनिरपेक्षत्वेऽपि क्रियान्वये दण्डचक्रादिवत्परस्परसापेक्षत्वे सति समस्त समुच्चय ।

अतश्च नेतरेतरयोगेन विकल्पे अन्वाचये अतिव्याप्ति । यथा भहरहर्नयमानोगामश्व पुरुष चेत्यादौ । अन्वाचये लेकस्य प्रयोजकत्वमपरस्य नेति न साम्यम् । यथा काशान्याहर शाकञ्चाहरेति । इतरेतरयोगे तु व्यासज्यवृत्तिविभक्त्यर्थे परस्परसाहित्येनान्वय । यथा अग्निश्च सोमश्च देवतेत्यादौ ।

अत्र धव च खदिर चेत्यादावितरेतरयोगविवक्षाया युगपदधिकरणवचनता आवश्यकी । अन्यथा प्रत्येकविभक्त्यर्थान्वयेनेतरेतरयोगस्य समुच्चयाद्भेदानापत्ते । अतएव निरपेक्षयोरेकक्रियान्वयित्व समुच्चय इति तन्त्ररत्नोक्तमपास्तम् । अमावास्याया पौर्णमास्या वा यजेतेति एकवाक्योक्तविकल्पेऽतिव्याप्ते ।

इतरेतरयोगसमाहारयोस्तु साहित्यस्य पदार्थान् प्रति गुणत्वप्रधानत्वकृतोविशेष इतरेतरयोगत्व तुल्यम् । एषु चार्थेषु इतरे-

कर्तृसंस्काराश्च ते पाक्षिककर्तृत्वयोरविशेषादुभयोरपि। तत्रापि यत्र योक्त्रेण पत्नीं सन्नह्यति मेखलया यजमानमित्यादौ प्रतिनियतनिर्देश, तत्रार्धमन्तर्वेदि इति वक्ष्यमाणया पुंस्त्वादेरपि उद्देश्यगताभावाङ्गीकारेण सत्यप्युभयोरेकापूर्वसाधनत्वे व्यवस्थैव। विशेषनिर्देशाभावेऽपि च यत्र केशश्मश्रु वपत इत्यादौ केशश्मश्रुणो शरीरसंस्कारार्थवपन प्रति उपादेयत्वेन द्वन्द्वावगतसाहित्यविवक्षा, तत्रापि पत्न्या श्मश्र्वभावेन न केशाना वपनम्। न हि तत्केशश्मश्रुसंस्कारक तेषामनुपयुक्तत्वात्। अतस्तदपि यजमानस्यैव। अतएव यजमानानेकत्वे पत्न्यनेकत्वे च द्विविधस्यापि प्रत्येक करणम्।

यत्र तु कत्वर्थेष्वाज्यावेक्षणादिषु प्रतिनियतो निर्देशस्तत्रोपादेयविशेषणस्य विवक्षितत्वात्तेन तेन प्रतिनियतेनैकेन च कर्त्रा करणम्। अतएव पत्न्यनेकत्वे सन्निहितया ज्येष्ठयैव। यत्र तु याजमानमिति विशेषसमाख्यया कर्तृनियमस्तत्र यजमानप्रातिपदिकस्योभयपरत्वोपपत्तेर्विरूपैकशेषाङ्गीकारेण द्विवचनबहुवचनान्तविग्रहेण चोभयोरपि वैकल्पिककर्तृत्वमिति प्राप्ते।

यजमानशब्दस्य पुंस्येव प्रचुरप्रयोगाद्विरूपैकशेषद्विवचनान्तादिविग्रहस्य चासति तत्तात्पर्यग्राहकप्रमाणे अनाश्रयणीयत्वात्प्रत्युत तदाश्रयणे तद्विषये शक्तावैपरीत्यकल्पनापत्ते प्रसिद्धज्ञानवन्त पुमांसमादायैव समाख्योपपत्तेस्तस्यैव कर्तृत्वम्। यद्यपि स्वाध्यायविधौ लिङ्गविशेषानुपादानेन स्त्रियो व्यावृत्तिप्रतीतिस्तथाप्युपनयनवाक्ये तदुपादानात्तत्र च तस्योद्देश्यविशेषणत्वेऽपि अष्टवर्षत्वादिवदेव तमध्यापयीतेत्यत्र तच्छब्देन पुंस्त्वोपादानादध्ययने तद्व्यावृत्ति।

औकारे नायणेति शेष । अतस्त्क्रिया मकृदेकगेषस्यैवाग्नीकारात्पु-
ह्याधिकार इति प्राप्ते ।

वसन्तादिवाक्ये आदधीतेत्येकवचनस्य पाक्षिकानुभाटत्वापत्ते-
र्ब्राह्मणद्वयकर्तृकाधाने वसन्तप्राप्त्यनापत्तेरन्यसहितपदाध्याहारापत्तेश्च
वसन्तादिवाक्येष्वेवाधानविधानम् । यजमानवाक्ये तु एककर्तृविशिष्टा-
धाने कर्तृत्वदित-क्षौमोभयविधये गादानुगामिकी लक्षणामङ्गी-
कृत्य वर विकृपैकशेषोऽधिष्ठानलक्षणया तस्मिन्दित्वान्वयोऽपि
पाक्षिकोयुक्त समाश्रयितुम् ।

अतएव तत्र क्षौमसाच वसनक्रियोद्देशेन विधीयते । युक्तश्च
ह्युपात्तभावनायामपि कारकसम्बन्ध । विधायकत्वाद्धातिपर
एव प्रत्यय उपक्रमस्य क्षौमपदे श्रुत्यर्थलाभाय च विग्रहष्टकार्थस्यापि
विधायक । अन्यत्तु सर्वं प्रकरणप्राप्तत्वादनूद्यते ।

यद्यपि पोत्पत्तौ पुत्स्वश्रवणात् स्त्रियमादाय द्वित्व न प्राप्यते,
तथापि विशिष्टगौरवपरिहाराय यजमानवाक्ये वाक्यभेदपरिहाराय
धर्मे चेत्यादिवाक्यसङ्कोचपरिहाराय च ब्राह्मणादेरधिकारित्वेनैवा-
न्वयाग्नीकारात्तस्य चोद्देश्यत्वेन तद्विशेषणपुन्स्वस्याविवक्षोपपत्ते स्त्रिय-
मादाय द्वित्वप्राप्तविधात । द्विवचन चाचाधिष्ठानानेकत्वमात्र
परम् । तेन पत्न्यनेकत्वेऽपि न कश्चिद्विरोध । अतएव पुमान्
स्त्री सहितौ आधानेऽधिकारो ॥ ६ । १ । ४ ॥

तथा ॥ स्थिते स्त्रिया सहाधिकारे यच तावत्स्वत्वरयामन्यप्रदान
दर्शगादामादि च दाभ्या कार्यमित्युक्तमेव । अतएव वरणादिद्वारा
भाविशेष्यपि उभयोरपि प्रयोजककर्तृत्वम् । ये च कलिनस्कारा

अत्र हि अध्यापनस्य वृत्त्यर्थत्वेन रागप्राप्तत्वाल्लक्षणया प्रयोज्य-व्यापाररूपाध्ययन एव कर्त्तृविधिः। अतएवोपनयनवाक्ये तत्संस्कार-कत्वेनाचार्यकर्त्तृकमुपनयनं माणवककर्त्तृकमुपगमनमेव वा नियम्यते। तेन आचार्यसिद्धेरानुषङ्गिकत्वात्तामादायैवात्मनेपदोपपत्तेर्नाचार्य-करणे नयतेर्धातोरात्मनेपदं भवतीत्यनुशासनबलादुपनयनस्याचार्या-र्थत्वं तस्य रागप्राप्तत्वेन विधिवैयर्थ्यात्।

अतः उपनयनविधौ लिङ्गस्याविवक्षायामप्यध्ययने तस्य विव-क्षितत्वात् न स्त्रियोऽधिकारः।

स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरः। इति

प्रतिषेधाच्च तथा। अतश्च ज्ञानाद्यपेक्षत्वनाभिया यजमानस्ये-दमित्येव विग्रहात् तस्यैव तत्र कर्त्तृत्वम् ॥ ६ ॥ १ ॥ ६ ॥

चातुर्वर्ण्यं॥ यद्यपि कामश्रुतयोऽविशेषप्रवृत्तास्तथापि तासां लाघवायाधानाध्ययनविधिसिद्धाग्निविद्योपजीवकत्वस्य द्वितीये साधि-तत्वाच्छूद्रस्य तदपेक्षत्वनानुपपत्तेस्तस्य वेदाक्षरश्रवणप्रतिषेधाच्चाप-शूद्राणां त्रयाणामेवाधिकारो न शूद्रस्य अग्निसाध्ये तदसाध्ये च वैदिके कर्मणि। द्वितीयसिद्धस्यैव प्रयोजनाधिकरणमिति नातो-यास्य पूर्वपक्षादरः।

अतएव सर्वत्र वेदे त्रयाणामेव वर्णानामनुकीर्त्तनम्। यत्तु पयोव्रतं ब्राह्मणस्येति वर्णत्रयमनुकीर्त्य मस्तु शूद्रस्येति कीर्त्तनं, तत् मस्तु शूद्रस्यानधिकारिणो भक्ष्यमुचितं न तु ब्राह्मणादेरिति तन्निन्दया पयआदिस्तुतिः॥ ६ ॥ १ ॥ ७ ॥

त्रयाणां॥ अग्निविद्ययोरिव द्रव्यस्यापि प्रतिग्रहादिपुरुषार्थो-

भार्गवच्यावनेत्यादिविशेषरूपेण वरणपक्षेऽपि मनुवत्पक्षवदेव एकाार्षेयपोरस्त्यधिकार इति स्पष्टतरमतं बोध्यम् ॥ ६ ॥ १ ॥११॥

वचनात् ॥ त्रयाणां वर्णानामाधानं विधाय, वर्षासु रथकार आदधीतेति श्रुतम्। तत्र विद्याक्षेपशक्तिकल्पने गौरवापत्तेर्ब्राह्मणादीनामेव रथकरणे निमित्ते आधानोद्देशेन वर्षाविधिरिति प्राप्ते। रथकारशब्दस्य प्रसिद्धिबलेन सौधन्वनापरपर्याये जातिविशेषे रूढत्वात्तस्यैवाय कालविशिष्टाधानविधिः। न च तत्रापि योगेनैवोपपत्तौ रूढिकल्पनायां प्रमाणाभावः। रथमकुर्वत्यपि सौधन्वने प्रयोगेण तद्बाधात्। न च प्रोक्षणीशब्दवद्योग्यतामात्रेण तदुपपत्तिः। योग्ये ब्राह्मणादावप्रयोगेण रूढिकल्पनाया आवश्यकत्वात्। रथकरणयोग्यतावच्छेदकमनुष्यत्वस्य कादाचित्कत्वाभावेन निमित्तत्वानुपपत्तेः रथकारपदवैयर्थ्यप्रसङ्गाच्च। अतः प्रसिद्धिबलात्सौधन्वन एव रथकारः। सुधन्वा च,

व्रात्यात्तु जायते वैश्यात्सुधन्वाऽऽचार्य्य एव च।

इत्यादिनोक्तस्त्रैवर्णिकात्किञ्चिन्न्यूनो वेदानधिकृतो जातिविशेषः। यद्यपि च रथकारपदं,

माहिष्येण करण्यां तु रथकारः प्रजायते।

माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्।

शूद्रायां करणो वैश्यात्।

इत्यनेनोक्तेऽपि रूढम्। तथापि ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्यादध्यादिति वाचनिके मन्त्रे ऋभुशब्दप्रयोगात्तस्य च सौधन्वना ऋभवं इति मन्त्रान्तरे सामानाधिकर-

अथर्षेके मनुवदित्येवैकार्षेयं सार्ववर्णिकं प्रतिदिशन्तीति वचनान्तर-विहितमनुवत्पक्षाश्रयण एव ।

तदेतद्भगवतो जैमिनेर्मतं सूत्रकारैरपि अभ्युपगतम् । तथाच कात्यायनः । मनुवदिति पुरस्तादर्वाञ्चि त्रीणि इति । आपस्तम्बोऽपि । त्रीन्यथर्षीन्मन्त्रकृतो वृणीत इति । तेषु पक्षान्तराण्युक्तानि । यावन्तो वा मन्त्रकृत इति कात्यायनः । अपि चैकं द्वौ त्रीन् पञ्च वृणीते न चतुरोवृणीते न पञ्चातिवृणीत इत्यापस्तम्बः । यावन्तः स्युः परस्परं प्रथममित्याश्वलायनोऽपि । तेषां चायमभिप्रायः । आर्षेयं वृणीत इत्ययं विधिरितरेऽनुवादास्तत्तुल्यार्थाः ।

अतश्च त्रीन्वृणीत इत्यप्यनुवाद एव । ईदृशोऽयं वरणसामान्य-विधिर्यत् तत्तदार्षेयं प्रति तत्तत्संख्याकवरण प्राप्त इति स्तुतिः । इतरथा भवन्मतेऽपि सामान्यवाक्येनैव वरणविधिमभ्युपगम्यार्षेक-वाक्यतालाभात्पञ्चार्षेयस्यैवाधिकारापत्तेस्त्र्यार्षाणामप्येतेषां श्रवणु-त्यानुवादत्वापत्तिः । न चैवं चतुःषडादीनामपि वरणप्रसक्तौ तन्निषेधेन वाक्यभेदापत्तिः । एकद्वित्रिपञ्चार्षेयाणामेव प्रवराध्याये समाधानेन चतुःषडादेरप्रसक्तेः । अतोऽस्मिन्नपि पक्षे वाक्यभेदाद्यना-पत्तेरेकद्व्यार्षेययोरधिकारः, पञ्चार्षेयस्य च पञ्चानां वरणं न विरुद्धमिति ।

यत्तु द्व्यामुष्यायणानामुभयतः कुलद्वयेऽपि वरणविधानादस्ति चतुःषडादीनां प्रसक्तिरिति । तन्न । आश्वलायनेन द्व्यामुष्यायणा-ननुक्रम्य, तेषामुभयतः प्रवृणीते एकमितरतो द्वावितरतः द्वावेकत-स्त्रीनितरत इति आवश्यकश्रुत्यन्तरमूलकेनैव तन्निषेधात् । अतो-

ऽनिर्दिष्टत्वाद्धौधन्वन एवात्र रथकारपदेनाभिधीयते । अतश्च तस्याविद्वत्त्वाद्विद्याधिपन्त्वावश्यायवविषयमङ्गीकृत्यापि कर्तृकालोभयविशिष्टमाधानान्तरमेव विधीयते । सर्वाधानेषु च प्रकरणात्साधारण्येनैव धर्मविधानम् ।

यद्यपि च विद्याऽभावादस्योत्तरक्रतुष्वनधिकारस्तथाप्याधानमात्रस्यार्णिभाव्यलौकिकाग्निद्युपकं कल्प्यस्वर्गफलं सधर्मकमनुष्ठेयम् । एवं चाहवनीयादेरनुपयोगादभावेन तद्योन विहितानां नक्तं गार्हपत्यमादधातीत्यादीनां धर्माणां लोपेऽप्येकस्मिन्नेव कुण्डे स्थण्डिले वा चिषु वा तेष्वन्याधानं इतराङ्गयुक्तं कार्यमिति तन्त्ररत्नाभिप्रायः ।

मम तु प्रतिभाति । नास्याधानस्यार्थकर्मत्वं, प्रमाणाभावात् । अग्निमिति द्वितीयान्तपदे लक्षणादेरावश्यकत्वे रथकारपदे योगाङ्गीकारस्यैव न्याय्यत्वाच्च । अपि त्वाहवनीयाद्युत्पादकत्वमेव । न च तेषामनुपयोगः । अविद्वत्तया क्रत्वधिकाराभावेन तत्रानुपयोगेऽपि आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति वचनविहिते दाहे उपयोगसम्भवात् ।

न चायं दाहः कर्मोपयुक्ताहिताग्निशरीरप्रतिपत्त्यर्थो येन कर्माभावेनाभावः शङ्क्येत । तथात्वे आहिताग्निपदेनाधानस्यैवोपस्थितेस्तदङ्गस्यैवापत्तौ क्रत्वङ्गत्वानापत्तेः । न चेष्टापत्तिः । तथात्वे प्रतिपत्तिं विना आधानफलाहवनीयादेरनिष्पत्त्यापत्तेः । अतः फलश्रवणादर्थकर्मैवेदमिति युक्तमाहवनीयादेरुपयोगः । पवमानेष्ट्यङ्गभूतपात्रभावाच्च यज्ञपात्रसम्बन्धेऽपि न क्षतिः । अतएव पवमानेष्ट्य-

# अथ षष्ठोऽध्यायः ।

## द्वितीयः पादः ।

पुरुषार्थैक ॥ ऋद्धिकामाः सत्रमासीरन्नित्यादौ अनेककर्त्तृक-सत्रप्रयोगादेकं फलं सर्वैः कर्त्तृभिरवयवशो भुज्यते, उत कृत्स्नमिति विचारे ।

यद्यपि सर्वेषां प्रत्येकं कर्त्तृत्वं, यदि वा दम्पत्योरिव व्यासक्तं, उभयथाऽप्येकसत्रप्रयोगादनेकफलनिष्पत्तौ दर्शादावप्येकस्मादेव प्रयोगाद्युगपत् क्रमेण वाऽनन्तस्वर्गोत्पत्त्यापत्तेरेकप्रयोगादेकफलोत्पत्ति-नियमस्यावश्यं वाच्यत्वादेकमेव फलं सर्वैरवयवशो भुज्यत इति प्राप्ते ।

न तावदेकस्य फलावयविनो मुख्या अवयवाः सम्भवन्ति । सुखादिरूपस्य तस्यावयवासम्भवात् । सत्रजन्यतावच्छेदकर्धित्वादेः तावत्पुरुषनिष्ठर्धिषु व्यासज्यवृत्तित्वमात्रं परं वाच्यम् । न च तत्र प्रमाणमस्ति । श्रुतर्धिकामादिशब्दानां तावत्फलमात्रप्रतिपादनपरत्वात् । ऋद्धिकामकर्त्तृनिष्ठफलभोगप्रतिपादके कल्प्याधिकारविधावपि ऋद्धिकामनायां व्यासज्यवृत्तित्वस्य बाधितत्वेन व्यासज्यवृत्ति-कामनात्वरूपातिरिक्तधर्माङ्गीकारे प्रमाणाभावाच्च ।

अतः प्रत्येकमेव ऋद्धिकामत्वावगमात्प्रत्येकमेव फलावगतिः । न हि तत्र बहुवचनान्तर्द्धिकामपदेन बहुत्वावच्छिन्नानां ऋद्धि-कामत्वं प्रतिपाद्यते, येन व्यासज्यवृत्तित्वावगतिर्भवेत् । अपि तु ऋद्धिकामत्वावच्छिन्नानां बहुत्वं पशूनित्यादिवत् । न च कर्त्तृत्वस्य

षष्ठीतत्पुरुषादौ संसर्गविधया भानानुपपत्तेरवश्यं पूर्वपदे स्वार्थसम्बन्धिलक्षणामङ्गीकृत्य तस्योत्तरपदार्थे अभेदेनान्वय इत्यङ्गीकार्यम्।

अतएव नामप्रयोज्यतत्तन्नामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गकबोधत्वावच्छिन्नं प्रति एकाधिकरणवृत्तिप्रातिपदिकार्थतावच्छेदकनामद्वयसमभिव्याहारस्य द्वन्द्वभिन्ननामद्वयसमभिव्याहारस्य वा तन्त्रत्वमित्यपि बोध्यम्। तेन धवखदिरौ नीलघटावित्यादौ नाभेदबोध इत्यपि बोध्यम्।

न चैवं सति समासे सम्बन्धिनः अभेदेनान्वयाद्विग्रहे च राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसम्बन्धस्य भेदेनान्वयाद्वृत्तिवाक्ययोर्भिन्नार्थत्वापत्तेरेकविधानेनेतरनिवृत्त्यनापत्तौ विभाषासूत्रवैयर्थ्यापत्तिरिति वाच्यम्। एकतरबोधे इतरबोधस्यावश्यकत्वेनार्थैक्याभिप्रायात्।

अतश्च षष्ठीतत्पुरुषे लक्षणापत्तेर्निषादश्चासौ स्थपतिश्चेति कर्मधारय एवायम्। तेन तावद्विषये विद्यामात्रियानाहिताग्नेरपि निषादस्यैवाधिकारः। अतएव कूटं दक्षिणा सं हि तन्निषादानामिति लिङ्गमपि सङ्गच्छते। तच्च च परप्रयुक्तोपजीवित्वादाहवनीयाद्यनावेपेऽपि यत्र क्वचन होष्यन् स्यात्तञ्च असंस्कारान्कृत्वा लौकिकाग्निं प्रतिष्ठापयेदिति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात्तमेव तत्तद्देशे स्थापयित्वा तन्निमित्तेष्टिः कर्त्तव्येति बोध्यम्॥ ६॥ १॥ १३॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य प्रथमः पादः।

फलोद्देश्यकाया स्तस्यालोकतएव प्राप्तत्वात्तत्र यागमात्रविधानेन तथा ऽनुवादत्वात् तद्विशेषणस्य तत्कर्तृविशेषणस्य चैकत्वस्याविवक्षेति द्वौ बहवो वा कर्त्तार इति पूर्वः पक्षः कृतः । तत्फलोद्देश्यकस्य विजातीयपुरुषप्रयत्नस्याप्राप्तत्वेन विधेयत्वेन तत्र तत्र स्थापितत्वात्तद्विशेषणस्य कर्त्रैकत्वस्य विवक्षोपपत्तेः स्वर्गकामपदेन तदविवक्षायामपि तत्सामानाधिकरण्ये बाधकाभावादुपेक्षण् ।

अथ पूर्वपक्षोरुच्यते । आख्यातोपात्तस्यैकत्वस्य विवक्षायामपि अनेकेषां कर्तृत्वम् । तद्धि कर्तृत्वस्येति न तु तदाश्रये । अन्यथा दम्पत्योर्यावज्जीवानुष्ठानकर्त्तृत्वानुपपत्तेः । अतश्च तदाश्रयाणामनेकत्वस्य पक्षीरादावावश्यकत्वे पुरुषानादाय तत्करणे बाधकाभावादनेकेषामपि कर्तृत्वमिति ।

अथति विशेषग्राहकप्रमाणे तदाश्रयस्यापि प्रथमातिक्रमे कारणाभावादेकस्यैव प्रतीतिरानुभाविकी । अतएव सन्ध्यावन्दनश्राद्धादावेकस्यैवाधिकारः । तत्र धर्मं चेत्यादिवाक्यस्य प्रमाणान्तरसिद्धपत्न्यधिकारककर्ममात्रविषयत्वे पत्न्या अपि ग्रहणे प्रमाणाभावे पुरुषान्तरस्याप्रसक्तेः ।

यत्र तु पत्नीग्राहकप्रमाणसद्भावस्तत्र यद्यपि तासां कर्तृत्वाधिष्ठानत्वे पुरुषस्यैकस्यैव तत् । प्रथमातिक्रमे कारणाभावात् । स्वर्गकामो यजेत, यजमान केशश्मश्रु वपते, मेखलया यजमानमित्यादौ विना कारण सुबुपात्तैकत्वस्य पाक्षिकानुवादत्वानुपपत्तेश्च । अतः पुरुष एक एवाधिकारी । काम्य कर्म कामनायां प्रक्रान्त वीतायां फलेच्छाया अवाप्ते वा फले प्रयोजकाभावाच्च समापनीयमिति ।

व्यासक्तत्वात्फलत्वस्यापूर्वत्वस्य च व्यासक्तत्वम् । फलादौ कर्तृत्वसामानाधिकरण्यस्य प्रत्येकं वृत्तित्वेऽप्युपपन्नत्वेनैतादृशनियमे प्रमाणाभावात् । अतश्च द्वयत्योर्व्यासज्यवृत्तिकर्तृकत्वेऽपि अपूर्वं फलं च भिन्नमेव जन्यतावच्छेदकधर्मपर्याप्त्यधिकरणं वाच्यम् । प्रकृते तु बहुवचनश्रवणेन कर्तृत्वभेदस्यैवावगतेर्न फलत्वादेर्व्यासज्यवृत्तित्वकल्पनावसरः ।

न चैकप्रयोगादनेकफलानुपपत्तिः । समवायसम्बन्धेनैकफलत्वावच्छिन्नं प्रति फलत्वेन प्रतिबन्धकत्वकल्पनादात्मान्तरे तदुत्पत्तौ बाधकाभावात् । न चैवमपि प्रत्येकवृत्तित्वापेक्षया फलत्वादेर्व्यासज्यवृत्तित्वकल्पने गौरवादेरभावान्नियामकाभावः । जन्यतावच्छेदकद्वित्वादेर्व्यासज्यवृत्तित्वकल्पने तत्पर्याप्त्यधिकरणतावच्छेदकस्य मते यावत्कर्तृनिष्ठतज्जन्यफलकूटत्वादेः कल्पनीयत्वेन गौरवापत्तेः । तदरमतजन्यफलत्वादेरेव तत्त्वकल्पनाया लाघवात् प्रत्येकमेव फलम् । प्रयोजनं सङ्कल्पे तादृशानुसन्धानम् ॥ ६ ॥ १ ॥ १ ॥

प्रयोगे ॥ स्वर्गकामो यजेतेत्याद्येकवचनश्रवणे सूत्रे तावदित्यस्य पूर्वपक्ष इत इत्यन्वयः । सूत्रे तावदेकत्वमविवक्षितम् । स्वर्गकामपदस्य स्वर्गमात्रपरत्वात् । अधिकारिपरत्वेऽपि वा तस्योद्देश्यत्वेन तद्विशेषणस्याविवक्षितत्वात् ।

अतश्च तत्सामानाधिकरण्यादाख्यातेऽपि तदविवक्षितम् । किं चाख्यातस्य प्राप्तिमात्रमर्थः । ततश्च यागेन स्वर्गं पुरुषः प्राप्नुयादित्यर्थः । तेन तथापि तस्योद्देश्यत्वादिविशेषणाविवक्षा । अस्तु वा करोतिना विवरणाल्लिङः प्रवर्त्तनाभिधायित्वाच्च तस्य प्रवृत्तिरेवार्थः । तथापि

तस्यापि त्रिस्पश्रुतिमूलत्वाच्छास्त्रीयत्वम्। तस्या अर्थसुखादिवग-वर्जितया लोकमूलकत्वेन श्रुतिमूलकत्वाभावात्।

यत्तु दृष्टकारणाश्रितं पुरुषार्थं नैमित्तिकं वास्तुशान्त्यादिक-मारभ्यागे दक्षवाक्यैर्द्रुष्ट्वा पायसं ब्राह्मणो भोजयितव्यः इत्यादि च, तस्य शास्त्रीयत्वादिष्टमेव समापनम्॥ ६॥ २॥ ४॥

प्रतिषेधेषु॥ न कलञ्जमश्नीयादित्यादिषु किं स्वर्गकामस्या-धिकार उत प्रवृत्तमात्रस्येति चिन्तायाम्। नञो निपातत्वेन क्रिया-न्वयनैयत्याभावात् क्रियान्वयाङ्गीकारे च प्रधानभूतायामन्वया एवा-न्यथात्वापत्तेरानर्थक्यतदङ्गन्यायेन क्रियाविशेषणेष्वन्वयावगमात्तचापि कलञ्जान्वये दुवन्तसम्बन्धेन नञ्समासापत्तेः कलञ्जातिरिक्तभक्षणस्य च रागप्राप्तत्वेनाविधेयत्वात्पारिशेष्येण धातुसम्बन्धावगतेर्भक्षणाभावस्य च कर्तृसम्बन्धत्वेन प्रजापतिव्रतवदेव लक्षितस्य भक्षणाभावसङ्कल्पस्य विश्वजिन्न्यायेन स्वर्गार्थत्वेन विधानमिति प्राप्ते।

तत्र मतमित्युपक्रमानुसारात् प्रजापतिव्रतेषु लक्षणाङ्गीकारेऽपि प्रकृते लक्षणायां प्रमाणाभावात्प्रधानान्वयस्याभ्यर्हितत्वेन नञ्भाव-वाचकस्य प्रतियोगितासंसर्गेण भावनायामेव स्वकारकविशिष्टाया-मन्वयः। न चान्यथात्वापत्तिः। पुरुषे भावनानुत्पत्तावपि प्रत्ययेन तस्या एव बोधनेनान्यथात्वाभावात्।

अतएव निषेधस्थले लिङर्थभूतव्यापारस्य न विधिवाक्यवत् स्वप्रयोज्यत्वसम्बन्धेन भावनान्वयोऽपि तु नञ्समानार्थप्राहकस्य सत्त्वात्स्वप्रयोज्याभावप्रतियोगित्वेनेति तस्य निवर्त्तनारूपत्वसिद्धिः। स्वप्रयोज्यत्वं च प्रवृत्त्यभावे प्रवृत्तिविषयस्यानिष्टसाधनत्वज्ञानं विना-ऽनुपपन्नमिति तस्य प्रत्यवायजनकत्वं कल्प्यते।

सत्यं, नास्ति फलरूपं प्रयोजकम् । तस्येच्छाविषयत्वेन प्रयोजकत्वात्[1] । तथापि प्रारम्भ एव समाप्तेर्निमित्तम् । न च तत्र प्रमाणाभावः । शिष्टविगर्हणस्यैव प्रमाणत्वात् । शिष्टा हि प्रारभ्यापरिसमापने प्राक्रमिकोऽयमिति विगर्हन्ते । तेन शिष्टाचारमूलभूतश्रुतौ प्रारम्भे निमित्ते प्रयोगसमाप्तेर्नैमित्तिकत्वेन विधानात्तस्यावश्यकत्वम् ।

न च वस्तुतः शास्त्रेण कामनाया एव प्रयोजकत्वावगमादाचारस्य भ्रान्तिमूलकत्वमिति वाच्यम् । सर्वेषां शिष्टानां भ्रान्तिकल्पने प्रमाणाभावात् । देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेतेति प्रत्यक्षश्रुत्यैवाकरणे निन्दाप्रायश्चित्तयोर्विधानात्प्रारम्भे निमित्ते प्रयोगसमाप्तेरावश्यकत्वावगमाच्च । अतः प्रयोजकान्तराभावेऽपि निमित्तवशात्समापनीयमेव ।

समापनीये च तस्मिन् कारणसत्त्वात् फलमपि भवत्येव । एकफलप्राप्तावपि फलान्तरोपपत्तेः । न च कामनारूपाङ्गाभावाद्वैगुण्यशङ्का । तस्याः प्रवृत्तित्वावच्छिन्नं प्रति कारणत्वमात्रत्वेनाङ्गत्वे प्रमाणाभावात् । प्रवृत्तिपूर्वक्षणे तस्याः सत्त्वाच्च । अन्यथा समापनोत्तरमिच्छाऽपगमेऽपि फलानुत्पत्तिप्रसङ्गात् ॥ ६ ॥ २ ॥ १ ॥

लोके ॥ लौकिकस्य तु गृहरथकर्मादेरप्रार्थ्यीयतयाऽसमापने च विशिष्टविगर्हणाभावात्* प्रयोजकाभावेनासमापनम् । न च

---

* इत्थमेव पाठ आदर्शपुस्तकेषु । शिष्टविगर्हणाभावात्,—इत्येव पाठस्तु समीचीनः प्रतिभाति ।

---

(1) फलं स्वर्गेच्छाविषयत्वेनैव प्रयोजकं भवति । वीतायां फलेच्छायां फलस्येच्छाविषयत्वाभावात् तदानीं तस्य न प्रयोजकत्वमित्यर्थः ।

पपत्ते काम्यविषयत्वेन तस्य सार्थक्याच्च शान्त्यानुष्ठानम् । अतएव सोमे वसन्तस्य निमित्तत्वात्तत्रैकैकस्मिन् सकृत्करणप्रतीते कालानुपहेऽपि न चतिरिति प्राप्ते ।

आहारविहाराद्यनुरोधेन निमित्तश्रुतेरवश्य सङ्कोचनीयत्वादग्निविद्याभ्यामिव कालेनापि सङ्कोच्यते । न हि कालस्याङ्गत्वेऽपि यथाशक्त्युपबन्धविषयत्वम् । यस्यैव हि प्रयोगविधिप्रयोज्यत्वेन शक्तावनुष्ठानप्रसक्तिस्तस्यैवाशक्तौ निमित्तश्रुत्यनुरोधेन त्याग । ततश्च यथैवाग्निविद्ययोर्विध्यन्तरप्रयुक्त्युपजीवकत्वेन प्रयोगविध्यप्रयोज्यत्वान्न तत् । तथा कालस्यापि स्वरूपेणानुष्ठेयस्याप्रयोज्यत्वात्* यथाशक्त्युपबन्धविषयत्वानुपपत्ते कालविधिनाऽपि निमित्तश्रुतिसङ्कोचान्न शान्त्येनानुष्ठानम् । अतएव यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपातयेदिति काले नैमित्तिकातिक्रम एव प्रायश्चित्तम् ॥ ६ ॥ २ ॥ ७ ॥

तेषाम् ॥ कालशास्त्रेण निमित्तशास्त्रस्य सङ्कोचेऽपि यदा कालावच्छिन्नस्य निमित्तस्य पुन सन्निपातस्तत्र नैमित्तिकावृत्ति । इतरथा स्वोत्पत्तौ अवश्यानुष्ठापकत्वरूपनिमित्तत्वानुपपत्ते । अतएव यत्र तस्मिन्नेव निमित्ते कालमात्रस्यावृत्तिस्तत्र न नैमित्तिकावृत्ति । यथा एकस्मिन्नेव वसन्ते पर्यावृत्तौ । अत्र च पूर्वपक्षस्यातितुच्छत्वात्सुबद्धत्वोपदेश इति मन्तव्यम् । ६ ॥ २ ॥ ८ ॥

---

* इत्यमेव पाठ सर्वत्र । स्वरूपेणाननुष्ठेयस्याप्रयोज्यत्वात्,—इति तु भवितुमुचित प्रतिभाति

तेन पुरुषमात्रस्यैव रागतः प्रवृत्त्युन्मुखस्य निषेधेष्वधिकारः । अतएव प्रत्यवायसाधनीभूतस्यानुष्ठेयस्य भक्षणस्य रागत एव ज्ञानता-त्तदनुष्ठाने सति प्रत्यवायोत्पत्त्युपपत्तेर्न तदंशे नञ्चिषेधांशे वा ऽध्ययनविधिसिद्धज्ञानापेक्षाऽपि । यच्च निवर्त्तनाप्रकारकथनं प्रकारान्तरेण तन्त्ररत्ने कृत, तदर्थवादाधिकरणे कौस्तुभ एव निरस्तम् । स्तोकरीतिश्च विस्तरेणोपपादिता ॥ ६ ॥ २ ॥ ५ ॥

तस्मिन् ॥ श्रौतेषु स्मृत्युक्तेषु च निषेधेषु, तथा स्मार्त्तेष्वेवाग्नि-साध्येषु अमन्त्रसाध्येषु च विधिषूपनयनात्पूर्वमपि शक्तस्याधिकारः । स्मार्त्तविधावुपनयनादिनियमे प्रमाणाभावात् । उपनयनस्य वेद-मात्राध्ययनाङ्गत्वात् । निषेधेषु तु जातमात्रस्याधिकारो ब्राह्मणो न सुरां पिबेदितिवत् परप्रेरणादिजन्याया अपि भक्षणादिभावनाया-निषेधात् । तत्र च स्मृत्याद्यध्ययनस्यानुपयोगादिति प्राप्ते ।

स्मृत्यध्ययनस्यापि ब्राह्मणेन षडङ्गोवेदोऽध्येयो ज्ञेयश्चेत्यादिनोप-नयनाङ्गत्वविधानात् स्मार्त्तविधीनामप्युपनीताधिकारकत्वम् । निषे-धेषु तु प्रागुपनयनात्कामचारकामवादकामभक्षा इति स्मृत्यैवाभ्यनु ज्ञानादुपनयनोत्तरकालकत्वम् । अतएव वर्णपुरस्कारेणाम्नातानां सुरापानादिनिषेधानां जातमात्राधिकारकत्वमेव स्मृतिसिद्धम् । येषां तु शूद्रादीनामुपनयनाभाव, तेषां विवाहविधितः । तत्स्थानत्वेन विवाहविधानात ॥ ६ ॥ २ । ६ ॥

अभ्यासे ॥ जीवनादिनिमित्तकाग्निहोत्रादौ निमित्तस्य प्रति-क्षणं भेदात्प्रतिनिमित्तं नैमित्तिकावृत्त्या सन्ततानुष्ठानप्रतीतेस्तदनु रोधेन चाशक्याद्रत्यागस्यवक्ष्यमाणत्वात्कालस्यापि चाङ्गत्वेन त्यागो-

वादबलादाकाङ्क्षाया एव सप्तम्या निमित्तत्वपरत्वावसायात्। अग्निहोत्रादीनान्तु नित्यत्वं स्थितमेव। एवं विद्याया अपि अध्ययनसहितायाः

स्थाणुरयम्भारहारः किलाभू-
दधीत्य वेदं न विजानाति योऽर्थम्।

अनधीयाना व्रात्या भवन्तीत्यादिनिन्दोन्नीताकरणे प्रत्यवायबलेन नित्यत्वम्। एवमुपनयनस्यापि षोडशादिवर्षोत्तरमकरणे प्रत्यवायश्रवणादेव नित्यत्वम्। यत्तु षष्ठेऽन्नाद्यकामस्योपनयीतेत्यादिफलश्रवणं, तदुपनयनाश्रितषष्ठादिकालस्येति ज्ञेयम्।

यत्तु तन्त्ररत्ने क्रतूनामावश्यकत्वात्तदपेक्षितविद्यादेरप्यावश्यकत्वे फलतो नित्यत्वमुक्तम्। तत्क्रतूनां विद्याप्रयोजकत्वस्य निरस्तत्वात्तद्वत एवावश्यकत्वकरणे प्रत्यवायावगतेर्विद्यादेरकरणे क्रतूनामनधिकारादेवानावश्यकत्वादुपेक्षितम्।

एवं प्रजोत्पादनमपि,

अनुत्पाद्य सुतान्मोहान्मोक्षमिच्छन् व्रजत्यधः।

इत्यविरक्तस्य प्रत्यवायश्रवणान्नित्यम्। अतएव जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यपि सङ्गच्छते। न चात्र ब्राह्मणपदश्रवणात्तस्यैवैते नित्या इतरयोस्त्वनावश्यक इति शङ्क्यम्। अस्यावदानविधिशेषत्वेनार्थवादस्य विधायकत्वाभावेनाविवक्षितब्राह्मणपदस्योपलक्षणत्वात्॥ ६॥ २॥ ११॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
षष्ठस्य द्वितीयः पादः।

इति। एवं सत्यपि यदि निमित्तस्य प्राधान्यं स्यात्, तदा तदनुरोधेनाङ्गेष्वेव शक्यच्छेदः कल्प्येत, न त्वेतदस्तीति प्राप्ते।

न निमित्तस्यानुष्ठापकत्वम्। अपि तु विधिबोधितस्यैवानुष्ठानस्यावश्यकताबोधकत्वमात्रम्। तद्बोधस्य च फलं नैमित्तिकाकरणस्य प्रत्यवायजनकत्वबोधः। अन्यथा चेतनप्रवृत्तेरावश्यकत्वानुपपत्तेः। एवं चोक्तावश्यकत्वमेव सत्यस्मादिना योध्यमानं नैमित्तिकाच्चयि। क्षुधायामश्नीतेत्यादौ तथा क्लृप्तत्वात्। अतश्च यथैव काम्ये प्रवर्त्तनाऽऽविनिष्टसाधनत्व प्रधानांशएव न तु साङ्गे, तथैव निमित्ताविप्रप्रत्यवायजनकाकरणप्रतियोगित्वमपि प्रधान एव न तु साङ्गे। अतएव निमित्तस्यापि विनियोगविधावेवान्वय.। अतएव विनियोगोऽपि प्रवृत्तिजनकीभूतज्ञानविषयीभूतधर्मकयोभयसाधारण एव। अत एवाङ्गान्वयोऽपि प्रधानस्यैतदुत्तरकालीन एव। तस्य प्रधानगतफलवत्त्वज्ञानाधीनत्वात्।

तत्र त्वयं विशेषः। यत्काम्ये विध्याविनिष्टसाधनत्वज्ञानोत्तरमेवाङ्गविनियोग। नित्ये तु विधिमद्धकृतनिमित्ताविप्रप्रत्यवायजनकाकरणप्रतियोगित्वज्ञाने जातेऽपि नाङ्गान्वयोऽनपेक्षितत्वात्। अपि तु तदुत्तर प्रधानकरणकभावनायाभाव्यापेक्षायां पूर्वकृतपापक्षयस्य भाव्यत्वेऽन्वगते स इति बोध्यम्।

अत्र हि पापक्षयस्यैव भाव्यत्व नित्यस्यापि धर्मत्व पापमपनुदतीत्यादि वाक्येभ्य प्रतीयते। अतएव विश्वजिन्न्यायेन न स्वर्गकल्पनं, न वा अपूर्वार्थत्वापि यागस्यापूर्वस्यैव भाव्यत्वकल्पनं, यागस्यैव वा तत्। इत्यौयानिर्देशात्। समानपदश्रुतेः करणत्वेनाप्युपपत्तेश्च।

# अथ षष्ठोऽध्यायः ।

## तृतीय पाद ।

सर्वशक्तौ ॥ नित्यनैमित्तिकानां कर्मणां काम्यवत्सर्वाङ्गोपसंहारेणैव प्रयोग । एकादशे सर्वेषामङ्गानां साहित्येन कृत्स्नोपकारजनकत्वस्य स्थापयिष्यमाणत्वात् । तिर्यगधिकरणे यथाविनियोगमधिकारकल्पनस्य स्थितत्वाच्च । न चैव नित्येऽपि तथा कल्पने सर्वाङ्गोपसंहारासामर्थ्ये सति अनुष्ठानाभावान्निमित्तत्वव्याघात । अवश्यानुष्ठापकत्वरूपस्य निमित्तत्वस्य कालाग्निविद्यादिभिरवच्छेदवच्छक्त्याऽप्यवच्छेदोपपत्ते । अतश्च यथैव कालाद्यवच्छिन्नजीवनादेरेव निमित्तत्वाद् कालादौ निमित्ताभावादेव नैमित्तिकाकरणे न प्रत्यवायस्तथा शक्त्यभावेऽपीति बोध्यम् ।

न च कदाऽपि सर्वाङ्गोपसंहारासामर्थ्यम् । काम्येऽपि तदापत्ते । न वा सकृदेव सर्वाङ्गकरणसामर्थ्यमिति नियमे प्रमाणमस्ति, येन वीप्साद्यनुपपत्तिराशङ्क्येत । काम्यस्याप्यावृत्त्यनुपपत्ते । किञ्च निमित्तस्यानुष्ठापकतया कालदेशादिवत्प्रयोगान्वयित्वाद्यथैवाश्ववधेन वरुणोत्यादावपां देशत्वात्प्रधानान्वयित्व, तथा निमित्तस्यापि । अतश्चानेकेषु प्रधानेषु यथा न यथाशक्त्युपबन्धस्तदकरणस्य प्रत्यवायजनकत्वबोधनादेवमङ्गानामपीति न तेषु यथाशक्त्युपबन्ध । अतएव तद्वदेव तृतीयानिर्देशोऽपि सङ्गच्छते। प्रयोगान्वयितया च निमित्तश्रुतेरङ्गविनियोगोत्तरकालीनत्वाच्छक्त्यवच्छेदकत्वेऽपि न दोष-

पराधे तदेव यादृक् तादृक् होतव्यमिति विगुणस्य समाप्ति विध-
पराधे प्रायश्चित्तं च दर्शयति ॥ ६ ॥ ३ ॥ १ ॥

काम्येषु चैव ॥ काम्ये तु यद्यपि फलसम्बन्धोत्तरमेवाङ्गान्वय-
स्तथापि साङ्गस्य प्रयोगविधिनाऽनुष्ठानावगमात्तत्र प्रवृत्तिकारणत्वे-
नोपस्थिताया कामनाया अधिकारिविशेषणत्वकल्पने शक्त्यवच्छि-
न्नाया एव तत्कल्पनादकरणे प्रत्यवायाश्रवणाच्च सर्वाङ्गोपसंहार-
समर्थस्यैवाधिकार इति प्रत्युदाहरणमात्रम् ॥ ६ ॥ ३ ॥ २ ॥

क्रियाणां ॥ एवं यथाशक्त्युपबन्धे निरूपिते तच्छेषत्वेन प्रति-
निधिविचारे कर्त्तव्ये उपोद्घाततयेदं विचार्यते । तत्र मूले तावद्द्रव्यस्य
क्रियातोऽत्यन्तभेदाभावाद्द्रव्यभेदे कर्मभेदापत्तेर्न नीवाराद्युपादाने
विहितक्रियासिद्धिरिति पूर्वपक्षिते ।

अत्यन्तभेदाभावेऽपि अत्यन्ताभेदस्याप्यभावात् कर्तृदेशकाला-
दिवद्द्रव्यभेदेऽपि तदेवेदं चलनं यजनमित्यादिप्रत्यभिज्ञाबलात्
क्रियैक्यप्रतीतेः प्रतिनिध्युपादानेऽपि न क्षतिः । तत्र च जगतीत्व-
वर्त्त्येकैव कर्मव्यक्तिरभिव्यक्तिमात्रं तु भिद्यते । अथ वा शब्दान्तरादि-
प्रमाणैरेव व्यक्तिभेदः । द्रव्यदेशकालकर्तृव्यक्त्यादिभिस्तु तस्या एव
व्यक्तेरभिव्यक्तिभेदमात्रम् । अथ वाऽस्तु तथापि व्यक्तिभेदः । शब्दा-
न्तरादिप्रमाणैश्चाग्नेयत्वादिजातय एव भिद्यन्त इति सिद्धान्तितम् ।

तद्द्रव्याश्रितत्वेऽपि क्रियायास्तद्भेदे वैजात्यस्य शङ्कितुमशक्यत्वा-
द्व्यक्त्यैक्यसिद्धान्तस्य च पूर्वपक्षतापत्तेस्तस्याभिव्यक्तिजन्यत्वे च यजिपदे
लक्षणापत्तेरुपेक्षितम् ।

अत एव विचारो वाध्यः । यद्यपि शब्दान्तरादिप्रमाणैराग्नेय

न च दर्शपूर्णमासादौ कृतानामेव स्वर्गादीनां नित्येऽपि भाष्य-लोपपत्तौ धर्मवैत्यख्यान्यपरत्वं ग्राह्यम्। तथात्वे मुमुक्षोः स्वर्गादी-नामनिष्टत्वेन तदुत्पत्तौ शास्त्रस्याहितशाधनानुष्ठापकत्वे अप्रामा-ण्यापत्त्या यावज्जीवादिवाक्यस्यामुमुक्षुविषयतया सङ्कोचापत्तेः। पापक्षयस्य तु सर्वाभिलषितत्वान्निमित्तस्यैव प्रयोजकतया तस्य नैमि-त्तिकाप्रयोजकत्वेऽपि निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वे बाधका-भावः। न चोद्देश्यानेकत्वम्। तत्त्वेऽपि द्विकर्मकत्वाभावेनावाक्यभेदात्। अतश्च पापक्षयभाव्यकत्वावगमोत्तरमेवाङ्गान्वयात्पूर्वावगतनिमित्ता-न्वयानुरोधेनाङ्गेष्वेव शक्यवच्छेदकल्पनम्।

न चोत्पत्तिवाक्य एवाङ्गान्वयस्य वक्ष्यमाणत्वात्तत्र चेष्टसामान्यस्यैव भाव्यत्वात्तदवगमोत्तरत्वेऽपि न निमित्तसम्बन्धावगमोत्तरत्वमङ्गान्वय-स्येति वाच्यम्। सामान्यगतविशेषापेक्षायां अभारकत्वेन प्रथमं कामं यावज्जीववाक्यैकवाक्यतया विशेषावगमोत्तरमेवाङ्गवाक्यैकवाक्यतया-ऽङ्गान्वयाङ्गीकारेण तत्रैव शक्यवच्छेदोपपत्तेः। अत एव काम्ये निमित्ते च यस्याधिकारिणोयावन्ति प्रमाणान्तरमितान्यङ्गानि, तस्य तावद्भिः सहितैराग्नेयादिरूपकुर्यादिति महावाक्यार्थकल्पनात्काम्ये सर्वाङ्गसाहित्य नित्ये च शक्यवच्छित्रमित्यर्थलाभः। अतश्च यथैवैक-स्यैव काम्यवाक्यस्य यावज्जीववाक्यस्य च सोमयाग्यमोमयाजिरूपा-धिकारिभेदेन प्रधानसाहित्यभेदेऽपि यस्याधिकारिणो यावन्ति प्रमाणान्तरमितानि प्रधानानि, तस्य तावतां कामे निमित्ते च विधायकत्वं, तथाचापीति न कोऽपि दोषः। अतः सिद्धं निमित्त-मुख्यनुरोधेन यथाशक्त्यङ्गत्यागेनापि प्रयोग इति। अत एव विश्व-

बन्धेन मौद्यादिविधानाद्द्रव्यान्तराक्षेपानुपपत्तेः। न हि मौद्यास्तं प्रभ्वतो नियमविधिरपि स्वाक्षेपप्रतिबन्धद्वारा फलतः। अतश्च यथैवाग्निविद्ययोः स्वविधिप्रयुक्तयोरेव लाभादाक्षेपप्रतिबन्धेनाग्रकस्य शूद्रादेर्वा न तदाक्षेपोऽपि तु अग्निविद्ययोरधिकारिविशेषणत्वमङ्गीकृत्य तद्वत एवाधिकारः। एवं द्रव्यांशे प्रधानविधिना अनाक्षेपात्कृतमौद्यादिद्रव्यवत एवाधिकारित्वकल्पनेन न द्रव्यान्तरोपादानमिति प्रयोगोत्सर्गो युक्त इति प्राप्ते।

द्रव्यग्रास्त्रेण द्रव्यान्तरसाधारण्येनाक्षेपप्रतिबन्धेऽपि मौद्यादीनामग्निविद्ययोरिव स्वतन्त्रप्रयोगविधिविधेयत्वाभावात्प्रयाजादिवत्प्रधानविधेरेव मौद्यादिप्रयोगविधायकत्वात्प्रयोगविधिविषयीभूतानां तेषामधिकारिविशेषणत्वानुपपत्तौ निमित्तवशादशक्तौ त्यागेनापि प्रधानकर्त्तव्यतावगतेस्तस्य च द्रव्यान्तरमन्तरेणायोगाद्युक्तं तदाक्षेपकत्वम्। अग्निविद्ययोस्तु स्वतन्त्रप्रयोगविधिसिद्धयोरेतत्प्रयोगविधिविषयत्वाभावेन यथाशक्त्युपबन्धविषयत्वाभावाद्युक्तमधिकारिविशेषणत्वमिति वैषम्यम्।

न चैवमपि द्रव्यस्योत्पत्तिवाक्ये श्रुतस्य निमित्तान्वयात्पूर्वमेव यागान्वयात्पश्चादवगम्यमाननिमित्त एव द्रव्यावच्छेदकल्पनाद्द्रव्यावच्छिन्नजीवनादेरेव निमित्तत्वावगतेः कथं द्रव्यान्तरेण याग इति वाच्यम्। विशिष्टविधौ निमित्तान्वयात्पूर्वं भावनायामन्वितस्यापि द्रव्यस्य विशेषणविधौ यागाङ्गताबोधदशायां यागगतफलवत्त्वज्ञानार्थं कामयावज्जीववाक्याभ्यामेकवाक्यत्वाङ्गीकारेण निमित्तपाषयाद्यन्वयोत्तरमेव द्रव्यस्य यागाङ्गताबोधेन प्रयाजादिवत्तथापि यथा-

त्वादिवैजात्ये विधेयतावच्छेदकविजातीययागत्वावच्छिन्नं प्रति व्रीहि-त्वादिनैव कारणत्वावगमेस्तस्यैव तज्जात्यभिव्यञ्जकत्वावसायान्न नीवा-राद्युपादाने तज्जात्यवच्छिन्नसिद्धिरिति प्राप्ते ।

सत्यपि तज्जात्यवच्छिन्नं प्रति तत्त्वादिना कारणत्वे न तस्य प्रत्येकं तज्जात्यभिव्यञ्जकत्वम् । व्रीहित्वादिना कर्मान्तरेऽपि कारण-त्वेन व्यभिचारात् । अपि तु सामग्रीत्वेनैव । सामग्री च प्रकृतस्य व्रीहित्वघटिता, अप्रकृतस्य तु तदघटिता । अतश्च व्रीह्यभावे नीवाराद्युपादानेऽपि विजातीययागत्वापूर्वत्वफलत्वावच्छिन्नं जायत-एव । फलं परं नित्य एव तारतम्येण जायते । काम्ये त्वारम्भोत्तर-मप्रकृतस्य शिष्टविगर्हणादोषपरिहारार्थं समापनेऽपि न फलोत्पत्तिः । सर्वाङ्गोपसंहारेणैव तदुत्पत्तेः । प्रयोगसमाप्त्यकरणे दोषमात्रोत्पत्तेः करणे फलान्तराभावाच्चापूर्वोत्पत्तिरिति केचित् । नैमित्तिकत्वा-विशेषात्तु तथापि पापक्षयकल्पनेति, तथापि तारतम्यमित्यपि ध्येयम् ॥ ६ ॥ ३ ॥ ३ ॥

श्रुतिप्रमाणत्वात् ॥ काम्ये चारम्भोत्तरं, नित्ये ततः पूर्वमपि श्रुतद्रव्याद्यलाभे द्रव्याद्यन्तरं प्रतिनिधेयं न वेति चिन्तायाम् । अप्रकृतावङ्गहानेन प्रयोगेऽप्यनङ्गग्रहणे प्रमाणाभावः । तथाहि । न तावद्द्रव्यादिशास्त्रम्(१) । तस्य व्रीहित्वाद्यवच्छिन्नविधायकत्वेन नीवाराद्यविधायकत्वात् । न हि तेषु व्रीहित्वमस्ति । नापि कर्मशास्त्रं तदाक्षेपकम् । द्रव्यशास्त्रेण द्रव्यान्तरसाधारण्याक्षेपप्रति-

(१) द्रव्यादिशास्त्रमनङ्गग्रहणे न प्रमाणमित्यर्थः ।

स्तावदाधानविधिसिद्धत्वादेव क्रतुप्रयोगविध्यविषयत्वात्तेषामधिकारि-विशेषणत्वप्रतीतेर्यथाशक्तिन्यायाविषयत्वादेव न प्रतिनिध्याशङ्का। यत्र तु लौकिकाग्नेरेव वाचनिकमधिकरणत्वं, यत्र वा पदादेः, तत्रापि सत्यपि तस्य प्रयोगविधिविषयत्वे अदृष्टार्थत्वान्न तत्प्रति-निधिः। न हि पूर्वदेशविभागानुकूलव्यापाररूपप्रक्षेपमात्ररूपस्य होमस्याधारापेक्षाऽस्ति। अतएव तद्विधिरप्यपूर्वविधिरेव। पदादि-नाऽऽहवनीयादिबाधस्तु पतनप्रतिबन्धकत्वरूपाधिकरणताया एवा-दृष्टोत्पादकत्वादेकेन तत्सिद्धेः समुच्चयायोगादनुमेयः। अतश्च तत्प्रतिनिधेरदृष्टोत्पादकत्वे प्रमाणाभावान्न सः। क्वचित्तु वाचनिको-ऽग्न्युपघातादिरभावे विधिरेव।

एवमर्थप्रकाशनार्थेष्वपि मन्त्रेषु न प्रतिनिधिः, शब्दान्तरस्य मन्त्रान्तरस्य वा। स ह्युपायान्तरेण ध्यानादिनाऽर्थेऽनवगते तत्प्रति-पादकत्वज्ञानाभावादेव नाशङ्क्यः। अवगते तु तस्मिन् स्मारकान-पेक्षत्वादेव न तदुपादानम्।

न चैवं यत्र स्वतएवार्थः स्मृतस्तत्र विहितमन्त्रपाठानापत्तिः। तत्र नियमादृष्टसिद्ध्यर्थं मन्त्रजन्यस्मृतेरेवाभ्युदयकारित्वकल्पनेन मन्त्रपाठावश्यकत्वात्। प्रतिनिधेस्तु कर्मचोदनाऽऽक्षिप्तस्य नियमादृष्ट-जनकत्वे प्रमाणाभावान्न पाठ इति वैषम्यम्।

एवमन्यस्मात्तददृष्टोत्पत्तौ प्रमाणाभावेनादृष्टार्थप्रयाजादिक्रियाया-अपि न प्रतिनिधिः दृष्टार्थावघातादिक्रियायास्तु स समस्त्येव।

यत्तु कैश्चिददृष्टार्थस्य षोडशिग्रहणाभावादेरपि न प्रतिनिधिः। तेन षोडशभावयुक्तक्रतुप्रयोगसङ्कल्पे कृते यदि दैवादशक्तमपि तत्र

शब्दानुपपत्तेः। अतस्तदा कर्मशास्त्रेण विसदृशसाधारण्येन द्रव्यान्तराक्षेपाद्युक्तः प्रतिनिधिः। तस्य चाङ्गत्वाभावेऽपि उपकारकत्वमात्रेण ग्रहणं बोध्यम्। एवञ्च कर्मचोदनया यत्किञ्चिद्द्रव्यप्राप्तौ युक्त्यन्तरेण सदृशस्य वचनेन च पूतिकानां नियम इति वक्ष्यते॥ ६॥ ३॥ ४॥

न देवता॥ एवं सर्वत्र प्रतिनिधौ प्रसक्ते देवतायां स न सम्भवति। यदि हि अर्थमात्रस्यैव देवतात्वं त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वरूपं भवेत्, ततस्तस्य शब्दविशेषापेक्षायां प्रतिपादकत्वेन विधिगतस्योपस्थितस्य शब्दस्य नियमेऽपि रोगादिना तत्पदोच्चारणासम्भवे तादृशार्थस्य यागाङ्गत्वानपायात्तद्बोधकश्रौतलाक्षणिकशब्दान्तरप्रसक्त्या भवेदपि प्रतिनिधिः।

यदा तु दशमाधिकरणवक्ष्यमाणरीत्या विधिगतशब्दविशिष्टस्यार्थस्य तादृशशब्दमात्रस्य वा देवतात्वं, तदा कः प्रसङ्गः शब्दान्तरस्य। न हि हविस्त्यागकालीनोच्चारणकर्मत्वविशिष्टविधिगतशब्दत्वसमनियतं अखण्डोपाधिरूपं वृद्धव्यवहारसिद्धं देवतात्वं शब्दान्तरे सम्भवति।

यदि त्वर्थस्यापि देवतात्वं कथञ्चिदङ्गीक्रियेत, ततस्तत्रापि तादृशविधिगतशब्दप्रतिपाद्यत्वसमनियतमेव तदङ्गीकृत्य प्रतिनिध्यभावः समर्थनीयः। अतएव यागस्य देवतापेक्षत्वेऽपि विधेयत्वघटितत्वादिषये आक्षेपकत्वासम्भवाद्देवताविधिरपूर्वविधिरेव। तदसम्भवे च यागपदार्थस्य लोप एव। यदा तु देवतापचारे प्रजापतिरिति वचनं तदभावे विधिविधया प्रामाणिकं, तदा तदेवानुसर्तव्यम्।

एवमग्नेरपि लोमाधिकरणन्यायेन न प्रतिनिधिः। तथाहवनीयादे-

जायायै पूर्वमारिष्टै दत्वाऽग्नीनन्त्यकर्मणि।

इति पक्षे तावदग्न्यभावादेव विवाहात्पूर्वमनधिकारात्। तथापि विधुराधानपक्षे श्रौतस्मार्तवैदिककर्मणां पत्नीव्यतिरेकेणैव वाचनिकत्वेन पत्नीप्रतिनिध्यप्रसक्तेः। यदा तु नाग्नीनां पत्न्यै दानं, तदाऽपि तदाकरपत्नीकोऽप्यग्निहोत्रमाहरेदिति वचनात्पत्नीव्यतिरेकेणैवाऽग्निहोत्रमात्रानुष्ठानमिति न प्रतिनिधिप्रसक्तिः। यदा तु कस्यचित्कर्मणो-मध्येऽन्यतरस्य मृतिस्तदा दाहात्पूर्वमेव तत्समापने वक्ष्यमाणरीत्या प्रोषितादिवदेवानुष्ठानमिति न प्रतिनिधिप्रसक्तिः।

रोगादिना त्वशक्तौ कार्यान्तरव्यापृते चान्यतराधिकारिककर्मसु यद्यपि स्वामिनः कालादिवत्प्रयोगविध्यविषयत्वाच्च तदेकत्वादिवदेव प्रतिनिधिप्रसक्तिस्तथापि,

संध्यामिष्टिं चरुं होममसगोत्रेण कारयेत्।

इत्यादि वचनबलाच्छिष्टाचाराच्चानुमतिद्वारा कर्त्रन्तरेणाप्यनुष्ठानम्। स्वत्वत्यागमात्रं तु सति संभवे स्वयं कार्यं, नो चेत्तदपि तेनैवाग्रय इदं न मदीयमित्यनुसन्धानमेवं कार्यम्। उभयाधिकारिकेषु दर्शादिषु तु त्यागघटितं कर्मान्यतरेणैव कार्यम्। द्वयोरपि संसृष्टस्वत्वत्वात्। अतएव त्यागोऽपि तादृशस्थले मम यजमानस्य च नेत्यादिरूपः। उभयोरप्यशक्तावध्वर्युणैव। अमति बाधे सामान्यसमाख्यया तत्प्राप्तेः। एवं यजमानप्रवासेऽपि। पत्न्यास्तु प्रवासेऽग्निविच्छेद एव। एवमाख्यातेषु परार्दिया यजमानपदार्थानामध्वर्युणैव करणं पत्नीपदार्थानां च। सामान्यसमाख्याऽनुरोधेन यजमानस्याप्राप्तेः। एवं ऋत्विक्संस्कारेष्वपि स्वामीयमाने फलाभावात्र प्रतिनिध्याप्रदा।

षोडशी क्रतस्तदा षोडशग्रहभावस्याभावे तदर्थस्यार्थं माषाभावान्तर प्रतिनिधेयमित्युक्तम् । तन्न । नातिरात्रे षोडशिनं गृह्णाति इत्यनेन षोडशिग्रहणाभावेऽपि इतराङ्गमात्रादेव क्रतूपकारसिद्धिरित्यवगमात् षोडशिग्रहणाभावस्यादृष्टोत्पादकत्वे प्रमाणाभावात् । अतएव च तत्र षोडशिग्रहणे दृष्याचेष्टाक्रतप्रायश्चित्तमात्रम् ॥ ६ ॥ ३ ॥ ५ ॥

प्रतिषिद्ध च ॥ अनारभ्य श्रुतेन अयज्ञिया वै माषा वरका कोद्रवा इत्यनेन माषादीनां यज्ञाङ्गत्वप्रतिषेधाद्यत्र माषाणां विधान तत्रैव विकल्पार्थं प्रतिषेध । अथवा, यत्र धान्यत्वादिना सामान्यधर्मेण विधान । तत्र स्वेच्छाप्राप्तमाषाद्यङ्गप्रतिषेधोबर्हिषि रजतं न देयमितिवत् ।

अतश्च कर्मशास्त्रानुरोधेन माषादीनां प्रतिनिधिस्थले साधनत्वेऽप्यङ्गत्वाभावान्न प्रतिषेध । वक्ष्यमाणयुक्त्या द्रव्यशास्त्रानुरोधेन माषादिरूपयद्द्रव्यप्रतिनिधिस्थले नीवारयवत्वादिनैव तेषां ग्रहणाद्वर्जनीयतया माषाद्युपादानाद्ङ्गत्वाभावेन न प्रतिषेध । अतस्तेऽपि प्रतिनिधेया इति प्राप्ते ।

अयज्ञिया इत्यत्रार्थप्रत्ययेन साधनत्वमात्रनिषेधाद्विशेषविहितातिरिक्तस्थले सर्वत्रैव माषादिप्रतिषेधप्रतीतेर्न प्रतिनिधेया । द्रव्यसामान्याभावे तु ग्राह्या एवेति ध्येयम् । अत्र च लक्षणया यज्ञोद्देशेन माषनिषेधविधानान्नैकप्रयत्नताभङ्ग ॥ ६ ॥ ३ ॥ ६ ॥

तथा स्वामिन ॥ मृते तावद्यजमाने पत्न्यां वा नान्यतरेणान्यतरस्य प्रतिनिधि । यजमाने मृते पत्न्या अन्यभावादेवानधिकारात् । पत्न्यां मृतायां यजमानस्यापि,

यजेरचितित्यनेन वचनेन नेदिष्ठत्वविशिष्टत्वविधानार्थं पुनर्विधि । अतएवेदमधिकरणं विशिष्य व्युत्पत्तिमाचार्यम्। एतदभावेऽपि वचनेनैवान्यागमोपपत्ते ।

अत्र च पत्नीमरणेऽपि तेन सह यजेरचितिति पुंलिङ्गनिर्देशा-द्यजमानमात्रप्रदर्शनेनैव च सङ्ख्याया अपि समप्तत्वात्कर्तव्यपदार्थानां च पत्न्यन्तरेण यजमानेनैव वा सिद्धेर्नान्यानयनम्। अतएव तादृश-स्थले पत्न्या नाग्निभिर्दाहः किं त्वन्यन्तरेणैव । यजमानस्य तु मृतस्य पृथक्कृतस्याग्निभिर्दाहेऽपि अनाहिताग्निसाधारणेनानीतस्याग्निसर्गं प्रमाणाभावादृत्विग्वदेव कर्तृत्वोपपत्ति ॥ ६ ॥ ३ ॥ ८ ॥

स स्वामी ॥ पूर्वाचिपेणेदम्। आनीयमानस्य न कर्तृत्वमात्रमपि तु स्वामित्वमपि। तत्स्थानापन्नत्वात्। दीक्षारूपफलिसंस्कार-श्रवणाच्चेति प्राप्ते ।

न तावदत्र सत्रफलम्। तस्य वैगुण्ये सत्यनुपपत्ते। तद्धि न तावदानीतस्य। साङ्गकर्तृत्वाभावात्। अतएव न मृतस्यापि। नाप्य-वशिष्टानाम्। सप्तदशस्वामिककर्तृत्वाभावात्। अवशिष्टैस्तु शिष्ट-विगर्हणादोषपरिहारार्थमवश्यकर्तव्ये समापने सामाद्युपाये सङ्ख्या-सम्पत्त्यर्थमन्य समानीयते। अतएव प्रारम्भनिमित्तसमापनसाध्य पापक्षयोऽपि अवशिष्टानामेव। न त्वानीतस्य। प्रारम्भरूपनिमित्ता-भावात्। अतस्तस्य कर्तृत्वमात्रमिति सिद्धम् ॥ ६ ॥ ३ ॥ ९ ॥

स तद्धर्मा ॥ फलिसंस्कारा ब्रह्मचर्यपयोव्रतादय आनीतस्य फलित्वाभावादप्रकृतकार्यकारित्वापत्तेर्न कर्तव्या। अवशिष्टानां तु सत्रफलाभावेऽपि प्रारम्भनिमित्तकपापक्षयस्य सत्त्वात्कर्तव्या। अत-

अतस्तेषामशक्यादौ लोप एव। न तु दम्पतीभ्यां परस्परमपि करणम्। तत्तद्वाक्ये यजमानत्वादेरुद्देश्यतावच्छेदककोटिप्रविष्टत्वात्। अध्वर्य्वादीनामशक्यादौ अध्वर्य्वाद्यन्तरमेवोपादेयमिति न तत्र प्रतिनिधिः ॥ ६ ॥ ३ ॥ ७ ॥

बहूनां ॥ एवं तावत्सूत्याचारप्रमाण्यात् कचित्कर्त्रन्तरस्त्वेऽपि न्यायेन न प्रतिनिधिरिति स्थितेऽपवादः क्रियते। सत्रमध्ये कस्यचिद्यजमानस्य मरणे तत्प्रतिनिधिरन्यः कार्य एव। काम्यस्यापि प्रारब्धस्यावश्यं समापनीयत्वात्। यद्यपि च मुख्यकर्त्तुः प्रयोगविध्यविषयत्वान्न प्रतिनिधिर्न वा मृतेन तदुपादानसम्भवः, तथापि सप्तदशावराः सत्रमासीरन्निति वाक्येन साप्तदश्यविधानात्साप्तदश्यरूपाङ्गसम्पत्त्यर्थं अन्योपादानमवशिष्टैः कार्यम्।

न च तस्याख्यातोपात्ताधिकारिसङ्ख्याविशेषत्वादानीयमानस्य च वक्ष्यमाणरीत्या फलभोक्तृत्वाभावादधिकारित्वानुपपत्तेः कथन्तमादाय साप्तदश्यसम्पत्तिः। फलभोक्तृत्वाभावेऽपि कर्त्तृनिष्ठत्वमात्रेणैव साप्तदश्योपपत्तेः। अतएवार्त्विज्येऽपि ये यजमानास्त ऋत्विज इत्यनेन अधन्यर्त्विक्पदे आर्त्विज्यलक्षणामङ्गीकृत्य तदुद्देशेन यजमानानां कर्त्तृत्वविधानाद्यजमानपदस्य च शानजन्ततया आत्मनेपदरूपत्वेन फलभोक्तृत्वविशिष्टकर्त्तृवाचित्वेऽपि यथाशक्तिप्रयोगे भोक्तृत्वाभावेऽप्यानीयमानस्य कर्त्तृत्वसत्त्वात्सङ्ख्यासम्पत्त्यविघातः। ततश्च सङ्ख्यासम्पत्तये न्यायेनैवात्र प्रतिनिध्युपादानम्।

एवं च न्यायप्राप्तेः पूर्वमेव प्रवृत्तेन, यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह

चामाक्षतकार्योऽपि वचनादेव विधीयते । तस्याश्च यमनियमपरिग्रहस्य फलाद्ब्रह्मचर्यादिसिद्धिः । एवं च ये केचित्तद्भिन्नाः संस्कारास्ते न कार्या इति प्रतिभाति । अत्राथ दीक्षितानामिति श्रवणाच्च नाहीने तदानयनम् ॥ ६ ॥ ३ ॥ १० ॥

सामान्यं ॥ एवं प्रतिनिधौ विचारिते किं सति सम्भवे सदृश एव प्रतिनिधिरुतानियम इति । कर्मचोदनया यत्किञ्चिद्द्रव्यमात्राक्षेपाद्द्रव्यशास्त्रस्य च नीवारेषु व्रीहित्वाभावेन सदृशनीवारादिनियामकत्वाभावाच्च सदृशनियमः । न च व्रीह्यवयविनः स्वावयवैरत्यन्तभेदाभावात्तदवयवानामेव कतिपयानां नीवारोपादानतया नीवाराभिन्नतया व्रीहिशास्त्रेणैव तद्विधानमिति वाच्यम् । तथात्वे व्रीहिसत्त्वेऽपि नीवारोपादाने वैगुण्याभावप्रसङ्गादिति प्राप्ते ।

व्रीहिशास्त्रेण व्रीहित्वजातेः साधनत्वे प्रमिते अमूर्त्तायास्तस्याः साधनत्वासम्भवादर्थात्तत्परिच्छिन्नस्यावयविन' साधनत्वमवगम्यते । तस्यापि चावयवोपादानव्यतिरेकेण साधनत्वासम्भवात्तदवयवानामपि साधनत्वमर्थादेवावगम्यते । तज्जातीयावयवानामेव च कतिपयानां विजातीयावयवान्तरोपेतानां नीवारारम्भकत्वमिति यथाशक्तिप्रयोगे जातेरवयविनोऽवयवान्तराणां च साधनत्वासम्भवेऽपि कतिपयावयवानामेव तत्सम्पत्त्यर्थमवनेयतया नीवारविजातीयतदवयवोपादानमिति सदृशप्रतिनिधिनियमसिद्धिः । अतएव सादृश्यं समानजातीयावयवारब्धत्वेनैव नियामकं, न तु समानजातीयधर्मान्तरेण । तस्य व्रीहिशास्त्राविषयत्वात् । एवं च व्रीह्यभावे सुसदृश,

एव फलिसस्काराणां प्रकृतौ प्रधानफलाधानयोग्यताजननार्थत्वाद्यदा प्रधानकरणात्पूर्वं म्रियेत तदैव तेषां फलिसस्कारा पापचयस्य प्रधानजन्यत्वात् न तु ऊर्ध्वमिति ध्येयम्। दीक्षाकरण तु आनीतस्य वाचनिकमप्राकृतकार्यमिति प्राप्ते।

यद्यपि तस्य न फलित्व, तथाप्यन्येषा फलिसस्कारकर्त्तरि साप्तदश्यसम्पत्त्यर्थमानीतस्यापि ते कार्या। न च ब्रह्मचर्यादिषु पुरुषस्य सस्कार्यत्वेन कर्तृत्वस्यार्थिकत्वात् सङ्ख्यायाश्च वैध एव कर्तृत्वे निवेशात्फलिसस्कारकर्त्तरि साप्तदश्याभाव। वैधावैधसाधारणावश्यककर्तृत्वद्वारेणैव लाघवात्साप्तदश्यस्य सत्राङ्गत्वोपपत्ते। अतस्तत्सम्पत्त्यर्थं कर्त्तव्या एव फलिसस्कारा।

ननु सप्तदशावरा इत्यनेन सत्रप्रयोगे कर्तृपरिच्छेदकत्वेन साप्तदश्य विहित न तु प्रत्येक तत्तत्पदार्थे। प्रत्येकपदार्थानां सप्तदशभिरकरणात्। न चानुमतिद्वारा सप्तदशाना सर्वत्र कर्तृत्व, तथात्वे फलिसस्कारेष्वपि अनुमतिद्वारेणैव साप्तदश्योपपत्तेरानीते फलिसस्कारकरणानापत्ति। किं चैव मृतस्यैव पूर्वकालेऽनुमतिसत्त्वात्सङ्ख्यासम्पत्तिसम्भवेनानयनवैयर्थ्यम्। मृतकर्त्तव्यपदार्थानुष्ठानार्थमानयनमिति चेत्। तेषा कर्मान्तरेष्विवाध्वर्य्वादिसमाख्यया इतरसम्बन्धस्तेषामिति न्यायेन वा कर्त्रन्तरैरेव सिद्धे। अतश्चानयन एव प्रमाणाभावे कुत सस्कारकल्पनमिति चेत्।

न। न्यायेन तदसिद्धावपि वचनेनैव तत्सिद्धे। अतएवोक्तवचने दीक्षितमरणे निमित्ते दीक्षानेदिष्ठसाहित्याद्यनेकगुणविशिष्टनैमित्तिकव्याप्ततात्पदार्थप्रयोगस्यैव विधानान्न वाक्यभेद। दीक्षा

प्रतिनिधिनियमे पूतीकपदस्य तद्गतसोमावयवलक्षणापत्तेरभावे विधिरेवायम्। न च नियमविधिलाघवानुरोधेन तदङ्गीकरणमप्यदोषः। निषादस्थपत्यधिकरणन्यायेनापूर्वविधिगौरवस्य फलमुखत्वात्। अभावे विधिपक्षेऽपि प्रतिनिधिनियमस्यार्थसिद्धत्वेन लाघवस्य सम्मतेऽपि सत्त्वाच्च। न ह्ययं त्वन्मतेऽपि शाब्दः प्रतिनिधिनियमः। अपि तु फलतः। तच्च फलं ममाप्यविशिष्टमेव। किं च सोमाभावे सुसदृशस्यान्यस्यैव प्राप्तौ मन्दसदृशानां पूतीकानां पक्षप्राप्त्यभावादेव नियमविषयत्वानुपपत्तिः। अतः पूतीकत्वेन रूपेण पूतीकानामपि सोमाभावे विहितत्वात्तदपचारे पूतीकसदृशमुपादेयमिति प्राप्ते।

माभावे विधिरयम्। तथात्वे पूतीकत्वस्य तदवच्छिन्नव्यक्तेस्तदवयवान्तराणां च सोमावयवविजातीयानां कारणत्वकल्पने गौरवापत्तेः। प्रतिनिधिनियमे तु क्लृप्तसोमावयवनिष्ठकारणताऽविघ्नोपादानकपूतीकपरिच्छेदकत्वेन यागोद्देशेन पूतीकत्वनियममात्रविधानात्पूतीकव्याप्यावयवानां यागकारणत्वाकल्पनाल्लाघवम्। अतएव न लक्षणाऽपि। पूतीकानभिषुणुयादित्यत्र तु तृतीयायाश्चावयवणादित्वेनोपयया यागप्रयोजकत्वस्यैव निरूढसम्बन्धेन लक्षणेऽपि न दोषः।

यद्यपि च तेन सम्बन्धेन पूतीकत्वस्यैव तद्विध्यभावे न पक्षे प्राप्तिः। पूतीकानां मन्दसदृशत्वेन सोमाभावे सुसदृशस्यैव प्राप्तेः। तथापि कर्मचोदनया यत्किञ्चित्प्रतिनिधिप्रसक्तौ सदृशन्यायेन नियमकरणात्पूर्वमेवैतद्वचनप्रवृत्त्या नियमोपपत्तेः। अतएव पूतीक-

तदभावे सदृशं, तदभावे मन्दसदृशमित्यादि क्रमेण बोध्यम् ॥ ६ ॥ ३ ॥ ११ ॥

निर्देशात्तु ॥ वैकल्पिकेषु खादिरे बध्नाति पालाशे बध्नातीत्यादिष्वेकेन प्रक्रान्ते प्रयोगे यदि तस्यापचारस्तदा वैकल्पिकान्तरमेवोपादेयम् । न तु पूर्वोपात्तसदृशम् । वैकल्पिकान्तरस्याप्युद्देश्यतावच्छेदकसामानाधिकरण्येन विहितस्य तस्मिन्नपि प्रयोगे अङ्गत्वस्वरूपयोग्यतया मुख्यत्वेन जातिव्यक्तिसर्वावयवानामेव साधनत्वसम्भवे पूर्वोपात्तारम्भककतिपयावयवमात्रग्रहणे प्रमाणाभावादिति प्राप्ते ।

तस्मिन्नपि प्रयोगे इतरस्याङ्गत्वे तदभावविकृत*वैगुण्यापत्तेरवश्यं वैकल्पिकस्थले तत्तदाक्ययोस्तत्तद्घटितप्रयोगमात्रविषयत्वावसायात् तत्तत्प्रयोगे इतरस्याङ्गत्वाभावेऽपि न †पूर्वोपात्तसदृशमेवोपादेयम् । अतएवाग्नेयत्वादिव्याप्यधर्मावच्छिन्नं प्रत्येव प्रौक्षादेः कारणत्वमित्युक्तं कौस्तुभे । तथापि वैकल्पिकानामादितोऽवधारणमित्यस्य प्रामाणिकत्वे सङ्कल्पोत्तरमेव, तदभावे निर्वापादानोत्तरमेव तस्यापचार इति द्रष्टव्यम् ॥ ६ ॥ ३ ॥ १२ ॥

वचनाच्च ॥ यदि सोमं न विन्देत्पूतीकानभिषुणुयादित्यादौ किं सोमाभावे पूतिकत्वेन रूपेण पूतीकानां विधानमुत प्रतिनिधिविधया पूतीकगतसोमावयवानां नियम इति चिन्तायाम् ।

---

* इत्थमेव पाठः सर्वत्र । समस्तु, तदभावकृत,—इति पाठः प्रतिभाति ।

† इत्थमेव पाठः आदर्शपुस्तकेषु । इतरस्याङ्गत्वाभावेन,—इति तु समीचीनं प्रतिभाति ।

तु प्रतिनिधिनैव कार्यं निष्पन्नं, तदा प्रयोजनाभावात् न मुख्यमुपादेयम्। मुख्याभावनिमित्तकप्रायश्चित्तमात्रमेव तु कार्यम्। यदा नियोजनादिकार्यमात्रयोग्योमुख्यः तक्षणादिसकलसंस्कारयोग्यस्तु प्रतिनिधिः, तदा मुख्यस्यैवोपादानम्। संस्काराणां तु गुणलोपे च मुख्यस्येति न्यायेन लोपेऽपि न दोषः। न चान्यत्र तथात्वेऽपि यूपस्य दृष्टादृष्टसंस्कारसमूहरूपत्वाच संस्काराणां काष्ठाङ्गत्वमिति वाच्यम्। लाघवेन सकलसंस्कारजन्यपरमापूर्वविशिष्टकाष्ठस्यैव यूपपदार्थत्वात्। अतएव यूप तक्षतीत्यादौ काष्ठस्यैव संस्कार्यत्वाच्च काऽप्यनुपपत्तिः।

यत्र तु प्रधानभूतनियोजनासमर्थमेव मुख्यं, तत्र तदनादरेण प्रतिनिधिनैव कार्यसम्पादनं द्रष्टव्यम्। यत्र लघुप्रक्षपरिमाणशेषकार्याप्रर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्थाश्रीहयोलभ्यन्ते, तत्र तैरेव पुरोडाशं कृत्वा प्रधानमनुष्ठेयम्। शेषकार्याणां लोपः। न च बहूनां शेषकार्याणां पुरोडाशाङ्गभूतानां पुरोडाशाङ्गभूतैकश्रीह्यानुरोधेन लोपासम्भवः। श्रीहीणामपि यागोद्देशेन विहिततया यागाङ्गत्वेन पुरोडाशाङ्गत्वाभावात्। न चोत्पत्तिशिष्टपुरोडाशावरोधाद्व्रीहिभिरिति तृतीया प्रयोजकत्वपरेति वाच्यम्। पुरोडाशरूपव्यापारकत्वेऽपि करणत्वस्य काष्ठैः पचतीत्यादिवदुपपन्नतरत्वेन लक्षणायां प्रमाणाभावात्। अतश्चैकप्रधानाङ्गानुरोधेनानेकेषामपि अङ्गाङ्गानां लोपोनायुक्तः॥ ६॥ ३॥ १३॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
षष्ठस्य तृतीय पादः।

---

गतसोमावयवनियमफलकपूतिकत्वनियमकरणेऽपि न पूतीकानां मुख्यद्रव्याभावे उपादानम् । किं तु सोमाभाव एव । वचनस्यैव सौमप्रसक्तिकतया नियामकत्वात् । 'यदि सोम' मित्यनुवाद-सामर्थ्याच्च । एवं च पूतीकापचारे सोमपूतीकोभयसदृशं ग्राह्यम् । पूतीकत्वस्यापि कारणकोटौ प्रवेशात् ।

यत्तु शास्त्रदीपिकायामेतादृशविषये सोमसदृशमेव ग्राह्यमित्यु-क्तम् । तत्तन्त्ररत्नविरोधादुपेक्षितम् । तदभावे तु सोममात्रसुसदृशं पूतीकत्वावच्छिन्नसंसर्गस्य सोमावयवाङ्गत्वेन गुणलोपे चेति न्यायेन बहुतरसोमावयवानामेवानुग्राह्यत्वात् । अभावे विधिपक्षे तु सोमा-भावे निमित्ते पूतीकानामेवाङ्गत्वात्तत्सदृशमेवेति विशेषः । अतएव यत्र व्रीह्यादौ तदवयवत्वेनैव नीवारप्रतिनिधिः, तत्र नीवारत्वस्यानङ्गत्वा-त्तदपचारे व्रीहिसदृशमेवोपादेयं, न तूभयसदृशमित्यपि सुलभम् । अतएव मूले उभयविधप्रतिनिध्यपचारे अधिकरणद्वयं कृतम् । तन्त्र-वाक्यत्वादुपेक्षितम्* । यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रवृत्तः, उपादाय वा दिक्षादयः सर्वे वा संस्काराः कृताः, कार्यं न कृतं, तत्र कार्यकरणात्पूर्वं मुख्यलाभे तमेवोपादाय पुनः संस्का-रान्कृत्वा तेनैव प्रधानं कार्यम् । मुख्यसम्भवे विकल्पोपादानस्य वाचनिकस्याप्यन्याय्यत्वात् ।

न च प्रतिनिधित्यागे सङ्कल्पबाधः । द्रव्यांशे पृथक्सङ्कल्पे प्रमाणा-भावात् । सत्त्वेऽपि वा यथाशक्ति शास्त्रार्थं सम्पादयिष्य इत्येव सङ्कल्पात् । प्रधानानुरोधेन पुनः संस्कारकरणस्य न्याय्यत्वाच्च । यदा

* असङ्गतोऽयं पाठः मूले स्थितत्वान्निवेशितः ।

न च सर्वमते हविष्ठावच्छिन्ननाशादिना हविरयोग्यत्वस्य निमित्तत्वे द्विद्व्यवयवनाशेऽपि आज्येन यागापत्तिः। निमित्तज्ञानस्यैव नैमित्तिकानुष्ठापकतया तादृशनाशस्य नित्यतया च निमित्तत्वानुपपत्तेः। अङ्गुष्ठपर्वन्यूनावर्जनीयातिरिक्तावयवनाशे तु भवत्येवाज्येन यागः।

तदेवं मीमांसकमर्यादा। याज्ञिकास्तु तां न मन्यन्ते। तेषामयमाशयः। एकदेशनाशवदेवैकदेशनाशस्य न निमित्तम्। एकदेशनाशेऽपि पुरोडाशाज्यपयोदधित्वादेः प्रत्यभिज्ञायमानत्वात्। तस्यैव हविष्ठावच्छेदकत्वेन यावत्त्विद्व्यक्तिविपरिमितत्वादेस्तदनवच्छेदकत्वात्। तथाशास्त्रावर्जनीयत्वाच्च। अत एकदेशनाशेऽप्यवशिष्टेनैव यागः। होमः परं मध्यापादानकत्वाभावे द्ववदानासम्भवात् लुप्यताम्। वस्तुतस्तु यावदवशिष्टं तत्रापि हविष्ठात्तन्मध्यापादानकत्वं सम्भवत्येवेति होमोऽपि कार्य एव। अत एवाश्वलायनः। द्ववदाननाशे पुनरायतनादवदानमिति। अतश्च यद्यपि मीमांसकमतं न्यायसिद्धं भवेत्तथापि स्वयत्नुमितवचनेन तद्बाधः। अग्निष्टुति सुमद्ध्यास्येवत्। कृत्स्नहविर्नाशे तु अनेकहविष्कायागिष्टौ कतिपयहविर्नाशे हविरन्तरोत्पत्तिरेव। सर्वहविर्नाश एवाज्येन पुनःकृत्यादितेन* यागः। अतएवापस्तम्बः। यद्यप्रसक्तदेवतं हविर्व्यापद्येतान्यद्धविस्तद्देवतं निर्वपेत्, यस्य सर्वाणि हवींषि आज्येनैतादेवताः परिसङ्ख्याय यजेतेति। यद्यपि चोत्तरवाक्ये श्रुतौ च सर्वत्वमवि-

* पुनरुत्पादितेन वा,—इति भवितुं युक्तम्।

# अथ षष्ठोऽध्यायः ।

## चतुर्थः पादः ।

शेषात् ॥ दर्शादौ यदा सकलस्य पुरोडाशस्य दधिपयसोरन्यस्य वा हविषः सम्पूर्णस्य नाशस्तदा प्रधानानुरोधेन हविरन्तरोत्पत्तौ प्रसक्तायां यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्ये-नैतादेवताः परिसङ्ख्याय यजेतेति श्रुतेनाज्येनैव याग इत्यविवादम् । अत्र हि नाशादीनां प्रत्येकं निमित्तत्वे वाक्यभेदापत्तेरुत्पन्नहविर-योग्यत्वमेवार्थमन्तर्वेदौतिग्रलक्षणया निमित्तम् । न तु हविरलाभः । नाशाद्युल्लेखवैयर्थ्यापत्तेः । अतएवानुत्पन्नपुरोडाशाद्यसम्भवे नाज्य-नियमः, किन्तु यत्किञ्चिदनियतप्रतिनिध्युपादानमेव ।

एकदेशनाशादौ च यदि ध्रुवदानग्रहणोत्तरं पात्रीस्थस्य कुम्भीस्थस्य वा नाशस्तदा भाष्यकारमते तावद्ध्रुवदानस्यैव हविष्का-र्यकार्याभावेऽपि तेनैव यागः । वार्त्तिककारमते तु यावच्छिष्ट-मौहिपरिमितपुरोडाशस्य, यावद्दुग्ध साम्नाय्यस्य च हविष्ट्वावि-र्नाशमत्वेन पात्रीस्थनाशेऽपि आज्येनैव यागः । एवं तन्मते ध्रुवदान-नाशेऽपि हविर्नाशाविशेषाद्धविरन्तरोत्पत्तिप्रसक्तौ वचनादाज्येन यागः । भाष्यकारमतेऽपि तादृशविषये आज्येनैव यागो न पुनः पात्रीस्थादवदानम् । मध्यात् पूर्वार्धाच्चावद्यतीत्यनेन कृत्स्नस्य याव-दुपात्तस्य प्रकृतस्य पुरोडाशादेर्यो मध्यादिदेशः तदुपादानतया तदु-परितनभागस्यैवावदेयत्वात् । तस्य च नष्टत्वेन पुनरवदाने मध्यादेरेवा-वदेयत्वप्रसङ्गात् । अतस्तत्रापि हविरन्तरोत्पत्तिप्रसक्तावाज्येन यागः ।

अत्र हि एकोद्देशेन कर्तृविशिष्टभक्षान्तरविधानेऽपि विशेषण-विधिवेलायां प्राप्ताप्राप्तविवेकेन भक्षो यजमानसाहित्यञ्च विधीयते। ऋत्विजां तु भक्षस्य प्रयाजशेषाभिधारणन्यायेन कर्तृसंस्कारकत्वस्यापि वक्ष्यमाणत्वेनामत्यर्थत्वात् प्राप्तिसम्भवेन न विधानम्। स्तत एवा-नततत्वाच्चाप्राप्तं यजमानसाहित्यं तु विधीयते।

यदि तु करिष्यमाणकर्मणि बलाधानार्थत्वमपि भक्षस्येति विभाव्यते, तदाऽस्तु यजमानपदमत्वग्रहणं पत्नीपरिसङ्ख्यार्थम्। सर्वथा भक्षान्तरे कर्तृपरिसङ्ख्याऽभावाच्छंयुवाककालेऽपि भक्षे ऋत्विज-एव कर्त्तारः। अस्मिंश्च पक्षे तस्मिन् पत्नीयजमानयोर्निषेधस्त्रिरत्रै-वर्त्तिजो हविःशेषान् भक्षयन्तीति कल्पसूत्रकारवचनादवगन्तव्यः॥ ६॥४॥२॥

अर्थसमवायात्॥ दर्शपूर्णमासयोः प्रायश्चित्ताधिकारे भिन्ने जुहोति स्कन्ने जुहोतीति श्रुतम्। तत्र कृत्स्नभेद एवेदमुतैकदेशभेद-एव उतोभयत्रापीति चिन्तायाम्। द्वयोः मङ्गर्षे सति एकदेशभेद-स्यावर्जनीयत्वेन नित्यत्वात् निमित्तत्वानुपपत्तेः सर्वभेद एवेदं चूर्णतादशायां प्रायश्चित्तमिति प्रथमः पक्षः।

मङ्गर्षेण कतिपयावयवानां चूर्णीभावेऽपि भिन्नमितिप्रतीत्य-भावात्कपालिकादिस्थूलावयवविभाग एव भेदनमतो नैतस्य चानि-त्यत्वेन सर्वभेदनवदेकदेशभेदनस्यापि निमित्तत्वोपपत्तेस्तत्रैवायं होमः। अयं हि भेदनस्य निमित्तत्वेऽपि होमस्य प्रयोजनापेक्षायां सन्निपत्योपकारकत्वलाभाय भिन्नकपालसंस्कारार्थः। कपाले हि भेदनेनोक्तपरिमाणबाधादेर्गुणप्रसक्तौ तत्परिहाररूपः होमेन

वर्जितं, तथापि पूर्ववाक्यवैयर्थ्यापत्तेर्देविकमयत्नवद्विरुद्धा सर्वनाशस्य निमित्तता ॥ ६ ॥ ४ ॥ १ ॥

अपि वा ॥ यत्र तु त्यागांशयुक्तानि शेषकार्याणि, यथा स्विष्टकृदादौ । तत्रोत्तरार्धादिनाशे उत्तरार्धान्तराभावादवशिष्टस्य प्रतिपत्त्यन्तरगृहीतत्वाच्च न तावच्छेषेण करणम् । नापि हविरन्तरोत्पत्तिः । अप्रयोजकत्वात् । किं त्वाज्येनैव समापनम् । उक्तवचनस्य श्रुतद्रव्यनाशे द्रव्यापेक्षामात्रेणैव प्रवृत्तेः । याज्ञिकमते तु यदि प्रधानदैवतमाज्येन शेषं समापयेदित्यापस्तम्बवचनादवधेयम् । अविशेषप्रवृत्तमपि इदमेवानुरोधात् स्विष्टकृत्परमेव । अतस्त्यागांशाभावादिडादेर्लोप एव । इदं चोत्तरार्धत्वादिनाऽनेकप्रतिपत्तिविधाने । शेषत्वेनानेकप्रतिपत्तिविधाने तु शेषैकदेशाविनाशेऽपि अवशिष्टेनैवावयवशः सर्वप्रतिपत्तिकरणमिति ध्येयम् ॥ ६ ॥ ४ ॥ २ ॥

निर्देशात् ॥ शेषप्रसङ्गादिदम् । दर्शपूर्णमासयोः शेषभक्षाः श्रुताः । तत्रेडाभक्षे यजमानपञ्चमा इडां भक्षयन्तीति श्रुताः कर्तारः । तथा, प्राशित्रभक्षे प्राशित्रं ब्रह्मणे परिहरन्तीति श्रुतः । चतुर्धाकरणभक्षेऽपि चादेशाधानात्वात् ऋत्विजः । यजमानभागब्रह्मभागयोस्तावेव । शंयुवाककालभक्षे तु हविःशेषान् भक्षयन्तीत्याम्नातेन बहुवचनेनाध्वर्युब्रह्माग्नीध्राणामपि कर्मकरत्वात् सर्वर्त्विजो भवन्ति ।

न चेडाभक्षे न्यायप्राप्तर्त्विक्पुंस्त्ववचनस्य परिसङ्ख्यार्थत्वाच्छंयुवाककालभक्षे तद्वदेव स्यादिति वाच्यम् । ऋत्विजां प्राप्तेऽपि अप्राप्तयजमानप्राशित्रस्यैव तत्र विधेयत्वेन तस्य भक्षान्तरे ऋत्विक्परिसङ्ख्यार्थत्वाभावात् ।

सर्वत्र दर्शनेन प्रयोगसमाप्तेरेव लक्षणया प्रकृतेऽपि प्रतिपादनात्। अतः सर्वदाह एवेदं पुनः प्रयोगरूपं प्रायश्चित्तम्। सर्वदाहे प्रायश्चित्तं यदि वा ऽवदानेभ्यो न प्रभवेदित्यापस्तम्बेन सर्वदाहे अवदानापर्याप्तैकदेशदाहे वा पुनः प्रयोगविधानेन तद्भिन्नैकदेशदाहे प्रायश्चित्तानुपपत्तेः। अत एवैकदेशदाहस्य परिच्छेत्तुं शक्यत्वेऽपि एतन्मूलभूतश्रुत्यैव तत्र प्रायश्चित्तासम्भवः। तादृशैकदेशदाहे तु नामाधिकरणन्यायेनाज्येन दध्नाऽवशिष्टेन वा प्रयोगसमाप्तिमात्रम्। एवं सर्वदाहेऽपि प्रयोगसमाप्तिराज्येन पुरोडाशान्तरोत्पत्त्या वा द्रष्टव्या ॥ ६ ॥ ४ ॥ ५ ॥

यथाश्रुति ॥ दधिपयसोरेकैकस्य नाशे प्रायश्चित्तमुक्त्वा, यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्याम्नातम्। तत्र च नार्त्तिमात्रस्य निमित्तता। सर्वदैव कस्य चिदार्त्तिमत्त्वेन नित्यतया निमित्तत्वानुपपत्तेः। अतोऽर्थमन्तर्वेदीति वत्तलक्षणया हविरार्त्तिर्निमित्तमिति तावदविवादम्। अतश्च तद्वदेवोभयत्वमपि उभयपदवैयर्थ्यापत्तेर्लक्षणया निमित्तकोटिप्रविष्टमित्युभयहविरार्त्तिरेव निमित्तम्। न चैकवचनादिवत्साधुत्वादिकं प्रयोजनमस्तीति प्राप्ते।

यद्देकत्वाधिकरणन्यायेनेप्सितोद्देश्यविशेषणस्येव निमित्तरूपोद्देश्यविशेषणस्यापि विवक्षाऽयोगादिष्टलक्षणायाश्चैकवचनाद्यनुरोधेनेवोभयपदानुरोधेन हविरादिपदेषु करणे प्रमाणाभावात् उभयपदस्य चोभयमपीत्येवं पूर्वोक्तैकैकनाशप्रायश्चित्तापेक्षया अस्योत्कर्षेण स्तावकतयाऽप्युपपत्तेरुभयत्वस्य निमित्तकोटिप्रविष्टत्वायोगादेकैकहविर्नाशेऽपि इदं प्रायश्चित्तम्।

संस्कारोनानुपपन्नः। तस्य चानुपयुक्तस्य संस्कारायोगात्सर्वभेदने चोपयोगाभावादेकदेशभेदनं एव निमित्तम्। अस्तु वा सप्तमीयं संस्कार्यत्वपरैव न तु निमित्तत्वार्थिकाऽपि। न च भिन्नस्य कादाचित्कत्वान्नित्यानित्यसंयोगविरोधः। स्यन्तरस्य कादाचित्कत्वेऽपि सम्मीलनादिधर्मविधिवदुपपत्तेरिति प्राप्ते।

भाव्युपयोगित्वे भूतोपयोगित्वे वा तस्योपधानावश्यकत्वे भिन्नं कपालमप्सु प्रक्षिपति अन्यदुपदधातीति वाक्यविरोधान्नायं स्वतन्त्रोहोमोभिन्नसंस्कारकः। नापि प्रकरणपठितहोमानां तत्संस्कारकत्वम्। एतेन प्राकरणिकहोमानुवादेन लौकिकस्य भिन्नकपालस्य एवाधिकरणत्वेन विधिराहवनीयबाधेनेत्यपास्तम्। होमस्य प्राकरणिकस्य कपालोपधानोत्तरत्वादन्यदुपदधातीत्यस्य वैयर्थ्यापत्तेः। प्रायश्चित्तसमाख्याऽनुपपत्तेश्च। अत एवेदं कर्मान्तरम्। तच्च नैमित्तिकं आरादुपकारकं क्रतुवैगुण्यपरिहारार्थं फलत्वेन विधीयते। अतः सर्वभेदनमेकदेशभेदनमुभयमपच निमित्तम्॥ ६॥४॥४॥

क्षामे॥ तत्रैव यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति यदा तद्धविः सन्तिष्ठते अथ तदेव हविर्निर्वपेदिति श्रुते प्रायश्चित्ते सर्वपुरोडाशदाहरूपं क्षाणमेव निमित्तम्। अग्निपाक्ये हविषि एकदेशक्षाणस्यावर्जनीयत्वात्। न चावर्जनीयक्षाणातिरिक्तैकदेशक्षाणस्यैव निमित्तत्वम्। तस्यैव परिच्छेत्तुमशक्यत्वात्। न च तद्धविः सन्तिष्ठत इति श्रवणात् अवशिष्टेन हविषा यागप्रतीतेरेकदेशक्षाणस्यैवनिमित्तत्वम्। प्रयोगसमाप्तावेवैवंजायतीयकप्रयोगस्य

नियमं प्रति कर्त्तुः संस्कार्यत्वादिनः पार्थसारथेर्मते तदायत्ता-वपि पार्ष्टिकेन विधिना भर्त्रं प्रति संस्कार्यत्वे उच्यमाने श्रूयमाणे विधौ कर्तृणामुपादेयत्वादिविशेषणविवक्षोपपत्तौ आर्थिकेन विधिना विशेषणविशिष्टस्यैव कर्तुरुद्देश्यत्वाङ्गीकारेण साहित्याविवक्षाऽनापत्तिः। अतोऽत्र मिलितयोरेव होमाभिषवयोरार्थिकं निमित्तत्वम् ।

यदि तु क्त्वाप्रत्ययस्य द्वितीयक्त्वाप्रत्ययान्तपदोपात्तक्रियाया-मप्यन्वयोनाव्युत्पन्न इत्यभिषवसमानकर्तृकत्वं होम एव विशेषणं, विशिष्टहोमसमानकर्तृकत्वस्य च भक्षणभावनायामन्वय इत्युच्यते । तदा सुतरां विशेषणविवक्षा । इतरथाऽभिषवस्याप्यविवक्षाऽऽपत्तेः ॥ ६ ॥ ४ ॥ ७ ॥

पुनराधेय ॥ यस्योभावग्नी अनुगतौ आदित्योऽभ्युदियादस्त-मियाद्वा पुनराधेयमेव तस्य प्रायश्चित्तिरिति श्रुतं प्रायश्चित्तं किमेकैकाग्न्यनुगमेऽपि भवेदुत सर्वाग्न्यनुगतावेवेति चिन्तायाम् ।

उभयत्वस्य निमित्तविशेषणत्वेन लभ्यतेऽप्यविवक्षितत्वादेकैका-ग्न्यनुगमेऽपीदं प्रायश्चित्तम् । न च हविरुभयत्ववदेकैकाग्न्यनुगमे मातपत्यादिप्रायश्चित्तान्तराम्नानादस्योभयविषयत्वम् । तस्यादित्यो-दयाद्यभावविषयत्वात् । न चैवमपि प्रकरणादेवकारश्रवणात्पुनः-पदप्रयोगाच्च कर्मान्तरत्वानुपपत्तेराधानस्य चोत्पत्तिवाक्ये सर्वाग्नि-जनकत्वस्यैव क्लृप्तत्वेन विधेयसामर्थ्यानुरोधेन उद्देश्यनिर्णय इति वाच्यम् । उत्पत्तिवाक्येऽप्यग्नीनामुद्देश्यत्वेनाविवक्षितविशेषणत्वात् । अतएव योगसिद्ध्यधिकरणन्यायेनाधानस्य प्रत्यग्नि भिन्न एव प्रयोग-इति प्राप्ते ।

वस्तुतस्तु उभयार्थिरेवाच निमित्तम् । न च तस्या अपि नित्यत्वात् निमित्तत्वानुपपत्तिः । प्रकरणादेव हविर्विशेषविषयत्वोपपत्तेः । इतरथा भवन्ततेऽपि दधिपयोविषयत्वानुपपत्तेः । अतोदोहद्वयनाश एवेदं प्रायश्चित्तम् । हविःपदमेव त्वविवक्षितम् । अधिकरणं तु हविःप्राधान्यं कृत्वा चिन्तायाम् ।

वस्तुतस्तु । पयद्वयेऽपि न हविरादिपदे लक्षणा । सर्वेषां पदार्थानामाख्यातार्थान्वयोत्तरं पश्चात्परस्परान्वयोपपत्तेः । एवं च विशिष्टस्य निमित्तत्वानादरो निमित्ततावच्छेदकगौरवभियाऽन्यतरविवक्षयाऽपि निमित्तत्वोपपत्तेरन्यतरपदस्य चाधानवाक्यगतयुक्तस्वेनानुवादत्वेनाप्युपपत्तेश्च द्रष्टव्यः ॥ ६ ॥ ४ ॥ ६ ॥

सोमाभिषव ॥ सोमे हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीत्यत्र हविर्धानाधिकरणकयावकरणकाभिषवस्य आहवनीयाधिकरणकहोमस्य प्रत्यग्गमनस्य सदोधिकरणकत्वस्य च प्राप्तत्वाद्धोमाभिषवसमानकर्तृकभक्षमात्रमेवेद्भ्रणादिधीयत इत्युक्तम् । तत्र च होमाभिषवयोः क्लृप्तप्रयोजनयोरेव कर्तुपलक्षणत्वान्निमित्तत्वमिति तद्विशेषणस्यैकवाक्योपादानलभ्यसाहित्यस्याविवक्षितत्वम् ।

यदि त्वार्थिकं निमित्तत्वं होमाभिषवकर्तुरेवोपादेयत्वात्तद्विशेषणं साहित्यं विवक्षितमित्याशङ्क्येत । तथापि प्रयाजशेषाभिधारणन्यायेन भक्षस्य तद्गतकर्तृनियमस्य वा कर्तृसंस्कारकत्वाद्धविर्विशेषणस्येव तद्विशेषणस्याप्यविवक्षा । अतोऽभिषवमात्रकर्त्रा नेष्ट्रादिना होममात्रकर्तृभिः चमसाध्वर्युभिरपि स भक्षः कर्त्तव्य इति मतम् ।

व्यभिचारिणोगुणस्य वाजिनवद्यागभेदकत्वाव्यसम्भावात्। अभ्युदितेष्टौ तु पूर्वदेवताऽपनयविधानाद्यच्छब्दश्रवणाच्च विशिष्य पूर्वयागोद्देशप्रती-तेर्भावनामात्रभेद इति विशेषः॥ ६॥ ४॥ ८॥

ए अग्न्यामनेत्॥ तदिदं कर्मान्तरं द्रव्यनाशप्रयुक्तवैगुण्यपरि-हारार्थत्वेन साम्नाय्याङ्गतया विधीयते। न तु तत्फलार्थं तत्स्थाने। तत्फलस्य पापक्षयादेः शिष्टविगर्हणनिमित्तकस्य वा साम्नाय्ययागे-नैवसिद्धेः साधनान्तरानपेक्षत्वात्। न हि द्रव्यनाशे यागलोपः। द्रव्यान्तरोत्पत्त्या आज्येन वा तत्समापनोपपत्तेः।

न च स्वर्गादिरूपस्य फलस्य वैगुण्ये सत्यनुत्पत्तेस्तस्य साधना-पेक्षायामस्य विधानमिति वाच्यम्। तथात्वे तत्कामनाऽभावे तद-ननुष्ठाने निमित्तश्रुतेः सङ्कोचापत्तेः। अतोऽपेक्षितवैगुण्यसमा-धानार्थत्वेनैवास्य विधानम्। अपेक्षा च साम्नाय्ययागस्यैवेति तस्यैव विशिष्योपस्थितत्वात्तद्वाचकपदकल्पनया वाक्यात्तदङ्गत्वमेव। न तु प्रकरणात् सर्वाङ्गमनुष्ठानमादिश्याद्गर्भमात्राङ्गं वा। अतएव हविर्नाशे निमित्ते प्रयोगान्तःपात्येवेदमङ्गं, न तु चाणनिमित्तकपुनःप्रयोग-वत्प्रयोगवहिर्भूतम्॥ ६॥ ४॥ १०॥

विश्वजित् तु॥ सत्त्र प्रकरणे, यः सत्त्रायागुरते स विश्वजिता यजेतेति श्रुतेः सङ्कल्परूपमागूरणं कृत्वा यः सत्त्रं न करोति तस्येद सत्त्रफलार्थत्वेन विधानम्। न तु सत्त्राङ्गतया। तथात्वे आगूरण-निमित्तत्वश्रवणवैयर्थ्यात्। न चैव सत्त्राकरणस्यापि निमित्तान्तः-प्रवेशाद्गौरवापत्तिः। अतः संकल्पमात्रे निमित्ते नैमित्तकमिदं फलान्तरार्थं विधीयत इति वाच्यम्। फलान्तरकल्पनापेक्षया सत्त्रफलस्यैव साधनसाकाङ्क्षस्य फलत्वकल्पने लाघवात्।

आयतनेषु यथाराग्निवपति इत्यत्रायतनवद्भूलस्य विवच्चितत्वा-दाधानस्यैकेनैव प्रयोगेण सर्वाग्न्युत्पादकत्वावगतेर्विधेयस्य सामर्थ्या-नुसारेण सर्वानुगम एवेदं प्रायश्चित्तम् । अतएव दक्षिणाग्नेर्भिन्नयो-नित्वपक्षाभिप्रायेणोभावित्ति श्रवणम् । समानयोनित्वे तु भिन्नया-ग्निनाशे बोध्यम् ॥ ६ ॥ ४ ॥ ८ ॥

पञ्चशरावस्तु ॥ ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र हविर्नाशे आज्यादिना समापने प्रसक्ते प्रतिनिधित्वेन लाघवात् साम्नाय्यानु-वादेन पञ्चशरावपरिमितौदनमात्रविधानम् । न च वाक्यभेदः । पञ्चशरावौदनयोः समानाधिकरणत्वेनाग्नये दात्र इतिवद्विशिष्ट-विधानोपपत्तेः । ओदनपदस्य तात्पर्यग्राहकत्वेन पञ्चशरावमिति यद्भव्रीहित्वेनौदनस्योक्तत्वाच्च । ऐन्द्रमिति साम्नाय्यस्यैन्द्रदेवताकत्व-स्यापि सत्वात्तावद्भूतामितिवत्प्राप्तिकानुवादः । अथ वा तत्तदु-त्पत्तिवाक्ये इन्द्रमहेन्द्रभेदेन साम्नाय्यस्य भेदादैन्द्रयागानुवादेनैव प्रतिनिधिविधानमिति प्राप्ते ।

सुवन्तपदद्वयस्य परस्परान्वयाव्युत्पत्तेर्यद्भव्रीहिणा सामान्यतो-द्रव्योपादानेऽपि ओदनत्वादिरूपेणोपादाने प्रमाणाभावात्तात्पर्य-ग्राहकत्वमङ्गीकृत्यैकस्यैव पदे विशिष्टलक्षणाङ्गीकारे च क्वापि प्राप्तकर्मानुवादेनानेकविधाने वाक्यभेदानापत्तेर्वाक्यभेदापादकगुणा-देव कर्मान्तरमिदं प्रायश्चित्तत्वेन विधीयते । समाप्तिस्त्वाज्यादि-नैव । अग्नये दात्र इत्यत्रापि तु न देवतामात्रविधिपक्षाश्रयणम् । वाक्यभेदप्रसङ्गात् । अपि तु भावनान्तरविधिपक्ष एव ।

न चैवमत्रापि भावनान्तरत्वापत्तेर्यागान्तरत्वानापत्तिः । उत्पत्त्य-

याजिन एव वत्सापाकरणसत्त्वाद्भुतम्। अतएव एकपुरोडाशीयाया-मग्नीषोमीयाभावेऽपि आग्नेयसत्त्वात्कालोपलक्षणत्वेनोपांशुयाजेऽपि न क्षतिरिति भाति।

मन्त्रवेलायामागन्तव्यमित्यादौ उपलक्षणाभावेऽप्युपलक्ष्यानपायाद्वत्सापाकरणाभावेऽपि अन्वाधानपश्चाद्भावरूपतत्कालानपायात्सांनाय्याभावेऽपि कर्त्तव्यमेव मतम् ॥६॥४॥१२॥

प्रस्तरे॥ सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रहरणएव शाखासाहित्यं प्रस्तरस्य न तु होम इत्युक्तं चतुर्थे। तत्तु न समप्रधानत्वेन। प्रस्तरप्रहरणस्येव शाखाप्रहरणस्यापि शाखाप्रतिपत्तितया। किन्तु प्रस्तरप्रहरणे शाखासाहित्यङ्गुणत्वेन। मैत्रावरुणस्य इव पयःसाहित्यम्। सहयोगेऽप्रधान इत्यनुशासनेन गुणत्वावगमादिति भाति।

शाब्दबोधे गुणत्वश्रवणेऽपि प्रयाजशेषाभिघारणन्यायेनार्थिकप्रतिपत्त्यन्तरविधिकल्पनेन प्रस्तारवच्छाखाया अपि कृतार्थत्वाविशेषेण प्रतिपाद्यत्वम्। अतएव शाब्दबोधे गुणत्वश्रवणमपि प्रस्तरप्रहरणकालप्रतिपत्त्यर्थमित्युक्तं न तु स्वयं तत्त्वम्। अतश्चामावास्यायां शाखां विनैव प्रस्तरप्रहरणं, पौर्णमास्यां च। यथाशक्ति प्रयोगे प्रस्तराभावेऽपि गुणलोपे चेति न्यायेन शाखाप्रहरणम् ॥६॥४॥१३॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य चतुर्थः पादः।

---

तत्र फलं यद्यपि न मुख्यस्येव स्वर्गादिफलत्वेन कल्पयितुं शक्यं, तथात्वे वीतायां फलेच्छायां सकल्पकृपस्य निमित्तस्य सत्त्वेन नैमित्तिकाननुष्ठाने निमित्तसङ्कोचापत्तेः । तथापि प्रारब्धाकरणनिमित्तदोषपरिहाराय चेधातवीयास्थाने विधीयते । अतएव तादृशफलवाचकपदकल्पनयैवाकरणविषयत्वसिद्धेर्न तस्यापि निमित्तान्तःप्रवेशः । अतएवैकस्याप्यकरणे अन्ये कर्त्तव्यः सपाद्यासपाद्यैव वा सत्रप्रयोगेऽपि अनेनैव विश्वजित्कार्य इत्येकवचनस्याप्युपपत्तिः ॥६॥४॥११॥

वत्स ॥ यद्वे अप्रवृत्तस्य विश्वजिदुक्ते भाष्ये अप्रवृत्तस्यैव व्रतमित्युक्तमर्थमुत्तराधिकरणम् । तदुपोद्घातत्वेनेदं विचार्यते । दर्शपूर्णमासयोर्बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामिति श्रुतम् ।

तत्र तृतीयया वत्सकरणकभक्षणापरपर्यायव्रतविधिः, रागप्राप्तभक्षणानुवादेन अमाषममांस ससर्पिष्कं व्रतं व्रतयतीति वचनान्तरप्राप्तभक्षानुवादेन वा वत्समात्रविधिरिति प्राप्ते ।

न तावद्वत्सस्य व्रते हस्तादिवत्करणत्वं, नापि भक्ष्यत्वेनाशक्यत्वात्, नापि मासप्रकृतित्वेन विना वचनं विधाने प्रमाणाभावात् ।

अत पुरा वत्सानकर्त्तोर्दम्पती अश्नीयातामितिवचनान्तरैकवाक्यतालाभाय बर्हिषा पौर्णमास इत्येतन्न्यायपाठाच्च वत्सप्रातिपदिकेन वत्सापाकरणं लक्षयित्वा तृतीया चेत्यम्भूतलक्षणे व्याख्यायामावास्योद्देशेन वत्सापाकरणपूर्वकालीनताश्रितत्वेन विधीयते, स्रत च प्रकरणप्राप्तमिति न कश्चिद्विरोधः ॥६॥४॥१२॥

कालश्चेत् ॥ यद्यपि वत्सापाकरणं कालोपलक्षणं न तु स्वयमङ्गं परार्थत्वात्, तथापि तदभावे कालस्यैव ज्ञातुमशक्यत्वात्साम्नाय्य-

मिष्टाग्न्यादिविधानम् । आग्नेयोऽष्टाकपाल, पञ्चदशान्याज्यानीत्यादिवदसमस्तपदाना क्रियार्थातिरेकेण परस्परान्वयस्याव्युत्पन्नत्वात् । अतएव प्रकृतमध्यमादिद्रव्योद्देशेन देवतान्तरमात्रविधिरित्यपास्तम् । देवतातद्गुणरूपानेकविधौ वाक्यभेदतादवस्थ्यात् ।

किं चैव स्विष्टादिवाक्ययोर्द्रव्यद्वयोद्देशाद्वाक्यभेद । न चासौ स्वीकृत इति तन्त्ररत्नोक्तं युक्तम् । प्रमाणाभावात् । सर्वत्रैव तदापत्तेश्च । किञ्च मध्यमादिषु यच्छब्दप्रयोगेण प्रकृतग्रहणेऽपि दधिशृततयोस्तदभावात् प्रकृतग्रहणे प्रमाणाभावेनोद्देश्यत्वानुपपत्ति ।

न च तथापि प्रयोगान्तरगतत्वस्यैव स्वीकारेण कर्मान्तरत्वे प्रमाणाभाव इति वाच्यम् । निमित्तस्य विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे स्थापितत्वेन प्रयोगान्वयिगुणाभावेन वाजिनवदेव तद्भेदानुपपत्ति । अतएवोत्पत्त्यन्वयिनो गुणस्य कर्मभेदकत्वादेव न वाजिनवदेव भावनामात्रभेदकत्वम् । अत पञ्चशरावदेव कर्मान्तराण्येव तत्तद्द्रव्यदेवताविशिष्टानि तत्तद्वाक्यैर्विधीयन्ते । तत्प्रकृतिभूततण्डुलानाञ्च त्रेधा तण्डुलान्विभजेदित्यनेन मध्यमादिभावेन त्रेधा विभाग प्रयोगान्तःपातितया विधीयते । न तु देवताऽपनयादि । तथात्वे लक्षणापत्ते । देवतान्तरविधिबलेनैव तत्सिद्धौ अपनयविधिवैयर्थ्याच्च ।

अतएव संस्कारविधिबलादेव प्रसिद्धत्वाद्ये मध्यमा इत्यादियच्छब्दोऽप्यनुवाद । दधिशृतयोश्च न मध्यातेऽप्यधिकरणत्वेन विधि । तथात्वे प्रणीताकार्यापत्त्यत्वेन मद्यपपय्यार्थसिद्धत्वादभ्युदितेष्टिप्रकरणस्थ-यद अपयतीत्येतद्वाक्यवैयर्थ्यापत्ते । अनेन त्रि न

# अथ षष्ठोऽध्यायः ।

## पञ्चमः पादः ।



अभ्युदये ॥ दर्शपूर्णमासयोः, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा-अभ्युदियात् त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरो-डाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं इति श्रुतम् । तत्र निमित्तं तावच्चन्द्रमाभ्युदयावच्छिन्नदिने* प्रारम्भ इति वक्ष्यते । स च निमित्तस्याभाव्येन दर्शस्येत्यपि सिद्धमेव । नैमित्तिकं पुनरत्र कर्मान्तरं किं वा गुणान्तरयुक्तं तदेवेति चिन्तायाम् ।

वाक्यभेदापादकगुणात्कर्मान्तराण्येवात्र त्रीणि तत्तद्वाक्यै-र्विधीयन्ते । न ह्यग्न्यादयो देवता दातृत्वादयस्तद्गुणा मध्यमादीनि-द्रव्याणि अष्टाकपालत्वादयस्तद्धर्मादधिश्रृतयोरधिकरणत्वं चरुत्वं चेत्यनेकार्थविधानं प्राप्ते कर्मणि सम्भवति ।

न चाष्टाकपालस्याग्नेये प्राप्तत्वेनाविधानं, तत्र प्राप्तत्वेऽप्यैन्द्राग्ने अप्राप्ततया विधावश्यकत्वात्† । न च दात्रादिपदानां यौगिकत्वा-त्सामानाधिकरण्याद्देवाद्यदि‡ पदार्थैक्यत्वयोपपत्तेर्दातृत्वादिगुणवि-

---

* इत्यमेव पाठ सर्वत्र । चन्द्रमोऽभ्युदयावच्छिन्नदिने, इति तु भवितुमुचितम् ।

† विधानावश्यकत्वात्, इति तु भवितुमुचितम् ।

‡ देवाग्न्यादि,–इति भवितुमुचितम् ।

वस्तुतस्तु स्वीकारे प्रमाणाभावात्पञ्चशरावावाक्येऽपि चेन्द्रदेवतोद्देशेन त्वत्पक्षे नैमित्तिकपञ्चशरावौदनरूपैककारकविधानापत्तेः। प्रकृते उद्देश्यानेकत्वाङ्गीकारे च तत्र विधेयानेकत्वस्य वारयितुमशक्यत्वाद्द्रव्योद्देशेन देवतामात्रविधिपक्षानुपपत्तेर्द्रव्यदेवताविशिष्टभावनान्तरविधिपक्षेणैव सिद्धान्तोपपत्तिः।

न चास्मिन्नपि पक्षे उत्पत्त्यन्वयिनोर्गुणयोः वाजिनवद्यागभेदकत्वापत्तिः, भावनामात्रभेदकत्वेऽपि वा पञ्चशरावावाक्येऽपि तदापत्तिरितिवाच्यम्। यच्छब्देन पूर्वपरामर्शकेन पूर्वयागीयत्वोपस्थित्या यागान्तरत्वप्रमाणकत्वानुपपत्तेः। अतएव वाक्यभेदपरिहारार्थं परभावनाभेदमात्रमभ्युपगम्यते। वाजिनपञ्चशरावादौ तु तदभावाद्यागान्तरत्वमितिविशेषः।

अतएव धर्मिग्राहकप्रमाणेन यागैकत्वेऽवधारिते पूर्वद्रव्यावरुद्धे तस्मिन् द्रव्यान्तरयोर्दधिपयसोर्विकल्पेन समुच्चयेन वा निवेशायोगात्तयोरपि तत्तद्यागीययोरेव विधेयभावनाविशेषणत्वम्। अतश्च द्रव्यदेवताविशिष्टभावनान्तरविधानेऽपि पूर्वयागीयद्रव्याणां मध्यमादीनामितद्भावनां प्रत्युपादेयत्वाच्च लौकिकमध्यमादिग्रहणप्रसक्तिर्वा लौकिकदध्यादिग्रहणम्। भवदुक्तरीत्यैव चहलाधिकरणत्वयोरनुवादत्वेन समाप्यविधेयत्वात्।

वस्तुतस्तु प्रविष्टादिप्रकृतिकपुरोडाशेन दध्यादेः सह श्रपणापत्तेर्न सहत्वप्राप्तिरिति तद्विधिरावश्यक एव। दध्यादिना च सह श्रपणविधानात्सदधिकरणत्वं परमनुवादः। सर्वथा न लौकिकग्रहणम्। किञ्च चेधा तद्दुग्धान् विभक्तिद्वयापत्तिविधिमादध्यपयसो-

निष्णवे शिपिविष्टाय शृते चरुं, ये स्विष्टाशानग्नये यनिमर्तेऽष्टाकपालं, येऽप्रिष्टास्तानिन्द्राय प्रदाये दधस्सममिति वचनेन विहितायां पशुकाले इष्टावपि चापनयविधभावादेव कर्मान्तरम्। यच्छन्दस्तु लोकप्रसिद्ध्यनुवादकतयैव कथञ्चित्तत्र व्याख्येयः।

अतश्चापनयविधिरेव पूर्वदेवतासम्बन्धं पूर्वयागानां अपनयस्तेषां देवतान्तराकाङ्क्षोत्थापनद्वारा तत्र देवतान्तरसम्बन्धमुपपादयन्कर्मान्तरत्वं प्रतिबध्नाति। प्रकृतानामेव च मध्यमादीनां दधिपयसोश्च भावनान्तरे उपादेयत्वमापादयति। यद्यगृहीतं हविरभ्युदियादेवैव व्रतचर्या यदि गृहीत हविरभ्युदियादयो तर्हि एतानेव तण्डुलान् *सुफलीकृतान् दधि पयश्चेत्यादिक्रिर्ज्ञायमपोऽभिज्ञायते।* तेन मध्यमादिभेदेनाग्नेयस्य वारत्रयमावृत्तिः। दधिपयोयागयोस्तु स्विष्टाश्रिष्टमाध्याग्नेयाभ्यामेन। सह अपयतीति वाक्याच्च अपणमपि तेषां सम्प्रतिपन्नदेवताकानां सहैव।

अतएव दधिशृतयोः अपणाप्राप्तावपि साहित्यविध्यन्यथानुपपत्त्यैव अपणम्। शाखासाहित्यवशेन तत्प्रहरणवत्। साहित्यं हि केनचिदावश्यकम्। तत्र सम्प्रतिपन्नदेवताकत्वात्प्रदानवेलायां तेन तदावश्यकत्वे अपणवेलायामपि तस्यैव साहित्यप्रतियोगिकत्वकल्पनात्। अतश्चाभ्युदितेष्टिर्न कर्मान्तरमपि तु निमित्ते नैमित्तिकं तद्यागानामेव भावनान्तर स्वकाले क्रियमाणदर्शप्रयोगाङ्गम्। तथैवाकालप्रारम्भनिमित्तदोषपरिहारार्थं प्रायश्चित्तम्। अकालप्रारम्भस्य दोषजनकत्वं सामान्यमुखेन। अत्रैव वा वि वा एन प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्य यस्य हविर्निरुप्तमित्यादिवाक्य-

निर्णीयते । तथा हि न तावदत्र तण्डुलानां मध्यमादिभावेन त्रेधा विभागोविधीयते तस्य मध्यमादिवाक्यैरेव प्राप्तत्वात् ।

न च मन्यते त्रिचेष्टितण्डुलवत्पुरोडाशादिप्रकृतित्वेनापि लोकसिद्धानामेव मध्यमादीनां तण्डुलानां याज्ञत्वायत्तो यथोगान्त-पातिविभागसिद्ध्यर्थं विधिरर्थवानितिवाच्यम् । लोकसिद्धमध्यमादि ग्रहणे तण्डुलप्रकृतिभूतव्रीहिमद्धारकनिर्वापप्राप्त्यभावेन मद्दाराद-एव हवींषि निर्वपेदित्यनुवादानुपपत्तेः । व्रीहिणामेवावघ्नोपा-देयतया विभागस्याप्यर्थप्राप्तत्वात् । यद्द अपणमत्वेन त्रिचेष्टित्याया--भावाच । अतस्त्रेधा तण्डुलानिति पदद्वयमानर्थक्यभिया प्रकृत-हवि परमङ्गीकृत्य तस्यापरित्यक्तयागान्वयस्यैव प्रकृतदेवताभ्योऽप-नयोविधीयते । आनर्थक्यभिया च लक्षणापि न दोष । तदपनये च प्रकृतदेवतानां यागसम्बन्धोऽप्यपनीतो भवति ।

न चायमपनयोऽपि नैमित्तिकदेवतान्तरविधिबलादेव सिद्ध-इति विधिर्वैयर्थ्यम् । एतद्विध्यभावे पूर्वयागस्य पूर्वदेवताऽवरुद्धतया देवतान्तरानपेक्षत्वेन तत्र नैमित्तिकदेवतान्तरस्य तद्विशिष्टयाग-नान्तरस्य वा विधानानुपपत्तेः । नैमित्तिकस्य हि निरवकाशतया नित्यबाधकत्वं वक्ष्यते । कर्मान्तरविधानेनैव च सावकाशत्वोपपत्तेर्न निरवकाशता । अतएव यत्र कर्मान्तरविध्यसम्भवः प्रमाणान्तरप्रमि-तस्तत्र फलचमसादौ निरवकाशेन नैमित्तिकेन नित्यापनया-भावेऽपि नित्यस्य बाध. ।

अत एवापनयविध्यभावादेव पशुप्रवाक्ये कर्मान्तरम् । यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्ता-

शेषादवगन्तव्यम् । एवञ्चातञ्चनाभ्यासदर्शनं, यदि बिभीयादभि मोदियतीति महाराज एव द्वौ पिर्वपेत्सभीकृतं सण्डुलैकपाशीत अर्थ दधिहविरातञ्चनार्थं निदध्यादर्धं न यद्यभ्युदियात्तेनातथ्य मचरेत् यदि न प्रातरेतेन ब्राह्मणान् भोजयेदित्यकर्मान्तरत्वे उपपद्यते । बिभीयात् शङ्केत । महाराजे चन्द्रोदयात् पूर्व्वम् । उपाशीत प्रतीचेत । आतञ्चनार्थं स्वकालक्रियमाणदर्शार्थदध्या-तञ्चनार्थम् । अर्धं न, किं तु तदभ्युदितेष्टावेव विनियुञ्जीत, न चेत् सान्नाय्ययाग एव । तेनातञ्चनार्थंनिहितेन । एतेनातञ्चनार्थं स्थापितेनैवेति तस्यार्थं ।

तथाहि कर्मान्तरं स्यात्तदा तेनाकालप्रारब्धनिमित्तदोषपरि-हाराद्दर्शार्थमुत्पादितेन दध्ना कर्मान्तरकरणानुपपत्ते, स्वकाल-क्रियमाणदर्शस्यैव तेन करणापत्तेस्तच हविरन्तरोत्पादाप्रसक्तौ तच्चातञ्चनाप्रसक्तेरर्धविध्यनुपपत्ति । कर्मान्तरे च दध्यन्तरस्यैव संस्कारविशिष्टस्योत्पादनापत्तेर्दर्शार्थोत्पादितस्य दध्न प्रसक्त्यभावा-दर्धविधानानुपपत्ति ।

यत्तु सूत्रे कर्मान्तरत्वपक्षे अधिकरणत्वेन दधिपयसोर्विधाना-ल्लौकिकस्यैवासंस्कृतस्य दध्नो ग्रहणापत्तेर्दर्शोत्पादितस्य प्रसक्त्यभाव-इत्युक्तम् । तत्तु अपयतितौत्यस्य वैयर्थ्यापत्तेस्तत्त्वेन हविष्ट्वेनैव विधानस्यावश्यकत्वादुपेक्षितम् । सिद्धान्ते तु प्रायश्चित्तस्य दर्शेना-नपायाद्दध्न एव सर्वस्य दध्न प्रसक्तौ स्वकाले क्रियमाणदर्शेन च दध्यन्तरोत्पादनार्थमातञ्चनप्रसक्तौ अभ्युदयशङ्कायां निमित्ते आतञ्च-नसाधनत्वेनार्धमात्रविधिरुपपद्यते । अर्धान्तरस्य पार्थादिवाभ्युदि-तेष्टौ प्राप्तत्वादनुवादो विधिर्वेत्यन्यदेतत् ॥ ६ ॥ ५ ॥ १ ॥

विहितत्वेन तच देवतान्तरसंयोगाप्रवृत्तेः। यथैव हि फलं न भवयेदित्यादिनिषेधा अवयवावयविसाधारण्येन प्रवर्त्तन्ते, एवमपनयात्मकोनिषेधोऽपि। यथैव च फल दद्यादित्यादिविधयोऽवयविन्येव प्रवर्त्तन्ते, एवं देवतान्तरसंयोगोऽपि। अतश्च तूष्णीमेवाविग्नेष्टोनिर्वापः। याज्ञिकास्तु पदार्थैकदेशप्राप्यार्थिकविधिविहितत्वमङ्गीकृत्य वैकृतोऽभ्य एवानुतिष्ठन्ति॥ ६॥ ५॥ ५॥

साम्राय्य॥ किमियमभ्युदितेष्टिः संनयत एवोतासन्नयतोऽपीति चिन्तायां, द्रव्योद्देशेन देवतामात्रविधिपक्षे यद्यपि द्रव्यसाहित्यमविवक्षितं, तथाप्युद्देश्यानेकत्वादेवैतत्पचापरितोषाद्भावनान्तरविधिपक्षे च तद्विशेषणयोर्द्धिध्यविहयो' स्तुतापिष्टयोश्च साहित्यस्य विवक्षितत्वाद्विधेयसामर्थ्यानुरोधेन मद्यतमाव* विषयत्वमिति प्राप्ते।

न चेदन्येन शिष्टा इति न्यायेनाप्राप्तविशेषणस्यैव कस्प्यविशेषणविधिविधेयत्वेन द्रव्यसाहित्यस्य तत्तद्यागसाहित्यवशेनैव प्राप्ततया विशेषणविध्यकल्पनादविवक्षितत्वेनासन्नयतोऽपि अभ्युदितेष्टावधिकारः। अतएवेन्द्राग्नस्याप्यौषधद्रव्यकत्वान्मध्यमादिभेदेनाग्नेयवदावृत्ति। तथापि मद्य अपयतीति वचनेनाग्नेयेन्द्राग्नहविषोः मद्य अपणे विहितेऽष्टाकपालत्वदाद्शकपालत्वयोर्विरोधे मुख्यत्वादष्टाकपालस्यैवानुग्रहेण चयोऽप्यष्टाकपाला एव कार्या.। अथवा आद्य एवाष्टाकपाल इतरौ तु गत एव चरू॥ ६॥ ५॥ ६॥

साम्युत्याने॥ यदि मवाय दीक्षितानां साम्युत्थितिरग्नोममपभज्य

---

* सन्नयत्वमेव पाठ। सद्यतमात्,— इति तु मनोषोनं प्रतिभाति।

तु पौर्णमास्यामेवोपांशुयाज इत्यधिकरणं कृत्वा चिन्तया। यथो-दश्यामावास्याथामिति चावयुत्यानुवादः। एतद्बलादेवामावास्यायां विकल्प इत्यपि गुरवः॥ ६॥ ५॥ २॥

निरुप्ते॥ यस्य हविर्निरुप्तमिति श्रवणान्निर्वापोत्तरकालीन-चन्द्राभ्युदयस्यैव निमित्तत्वादमावास्यायां च सूर्योदयात्प्रागेवेष्ट्या-रम्भविधानान्निर्वापात् प्राक् चन्द्राभ्युदयज्ञानेनेदं प्रायश्चित्त-मिति प्राप्ते।

हविरभ्युदियादित्येतावतैव निमित्तत्वपर्यवसानेन निर्वापग्रहण-स्याविवक्षितत्वादभ्युदयावच्छिन्नदिनप्रारम्भस्यैव निमित्तत्व लाघवात्। पौर्णमास्यां च तस्य नित्यत्वादेव निमित्तत्वानुपपत्तेः परिशेषादेव दर्शविषयत्वम्। अतश्च निर्वापात् प्रागपि प्रक्रममात्रेण प्राय-श्चित्तम्। अतएव यद्यगृहीत हविरभ्युदियादिति लिङ्गमप्युप-पद्यते॥ ६॥ ५॥ ३॥

अनिरुप्ते॥ कर्मप्रवृत्तिमात्रस्य निमित्तत्वेऽपि नैमित्तिकोदेव-तापनयस्तण्डुलग्रहणात्तण्डुलावस्थायामेव कर्तव्यः, पूर्वं तु प्राकृतीभ्य एव निर्वापादि कार्यमिति प्राप्ते।

तण्डुलग्रहणस्य विवक्षितत्वे दधिपयसोरपनयाभावेन देवतान्तर-सम्बन्धानापत्तौ सह अपवर्तीतिवाक्यवैयर्थ्यापत्तेस्तस्य हविर्मात्रोप-लक्षणत्वात्पूर्वमप्यभ्युदये वैकृतीभ्य एव निर्वापादि॥ ६॥ ५॥ ४॥

विनिरुप्ते॥ अर्धनिरुप्ते चन्द्राभ्युदये ज्ञाते अवशिष्टासुइष्टयो न तावत् प्राकृतीभ्योनिर्वप्तव्याः। निमित्तसत्त्वेन नैमित्तिकस्यापनयस्य प्रवृत्तौ बाधकाभावात्। नापि वैकृतीभ्यः। पदार्थैकदेशस्या-

वस्तुतस्तु निमित्तभेदस्य निर्वक्तुमशक्यत्वाच्छाखान्तरन्यायेनैक एव विश्वजिद्वाक्यद्वयेन विधीयत इति नामकरणविश्वजितोऽस्य भेदः। प्रवृत्तस्य विश्वजिदुताप्रवृत्तस्येति विचारस्तु एतद्वचनाभावं कृत्वा चिन्तयेति ध्येयम् ॥ ६ ॥ ५ ॥ ७ ॥

दीक्षा ॥ सोमे एका दीक्षा तिस्रो दीक्षेत्येवं बहवो दीक्षापक्षाः श्रुताः। तत्र सोमे द्वादशदीक्षापक्ष एव। द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति विहितस्य भृतिपदवाच्यदक्षिणाद्रव्यार्जनानुकूलयाच्ञारूपस्य भृतिवननस्य पक्षान्तरेष्वसम्भवात्। अतोऽन्ये पक्षा विकृतिविषयाः एक वृणीत इत्यादिवदनुवादा इति भाष्यकाराभिप्रायः।

वार्त्तिककाराशयस्तु [illegible] इति तदर्थवत्त्वायोगात्सर्वं एव विधय इति तावदविवादम्। प्रकरणानुरोधाच्च नानेकेषामुत्कर्षकल्पना। तद्वरमेकस्यैव भृतिवननवाक्यस्य पाक्षिकत्वकल्पना। द्वादशरात्रिशब्दोऽपि दीक्षापरिमाणमात्रपरः।

वस्तुतस्तु लक्षणाऽपीयम् विधौ, दीक्षितकर्तृकभृतिवचनस्यैव पक्षप्राप्तस्य प्रयोगमध्ये ऽत्यन्ताप्राप्तस्यैव वा विधेयत्वात् द्वादशरात्रिशब्दस्यानुवादत्वोपपत्तेः। अतोऽनेनैतस्य पाक्षिकत्वकल्पनाऽपि। दीक्षापक्षाणामेव परं व्रीहियववद्विकल्पः। अस्तु वा तस्य विधेयत्वेऽपि लक्षणा, तथापि न दोष इति ॥ ६ ॥ ५ ॥ ८ ॥

द्वादशाहस्तु ॥ द्वादशाहे द्वादशरात्रीर्दीक्षितः स्यादिति वाक्येन यवमयश्चरुरितिवद्द्वादशदीक्षाकत्वस्यैव नियमनान्न विकल्प इति प्रत्युदाहरणमात्रम्।

अतएव षट्त्रिंशद्वो वा एष यद्द्वादशाह इति सिद्धं उपसत्सु-

विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेर-न्निति श्रुतम् । तत्र विश्वजिदयं सोमक्रयोत्तरमुत तत पूर्वमपि उत्थाने भवेदिति चिन्तायाम् ।

यद्यपि त्यागापरपर्याय व्युत्थानमात्र निमित्त, न तु सामि-पदवाच्यार्धत्वमपि विशेषण, नापि सोमक्रय, तथापि सोम-विभागस्यापि विश्वजिदङ्गत्वेन विधेयत्वात्पुनराधानवदेव नैमित्ति-कत्वरूपपर्यालोचनया सोमक्रयोत्तरमेव विधीयते । न हि पूर्वं सोमोऽस्ति, येन सोमविभागरूपमङ्गमनुष्ठीयेत । न च बौधायनादि-कल्पपर्यालोचनया पूर्वमपि सोमस्य सत्वाद्विभागोपपत्ति । विक्रेतृ-सोमस्यैव क्रयात्पूर्वमुपकल्पनेन तस्मिन् यजमानस्वत्वाभावात् । अत सोमक्रयोत्तरमेव व्युत्थाने विश्वजिदिति प्राप्ते ।

नात्र विभागविधि, मध्यस्थद्रव्याणा व्युत्थाने द्रव्यविभागस्यार्थ-प्राप्तत्वात् । अतएव सोमपद मध्यस्थवस्तुमात्रपरम् । अतश्च सोममप-भज्येत्यस्यानुवादत्वात् विश्वजिन्मात्र नैमित्तिक सोमक्रयात्पूर्वमपि व्युत्थानस्य निमित्तस्य सत्त्वात्कर्तव्यमेव ।

किं च यद्यपि विभागोविधीयते, तथापि तस्यादृष्टविधया विश्वजित्याराद्‌पकारकाङ्गत्वाच्चावस्य क्रीतस्यैव स्वस्यैव वा सोमस्य विभाग । किं तु लौकिकस्यैव सत्रार्थमन्विनोयस्य कस्यचित्सोमस्य प्रत्येक विभाग । अतश्च तादृशनैमित्तिकस्य पूर्वमपि सम्भवाद्विशेष । अथ विश्वजिद्गुणात्कर्मान्तर स्वर्गार्थविश्वजिदपेक्षया आगूरणविश्व-जिदपेक्षयाऽपि । तयोस्त्वेतदपेक्षया कर्मान्तरत्वे अभ्यास प्रकरणा-न्तर च प्रमाण बोध्यम् । एतत्फलश्चागूरणविश्वजिदेव द्रष्टव्यम् ।

ष्टम्यामष्टकाशब्दप्रयोगे हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमी-ष्वष्टका इति चतुर्ष्वपि तदष्टमीषु प्रयोगेण माघ्युत्तराष्टमीग्रहण-एव प्रमाणाभावात् । द्वादशपौर्णमास्यो द्वादशाष्टका इति श्रुत्यन्तरे सर्वत्रैव प्रयोगाच्च । अतश्चैत्र्युत्तराष्टम्या अपि *तत्सामीप्याच्चैत्र्या-* एव पौर्णमासीपदेन ग्रहणात् तस्याः पुरस्ताच्चतुरहे एकादश्यां दीक्षेति प्राप्ते ।

लोकव्यवहारे एकाष्टकाशब्दस्य माघ्युत्तराष्टम्यामेव प्रयोगात्त-स्याश्च संवत्सरपत्नीत्वेनोपक्रमे श्रुतत्वात् माघ्युत्तराष्टमीश्राद्धकर्माङ्ग-देवतायाश्च, यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गलीति तन्मन्त्रे संवत्सर-पत्नीत्वेन सङ्कीर्तनात् । माघ्युत्तराष्टम्या एव एकाष्टकात्वप्रतीतेस्तस्यां क्रयसम्पत्त्यनुरोधेनोपक्रमोपसंहारयोः श्रुतत्वेन च माघ्या एव पौर्ण-मासीपदेनाभिधानात्ततः पुरस्तादेकादश्यां दीक्षेति सिद्धम् ।

अतएव सर्वोऽप्ययमर्थवाद एवं व्याख्येयः । यद्यपि दोषान्तरा-भावादेकाष्टकैव दीक्षायां प्रशस्ता, *तथाप्यार्त्तत्वव्यस्तत्वाभिनन्दत्व-* रूपदोषत्रयात्तामतिक्रम्यापि चैत्र्येव परं प्रशस्ता, माघ्येकादशी तु तदपेक्षयापि प्रशस्ततरा । एकाष्टकाया द्वादशदीक्षोत्तरत्रयोदश-*दिनरूपायाः क्रयसम्पत्त्याऽनुगृहीतत्वादिति* ॥ ६ ॥ ५ ॥ १० ॥

दीक्षाकालस्य ॥ सोमे दीक्षितो न जुहोतीत्यादिना पुरुषार्था-नामग्निहोत्रादीनां क्रत्वङ्गत्वेन पर्युदासः प्रतिषेधो वा दीक्षितस्य श्रुतः । अवभृथे च कृते दीक्षामुक्तिः । तद्यदि दैवादिना कारणेन सन्ध्यातः पूर्वं क्रियमाणावभृथस्योत्कर्षस्तदा कालेऽग्निहोत्रं कर्त्तव्यमेव ।

स्यानां द्वादशत्वस्य प्रमाणान्तरसिद्धत्वाद्दीक्षा अपि द्वादशेति गमयति। तथामैथित एव दीक्षाभिरिति दीक्षावहुत्वं विधाय द्वाभ्यां लोमावद्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृग्द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमिति तद्वाक्यशेषे षट्द्विकानुक्रमणमपि ॥ ६ ॥ ५ ॥ ८ ॥

पौर्णमास्यां ॥ गवामयने, एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टका इत्युपक्रम्य आर्त्तं वा एते संवत्सरस्याभिदीक्षन्ते यदेकाष्टकायान्दीक्षन्ते, व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते यदेकाष्टकायां दीक्षन्ते, अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्तीत्यनेन तत्र दोषानभिधाय, चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः तस्य न काचन निर्या भवतीत्यनेन चैत्रीं स्तुत्वा, चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्नेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकां न च्छंवट् कुर्वन्तीति श्रुतम् ।

आर्त्तं दुःखयुक्तं शीतात्, व्यस्तं अयमपराहत्या*, अपोनाभिनन्दन्ति शीतादेव, निर्या दोषः, च्छंवट् रिक्तम् । अत्र जर्त्तिलयवागून्यायेन सर्वमिदमेकं वाक्यमिति तावदविवादम् । अतश्चतुरह इत्येव विधिः पयोहोमन्यायेन । तत्र च पौर्णमासीवाक्यशेषे चैत्र्याः स्तुतत्वाच्चैत्रेव ।

न च वाक्यशेष एवोपक्रमोपसंहारयोरेकाष्टकायामाम्नातत्वात् तस्या एवोपायाः परामर्शात्तस्याः क्रयसम्पत्त्याऽनुवाद्यत्वेनेह माघ्येव पाह्येति वाच्यम् । अष्टकाशब्दस्य कर्मविशेषनामतया तत्कालत्वेना-

---

* पाठोऽयं न समीचीन । व्यस्तमपराहत्या,—इति तु समीचीनं प्रतिभाति ।

तदकरणे प्रत्यवायादि । अतो ऽपशुकामस्यैव पशावेऽधिकारवद-दीक्षितस्यैवाग्निहोत्रादावधिकारो निषेधपक्षेऽपि फलितो भवति ।

यदा तु दीक्षितो न जुहोतीत्यस्याग्निहोत्रादिविध्येकवाक्यतया पर्युदासत्वमङ्गीक्रियते, तदा स्पष्ट एव दीक्षितस्य तत्रानधिकारः । अतश्च मुख्यकालेऽनधिकारात् गौणकाले करणमनाशङ्क्यम् । एवं दैवादिनाऽवभृथोत्कर्षेऽपि दीक्षावत्त्वस्य कथमप्यविशेषान्मुख्य-कालेऽनधिकारस्य तुल्यत्वेन न गौणकाले प्रतिहोमकरणम् ॥ ६ ॥ ५ ॥ १२ ॥

प्रतिषेधश्च* ॥ क्वते ऽवभृथे यद्युदवसानीयोत्कर्षो दैवादिना भवेत्तदा काले प्राप्तेऽग्निहोत्रहोम एव कर्तव्यः । तदकरणे वा प्रतिहोमः कार्यः । दीक्षाया अवभृथेनोन्मोचितत्वात् । यत्तु एतया पुनराधेयसंमितयेष्ट्याऽग्निहोत्रं जुहोतीति वचनं, तत्प्रकरणान्तर-न्यायात् सोमाङ्गतयोदवसानीयेष्ट्यङ्गतयैव वा कर्मान्तरविधायक-मिति प्राप्ते ।

निषेधप्रतियोगित्वेनाग्निहोत्रादेरुपस्थितत्वात्तदपेक्षितावधिसम-र्पकत्वेनाप्युपपत्तौ कर्मान्तरविधायित्वानुपपत्तेर्दीक्षामोक्षेऽपि उदव-सानीयेष्टिप्रतीक्षाया आवश्यकत्वात्पूर्ववदेवानधिकाराच्च प्रति-होमादिकरणम् । यदा तु दीक्षा मध्यात् यस्येति दीक्षित इति श्रुत्या इत्तदीक्षोत्पत्तिकत्वमेव प्रतिषेधप्रयोजक रूपमाश्रीयते, तदा दीक्षाभावेऽपि सर्वदा निषेधप्रसक्तौ उदवसानीयाया अवधि-त्वमव्याहतमेवेति न तदुत्कर्षे प्रतिहोमादि ॥ ६ ॥ ५ ॥ १३ ॥

* प्रतिषेधाच,–इति भाष्यस्थ पाठ ।

यावन्तं कालं शास्त्रवशेन दीक्षानुवृत्तिः, तावत्कालं न जुहोतीति प्रतिषेधशास्त्रार्थावधारणादिति प्राप्ते ।

कालस्य लक्षणायां प्रमाणाभावाद्दीक्षैव निषेधावधिः । तस्याश्चानिवृत्तत्वान्न कर्त्तव्यमेवाग्निहोत्रादि ॥ ६ ॥ ५ ॥ ११ ॥

तत्र प्रतिहोमः ॥ दीक्षायां सत्यां सोमाङ्गत्वेन अग्निहोत्रप्रतिषेधेऽपि अग्निहोत्रवाक्ये दीक्षितभिन्नस्य कर्त्तृत्वाश्रुतेः काले तदकरणनिमित्तप्रत्यवायस्यावश्यकत्वात्तत्परिहारार्थं गौणकाले प्रायश्चित्तपूर्वकं कार्य एवाग्निहोत्रहोमः । दैवापराधकृतदीक्षोत्कर्षे तु सुतरामिति प्राप्ते ।

यावज्जीवादिवाक्ये कालावच्छिन्नस्य जीवनादेर्निमित्तत्वमित्यविवादम् । तेषां च न सायकालत्वशुचित्वादिना तत्त्वेन तत्त्वेनावच्छेदकत्वं गौरवात् । अपि तु शब्दतोऽर्थतो वा यो निषिद्धः कालस्तद्भिन्नकालत्वेन । सायमादिकालविधेर्हि नियमविधित्वात्तदितरकालनिवृत्तिरार्थिकी । एवं शुचित्वादिना अशुचिकालनिवृत्तिरपि । निषेधोऽपि चात्र न विधेयक्रियाङ्गभूत एव विदधितोऽपि अविशेषात्,* तस्मिन् सति विधेयक्रियाया अकरणस्य तत्राप्यावश्यकत्वात् ।

अतश्च यथैव पर्वणापि गोदोहनेनावरुद्धस्य प्रणयनस्य न समयप्रयोजकत्वं, तस्मिन् सति तस्य कर्तुमशक्यत्वात् । अतएव न तदभावकृतं वैगुण्यमपि । एवं सोमाङ्गभूतेनापि निषेधेनावरुद्धस्य दीक्षाकालावच्छिन्नजीवनस्य नैमित्तिकानुष्ठापकत्वानुपपत्तेः न

* विदधितोऽविशेषात्,-इति पाठः समीचीनः प्रतिभाति ।

सूत्रछद्वचनादेव सायमुपक्रमकालस्य नैयत्याभावप्रतीतेः। अतएव छत्वादिस्तोत्राटनेऽपि यद्युद्वसानीयायाराङ्गौ करणं तदा प्रातर्दोमानुष्ठानं जैमिनिमते नानुपपन्नम् ॥ ६ ॥ ५ ॥ १४ ॥

प्रायश्चित्त॥ भिन्ने जुहोतीत्यादिप्रायश्चित्तं नैमित्तिकमपि फलापेक्षाया प्रकरणात् क्रत्वङ्गम्। निमित्तमपि भेदनादि न लौकिककपालादेः। प्रायश्चित्तसमाख्याबलेन क्रत्वङ्गभूतकपालादिभेदननिमित्तवैगुण्यपरिहारार्थत्वस्यैव कल्पनेन स्वतन्त्रादृष्टकल्पने गौरवात् ॥ ६ ॥ ५ ॥ १५ ॥

व्यापन्नस्य॥ व्यापन्नमप्सु प्रहरतीति वाक्ये श्रुतस्य व्यापन्नशब्दस्य यदार्याणामभोज्यं कणकीटावपन्नादि तदर्थं, तत्रैव तेषां प्रयोगादिति शिष्यहितार्थमुक्तम् ॥ ६ ॥ ५ ॥ १६ ॥

विभागश्रुते ॥ ज्योतिष्टोमे दक्षिणादानात् प्राक् वहिष्पवमानार्थं तद्देश कच्छं कृत्वा प्रसर्पता उद्गातृप्रतिहर्तृप्रस्तोतृणां मध्ये यद्युद्गाताऽपच्छिन्द्यादद‌‌क्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्याद्यत् पूर्वस्मिन् दास्यन् स्यादादि प्रतिहर्त्ता सर्ववेदसन्दद्यादादि प्रस्तोता ब्रह्मणे वरं दद्यादित्यादिना तत्तत्कर्तृकापच्छेदे निमित्ते प्रायश्चित्तं श्रुतम्। तत्रापच्छेदोनाम विभागरूपं फलमेव, यदि वा तज्जनकक्रिया, सर्वथा तज्जनकक्रियाकर्तृत्वादेवाच तत्कर्तृत्वव्यवहारः। तस्या चान्यतरक्रियाजन्ये उभयक्रियाजन्ये च विभागे एकैकस्यापि प्रत्येकमस्त्येव कर्तृत्वमिति उद्गातृमात्रनिष्ठक्रियाजन्यविभाग इव उभयनिष्ठक्रियाजन्यविभागेऽपि उद्गातृकर्तृत्वव्यपदेशोपपत्तेर्भवत्येव तत्रापि प्रायश्चित्तमित्युत्तरविवक्षया प्राप्ते ॥ ६ ॥ ५ ॥ १७ ॥

प्रतिहोमयेत् ॥ यदा अवभृयोत्कर्षे प्रतिहोमस्तदा कृत्वा चिन्तया विचार्यते । अग्निष्टोमसंस्थाके ज्योतिष्टोमेऽवभृथस्य सायङ्कालात्पूर्वमेव कर्त्तव्यत्वेन तदुत्तरं रात्रौ करणे एकस्यैव सायंहोमस्य दीक्षाविमोकोत्तरं गौणकाले करणम् । आमातराज्ञतेः सायंहोमस्य गौणकालोवाचनिकः । प्रातर्होमस्य सायंकालावधिवद्गौणकालस्यातिक्रमे स्वकालक्रियमाणप्रातर्होमेन सह समस्य होमविधया तन्त्रेण करणम् । अवभृथोत्कर्षेणानेकहोमकालातिपत्तौ तु सर्वान् सायंहोमान् प्रातर्होमांश्च पक्षहोमविधिना समस्य होमविधिना च स्वकालक्रियमाणहोमेन सह तन्त्रेण कुर्यात् । न चातिपत्तिक्रमेण होमानां क्रमेणैव करणं ग्राह्यम् । एकदेशकालकत्वेन समस्य होमपक्षे होमविधिवैवर्थ्यप्रसङ्गेन चानेकदर्शपूर्णमासातिपत्तिनिमित्तकपथिकृद्वदेव पृथक् करणानुपपत्तेः ।

अतएव सर्वान् सायं होमान् सायङ्काले प्रातर्होमांश्च प्रातःकाल एव कुर्यादित्यपास्तम् । स्वकालक्रियमाणहोमात् पूर्वमेवातिपन्नहोमानां कर्त्तव्यत्वात् । एवं षोड़शिस्तोत्रवति क्रतौ तस्य समयाध्युषितकालीनत्वेनावभृथस्य रात्रावेव क्रियमाणत्वात्तस्य द्वितीयदिने उत्कर्षे प्रातर्होमस्यैव पूर्वोक्तविधयाऽनुष्ठानम् । अनेकहोमकालातिपत्तावपि तथैव ।

न च दर्शपूर्णमासयोः पौर्णमासोपक्रमयोरेव मिलितयोः फलसाधनत्ववत्सायमुपक्रमयोरेव सायंप्रातर्होमाभ्यासयोरेकफलसाधनत्वस्य कल्पसूत्रेष्वभिधानात् षोडशिनि सायंहोमे अनधिकारे कथं प्रातर्होमेऽप्यधिकार इति वाच्यम् । प्रातस्तु षोडशिनीति जैमिनि-

बाधः। पूर्वनैमित्तिकविधेश्च परनिमित्तरहितप्रयोगविषयत्वकल्पना, तदुदेव चानुष्ठानकालीनमेव पौर्वापर्यं शास्त्रार्थावधारणवेलायां पूर्वमालोच्य व्यवस्थितविषयत्वकल्पनेति न कश्चिद्विरोधः।

न च सञ्जातविरोधित्वेनेह परविज्ञानस्यानुत्पत्तिः। ज्ञापकप्रमाणस्य ज्ञप्तत्वेन तदयोगात्। न ह्यत्रोत्तरं प्रमाणं पूर्वप्रमाणेनैकवाक्यतया स्वार्थबोधजनकम्। येन तदुपजीवित्वेन तदानुगुण्येन वर्त्तेत। अत उत्तरमेव निरपेक्षतयोत्पद्यमानं पूर्वप्रमाणस्य परनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वं कल्पयति।

न च पूर्वमेव विज्ञानं परप्रमाणस्य पूर्वनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वं किमिति न कल्पयेत्। न ह्यत्र नित्यापेक्षया नैमित्तिक इव निरवकाशत्वमस्ति। उभयोरप्येकैकनिमित्तकप्रयोगे मावकाशत्वादितिवाच्यम्। पूर्वनिमित्तोपनिपातवेलायां परप्रमाणजन्यज्ञानस्य नियमेनोपस्थित्यभावेन धर्मिज्ञानाभावात्तद्गतस्य पूर्वनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वस्य कल्पयितुमशक्यत्वात्। परनिमित्तोपनिपातवेलायां पूर्वविज्ञानस्य चिकीर्षितविषयत्वेन पुरःस्फूर्त्तिकत्वाद्धर्मिज्ञानसत्त्वेन तद्गतमिथ्यात्वकल्पने न किञ्चिद्बाधकम्। यदि तु परनिमित्तोपनिपातोत्तरमेव पूर्व्वेण मिथ्यात्वकल्पनमित्याशङ्क्येत, तथापि यदा परनिमित्तोपनिपातोत्तरं पूर्वप्रमाणविस्मरणं तदाऽनेनोत्तरस्य मिथ्यात्वकल्पनानुपपत्तेरवश्यमभ्युपगते पूर्वप्रमाणस्मरणे कल्प्यम्। मन्मते तु यदा दैववशात् पूर्वप्रमाणस्मरणं, तदा तस्य मिथ्यात्वकल्पनेऽपि विस्मरणे परनैमित्तिकस्यैवानुष्ठानात्र किञ्चित्कल्प्यम्।

तथा चायमत्र क्रमः। परनिमित्तोपनिपाते नैमित्तिकवाक्यार्थ-ज्ञानं, ततः पूर्वविज्ञानस्मरणं, ततः परविज्ञानस्य तेन सह विरोध-ज्ञानं, ततस्तेनापेक्षाबुद्ध्यात्मकेन विनश्यद्वस्थेन चतुर्थक्षणे पूर्वज्ञानस्य भ्रान्तित्वकल्पना, विरोधज्ञानदशायां तदुत्तरं वा परनैमित्तिक-वाक्यार्थस्मरणकल्पनेति न विरोधः। अतः सिद्धं परेण पूर्वस्य बाध इति ॥ ६ ॥ ५ ॥ १८ ॥

यद्युद्गाता ॥ क्रमेऽपि यद्युद्गातुरपच्छेदो जघन्यस्तदा तन्निमित्त-पुनःप्रयोगे सर्वस्वमेव देयं, न तु द्वादशशतम्। परनिमित्तपा-तात्पूर्वं तस्यैव देयत्वेन प्रसक्तत्वात्। तत्र यद्युद्गातेत्यनेन यत्पूर्वप्रयोगे परनिमित्तपातात्पूर्वं देयत्वेन प्रसक्तं, तस्यैव दक्षिणात्वेन विधानात्। द्वादशशतस्य पूर्वनिमित्तेनैव बाधितत्वेन देयतयाऽप्रसक्तेः।

अतश्च यद्यपि सर्वस्वमयदाक्षिण्येन दक्षिणोत्कर्षेणैव वा पूर्वप्रयोगे वस्तुतो बाधितमेव, तथापि परनिमित्तपातात्पूर्वं बाधज्ञानाभावा-द्देयत्वेन प्रसक्तेर्न काचित् क्षतिः। यदा तु प्रतिहर्त्रपच्छेदो जघन्य-स्तदा तस्मिन्नेव प्रयोगे सर्वस्वं देयं, न तु पूर्वापच्छेदनिमित्तकः पुनः प्रयोगः कार्यः। न च सर्वस्वदानेनादाक्षिण्यस्येव विरोधात्तद्बाधेऽपि पुनःप्रयोगबाधे प्रमाणाभावः। अदाक्षिण्यपुनःप्रयोगयोः समुच्चितयो-रेव नैमित्तिकत्वेन एकाभावे इतरस्यानुपपत्तेः। अतश्च यथैव पत्न्याः स्वत्रूणामभावात्कर्णानामपि न वपनं साहित्यस्य विवक्षित-त्वात्तथैवादाक्षिण्याभावे पुनःप्रयोगस्याप्यभावः।

यद्यपि च दक्षिणोत्कर्षस्य पुनःप्रयोगाङ्गतया विधानस्यावश्यक-त्वादेव पूर्वप्रयोगे अदाक्षिण्यार्थप्राप्तत्वाददक्षिणमित्यस्यानुवाद-

त्समुच्यते। तथापि पाचिकानुवादभियैवाद्राचिण्यलोपे पुनःप्रयोग-लोप इति द्रष्टव्यम्।

वस्तुतस्तु सोमस्यपभक्षेतिवत् पाचिकानुवादत्वेऽपि पुनःप्रयोग-लोपे प्रमाणाभाव। न च तस्य सस्पृष्टद्रव्यमात्रोपलक्षणत्वात्र पाचि-कानुवादत्वमिति वाच्यम्। सस्पृष्टद्रव्यनाशेऽपि विश्वजित आवश्यक-त्वेन पाचिकानुवादत्वानिवारणात्।

वस्तुतस्तु नायमनुवाद। नच तद्द्यादित्यनेन पूर्वप्रयोगे द्रातव्यदक्षिणाया पुनःप्रयोगाङ्गतया विधानेऽपि पूर्वप्रयोगाङ्गभूत-कर्त्रानत्यर्थं तस्मिन्नपि तस्या आवश्यकत्वेनादाचिण्यप्राप्त्यभावात्। न चैव पुनःप्रयोगस्य ज्योतिष्टोमत्वादेव द्वादशशतादिरूपदक्षिणा-प्राप्त्युपपत्तौ तच तद्द्यादित्यस्य वैयर्थ्यमिति वाच्यम्। तस्य पूर्वप्रयोगे एकविंशत्येत्यादिपचकरणेन पुनःप्रयोगे द्वादशशतादेरपि प्राप्त्यापत्तौ तन्निवृत्त्यर्थत्वेन सार्थक्यात्। उद्गातृजघन्यत्वे सर्ववेदसप्राप्त्यर्थत्वाच्च।

न चैव केशश्मश्रुन्यायेन पुनःप्रयोगबाध। तच द्वन्द्वेन साहित्य-स्योपादेय केशश्मश्रुगतत्वेनोक्तत्वात् साहित्यावच्छिन्नस्यैव क्रियाङ्गत्वेन प्रत्येक तदङ्गत्वाभावात्। प्रकृते त्वरुणैकहायन्योरिवापनयदेव-तान्तरसंयोगयोरिव च प्रत्येकमेव क्रियान्वयादेकवाक्योपादानादिना पश्चात् साहित्यावगमेऽपि नैकलोपे परस्य लोप। न ह्यारुण्याभावे एकहायनीलोप, उपांशुयाजे देवतान्तरसंयोगाभावे घापनय इष्ट। सतिदत्तं परत्वे पूर्वप्रयोगे सर्वस्व दत्वा पुनःप्रयोगेऽपि तद्देयमिति सिद्धम्।

यदा त्वाद्यप्रयोगे उद्गात्रपच्छेदस्तन्निमित्तकदितीयप्रयोगे

च प्रतिहर्त्तृपच्छेदस्तदा तत्रैव सर्वस्वमेव देयम्। नैमित्तिकत्वेन नित्यदक्षिणाबाधकत्वात्। न च पुनःप्रयोगस्य प्रायश्चित्ततया पूर्वप्रयोगाङ्गत्वात्तच्च तद्वदादित्यनेन च पूर्वप्रयोगाङ्गभूतदक्षिणाया-एवोत्तरप्रयोगवृत्तित्वमात्रविधानादङ्गगुणविरोधन्यायेनाङ्गभूतपुनः-प्रयोगाङ्गसर्वस्वदक्षिणाबाधेन प्रधानभूतपूर्वप्रयोगाङ्गदक्षिणाया एव देयत्वमुचितमिति वाच्यम्। अपूर्वविधित्वाददृष्टार्थत्वादिदोषप्रसङ्गे-नोत्तरप्रयोगवृत्तित्वदक्षिणायाः पूर्वप्रयोगाङ्गत्वानुपपत्तेः। अतस्तस्यापि पुनःप्रयोगाङ्गत्वात्परेण नैमित्तिकेन पूर्वस्य बाधात् सर्वस्वमेव देयम्॥ ६॥ ५॥ २०॥

अहर्गणे॥ द्वादशाहाद्यहर्गणे यद्येकस्मिन् कस्मिंश्चिदहनि उद्गातुरपच्छेदो भवति, तदा कृत्स्नस्याहर्गणस्यावृत्तिः। सुत्यागणस्यैव द्वादशाहपदवाच्यत्वेन फलसाधनत्वात्तस्यैव प्रायश्चित्तादिरूपाङ्ग-वाहित्वात्। अस्तु वोत्पत्तिवाक्ये प्रत्येकं करणत्वावगमाद् द्वाद-शाहपदेनापि च समुदायिनामेवोक्तेः प्रत्येकमेव फलं प्रति करणत्वम्। एकपदोपादानाच्च करणानां समुच्चयः। अतस्तदङ्ग-वाहित्वमपि प्रत्येकमेव। तथापि यत् क्रतुसम्बन्धुद्गाताऽपच्छिन्द्यात्तेन क्रतुना यजेतेत्यर्थावगमादुद्गातृश्च एकस्यैव सर्वसाधारणत्वेन सर्वा-वृत्तिरिति प्राप्ते।

नोद्गातृः क्रतुसम्बन्धो विवक्ष्यते, अपि लाघवस्यकत्वाद्यत्क्रतु-सम्बन्धिवदिष्यमानार्थे प्रसर्पणमुद्गाताऽपच्छिद्यात्तेन* क्रतुना यजे-

* इत्यमेव पाठः सर्व्वत्र। प्रसर्पण उद्गाताऽपच्छिन्द्यात्तेन,—इति भवितु मुचितम्।

तैत्यर्थावगतेस्तस्य च प्रतिसुत्य भेदेन तत्सुत्याया एवावृत्तिः। तत्सुत्याया अपि च तत्सुत्याव्यवहितोत्तरमेवावृत्तिः। माङ्गपूर्वसुत्या-करणव्यतिरेकेणोत्तरसुत्यायामनधिकारात्। अतएव पूर्वाङ्गानामपुन नावृत्तिरिति ध्येयम् ॥ ६ ॥ ५ ॥ २१ ॥ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य पञ्चम पादः ॥

# अथ षष्ठोऽध्यायः।

## षष्ठः पादः।

सन्निपाते ॥ दर्शपूर्णमासादौ कल्पभेदः श्रुतः, वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यादिना। अत्र हि तनूनपातं यजतीत्यनेन एकदेशप्रवृत्तिनिमित्तनामधेयमङ्गीकृत्य विहितस्य द्वितीयप्रयाजस्य क्रमेण शाखाभेदेन समाम्नातयोर्नराशंस-तनूपान्मन्त्रयोरव्यवस्थया विकल्पेन द्वितीयप्रयाजसम्बन्धित्वेन प्राप्तयोर्वासिष्ठसम्बन्धमात्र नराशंसस्य क्रियते। अतएव नाराशंस इति तद्धितो द्वितीयप्रयाजपदस्यानुवाद। ततश्च परिशेषादेव तनूनपान्-मन्त्रे अन्यसम्बन्धसिद्धेस्तनूनपादन्येषामित्यपि षोडशयुक्तर इति वदनुवाद एव।

न च नराशंसमन्त्रस्य पशुप्रकरणे पाठेऽपि दर्शपूर्णमासप्रकरणे पाठाभाव इति केषाञ्चिदुक्तं युक्तम्। पशुप्रकरणे आप्रीसूक्ते वैहृतनाराशंसमन्त्रपाठेऽपि नराशंसोऽग्न आज्यस्य वेत्वियस्य दर्शपूर्ण-मासप्रकरणे पाठात्। अतएवाश्वलायनादिभिरपि तत्रैव स पठित। यत्तु नराशंसवाक्ये द्वितीयत्वादिविशिष्टप्रयाजान्तरविधित्वस्य च वासिष्ठसम्बन्धित्वेन विधानादन्येषामभाव इति। तन्न। तथा सति समिद्यागोत्तरत्वरूपद्वितीयत्वस्य नराशंसयागे विधानेऽपि वासि-ष्ठानां तनूनपाद्यागबाधे प्रमाणाभावान्नराशंसोत्तर तत्करणापत्ते।

न हि द्वितीयपदेन तत्कार्य्यकारित्वेन नाराशंसविधि', येन तेषान्तनूनपाद्बाधः प्रसज्येत। तथात्वे सिद्धान्ते वासिष्ठानामप्युद्देश्यत्वेन वाक्यभेदापत्तेः।

न च तनूनपादन्येषामित्यनेनान्येषामेव तनूनपाद्विधानाद्वासिष्ठानां तद्बाधोपपत्ति'। तस्यैकवाक्यत्वेनोपपत्तौ वाक्यभेदाङ्गीकारे प्रमाणाभावात्। विशिष्टविधिकर्मान्तरकल्पनागौरवप्रसङ्गाच्च। अतः पूर्व्वोक्तप्रकारेण मन्त्रस्यैव वासिष्ठसंबन्धविधानेन कल्पभेद उपपादनीयः। स च दीक्षणीयादिद्वाराऽनेककर्तृकेषु सत्रादिषु प्राप्तः। अत' सत्रादौ भिन्नकल्पानामप्यधिकारः उत समानकल्पानामेवेति चिन्तायाम्।

अविशेषाद्भिन्नकल्पानामपि। न चैककल्पकरणेऽन्येषां वैगुण्यप्रसङ्गः। वासिष्ठानामित्यत्र मन्त्रस्य शुद्धवासिष्ठार्थत्वविधाने प्रकरणबाधापत्तेः, क्रतुयुक्तपुरुषधर्मत्वे च परिसङ्ख्यापत्तेर्वासिष्ठत्वस्य नराशंसमन्त्रे श्रौते वैश्वामित्रविधानात् साक्षात्क्रतौ परिच्छेदकत्वेन विधानायोगेऽपि प्रयोजककर्तृभूतयजमानपरिच्छेदकत्वेन वासिष्ठत्वविध्युपपत्ते'। सत्रादावौदुम्बरीसम्मानवदेकवासिष्ठकर्तृकत्वेऽप्यन्येषां वैगुण्याभावात्। अतो भिन्नकल्पानामप्यधिकार इति प्राप्ते।

विकल्पेन प्राप्तयोर्नियमार्थत्वेन वाक्यसार्थक्योपपत्तौ नियतप्राप्तावासिष्ठस्यापूर्वरूपपरिसङ्ख्याफलकत्वायोगाद्वासिष्ठोद्देशेनैव प्रमाणान्तरवशाद्वासिष्ठाभिन्नवित्तफलसाधनीभूतदर्शपूर्णमासाङ्गभूतद्वितीयप्रयाजद्वारा नराशंसमन्त्रविनियोगविधि। अतश्च नराशंसमन्त्रस्यावासिष्ठेषु विनियोगाभावादेव निवृत्तिरिति न तस्य परिसङ्ख्यार्थवाक्य-

प्रवृत्तिफलत्वम् । अतश्च भिन्नकल्पानामधिकारे एकाङ्गभूतमन्त्रपाठे इतरेषां फलानापत्तेः समानकल्पानामेवाधिकारः ॥ ६ ॥ ६ ॥ १ ॥

वचनात्तु ॥ एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता-मित्यत्रापि न भिन्नकल्पयोरधिकारः । द्वन्द्वस्य युगपदधिकरण-वचनत्वेन पदद्वयेऽपि लक्षणाद्युत्तत्वात् । तदनङ्गीकारेऽपि वा साहित्यबोधार्थं पदद्वये लक्षणायां आवश्यकत्वाच्च । अन्यथा देवता-त्वादेर्व्यासज्यवृत्तित्वानुपपत्तेः । अतस्तत्पुरुष एवायन्तदुत्तरश्चैकशेषः । अतश्च समासादुत्पन्नं द्विवचनन्तदर्थस्यैव द्वित्वमाह । तस्माद्राजद्वय-सम्बन्धिनौ द्वौ पुरोहितौ समानकल्पावेव यजेयातामित्याद्यः पक्षः।

द्विवचनस्य विशेष्यान्वयित्वस्युपपत्तेः सङ्ख्याधिकरणे व्युत्पादित-त्वात् एकस्यानेकस्य वा राज्ञो द्वौ पुरोहिताविव्यपरः ।

अथ वैकशेषद्वत्वेव तत्पुरुषः कार्यः । इतरथा पदद्वयावृत्ति-प्रसङ्गात् । राजपदवैयर्थ्यप्रसङ्गाच्च । अत एकस्यैव राज्ञो द्वौ पुरोहिताविव्यन्यः ।

पूर्वपक्षे लक्षणायां प्रमाणाभावात् पुरोहितं वृणीत इत्युपादेय-दशायामेकस्यैव विवक्षितत्वेनैकराज्ञः पुरोहितद्वयाभावाच्च कर्मधारय-एवायमिति प्राप्ते ।

ब्राह्मणानामेव पौरोहित्यश्रवणात् कर्मधारयानुपपत्तेर्द्वन्द्व-एवायम् । न च तत्र पदद्वये लक्षणा, युगपदधिकरणवचनत्वस्य निराकृतत्वात् । साहित्यप्रतीतेरानुमानिकत्वेनाप्युपपत्तौ लक्षणायां प्रमाणाभावात् । समाहारे परं एकत्वान्वयार्थं पदद्वयेऽपि समुदाय-लक्षणेति विशेषः ।

युत्पन्नत्वात् । विशिष्टकर्तृलक्षणाऽपेक्षया तत्कार्यलक्षणाया एव ऋत्विक्पदे न्याय्यत्वाच्च ।

अतो यो होता सोऽध्वर्युरितिवज्जघन्ये ऋत्विक्पद एव तत्कार्यं लक्षयित्वा यजमानसंस्कारार्थत्वेन तद्विधीयते । यच्छब्दप्राथम्याभ्यां यजमानस्यैवोद्देश्यत्वप्रतीतेः । अतएव फलसुखत्वादप्राकृतकार्यकल्पनाऽपि न दोषः । एवं च ऋद्धिकामत्वविशेषात्त्रयाणामपि वर्णानामार्त्विज्यसंस्कार्यत्वावगतेस्त्रयाणामपि सत्रेऽधिकारः । अतएव द्वादशाहे वार्हद्गिरं ब्राह्मणस्येत्यादि लिङ्गमपि सङ्गच्छते । एवं च यजमानसंस्कारकैरेव ऋत्विक्पदार्थैः प्राकृतकर्तृपकारस्यापि सिद्धेः न तदर्थं परिक्रयादिभिः ऋत्विगन्तरसम्पादनमित्यपि द्रष्टव्यमिति प्राप्ते ।

ज्ञापकसत्त्वे व्यवहितान्वयकल्पनया शाब्दबोधस्य लोके दृष्टत्वादिशापूर्वविधित्वादिदृष्टरूपाप्राकृतकल्पनादिदोषभिया यच्छब्दस्य व्यवहितान्वयेन स्वरूपप्राप्तिमात्रसूचनेन वा ऋत्विक्कार्यस्यैवोद्देश्यत्वमङ्गीकृत्य यजमाना, कर्त्तारोविधीयन्ते । न चैतावताऽनर्त्विक्कर्तृकत्वं शंक्यं, यजमानानामपि ऋत्विक्त्वस्य साधितत्वात् । वरणादिविधुन्नीत यजमानभिन्नत्वं परमतिदेशप्राप्तसुपदेशेन बाध्यते । न चैतावताऽब्राह्मणकर्तृकत्वमपीति तदनुग्रहाय ब्राह्मणानामेवाधिकारः । वार्हद्गिरादिदर्शनन्त्वहीनाभिप्रायेण ॥ ६ ॥ ६ ॥ २ ॥

वासिष्ठानां ॥ प्रकृतौ वासिष्ठो ब्रह्मा वैश्वामित्रोहोतेति ब्रह्मत्वाद्युद्देशेन वासिष्ठादिविधानात्तयोश्च विरुद्धकल्पत्वात्सत्रे विकल्प इति प्राप्ते ।

य एव कश्चित् सोमभागानधीयते* स एव वासिष्ठ इत्यर्थवादेन ग्रीनपदस्यैव विधिश्रवणाभिष्टपदस्य लक्षणया सोमभागाध्येतृमात्रपर-त्वावसायाच्छक्यार्थविध्यभावेन वैश्वामित्रसमानकल्पानामेवाधिकारः। भाष्ये तु य एव कश्चित् सोमभागानधीयीत स एव ब्रह्मा भवेदिति वाक्यमुदाहृत्य तस्य विधित्वाङ्गीकारेण वासिष्ठो ब्रह्मेत्यस्य तदर्थवादत्वाच्छक्यार्थविध्यभाव इत्युक्तम् ॥ ६ ॥ ६ ॥ ४ ॥

विद्वारस्य ॥ सारस्वतसत्त्रे, परस्यैवां एते स्वर्गं लोकं यन्ति ये अनाहिताग्नयः सत्रमासत इति विधौ सत्रपदस्य प्रकरणेन सङ्कोचे प्रमाणाभावात् सर्वसत्त्रेष्वपि अनाहिताग्नीनामपि आहिताग्नि-सहितानामधिकार इति मन्यते ।

अत एव सारस्वतसत्त्रवदेवेतरसर्वसत्त्रव्यतिरिक्तविषयमेवाधाम-गतात्मनेपदम्। इष्टिसोमोत्तरकालता तु फलग्रहलादेकं कश्चिन्तादृशं इष्टिसोमकर्त्तारमपेच्योपपन्नैव। न हि तत्रेष्टिसोमसमानकर्त्तृकत्वमपि विधीयते वाक्यभेदप्रसङ्गादिति प्राप्ते ।

एकपदोपादानेन वाक्यभेदाभावादिष्टिसोमसमानकर्त्तृकत्वाव-गतेस्तत्र चाधानगतात्मनेपदानुरोधादाहिताग्निमात्रकर्त्तृकत्वावगतेः सारस्वतसत्त्रे प्रकरणस्थविधिवाक्येन च ब्रीह्यादिवत्तत्रैवानाहि-ताग्नेरभ्यनुज्ञानादात्मनेपदानुरोधेनेतरसत्त्रेषु आहिताग्नीनामेवा-धिकारः ॥ ६ ॥ ६ ॥ ५ ॥

शुक्रादीनां ॥ शुक्रादिष्वात्मनेपदाश्रवणादौदुम्बरीसंमानबहुत्व-त्वाच्च यस्य कस्य चिदसमानस्य पार्श्वेऽपि सत्त्रेऽधिकार इति प्राप्ते ।

* अधीयीत इति कौमुदीधीत प्रतिभाति ।

यस्यैव पात्रैरुपक्रान्तः प्रयोगस्तस्यैव यजमानस्य सत्रप्रयोगमध्ये कदाचिन्मरणे यदि तत्पात्रैस्तस्य दाहः तदा सत्रवैगुण्यम्। यदि न दाहस्तदा आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दक्षिणे हस्ते जुहूमासादयतीत्यादिना विहितस्य पात्रप्रतिपत्तिपूर्वकस्य पात्रगुणक-दाहस्य लोपप्रसङ्गः। अतः साधारणान्यन्यानि पात्राण्युत्पाद्य सत्रेऽधिकारः॥ ६॥ ६॥ ६॥

पुरुषकल्पे॥ यासु विकृतिषु सप्तदश सामिधेनीरनुब्रूयादिति श्रुतं, तासु वैश्यस्यैवाधिकारः। प्रकृतौ सप्तदश वैश्यस्येत्यनेन तत्तद्विकृतिस्थसाप्तदश्यानुवादेन वैश्यस्य कर्तृत्वेन विधानात्। वैश्योद्देशेनापूर्वसाप्तदश्यविधौ पांचदश्यबाधापत्तेः। वासिष्ठानामित्यत्र तु व्यवस्थार्थत्वात्तथाऽङ्गीकरणमिति विशेषः। अतश्च वैश्यकर्तृक-साप्तदश्यानुरोधेन तस्यैव तास्वधिकार इति प्राप्ते।

सामिधेनीसाधनीभूतसाप्तदश्योद्देशे विशिष्टोद्देशापत्तेः, साप्तदश्य-मात्रोद्देशे च विकृत्यपूर्वसाधनीभूतसामिधेनीनामेव विशिष्योप-स्थापकाभावेनानुवादायोगात् यूपसाप्तदश्यादावपि विधानापत्तेः, प्रकरणानुग्रहाच्च वैश्योद्देशेनैव तदधिकारकदर्शपूर्णमाससम्बन्धि-सामिधेनीष्टत्त्विलक्षण्येन साप्तदश्यं विधीयते। अर्थाच्च वैश्यस्य निमित्तत्वं विकृतौ चानैमित्तिकार्थं पुनः श्रवणमिति सर्वाधि-कारः॥ ६॥ ६॥ ७॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य षष्ठः पादः।

---

## अथ षष्ठोऽध्यायः।

### सप्तमः पादः।

---

स्वदाने ॥ विश्वजिति सर्वस्वन्ददातीति श्रुतम्। तत्र पित्रादीनामपि ज्ञातित्वेन स्वशब्दवाच्यत्वाद्धनवदेव दानम्। न च पित्रादिषु यथेष्टविनियोज्यत्वरूपस्वत्वस्य, स्वामी रिक्थक्रयसंविभाग-परिग्रहाधिगमेष्वित्यादिस्वत्वहेतुभावेनासम्भवात्पितृत्वाद्यतिरेकेणा-त्मीयत्वाभावात्स्वत्वत्यागघटितददातिकर्मत्वानुपपत्तिः। कन्यापुत्र-दानादेरपि स्मृतिपूक्तत्वेन तत्रापि स्वत्वाङ्गीकारात्। अस्तु वा तदनुरोधेन परस्वत्वापादनमेव दानपदार्थ इति प्राप्ते।

परविधेयीकरणमात्रेण लोके दानशब्दप्रयोगाभावात्स्वत्वत्याग-पूर्वकपरस्वत्वापादनमेव दानपदार्थः। न च पित्रादौ स्वत्वे प्रमाण-मस्ति। स्वत्वहेतूनामभावात्। कन्यादानादौ ददातेर्गौणत्वात्। न चेह तदाश्रयणं युक्तं स्वशब्दस्य स्वत्वाश्रयीभूतधनपरत्वेनाप्युपपत्तेः। किञ्चायं स्वशब्दः प्रत्येकशक्त्यैवात्मीयज्ञातिधनेषु वर्त्तते। सर्वानु-गतैकशक्यतावच्छेदकाभावात्। अतश्चैकस्मिन्प्रयोगे एकस्यैवार्थस्य ग्राह्यत्वाद्ददात्यनुरोधेन धनस्यैव ग्रहणम् ॥ ६ ॥ ७ ॥ १ ॥

न भूमिः ॥ येयं महापृथिवी तस्याः सार्वभौमधनत्वात्तेन दानमिति प्राप्ते।

सार्वभौमस्यापि न तस्यां स्वत्वम् । जयस्यापि प्रभुस्वामिकधन-क्षेत्रादिविषय एव स्वत्वोत्पादकत्वात् । महापृथिव्यां तु राज्यमात्रा-धिकारस्यैव जयेन सम्पादनात् । राज्यं हि स्वविषयपरिपालन-कण्टकोद्धरणरूपम् । तन्निमित्तकं च तस्य कर्षकेभ्यः करादानं दण्ड्येभ्यश्च दण्डादानमित्येतावन्मात्रम् । न त्वेतावता तस्यां स्वत्वम् । तथात्वे वनगतहणकाष्ठादावपि स्वत्वापत्तौ तत्र स्वत्वोत्पादकपरि-क्रयविधिविरोधापत्तेः । तद्विषयस्वप्रजादिगृहादिष्वपि स्वत्वापत्तेश्च । तस्मात्सार्वभौ देया माण्डलिकेनापि मण्डलम् । परिक्रयादिलब्धं गृहक्षेत्रादिकं तु देयमेव ॥ ६ ॥ ७ ॥ २ ॥

अकार्यत्वात् ॥ अश्वादयः केसरिणोऽपि न सर्वस्वे देयाः । न केसरिणो ददाति नोभयतोदतः प्रतिगृह्णातीति तेषां पर्युदासात् । यद्यपि चानारभ्याधीतेनानेन रागतः प्राप्तस्यैव मित्रादिभ्योऽश्वदानस्य, यथा* श्राद्धे दक्षिणां ददातीत्यादावनियमेन विहितस्यापि पात्रविषये ऐच्छिकस्य दानस्य प्रतिषेध एव क्रियते, तथापि विश्वजित्प्रकरणस्थेनानेन पर्युदास एव । सर्वस्वपदेन नियमत एव सर्वदानस्य विहितत्वेनाश्वांशेऽपि तत्प्रवृत्तेर्वैधतया निषेधपक्षे विकल्प-स्यापरिहार्यत्वात् । आवश्यकी चेयं वाक्यद्वयकल्पना । इतरथा-ऽश्वप्रतिग्रहेष्ट्यधिकरणादौ लौकिकाश्वदाननिषेधकथनानुपपत्तेः । नोभयतोदतः प्रतिगृह्णातीति पुरुषार्थः प्रतिषेधो दानलक्षणया वा पर्युदास इत्यवधेयम् ।

वस्तुतस्तु प्राक्तस्यैव नैमित्तिकस्य सर्वस्वदानस्यानैमित्तिकत्वाच

* यथा,— इति पाठः समीचीनः प्रतिभाति ।

विधेयत्वस्य वक्ष्यमाणत्वात् प्रकृतौ च दक्षिणार्थभागे द्रव्यैवाश्वानां प्रसक्तेरनारभ्याधीतेनैव तन्निषेधोपपत्तौ न विश्वजित्प्रकरणे वाक्यान्तरकल्पनमपि। अत एव ज्योतिष्टोमतद्विकारानङ्गे सर्वस्व-दानेऽश्वानां दानमिष्टमेव ॥ ६ ॥ ७ ॥ ३ ॥

नित्यत्वाच्च ॥ यत्किञ्चित्पुरुषस्य भोग्य खड्ग्यात्कुण्ययनासन-गवादि, तत्सर्वं ददातीति शास्त्रार्थावधारणाद्यस्यापि यच्चास्ति सोऽपि तदर्जयित्वा दद्याद्दातव्यविधित्वाभादिति प्राप्ते।

षष्ठविधिप्रकारापन्नेऽयोदकप्रस्तदानानुवादेन सर्वतामात्रविधा-नात्प्रसिद्धस्वत्वेष्वेव सर्वशब्दस्योपपत्तौ अप्रसिद्धस्वत्वार्जनाद्यपेक्षत्वा-नुपपत्तेश्च नार्जयित्वा देयम् ॥ ६ ॥ ७ ॥ ४ ॥

शूद्रश्च ॥ धर्मार्थं मृत्यर्थं वा परिचारकत्वेनावस्थित शूद्रोऽपि न देय। तत्रास्य स्वत्वाभावात्। परवश्यत्वानभ्युपगमसम्भवाच्च। गर्भदासादयस्तु देया एव ॥ ६ ॥ ७ ॥ ५ ॥

दक्षिणाकाले ॥ दक्षिणाकाले यच्चास्य स्वत्व तस्यैव दान न तु तत प्रागपि यत्प्राप्तोपभोग धन तदनुपभुज्य प्रयत्नेन धारयित्वा देयम्। धारणप्रयोजकत्वे प्रमाणाभावात्। भाविनस्तु तदानीं स्वत्वाभावादेवाशक्य दानम्। न च भाविन्यपि प्रतिश्रवणमात्रेण स्वत्वोत्पत्ति। तथात्वे दत्तस्य पुनर्दानासम्भवेन, देय प्रतिश्रुत चैवेति विधिवैयर्थ्यप्रसङ्गात्। ददाते स्वत्वार्पणमात्रार्थत्वे लक्षणाप्रसङ्गाच्च। प्रतिश्रवणेन च स्वोपभोगान्यदानायोग्यता पर जन्यते। उक्तदान-नियमात्। यच्चान्यस्मै प्रतिश्रुतमित्यन्यस्मै दाननिषेधाच्च। न तु स्वत्व, निर्वापवत् ॥ ६ ॥ ७ ॥ ६ ॥

अशेषत्वात् ॥ ज्योतिष्टोमे तद्विकारे तदन्यस्मिंश्च सर्वस्वदान-माम्नात तत्र दृत्ता कथा । तत्र तु कर्मारम्भे एव त्रिधा यजमाने-नात्मीय धन वचनाद्व्यवस्थापित, भक्षार्थं क्रत्वर्थं दक्षिणार्थं चेति । तत्र सर्वस्य स्वत्वाविशेषात् त्रिविधस्यापि दान न तु दक्षिणार्थ-भागस्यैव सर्वता। तस्य प्रकृतौ दक्षिणार्थत्वे सर्वस्वदानविधिवैयर्थ्यम्। तदभावे भागत्रयस्याप्यविशेषाद्दक्षिणार्थोऽयं भाग इति व्यवहारा-नुपपत्तिः । अतश्च प्रत्यक्षवचनोपदिष्टसर्वस्वदानवशेन अतिदेशप्राप्त-कर्मशेषलोपः । पदार्थानां प्रधानत्वादङ्गभूतदक्षिणानुरोधेन बाधस्य प्रसेयवत्वावलन्यायेनानुपपत्तेर्वा किञ्चिन्नतत्त्वे शिष्टं सर्वमन्यत्प्रदी-यतामिति प्राप्ते ।

दक्षिणार्थेन निर्दिष्टस्य तत्सम्बन्धप्राप्तौ सर्वतामात्रविधानेन लाघवमिति तस्यैव सर्वस्य दानम । न चैव प्रकृतावपि तस्य दाना-पत्तेरत्र विधिवैयर्थ्यं, इतरथा तस्य दक्षिणार्थत्वानुपपत्तिरिति वाच्यम् । इयेतावता ऋत्विजोनानमेयुरपि तु सर्वस्वेनेत्यनेन वचनेन द्वादशशतेनानत्यक्षभावे तत्रापि दक्षिणार्थत्वात । अत्र दक्षिणार्थ-भागस्यैव देयत्वेऽवस्थिते पूर्वतनानि षड्धिकरणानि कृत्वा चिन्तयेति केचित् ।

वस्तुतस्तु पित्रादीनामपि दक्षिणाभागान्तःपातेन विचारोपपत्ते न कृत्याचिन्तात्वम् ॥ ६ ॥ ७ ॥ ७ ॥

अहर्गणे ॥ अस्त्यष्टरात्रोऽहीन । तस्य विश्वजित्प्रथममहः, ततोऽभिप्लव षडहः ततोऽभिजित पशुकामो ह्येतेन यजेतेति श्रुत । तत्र विश्वजिति प्रकरणान्तरोक्तन्यायेन कर्मान्तरे नामाति

देशैनैकाहकाण्डपठितविश्वजितो धर्मः सर्वस्वं, अन्येषु तु गणत्वाद्-द्वादशशतो ज्योतिष्टोमिकी। द्वादशशते च प्रतिसुत्यं भेदेनातिदेशोऽपि प्रयोगैकत्वेन कर्त्रैकत्वस्य दशमे वक्ष्यमाणत्वात्। तदानत्यर्थाया अपि दक्षिणायास्तन्त्रेणदानत्वे वा देयत्वप्रसक्तौ अनवद्धं द्वादशशतं ददातीत्यनेनावृत्तिफलकोऽभ्यासो विधीयते। द्वादशशतस्यापि तु विधाने वाक्यभेदापत्तेः। प्राकृतपशुपदादि-दक्षिणामात्रोपलक्षणं तत्। तेन या दक्षिणा तन्त्रेण देयत्वेन प्रसक्ता, तां प्रत्यहं ददातीति तदाकार्थः। तद्दिष्टराचे नामातिदेश-प्राप्याभ्यां विश्वजिद्धर्मानुषङ्गप्राप्तावपि भूयोऽनुग्रहस्य न्याय्यत्वा-द्द्वादशशतस्यैव तन्त्रेणोपकारकत्वप्रसक्तेः तस्यैवाभ्यहमित्यनेनावृत्ति-करणाद्द्वादशशतमेव प्रत्यहं देयमिति वार्त्तिककाराशयः। भाष्य-कारीयस्तुष्टराचप्रकरणस्थेनैव हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददातीत्यनन्यथासिद्धलिङ्गोपष्टम्भप्राप्याधिना तत्कल्प्य-विधिनैव वा सर्वस्वविधानादाद्य एव सर्वेषु वा अहःसु सर्वस्वं देयमिति॥ ६॥ ७॥ ८॥

विकारः॥ प्रकृतिभूते विश्वजिति द्वादशशतादिन्यूनधनस्यापि सर्वस्वपदवाच्यत्वोपपत्तेस्तद्वतोऽप्यधिकार इति प्राप्ते।

प्रकृतौ ज्योतिष्टोमे यावतावता ऋत्विगो नानमेयुरपि तु सर्वस्व-मेवत्येव द्वादशशतमाम्नायामनतो सर्वस्वविधानात्तत्र च तदधिक-स्यैव योग्यतया प्राप्तेर्द्वादशस्यैव चाप पदप्राप्तस्य नियममात्रकरणा-द्द्वादशशताधिकधनस्य एव विश्वजित्यधिकारः॥ ६॥ ७॥ ८॥

अपरिमिते॥ आधाने एका देया षट् देया द्वादश देयाः

शतं देयं सहस्रं देयमपरिमितं देयमिति श्रुतम् । तत्रापरिमित-शब्दः परिमाणशून्यमवयवव्युत्पत्त्याऽभिधीयते । न च परिमाणशून्यस्य दानं सम्भवतीत्यत' प्रकृतपरिमाणशून्यत्वमर्थः । अतः प्रकृतपरि-माणप्रतिषेध एवायं इति प्राप्ते ।

ज्ञातपरिमाणेऽपि बाहुल्यमात्रेण लोके अपरिमितशब्दप्रयोगा-द्बाहुल्ये शक्ति' । तत्राश्वकर्णादिवद्रूढ्या योगबाधान्नायं पूर्वपरि-माणप्रतिषेधः । अपरिमितशब्दस्य नञ्समासे तदन्तर्गतस्य नञः क्रियान्वयव्युत्पत्त्यभावेन निषेधायोगाच्च । प्रकृतपरिमाणाति-रिक्तानियतपरिमाणकदानान्तरविध्यङ्गीकारे च लक्षणाद्यापत्तेर्बहु-त्वावच्छिन्नद्रव्यकदानान्तरविधिरेवायम् । बहुत्वस्य चापेक्षितत्वेन पूर्वप्रकृतसहस्रावधिकत्वनिश्चयात्तदपेक्षयाऽधिकसैवापरिमितम् ॥ ६ ॥ ७ ॥ १० ॥

परकृति ॥ दर्शपूर्णमासयोरिति हस्याह वट्कु*र्वाष्पिमोषान्मे पचतेति श्रुतम् । इदं चैककर्तृकोपाख्यानरूपत्वात्परकृतिः । अयं वारणाशमविधेः शेषः । बहुकर्तृकोपाख्यानपरं च वाक्यं पुराकल्प' । यथे उल्मुकैः सह पूर्वे समाजग्मु' तानसुरारक्षांसि निर्जघ्नुरिति । अयं च गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्निति निर्मन्थ्याग्निहसर्ग-स्तत्यर्थे उल्मुकसर्गनिन्दकः सक्तद्विधेः शेष', न तु स्वतन्त्रो विधि-रिति औदुम्बराधिकरणे निर्णीतमेव । परकृत्युदाहरणं तु यदि विधित्वदा कृत्वा चिन्तया विचार्यते ।

---

* वट्कु, इति भाष्यस्थ पाठ ।

दर्विहोमत्वात्सर्वाधिकारकदर्शपूर्णमासोद्देशेन तत्कर्तृसंस्कारार्थं तया वा मापपाकविधिरिति तदंत एव माषपाकेऽधिकारो वैश्वनिमित्तकमाप्तदृग्यवत्। न चात्र प्राप्यत्ववद्दर्विहोमत्वं दुर्वचं, येन तत्कल्प्यविधेः सामान्यविषयत्व स्यादिति प्राप्ते।

स्तुत्युपादेयत्वेनोपात्तस्य दर्विहोमत्वस्य विधेयमापपाकविशेषणत्वकल्पने प्रमाणाभावान्मापपाकमात्रविधानेन सर्वाधिकारः॥ ६॥ ७॥ ११॥

सहस्रसंवत्सरं॥ पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशा विश्वसृजामयनं सहस्रसंवत्सरमिति श्रुतम्। अत्र पञ्चाशच्छब्दः सख्यापर एव, त्रिवृत्संवत्सरशब्दौ तु लक्षणया त्रिवृत्स्तोमकसंवत्सरसाध्यक्रतुवृत्तिपरौ, पञ्चाशच्छब्दविशेषणं पञ्चशब्दोऽपि। तेन तादृशक्रतुवर्त्तिनी इय पञ्चसख्यावच्छिन्ना पञ्चाशत्संख्येति पार्ष्टिकान्वयवेलायां फलितार्थः। तदिह त्रिवृदादिस्तोमकत्वं यद्यपि साक्षात्सम्बन्धेनाहन्येव, तथापि तादृशाहर्घटितत्वात्संवत्सरेऽपि तत्सम्भवतीति न कोऽपि दोषः। तत्र संवत्सरशब्दोऽपि मुख्यया वृत्त्या संवत्सरमेवाभिधत्ते। तेन मनुष्याणां सहस्रायुष्याभावात्तिर्यगधिकरणे निराकृतोऽपि श्रुतिबलाद्देवर्षादीनामेवाधिकारः। तेषां लभ्याद्युपसंहारासामर्थ्यान्मनुष्याणामेव वा रसायनलब्धसहस्रायुषां स। रसायनादेरेतावदायुःसम्पादकत्वे प्रमाणाभावाच्छतायुर्वै पुरुष इति श्रुतेश्चैकेनारब्धस्य पुत्रादिपारम्पर्येण समापनमिति कुलकल्पो वा। शास्त्रफलं प्रयोक्तरीति न्यायस्य विना वचनमपवादे

प्रमाणाभावात्समस्तकर्मानुष्ठानाभावे विकलानुष्ठायिनां फलानुपपत्ति-प्रसङ्गात्सञ्चारश्चादेव सहस्रायुष्टं जायत इति वा कल्प्यम्। एतादृशकल्पनेऽपि प्रमाणाभावात् पञ्चपञ्चाशत इति यजमानाभिप्राया संख्या। तेनैकोऽपि चित्रस्तोमकयाग उक्तः संवत्सरः पञ्च-पञ्चाशत्संख्याकैर्यजमानैः सम्बध्यमानस्तावत्संख्य इत्युपचर्यते। अतश्च चतुःसमसंवत्सरमिदं सत्रं सार्धशतद्वयैर्यजमानैः कार्यमिति वा पक्षा-न्तरम्। अत्रापि वृद्धावत्यन्तमनारोहात्सप्तदशावराश्चतुर्विंशतिपरमा-इत्यातिदेशिकपरिमाणबाधापत्तेश्चानुपपत्तिः।

तस्मात्संख्याशब्दं संवत्सरशरशब्दं वा गौणमाश्रित्यैवात्र मनुष्या-धिकारः समर्थनीयः। तथापि संख्याशब्दयोर्मुख्यत्वादेकार्थनिश्चय-सामर्थ्याच्च न स्वार्थत्यागः। संवत्सरपदं तु जघन्यत्वात्सौर्यचान्द्रादि-भेदैनैकार्थनिश्चयासमर्थं भवति गौणम्। तत्र यो मासः स संवत्सर-इति दर्शनात्मासेष्वेवैत्येकः पक्षः। तथापि लक्षणिकत्वदवस्थैव। न ह्याधानोत्तरं सहस्रमासपर्यन्तं जीवनं सम्भवति। अतः संवत्सरप्रतिमा वै द्वादशरात्रय इति प्रयोगाद्द्वादशराविश्वित्यपरः।

प्रतिमाशब्दविशेषणं त्वत्र संवत्सरशब्दः, न तस्य द्वादशरात्रिषु प्रयोगः। तेन चित्रदादिशब्दसामञ्जस्यादिवसेषु संवत्सरशब्दः। चित्रदादिपदैर्हि स्तोममात्रवाचकैरपि तद्विशिष्टमहरेव लक्षणया प्रकाश्यते। अत्यन्तावच्छेदकगौरवाङ्गीकारेण वा। अतस्त्रिया संवत्सरपदं दिवसपरमेवेति सिद्धान्तः।

इदं च कृतादियुगान्तरेष्वपि मनुष्याणां शतमेव परमायु-रितिकृत्वा चिन्तया। यदा तु स्मृतिपुराणेतिहासादौ श्रुतश्च

प्रकृष्टतरज्ञापकबलेन सहस्रसंवत्सरपरिमितस्यायुषोऽपि प्रकृतश्रुत्युपष्टम्भस्य प्रमाणिकत्वं; एतज्ज्ञापकबलेनैव च शतायुर्वै पुरुष इति श्रुतौ शतान्यायूंषीति विग्रहः, कलियुगाभिप्रायकत्वं वाऽऽश्रयणीयं, तदा त्रिवृदादिशब्दैमाहःसह्नसेव त्रिवृत्स्तोमकाहर्घटितत्वसम्बन्धेन लक्षयित्वा संवत्सरशब्दो यथाश्रुत एव। सचास्य गोवधादिवद्युगान्तरस्थतावदायुष्कमनुष्यपरमिति ध्येयम्। न हि मीमांसकमते युगादिव्यवस्थाऽस्वीका। तत्तद्युगधर्मव्यवस्थापकस्मार्तविधीनां निर्विषयत्वापत्तेः॥ ६॥ ७॥ १२॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य सप्तमः पादः।

# अथ षष्ठोऽध्यायः ।

## अष्टमः पादः ।

इष्टिपूर्वकत्वात् ॥ सन्ति चतुर्होतृसंज्ञकामन्त्राः पृथिवी होता द्यौरध्वर्युरित्यादयः। तैर्जपाहोमाश्च विहिताः। तत्र ये तावत्क्रत्वर्थाः पुरुषार्थाः अपि वा वचनात्क्रतुप्रयोगमध्यवर्तिनस्तेषु विवाद एव नास्ति। ये तु पृथग्भूताः काम्याजपास्तेष्वप्यविवाद एव। आहिताग्न्यनाहिताग्निसाधारणत्वात्। ये तु तादृशाहोमास्तेषां यदाहवनीये जुहोतीत्यनेनाहवनीयाधिकरणकत्वस्य विहितत्वादितरहोमवदेवाहिताग्निमात्राधिकारकत्वम्। यत्त्वेषा वै अनाहिताग्नेरिष्टिरिति चतुर्होतृत्वविधौ वचनं, तद्येयमनाहिताग्नेः क्रिया जपादिरूपा, सा इष्टितुल्या। एवमिष्टिसादृश्यमात्रानुवादेन अयाद्यभिप्रायकतया नानुपपन्नम्।

यदि तु विध्यन्तरशेषत्वाभावेनार्थवादत्वानुपपत्तेर्जपे इष्टिसादृश्यस्य कथमप्यनुपपत्तेश्च येयं त्यागघटितत्वसादृश्याच्चतुर्होतृहोमरूपेष्टिः साऽनाहिताग्नेरित्यर्थाङ्गीकारेण विधिरित्याश्रीयते, तथापि तस्यानाहिताग्निपरिसंख्यार्थत्वे, प्रमाणाभावात्पिण्डपितृयज्ञवदुभयाधिकारकत्वमिति प्राप्ते।

प्रत्यक्षवचनेनानाहिताग्नेः कर्तृत्वविधौ तत्र एव स्मार्त्ताग्न्यधि-

करणत्वप्राप्तेराहवनीयाधिकरणत्वस्यासम्भवादेव बाधात् परिसंख्यात्वानापत्तेरनाहिताग्नेरेवाधिकारः। पिण्डपितृयज्ञे तु एवमनाहिताग्निरिति वचनेनानाहिताग्नेरप्यभ्यनुज्ञानादुभयाधिकार इति विशेषः ॥ ६ ॥ ८ ॥ १ ॥

उपनयन् ॥ उपनयनाङ्गभूता होमा आचार्यकर्त्तृकामाणवककर्तृकाश्च उभये अप्युपनयनद्वारा माणवकसंस्कारार्था इत्यविवादम्। तत्र ये तावदाचार्यकर्त्तृकास्तेषां सत्यप्याचार्यस्याहिताग्नित्वे आधानगतात्मनेपदविरोधादाचार्याग्निषु कार्याः, अपि तु लौकिक एवाग्नौ।

ये तु माणवककर्त्तृकास्ते सुतरां। क्रतुविधौनामिवोपनयनाङ्गभूतहोमानामपि आधानप्रयोजकत्वात्[*]। प्रयोजकत्वेऽपि वा ऽऽधानस्येतरकर्मवत् ज्ञानापेक्षत्वाभावेनोपनयनात्पूर्वं कर्त्तुमशक्यत्वाच्च। आक्षेपकत्वेऽपि चोभयाधिकारकस्याधानस्य भार्याऽभावेऽनुपपत्तेश्च। भार्यायाश्च ध्वात्वा भार्यामधिगच्छेदिति समावर्त्तनोत्तरकाले विवाहविधानेन पूर्वमसम्भवात्।

न च प्रयोजनानुरोधेन कालादिबाधः। एतदाक्यस्य निर्विषयत्वापत्तेः। न चापत्यार्थं दारान्तरकरणे कालविधिः। धर्मं चार्थं चेत्यादिपर्यालोचनया धर्मार्थमपत्यार्थं च दारान्तरानुपपत्तेः। दारक्रियायामपि स्वतन्त्रकामाम्नानेन क्रतुविधौनामाधानाध्ययनवदेव दारक्रियाप्रयोजकत्वाभावाच्च। अतएव विरक्तस्य न कर्मार्थ

---

[*] आधानाप्रयोजकत्वादिति भवितुमुचितम्।

दारक्रिया किन्त्वाश्रमान्तरमेव । किं चोपनयनात्पूर्वमाधानकरणे जातपुत्रत्वाद्याधानकालत्वलोपोऽष्टवर्षत्वाद्युपनयनकालत्वलोपो वा प्रसज्येत। अतस्तेऽपि लौकिकाग्नावेव ॥ ६ ॥ ८ ॥ २ ॥

स्थपतीष्टिः ॥ निषादेष्टेर्दर्शपूर्णमासविकृतित्वादतिदेशेनाहवनीयादिप्राप्तौ तेषामाधानाधीनत्वादस्त्यपि तस्य स्वतन्त्राधानविधौ निषादेष्टिरेव तस्याधान प्रयोजयेदिति प्राप्ते ।

सत्यपि तस्या अग्निजनकाकाङ्क्षत्वे जनकीभूतस्याधानस्य ब्राह्मणादिकर्तृकत्वेनैवोत्पन्नत्वान्निषादकृतेन तेनाग्निनिष्पत्तौ प्रमाणाभावात्, प्रकृतौ परप्रयुक्ताग्न्युपजीवनेनेहाहवनीयादिप्राप्तेरेवाभावाच्च, न तेषु सा । विद्यायास्तु तद्व्यतिरेकेण निषादेष्टेरेवासम्भवात्तदुपायस्य लौकिकत्वेनाक्षेपोपपत्तिरिति वैषम्यम् । तेनाहवनीयाद्यनाक्षेपकत्वेऽपि, यत्र क्वचन होष्यन् स्यात् तत्र भूसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेदिति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात्तमेव तत्तद्देशे स्थापयित्वा तेष्विष्टिः कार्या।

यत्तु तस्मिन् गृह्याणीति गौतमवचनं लौकिकाग्निप्रापकत्वेन तन्त्ररत्ने उदाहृतं, तद्गौतमस्मृतौ तच्छब्देन स्मार्ताग्नेरेव परामर्शान्निषादेष्टेश्च गृह्यत्वाभावाच्चोपेक्षितम् । न हि गृहशब्दवाच्यदम्पत्योर्हितमिति व्युत्पत्त्या अस्या अपि गृह्यपदवाच्यत्वम् । अभियुक्तप्रसिद्ध्या गृह्यपदस्य गृह्यसूत्रोक्तकर्मस्वेव रूढत्वेन योगस्याप्रयोजकत्वात् । इतरथा दर्शादेरपि गृह्यत्वापत्तेः ॥ ६ ॥ ८ ॥ ३ ॥

अवकीर्णि ॥ यो ब्रह्मचर्यावकिरेत्स नैर्ऋतं गर्दभं पशुमालभेतेति श्रुतोयागोऽपि लौकिके एवाग्नौ । सत्यपि त्रैवर्णिकत्वे विद्यत्वे

वा भार्याऽभावेनाधानासम्भवात् । न चावकीर्णिनोऽपि स्नात्वा विवाहे बाधकाभावः ।

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।

इति वचनेन विप्लुतब्रह्मचर्यस्यावकीर्णिनोऽकृतप्रायश्चित्तस्य विवाहनिषेधात् । न ह्यत्राविप्लुतब्रह्मचर्यपदेन कृतब्रह्मचर्याश्रमोक्तिः, आश्रमयोः पौर्वापर्य्यमात्रख्यानेन विधानादवकीर्णिनोऽपि विवाहे बाधकाभावः । स्नात्वा भार्यामुपेयादित्यनेनैव स्नानपूर्वभाविनो ब्रह्मचर्यस्य स्नानोत्तरभाविना विवाहेनार्थात्पौर्वापर्यसिद्धेरस्य वचनस्य साङ्गब्रह्मचर्यवत एव विवाहाधिकार इत्येवमर्थतयाऽवकीर्णिनो-विवाहानुपपत्तेः । अतः सोऽपि लौकिकाग्नावेव । आपस्तम्बादि-वचनाद्वा ।

अथास्यावकिर्णियागो न दैवप्रकृतिकः गर्दभं पशुमिति पशु-शब्दोपादानवैयर्थ्यात् । किं तु अथ पशुकल्प इत्याश्वलायनोक्तायाः स्मार्त्तपशिवितिकर्तव्यतायाः एतदङ्गत्वमिति केचित् ॥ ६ ॥ ८ ॥ ४ ॥

उदगयन ॥ श्रुतौ स्मृतौ वा यस्मिन् कर्मणि दैवे पित्र्ये वोदगयनशुक्लकृष्णपक्षादिर्यः कालः प्रत्यक्षवचनेनान्यार्थदर्शनकल्प्य-विधिना वा विहितः, सोऽविरोधे समुच्चयेन विरोधे विकल्पेन ग्राह्य इत्येवं सङ्कलय्य सूत्रकारः शिष्येभ्य उपदिष्टवान् ॥ ६ ॥ ८ ॥ ५ ॥ ६ ॥

याज्याक्रयणं ॥ दीक्षितोऽमति वक्ष्यतीति याज्या यद्यपि दक्षिणादानार्थं द्रव्यमस्ति तेनापि कार्या, न त्वविद्यमानद्रव्येणैव । नियमपक्षाश्रयणेन सर्वदैव क्रतुना अपूर्वस्य च प्रयुक्तत्वात् । न चास्या-द्रव्यप्राप्तिद्वारा द्रव्यसंस्कारकत्वाद् द्रव्यसत्त्वे च तत्प्राप्त्युपायवैय-

र्थात्, असत्यपि निमित्तत्वश्रवणे प्रयोजनवशादेवाकाङ्क्षितविधि-न्यायेन नियमविधित्वोपपत्तिरिति वाच्यम् । अनाकाङ्क्षितविधानस्य फलकल्पकत्वेन दोषत्वात् । प्रकृते चाविद्यमानद्रव्यस्थले द्रव्य-प्राप्तिरूपफलवद्विद्यमानद्रव्यस्थलेऽपि तत्फलताविशेषात्कल्पनाऽभावेन दोषत्वाभावाद्वाधाप्राप्तद्रव्यस्यैव फलपूर्वेण ग्रहणात् नित्यत्वोपपत्तेः । एवं विद्यमानेऽपि सोमे क्रयस्याप्यावश्यकत्वम् ॥ ६ ॥ ८ ॥ ७ ॥

तथा भक्ष ॥ एवं पयोव्रताद्यपि विद्यमानेऽविद्यमानेऽपि भक्षा-कारे स्यात् । अग्नीदग्नीन्विहरेति च प्रैषोऽन्यतोऽनवबुद्धेऽवबुद्धेऽपि च स्यात् । बुद्धेऽप्यर्थे एतद्बोधजन्यनियमादृष्टसिद्ध्यर्थं प्रैषावश्यकत्वात् । अत एव प्रैषजन्यबोधानुष्ठितेनैव फलसिद्धिरिति कल्पनमपि प्रामाणिकम् । प्रैषग्रहणं च मन्त्रमात्रोपलक्षणम् । तथा दर्भमयं वासो वाजपेये वासोऽन्तरसत्त्वेऽपि परिधेयमेव ।

तथा यत् पशुभिर्मायुमकृतोरोवा पद्भिराहते अग्निर्मा तस्मा-देनसो विश्वान्मुञ्चत्वंहस इति मन्त्रेण विहितस्य संज्ञप्तहोमस्यापि पशुयागे नित्यं करणम् । न च संज्ञप्तहोमस्य मान्त्रवर्णिकशब्द-करणादिजन्यदोषनिर्घातार्थत्वप्रतीतेस्तदनुरोधेन मायुपदवाच्यशब्द-करणादावेव होम इति वाच्यम् । शब्दादिकरणस्य दोषजनकत्वे प्रमाणाभावेन मान्त्रवर्णिकफलकल्पनानुपपत्तेः । एतद्बलेनैव दोष-कल्पने गौरवाच्च । किं च नात्र शब्दादिकरणाद्दोषोऽपि तु तदनु-कूलयत्नरूपादाख्यातार्थात् । तस्य च प्रतिबन्धकवशाच्छब्दाद्य-नुत्पत्तावप्युत्पत्त्यावश्यकत्वेन संज्ञप्तहोमस्य नित्यत्वम् ।

तथा योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति मन्त्रोऽपि द्वेष्य-

निश्चयसत्त्वेऽसत्त्वे वा सर्वदैव प्रयोक्तव्य । न च मन्त्रलिङ्गवशेन प्रकरणसङ्कोच । परकर्तृकदेयस्यायोग्यत्वेन तदभावनिश्चयायोगात्। स्वनिष्ठदेयविषयस्यान्तत पापादेरपि सम्भवेन मन्त्रलिङ्गा- विरोधात् ॥ ९ ॥ ८ ॥ ८ ॥

अनर्थक ॥ यद्यत्र यदि रोगोत्पत्त्यादिना मरणादिहेतु सम्भाव्यते, तदा क्रतुविरोधप्रसङ्गाच्च कार्यमपि । जातेष्टिन्यायेन गतार्थमपीद शिष्यहितार्थमुक्तम् ॥ ९ ॥ ८ ॥ ९ ॥

पशुचोदनाया ॥ अग्नीषोमीय पशुमालभेतेत्यादौ पशुशब्दो- न सामान्यवचन । न हि पशुत्व जाति, प्रमाणाभावात् । कार्य तया कारणतया वाऽनवच्छेदकत्वात् । नापि पुच्छादिमत्त्व तस्यानुगतत्वाभावेन सामान्यत्वाभावात् । अत पशुशब्दोव्यक्तिवाची । ततश्च सर्वासा अश्वादिव्यक्तीनामप्युक्तत्वात्ताय सन्दिग्ध । तथा च नार्थवादवदत्र च्छागस्य वपाया इति मन्त्रस्य निर्णायकत्वम् ।

यद्यपि चाय सामान्यवाची भवेत्तथापि मन्त्रस्य भिन्नवाक्यत्वा- त्तद्व्यतिरेकेणैव विधे सर्वविषयतया पर्यवसानान्न तत्सङ्कोचकत्वम् । एव सत्यपि यदि मन्त्रस्य विधायकता भवेत्तदाऽऽर्येय वृणीते चीन् वृणीत इतिवद्व्वेदपि विशेष्यविशेषणभाव । न त्वेतदस्ति । अतोमन्त्रस्य छागपद छिन्नपुच्छाख्यगमनवत्त्वयोगेन वयोविशेषवच- नत्वेन वा सर्वपशुपरम् । छागपक्षे वाऽय मन्त्र इति प्राप्ते ।

छागशब्दस्यापि रूढत्वेन यौगिकत्वानुपपत्ते पुच्छवतो विहितत्वेन यौगिकार्थग्रहणानुपपत्तेश्च न तावद्यौगिकम् । वयोऽवस्थाविशेष- वचनत्वेऽपि च गोत्वादिशब्दवदजत्वस्यैव वयसो वाच्यत्वादश्वादि-

ग्रहणानुपपत्तेः, छागग्रहणेनापि पशुत्वस्याविरोधोपपत्तौ मन्त्रस्य पाचिकत्वकल्पनानुपपत्तेः, छागस्यैव ग्रहणम् ।

यद्यपि पशुशब्दोव्यक्तिवचनः स्यात्तथापि युगपत्सर्वव्यक्तिग्रहणाभावेनैकव्यक्तिग्रहणे मन्त्रस्य निरवकाशत्वाच्छागव्यक्तिमात्रग्रहणेऽपि न किञ्चिद्बाधकम् । वस्तुतस्तु सामान्यवाच्येवायम् । तदपि यद्यपि न पुच्छवत्त्वादि, तथापि पुच्छत्वावच्छिन्नवत्त्वस्यैवानुगतस्य वक्तुं शक्यत्वान्न विरोधः ।

वस्तुतस्तु पुच्छाद्यप्रतीतावपि पशुत्वप्रतीतेः पशुत्वं जातिरेवेति सामान्यवचनत्वमप्यव्याहतम् । तेन युक्त एव मन्त्रेण निर्णयः । भिन्नवाक्येऽपि च पशुच्छागशब्दयोर्विशेषणविशेष्यभावोवाक्यैकवाक्यतया न विरुध्यते । इदं च सर्वमजोऽग्नीषोमीय इति शाखान्तरवाक्यनास्तीति कृत्वा चिन्तया बोध्यम् । तत्सिद्धं छागवत एवाधिकार-इति निरूपितोऽधिकारः ॥ ६ ॥ ८ ॥ १० ॥

इति श्रीभाट्टदीपिकायां खण्डदेवकृतौ षष्ठस्याष्टमः पादः ॥

अध्यायश्च समाप्तः ॥

समाप्तञ्च पूर्वषट्कम् ॥

प्रकृते तु प्रयाजादीनामाग्नेयेतिकर्तव्यतात्वेनैवानुगमात्तदेव विकृतिसम्बन्धितावच्छेदकम् । पुरोडाशकपालादिषु पुरोडाशसम्बन्धित्वेनावधारितस्य तेनैव रूपेण तुषोपवापाङ्गत्वात्तद्बोधकवाक्येऽतिप्रसङ्गवारणाय तादृशोपकारद्वारेति विशेषणम् । पुरोडाशे अधिकरणत्वेन तुषोपवापे करणत्वेनेति* तत्र द्वारभेदात् । केचित्तु तादृशकल्पितवाक्यत्वमतिदेशत्वमित्याहुः । तदतिदेशान्तरेष्वव्यापकत्वादुपेक्षितम् ।

अतिदेशनिरूपणोपोद्घातत्वेन चेदं निरूप्यते । किं प्रयाजादीनामुपदेशेन प्रकृतिमात्रार्थत्वमुत प्रकृतिविकृतिसाधारण्यमिति । साधारण्ये हि अतिदेशवैयर्थ्यमित्युपोद्घातता । तत्र यद्यपि प्रयाजादिषु आग्नेयादिमात्रविषयकप्रकरणादेर्विशेषविषयत्वं, तथापि तत्कल्प्यस्य वाक्यस्य प्रयाजादिभिर्यजेतेत्येतादृशस्यैव कल्पनं, न तु प्रयाजादिभिराग्नेयादि कार्यं इति । आग्नेयादिभेदेनानेकवाक्य कल्पनापत्तेः । नापि दर्शपूर्णमासौ कार्याविति । तथात्वे तु उद्देश्यवाचकस्य विधिवाचकस्य पदद्वयस्य च कल्पनापत्तेः । तत्र च यागत्वस्यैवोद्देश्यतावच्छेदकत्वात्सर्वार्थत्वसिद्धिः ।

न हि तत्र प्रयाजादिविशिष्टयागकरणकप्रकृतभावनाविधिर्येन विशिष्टरूपविधित्वप्रयाजादीनां प्रकृतभावनायामेवान्वयात्प्राकृतिकार्थत्वेऽपि प्रकृतयाग एवान्वय इत्याशङ्क्येत । भावनानां ह्युत्पत्तिवाक्यादेव प्राप्तत्वाद् विशिष्टविध्यसम्भवात् । उत्पत्तिवाक्येष्वेव तु

* पुरोडाशे अवयवित्वेनोपकार्यत्वेन तुषोपवापे साधनीभूतोपवापकारकत्वेनेति,—इति सां० पुस्तक पाठः ।

# भाट्टदीपिका।

उत्तरषट्कम्।

## सप्तमाध्यायस्य प्रथमः पादः।

श्रुतिप्रमाणत्वात्॥ एवमधिकारे उपदेशेऽवगतेऽधुना तदधीनसिद्धिरतिदेशो निरूप्यते अतिदेशोनाम, यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनावधारितस्तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशोपकारद्वारैवान्याङ्गताबोधकः प्रमाणम्। भवति हि प्रकृतिवद्विकृतिः कर्त्तव्येत्येवमादिवाक्यं प्रयाजादिपदार्थानां यादृशोपकारद्वारा आग्नेयाद्यङ्गत्वेनावधारितानामाग्नेयादिसम्बन्धित्वेन रूपेण तादृशोपकारद्वारा सौर्याद्यङ्गत्वबोधकम्। एतद्ब्राह्मणान्येव पञ्च द्वैधीत्यपि च तदीयब्राह्मणवत्त्वज्ञापनद्वारा तदीयधर्माणां ब्राह्मणार्थभूतानामुक्तरीत्यैव विकृत्यङ्गत्वबोधकम्। मासमेकमग्निहोत्रमित्यग्निहोत्रनामापि तदीयधर्मवत्त्वलक्षणया गौण्येव चोक्तविधाङ्गत्वबोधकम्। एवं श्यानापत्यतिदेशे आश्रयतो धर्मातिदेशेऽपि च लक्षणसमन्वयो बोध्यः।

अत्र च दर्शपूर्णमासादीनां स्वर्गाद्यङ्गत्वेनावधारितानां तेनैव द्वारेण पापक्षयाद्यङ्गताबोधके यावज्जीवादिवाक्येऽतिप्रसङ्गवारणाय तत्सम्बन्धित्वरूपेणेति विशेषणम्। न हि दर्शादेः स्वर्गसम्बन्धित्वेन रूपेण पापक्षयार्थता। प्रमाणाभावात्। अपि तु दर्शत्वादिनैव।

वदितिकर्तव्यतासामान्यस्यापीत्थमिति यत्कल्पनयाऽन्वयस्वीकारा-त्स्वर्गादिवाक्यवच्च प्रयाजादिवाक्यानां विशेषसमर्पकतया तदैव वाक्यैकवाक्यतोपपत्तेरंशत्रयविशिष्टविजातीयभावनाया एव विधाना-त्सार्थिकान्वये च प्रकृत एव तद्भावनाकरणीभूते यागेऽनुग्राहकत्व-कल्पनाच्च सर्वार्थमौपदेशिकम्। उत्पत्तिवाक्ये इतिकर्तव्यतासामा-न्यान्वयाच्च न सकृदुच्चरितस्य विरूपानेकबोधजनकता। वाक्यैक-वाक्यताजन्यबोधस्तु न श्रुतशाब्दबोध इति न सकृदनानाबोधजन-कत्वमप्येकस्य। अत पारिप्लवत्वाभावादधर्मकाणामैन्द्राग्नादीनां धर्माकाङ्क्षायामतिदेशसिद्धिः।

यत्तु मूले अतिदेशसिद्ध्यर्थं यजिप्रयुक्तत्वं वा धर्माणां अपूर्व-प्रयुक्तत्वं वेति चिन्तान्तरं कृतं, तद्यजिप्रयुक्तत्वेऽपि प्रकृतयजिप्रयुक्त-त्वोपपत्तेरितरथाऽपूर्वप्रयुक्तत्वेऽपि तदनापत्तेर्नाविशेषेण पौनरुक्त्यापत्त्यो-पेक्षितम्। स चातिदेशो द्विविधो वचनातिदेशो नामातिदेशश्चेति। आद्योऽपि प्रत्यक्षवचनातिदेशोऽनुमितवचनातिदेशश्चेति। अनुमित-वचनातिदेशोऽपि त्रिविधः। सादृश्यकल्पितवचनातिदेशः। स्थाना-पत्तिकल्पितवचनातिदेशः। आश्रयोपस्थितिकल्पितवचनातिदेश-श्चेति ॥ ७ ॥ १ ॥ १ ॥ ० ॥

समाप्त ॥ तत्र प्रत्यक्षवचनातिदेशो निरूप्यते। इषुनामैकाहो-ज्योतिष्टोमविकारः। तत्र प्राकृते साम्नि वषट्कारनिधनमाम्नातम्। प्राकृतविकृतौ च इष्याकारस्य स्तोत्रे प्राकृते सप्तदशस्य साम। तत्र समाप्तमितरच्छ्येनेनेति श्रुतम्। तन्निधनमुपादाय धर्मातिदेशविधि-रिति विज्ञायताम्। इत्याशङ्क्य अविहितवचनेन आह प्रसिद्धता

प्रयाजादिवैशिष्ट्यं भिन्नवाक्यत्वादेवासम्भवि । न हि तत्तद्वाक्यार्थ-बोधवेलायामनन्वितस्य प्रयाजादेर्वाक्यैकवाक्यतावेलायामन्वयसम्भवः । सकृदुच्चरितस्य विधेरैकरूप्येणैकशाब्दबोधजनकत्वमिति नियमात् । अतो न प्रयाजादीनां प्रकृतिमात्रगामित्वम् ।

अथवा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं न स्वर्ग-सम्बन्धपरम् । सार्वकाम्यवाक्येनैव प्राप्तेः । अपि तु समिदादि-वाक्यैकवाक्यतया यागोद्देशेन प्रयाजादिविधिपरम् । अतश्च तत्र यागत्वस्यैवोद्देश्यतावच्छेदकत्वात्सर्वार्थता ।

न च तत्र दर्शपूर्णमासपदं उद्देश्यविशेषणं उद्देश्यसमर्पकमेव वाऽस्त्विति शङ्क्यम् । विशिष्टोद्देशे वाक्यभेदापत्तेः । धातोरुद्देश्य-परत्वे सम्भवति उपपदस्याऽन्याय्यत्वाच्च । अतश्च तत्रत्यदर्शपूर्णमासपदं कृत्वा कालपरमेव सत्सर्वयागेषु य इष्ट्येति वाक्यप्राप्तकालानुवाद-कम् । अधिकरणस्यापि कारणत्वाच्च तृतीया । तथा स्वर्गकामपदं चात्रयुत्यानुवादः । सर्वथा सर्वधर्माणां सर्वफलवदर्थत्वमुपदेशेनैवेति न क्वचिदतिदेशः । एवं च समानमितरत् श्येनेनेत्याद्यनुवाद एव । अग्निहोत्रमित्यादि नामापि सिद्धो देवदत्त इतिवत्सिद्धवादृश्य तेनाप्यन्यायमेव वाऽऽदायानुवादकमिति प्राप्ते ।

यद्यपि यागानुवादेन धर्मविधिस्तथापि अनुवादस्य सति सम्भवे सन्निहितगामित्वनियमाज्ज्योतिषा यजेतेतिवत्प्रकृतिमात्रगामि-त्वम् । विशेषतश्च नवमाद्यन्यायेन यागस्वरूपे चानर्थक्यादपूर्व-साधनत्वलक्षणार्थमपि प्रकरणानुप्रवेशः ।

वस्तुतस्तूपस्तिवाक्येष्वाकाङ्क्षायत्नेनेष्टभागान्वय्य भाव्यत्वकल्पन

वितोद्नादयस्त दृश्यातिदिश्यन्ते। ये वा श्येने प्राकृताङ्गानुवादेन विहिता लोहितोष्णीषादयस्त एवातिदिश्यन्ते।

यत्तस्मिन पक्षे नैतेषामेव नियम इति तन्तरन्नोक्तं, तद्वा-न्तरमादृश्यत्यागे प्रमाणाभावादुपेक्षितम्। अस्मिंश्च पक्षे इषु-यागोद्देशेनानेकपदार्थविधानायोगात्पदद्वयेन लक्षणया श्येनीयप्राकृ-ताङ्गसम्बन्धिविकारमात्रस्योद्देशेन विधानम्। यदा इतरपदे सन्नि-हितत्यागे प्रमाणाभावात्प्राकृताङ्गानामपि चोद्देश्यतया पूर्वमुक्ता-त्पूर्वोक्तप्राकृताङ्गभिन्नतत्सदृशप्राकृताङ्गान्तराणामेवेतरपदेन* ग्रह णम्। तेषामतिदेशेन सन्निहितत्वात्। तादृशप्राकृताङ्गोद्देशेनैव च श्येनसादृश्यविधि।

सादृश्य चास्मिन् पक्षे श्येनीयप्राकृताङ्गवृत्तिधर्मसमानधर्मवत्त्वम्। स च धर्मः श्येने प्राकृताङ्गानुवादेन विहितो विकारो लोहितो-ष्णीषादिः। अतएव सादृश्य न श्येननिरूपितम्। अपि तु श्येनीय-प्राकृताङ्गनिरूपितमेव। उपमानतावच्छेदकसम्बन्धेन श्येनवृत्ति-धर्मस्य लोहितोष्णीषादेस्तेनैव सम्बन्धेन प्राकृताङ्गेष्वभावात्। उप-मानतावच्छेदकसम्बन्धेनोपमेयवृत्तित्वे एवोपमानियमात्। अतएवा-स्मिन् पक्षे श्येनपदं श्येनीयप्राकृताङ्गपरम्। ततश्च फलतस्तादृशधर्मा-एव इष्वपूर्वसाधनीभूततादृशप्राकृताङ्गोद्देशेन विधीयन्ते।

अतएव विधेयसामर्थ्यानुरोधेन श्येने यो विकारो यत्प्राकृताङ्गे विहितस्तत्प्राकृताङ्ग एव सोऽत्र विधीयते। इतरथाऽप्राकृतकार्य-

* प्राकृताङ्गात्मसाम्यामितरपदेन,—इति व्या॰ पुस्तके पाठः।

ध्यस्य असन्निहितश्येनवैशेषिकधर्मवाचित्वम् । तेषामसन्निहितत्वात् । अपि तु ये ज्योतिष्टोमातिदेशेन सन्निहितास्तत्परत्वमेव । तेषां च श्येनेऽप्यतिदेशप्राप्तत्वेन श्येनसादृश्योपपत्तेरनुवाद एवायमिति न श्येनवैशेषिकाणां वचनातिदेश इति प्राप्ते ।

इतरशब्दस्य सन्निहितवाचित्ववत्पूर्वोक्तेतरतत्सदृशवाचित्वमपि लोकसिद्धम् । चैत्रमैत्रयोः कम्बलकौशेये देये इतरद्विष्णुमित्रायेत्यत्र सन्निहितपूर्वोक्तेतरतत्सदृशवस्त्रादेरेव प्रतीतेः । अतश्च वार्तिककारीया पूर्वोक्तसादृश्यस्य अवाच्यत्वोक्तिरुपेक्षणीयैव । ततश्च यत्सन्निहितं प्राकृतं, न तत्पूर्वोक्तसदृशम् । अप्राकृतानां सत्राहादीनां पूर्वोक्तत्वात् । यच्च सदृशं श्येनवैशिषिकं अप्राकृतत्वसाधर्म्यात् न तत्सन्निहितम् । ततश्चावश्यावश्ये अन्यतरस्मिन्वचनार्थवत्त्वाय सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणामेव इतरशब्देन ग्रहणम् । न ह्यन्यथा विध्यन्तराशेषभूतस्यानुवादस्यार्थवत्त्वं सम्भवति ।

ततश्च श्येनसादृश्यवद्यत्पूर्वोक्तसदृशं पूर्वोक्तभिन्नं, तद्विषौ कुर्यादिति वाक्यार्थः । श्येनसादृश्यं च श्येननिष्ठाङ्गवृत्तिधर्मसमानजातीयधर्मवत्त्वम् । भवति हि श्येननिष्ठाङ्गानां कण्टकवितोदनादीनां ये धर्माः कण्टकवितोदनत्वादयस्तत्समानजातीयास्त एव तदन्ते कण्टकवितोदनादौ । अतएव श्येनपदं श्येनाङ्गपरम् । न तु यथाश्रुतम् । न हि श्येनप्रतियोगिकं सादृश्यं कण्टकवितोदनादौ सम्भवति । अतश्च फलतः श्येनधर्मा एव पूर्वोक्तसदृशाः पूर्वोक्तभिन्नाश्च कार्या इति पर्यवसितोऽर्थः । पूर्वोक्तसादृश्यं चाप्राकृतत्वेन प्राकृताङ्गमुद्दिश्यविहितत्वेन वा । तेन श्येने ये अपूर्वाधर्माः कण्टक-

स्त्रोमत्वाल्लाघवा*दुपेक्षितत्वाच्चार्थवादार्थमेवातिदेशः। अतएवातिदेश लक्षणमपि नासङ्गतम्।

तदिह हविर्विधायकवाक्यस्यैवेह ब्राह्मणपदेनोक्तत्वात्सार्थवादकस्यैव विधायकत्वादाकाङ्क्षाऽभावेन प्रधानातिदेशाभावेऽपि स्तुतिमात्रस्यातिदेशो न त्वङ्गानाम्। तेषां स्वस्वाङ्गविधिविधेयत्वेन हविर्विधिविधेयत्वाभावात्। अतएव वरुणप्रघासेषु अग्निं मन्थन्ति प्रसुवो भवन्ति, इत्यादिविधयोऽप्युपपद्यन्ते। अन्यथाऽतिदेशादेव प्राप्तत्वेन वैयर्थ्यमिति प्राप्ते।

अङ्गविधीनामप्येतद्धविःसम्बन्ध्यङ्गविधायकत्वेनैतद्ब्राह्मणत्वोपपत्तेः शास्त्रस्य महाविषयत्वसिद्ध्यर्थं अङ्गानां स्तुतेश्चातिदेशः। न चापेक्षाक्रमेणैव सर्वत्रान्वयादर्थभावनाया इतिकर्तव्यतापेक्षायामङ्गातिदेशेऽवगते पश्चात्तद्विशिष्टार्थभावनाया विधिसम्बन्धावगमोत्तरं तस्य स्तुत्यपेक्षायां स्तुत्यतिदेश इति विरम्य व्यापारत्वापत्तिः। दृष्टसामान्यवदितिकर्तव्यतासामान्याक्षेपादेव तद्विशिष्टभावनाविधिसिद्धेः स्तुत्यपेक्षावेलायामेवातिदेशप्रवृत्तेः। अतएवानुमानिकवचनाद्यतिदेशेऽपि अर्थवादातिदेशसिद्धिः। या त्वेवं सति विश्वजिति आतिदेशिकार्थवादिकफलकल्पनाप्रसक्तिः, सा कौस्तुभे एव निरस्ता।

वस्तुतस्तु वाचनिकातिदेशस्य भिन्नवाक्यविधया प्रमाणत्वादुत्पत्तिवाक्ये इतिकर्तव्यतासामान्याक्षेप आवश्यक एव। न च प्राप्त-

---

* लाघवात्,—इति ख० पुस्तके नास्ति।

कारितापत्ते । अतोऽस्मिन्नपि पक्षे विवक्षितगत्या दयुसम्बन्धिले-नैव तादृशश्येनीयविकारविधि । न चैवमस्यातिदेशस्य कश्चित्तत्वा-भावादानुमानिकवचनातिदेशापेक्षया प्राबल्येऽपि श्येनेन समान मिति पदद्वये तादृशविकारलक्षणाया आवश्यकत्वान्नामातिदेशा-पेक्षया प्राबल्ये प्रमाणाभाव । नामातिदेशस्थलेऽग्निहोत्रपदेनाम भिहितानामेव धर्माणा लक्षणा, वचनातिदेशे तु समानपदे-नोक्तानामेव तादृशधर्माणां विधेयतावच्छेदकीभूतश्येनीयप्राकृताङ्ग-दृत्तिविकारत्वावच्छिन्नत्वसिद्ध्यर्थं लक्षणेति तस्य तदपेक्षया प्राब-ल्यात् ॥ ७ ॥ १ ॥ ९ ॥

पञ्चसञ्चरेषु ॥ चातुर्मास्येषु वैश्वदेवे पर्वणि आद्यानि पञ्च हवींषि सधर्मकाणि विधाय वरुणप्रघासेषु विहितानि । तेषां च विनिगमनाविरहेण अभ्यासात्कर्मान्तरत्वम् । वरुणप्रघासस्थ हवि सन्निधौ चैतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि इति श्रुतम् । इतराणि वैश्वदेविकानीत्यर्थ । अत्र च ब्राह्मण-स्यैवातिदेश ।

यद्यपि चान्यत्रोपकारस्य तत्पृष्ठभावेन पदार्थानामेव चाति देशो न तु पदार्थबोधकशास्त्राणां प्रयोजनाभावात्तथापीह लक्ष-णायां प्रमाणाभावाच्छास्त्रस्यैवातिदेश । न च शास्त्रस्यैवातिदेशे तद्बोधितपदार्थाना प्राकृतोपकाराभावे उपकारान्तरकल्पनापत्ते-रुक्तबाधानुपपत्ति । शास्त्रस्यापि विजातीयोपकारजनकविजातीय पदार्थप्रतिपादकतया निरूपितरूपस्यैवातिदेशादुपकारान्तरकल्प-नानुपपत्त्योक्तबाधोपपत्ते । वस्तुतस्तु ब्राह्मणपदेनार्थविधायकवाक्य-

देशवाक्यस्याङ्गविधिपरत्वे लिङ्गमिति लिङ्गदर्शनसूत्रस्यार्थः। अतः सिद्ध अङ्गानामप्यतिदेश इति। न चामिक्षैककपालयागानुरोधेनैव वैश्वदेविकधर्मप्राप्तिसिद्धेरतिदेशविधानवैयर्थ्यम्। यत्र धान्याविरा जादिविरुद्धधर्मविषये सुत्याल्पभूयस्त्वाभ्यां दार्शिकधर्मप्रसक्तिस्तद्विषये वैश्वदेविकधर्मप्राप्त्यर्थत्वेन सार्थक्यात्॥ ७॥ १॥ ३॥

एककपाल॥ एवं साकमेधे श्रुतयोरैन्द्राग्नैकपालयोरपि एत-द्ब्राह्मण ऐन्द्राग्नो यद्ब्राह्मण इतरः, एतद्ब्राह्मण एककपालो यद्ब्राह्मण-इतर इति वाक्याभ्यां मार्शवादकसाङ्गविधिकाण्डस्यातिदेश इत्युत्तर-विवक्षया स्मार्यते॥ ७। १॥ ४॥

एककपालानां॥ एककपालस्य प्रकृतिभूतएककपालो वारुण प्रघासिक एव। न तु धर्मभूयस्त्वेऽपि वैश्वदेविकः। वक्ष्यमाणा-त्त्वैककपालेषु चोदनालिङ्गातिदेशादेव वैश्वदेविकधर्मप्राप्तिसिद्धेः। अनन्यलभ्यकतिपयधर्मप्राप्त्यर्थं वारुणप्रघासिक एव। एव चैन्द्राग्न-प्रायपाठोऽप्युपपद्यते। तत्र हि न दार्शिकैन्द्राग्नातिदेशविधिः। चोदनालिङ्गातिदेशादेव सिद्धेः। नाप्यैन्द्राग्नान्तराणाम्। अनु-पस्थितत्वात्। अतएव चातुर्मास्यप्रकरणस्थत्वेनोपस्थितत्वादैश्वदेवे चैन्द्राग्नाभावाद्वारुणप्रघासिकस्यैव। अतस्तत्प्रायपाठादपि साकमेधैक कपालस्य वारुणप्रघासिकैककपालप्रकृतित्वम्। धर्मास्तु हिरण्मय्यः स्रुचो भवन्तीत्यादय सामान्यविहिता इति भाष्यकारः।

वस्तुतस्तु साकमेधस्थपञ्चमन्त्रेषु अतिदेशविधिरस्ति न वा? अन्त्ये दर्शपूर्णमासविकारत्वापत्तेर्भूयोऽनुग्रहाय न हिरण्मयत्वादि-प्रसक्ति। आद्येऽपि एतदधिकरणन्यायस्यान्यलभ्यत्वस्याभावाद्धर्मभूय-

स्यातिदेशे तस्य निरुक्ताङ्गत्वे प्रमाणाभावा*दतिदेशलक्षणाव्याप्तिः । लक्षणेऽङ्गत्वपदेन भावनेतिकर्तव्यतात्वेनान्वितत्वस्य विवक्षितत्वात् । अतस्वार्थभावनेतिकर्तव्यतात्वस्य तत्करणोपकारजनकत्वरूपस्य शाब्द-भावनेतिकर्तव्यतात्वस्य च दर्विरूपा† तत्करणोपकारजनकज्ञानविषयत्वाख्यस्य द्विविधस्य सङ्ग्रहः । अन्वितपदोपादानाच्चार्थिकप्रासङ्गिकोपकारजनकेऽपि नातिदेशः । तस्य प्रकृतभावनानन्वितत्वात् । तस्मादुभयातिदेशः । अग्निमन्थनादीनां तु दक्षिणविहारे प्राप्त्यभावाद्युक्तस्तदर्थं पुनर्विधिः । अतएव नवप्रयाजत्वादेरतिदेशाद्वाजिनो-यजति आहुतीनां सम्पत्त्यै त्रिंशत्त्वायेति लिङ्गमप्युपपद्यते । इतरथा त्रिंशत्त्वानुपपत्तेरिति सूत्रकारभाष्यकारौ ।

वस्तुतस्तु मारुतीयागस्यापि वैश्वदेविकामिक्षायागविकारत्वान्नवप्रयाजत्वादिवदेवाग्निमन्थनादीनामपि प्राप्तिसम्भवाच्छाय वैयर्थ्यपरिहारः । आमिक्षैककपालानुरोधेनैव च नवप्रयाजत्वादिसिद्धेस्त्रिंशत्त्वस्याप्युपपत्तिः । न च भूयसां‡ दर्शपूर्णमासविकारत्वात्तदनुरोधेन पञ्चप्रयाजत्वम् । पशुपुरोडाशवत्त्ववाहुल्येऽपि पञ्चत्वाविरोधात् । अतो भाष्यमनादृत्य सूत्रमेव व्याख्येयम् । अग्निमन्थनादिवाक्यानामौचित्येनातिदेशविधिस्तुत्यर्थत्वान्नेतरार्थत्वादिति सूत्रविधायकत्वातिरिक्तस्तावकत्वरूपप्रयोजनकथनार्थम् । तदेव चाति-

* निरुक्ताङ्गत्वाभावेन,—इति सो॰ पुस्तके पाठः ।

† दर्विरूप,—इति नास्ति सो॰ पुस्तके ।

‡ भूयसा, इति व्या॰ पुस्तके पाठः ।

# अथ सप्तमाध्यायस्य द्वितीयः पादः ।



साम ॥ प्रकृतौ ज्योतिष्टोमे अभिवत्यामुत्पन्न रथन्तर विशेषे अविवाक्याद्दौ कवतीषु कर्तव्यत्वेन श्रूयते, कवतीषु रथन्तर गायतीत्यादिना । तथा यद्योन्या गायति तदुत्तरयोर्गायतीत्यादि च श्रुतम् । तत्र रथन्तरादिशब्दानाङ्गीतिविशेषविशिष्टायां ऋचि-प्रयोगादिशिष्टवाचित्वे प्राप्ते । आकृत्यधिकरणन्यायेनैव गीति-विशेषमात्र विजातीयगीतित्वमात्र वा वाच्यम् । एव सामशब्द-स्यापि गीतिमात्र गीतित्वमात्र वा वाच्यम् । न तु गीतिस्तदि-शिष्टा वा ऋक् । तस्या व्यक्तिन्यायेनारुणपद इव सति मुख्यार्थबाधे लक्षणया बोधोपपत्तेः ।

आकृत्यधिकरस्यैव तु प्रयोजनकथनार्थानि सूत्राणि । यदि हि ऋग्वाचित्व भवेत्तदा ऋचि ऋच्यतिदेशासम्भवात्* कवतीशब्द कार्यलक्षणार्थं । तत्कार्यमर्थप्रकाशनं लक्षणादिना अभिवत्या कुर्या-दितिकवतीकार्ये ऋगन्तरस्यातिदेश । देशलक्षणार्थो वा । कवती-देशे अभिवतीं पठेदिति । अथवा रथन्तरपद वा तद्धर्मलक्षणार्थं तद्धर्मातिदेशार्थं कवतीषु स्तोभनादीन रथन्तरधर्मान् कुर्यादि-त्यर्थ । अन्ये तु भाष्यस्था पक्षा असम्भवदुक्तिकत्वात्र लिखिता ।

* इत्थमेव पाठ सर्वत्र । ऋचि ऋच्योऽतिदेशासम्भवात् —इति तु भवितुमुचित प्रतिभाति

स्वत्वाभाव वैश्वदेविकपक्षसञ्चराणामेव धर्मातिदेशात्तथैव वारुण-प्रघासिकहिरण्मयत्वाद्यप्राप्तिः ।

वस्तुतस्तु याज्ञिकाचारादेव वरुणप्रघासेषु मुख्यवेदीत्यत्त्व-प्रसक्तिः न चैव हिरण्मयत्वगर्भीमयत्वादेर्विध्यादेशेन दक्षिणविहार-एव तद्विधेयादैन्द्राग्नैककपालयोरपि न हिरण्मयत्वाद्यतिदेशः । अस्तु वा न, तथापि यदैन्द्राग्नाद्यतिदेशविधिर्वैयर्थ्यभियैव भूयसा-मनुपदमप्यनन्दीक्ष्य हिरण्मयत्वाद्यनुष्ठानमिष्यते, तत्र ऐन्द्राग्नैक-कपालयोर्मध्येऽन्यतरातिदेशेनैव तत्प्राप्तिसिद्धेरितरानर्थक्यम् । अतो-ऽत्र सत्त्वविशेषविहितधर्मप्राप्तिसिद्ध्यर्थमेवेदमतिदेशद्वयम् । विशेष-विहितादैन्द्राग्ने पाञ्चाद्य । एककपालेऽपि केचिच्छ्यामाकानामनु-ष्ठेया इति ध्येयम् ॥ ७ ॥ १ ॥ ५ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

सप्तमाध्यायस्य प्रथमः पादः ॥

## अथ सप्तमाध्यायस्य तृतीयः पादः।

उक्तम्॥ इदानीं नामातिदेशः प्रस्तूयते। मासमग्निहोत्रं जुहोतीत्यादौ नैयमिकाग्निहोत्रवाचिनोनाम्नो न तावत्कर्मान्तरवाचकत्वम्। अनेकशक्तिकल्पनापत्तेः। दर्विहोमत्वेन चोदनालिङ्गातिदेशाभावान्नामातिदेशाभावेऽग्निदेवताकत्वे प्रमाणाभावेन तत्प्रख्यन्यायानुपपत्तेश्च।

न च यदाहवनीये जुहोतीत्यनेनाग्नेः प्राप्तत्वादम्यधिकरणकत्वेन योगोपपत्तिः। तस्यातिप्रसक्तत्वेन कल्प्यादिकल्पने पुनर्गौरवतादवस्थ्यात्। अन्तोदात्तस्वरस्य सप्तमीषष्ठीत्वावनुपपत्तेश्च। सप्तमीतत्पुरुषस्य शौण्डादिगणे पाठाभावेनानुपपत्तेश्च। यदि तु नित्याग्निहोत्रे द्वावग्नेर्होत्र होम इति व्युत्पत्त्या अधिकरणत्व षष्ठ्यर्थमङ्गीकृत्य मासाग्निहोत्रेऽपि योग आश्रीयेत, तथापि प्रचुरप्रयोगादग्निहोत्रपदस्य निरूढलक्षणया नित्याग्निहोत्रे प्रयोगात्तस्यात्र शक्तितुल्यत्वेन मासाग्निहोत्रे तदसम्भवाद्गौणत्वमावश्यकम्। अनयैव च दिशा मासं दर्शपूर्णमासाभ्यामित्यादौ गौणत्वोपपादनं द्रष्टव्यम्।

अन्यथा च दर्शेष्टयादिना पौर्णमासीकालकालप्राप्तेरभावश्च लाक्षणिकत्वाविशेषात्। दर्शादिकालप्राप्तावपि वा एकत्र मुख्यत्वापरत्र गौणत्वनियमात्। अभिषुदर्भादौ निरूढलक्षणाया आवश्यके च *यौगिकचोदनाभिप्रातिदेशेनैव कल्पनाभोदपत्तौ तदभावस्यावश्या-*

सिद्धान्ते तु लक्षणायां प्रमाणाभावादृच इह बोधस्यैवाभावेन गीतिमात्रस्यैव कवतीष्वतिदेश इति। प्रयोजनम्, प्रसङ्गाद्दाशत्यधिकरणसिद्धस्यैव गीतिनाचिलस्योपद्दलकानि कानिचिसिद्धदर्शनसूत्राणि इति द्रष्टव्यम्।

न च यद्योन्याङ्गायतीत्यादौ योनिसम्बन्धित्वेन रूपेण विधेयत्वादतिदेशलक्षणोपपत्तावपि कवतीषु रथन्तरं गायतीत्यादौ रथन्तरत्वस्यैव विधेयतावच्छेदकत्वादतिदेशत्वानुपपत्तिरिति वाच्यम्। तत्रापि धर्मग्राहकक्लृप्तोपकारत्वाभावेनाभिवतीसम्बन्धित्वस्यैव विधेयतावच्छेदकत्वात्। वस्तुतस्तु गृहमेधीये आज्यभागविधेरतिदेशत्वाभाववदत्राप्यतिदेशत्वाभावे न काचित्क्षतिः। लाघवेनाभिवतीषु येन रूपेणोपकारकत्वं तेनैव रूपेण कवतीषु उपकारकत्वस्वीकारेणोक्तोपपत्तेः॥ ७॥ २॥ १॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
सप्तमाध्यायस्य द्वितीयः पादः॥

येनैव प्रथममपत्यनेनेति व्युत्पत्त्या प्राथम्यगुणयोगेन द्वादशाहिकेऽहनि प्रवृत्तिस्तेनैव गावामयनिकेऽपीति प्राथम्ययोगेनोभयत्रापि मुख्यतयैव प्रवृत्तौ गौणत्वे प्रमाणाभावः। न चात्र पूर्ववद्द्वादशाहिके प्रचुरतरः प्रयोगो येन तत्रैव रूढिर्निरूढलक्षणा वा अन्यत्र तु गौणीत्याश्रीयेत। अतोऽत्र न नामातिदेश प्रायणीयपदे। वैश्वानरपदं तु प्रकरणे वैश्वानरद्वादशविधानात्तत्सम्बन्धात्येन नामधेयमपि वैश्वानरसंज्ञकस्य सधर्मकस्य कर्मान्तरस्याप्रसिद्धेर्नैवातिदेशकम्। ज्योतिष्टोमपदं तु ज्योतिष्टोमसधर्मप्रतिप्रसवार्थं सम्भवत्येवातिदेशकम्।

तेनैव तत्तुल्यायां* विरोधे न गवलसामान्याद्द्वादशाहिकद्वितीयाहर्धर्माः। अपि तु ज्यौतिष्टोमिका'। साधारणास्तु भूयोऽनुग्रहाय द्वादशाहिका एव। इदं चाधिकरणं गावामयनिके प्रथमेऽहनि प्रायणीयपदस्य भाष्यकारादिभिर्लिखनादवगन्तव्यम्। यदा तु छन्दोगसूत्रानुसारेण प्रायणीयपदस्य गावामयनिके द्वितीये चतुर्विंशेऽहनि प्रयोगस्तदाऽतिदेशो भवत्येवेति ध्येयम्॥ ७॥ ३॥ २।

विश्वजिति॥ विश्वजित्सर्वपृष्ठोऽतिरात्र इत्यत्र सर्वपृष्ठशब्दोऽनुवादोऽथवा षाड्हिकानां रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानां साम्नां विधिरिति चिन्तायाम्। पृष्ठशब्दस्य स्तोत्रवाचित्वात्तामपरत्वे विधौ लक्षणापत्तेर्ज्योतिष्टोमे च पृष्ठैः स्तुवत इत्यनेन षण्णां पृष्ठस्तोत्राणां विधानस्य चित्राधिकरणे कौस्तुभे व्युत्पादितत्वादित्यतिदेशेन बहुत्वमात्रयुपपत्तेर्विशिष्टविधिगौरवाच्चानुवाद एवायमिति प्राप्ते।

---

* तेनैतत्तुल्यायां,—इति सो॰ पुस्तके पाठः।

साधकत्वाच्च। एतेन गौणत्वाभावेऽपि एकनामकत्वसादृश्येन चोदनालिङ्गातिदेशादेवाग्निहोत्रधर्मलाभइत्यपास्तम्। उभयत्र लिङ्गलक्षणायां प्रमाणाभावेनैकनामकत्वासिद्धेः।

न च तथापि देवताकालादिरूपगुणविधायकत्वेनैवोपपत्तौ गौणत्वे प्रमाणाभावः। तत्प्रख्याधिकरणोक्तकौस्तुभरीत्या समासासम्भवेन देवताविध्यनुपपत्तेः। कालस्य प्राप्तत्वादिना विध्यनुपपत्तेश्च। अतश्चाग्निहोत्रादिशब्दाः कर्मान्तरे गौणाः। तच्च तत्प्रख्यधर्मलक्षणापूर्वकं कर्मान्तरे गौणीति प्राञ्चः। तच्चिन्त्यमुक्तकौस्तुभरीत्या तु गौणीज्ञानकार्यतावच्छेदकमेवाग्निहोत्रीयधर्मविशिष्टकर्मान्तरशब्दबोधत्वमित्यपि शक्यं वक्तुम्। तत्र च सिंहो देवदत्त इतिवत्प्रमाणान्तरसिद्धसादृश्येन गौणत्वासम्भवेऽपि श्रुतिस्थैव वाक्ये तदीयधर्मविशिष्टकर्मान्तरविधानेन भाव्यसादृश्येन गौणत्वोपपत्तिरिति सिद्धो नामातिदेशः। पदार्थातिदेशेऽपि च निरूपितरूपस्यैवातिदेशादुक्तवाधसिद्धिः॥ ७॥ ३॥ १॥

अपि वा॥ द्वादशाहे प्रथममहः प्रायणीयं सधर्मकं विधाय गवामयने वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवतीति श्रुतम्। तदेते द्वे कर्मणी विनिगमनाविरहादिति निर्णीतं प्रकरणान्तराधिकरणे कौस्तुभे। तदत्र गावामयनिकप्रायणीयपदं पूर्वन्यायेनैव द्वादशाहिकप्रायणीयधर्मातिदेशार्थम्। न च चोदनालिङ्गातिदेशादेव तत्प्राप्तिसिद्धेर्नामातिदेशवैयर्थ्यम्। गवामयनेऽपि द्वादशाहमार्गेतद्ग्राहस्यैव चोदनालिङ्गातिदेशेन धर्मप्राप्तेर्वक्ष्यमाणत्वादिति प्राप्ते।

मन्त्रेन तत्प्राप्तौ, न वैश्वदेव उत्तरवेदिमुपवपन्ति* न शुनासीरीय-इति तत्पर्युदासोऽपि सङ्गच्छते । तेन तयोरुत्तरवेदिव्यतिरिक्ताः मौलिकप्रणयनधर्माः कार्याः । यत्तु वपाच वपन्तीत्युत्तरवेदे-रुत्पत्तिवाक्यं, यच्चोत्तरवेद्यामग्निं निदधातीति तत्स विनियोग-वाक्यं, तन्मध्यमयोः पर्वणोः प्राकृतप्रणयने एवोत्तरवेदिविधायक-मिति प्राप्ते ।

न प्रणयतिः मौलिकप्रणयनस्यैव विशिष्योपस्थापकः । मध्नि-हितत्वात्तु प्राकृतमेवोपस्थापयति । अतस्तस्यैवातिदेशप्राप्तेः पूर्वमनृत्या विधिरनुवाद एव वा । तत्प्रयोजन च यद्यपि नेतरयोः परिसंख्या, वैदोष्यापत्तेः । प्रणयनाभावे इतरपर्वणोरग्न्यभावेन यागानुप-पत्तेश्च । नाप्यर्थवादोपपत्तिः, विध्यभावे अर्थवादत्वस्यैवानुपपत्तेः । तथाप्युत्तरवेदिरूपगुणार्थं पुनः श्रुति । एतदभावे हि चतुर्ष्वपि प्राकृतप्रणयनप्राप्तौ देशापेक्षायामुत्तरवेदिविधान चतुर्ष्वपि प्राप्नु-यात् । एतस्मिंस्त्वे तु पर्वद्वयवृत्तिप्रणयनस्यैव विशिष्योपदेशेनोपस्थित-त्वात्तत्रैवोत्तरवेदिस्तद्दीयाग्निनिधानमेव च द्वारमिति सिध्यति । अत इतरपर्वणोरुत्तरवेदिपरिसंख्यैवानुवादप्रयोजनमिति ॥

द्वितीयाधिकरणे तु सोऽयमनुवादः प्रथमोत्तमयोर्मध्यमयोर्वेति चिन्तायाम् । मध्यमविषयत्वे तत्रैवोत्तरवेदिप्राप्तेः प्रथमोत्तमयो-स्तत्पर्युदासानुपपत्तिप्रसङ्गात्प्रथमोत्तमविषयत्वमेव । ततश्च तत्रैवो-त्तरवेदिप्राप्तौ तत्रैवाय निषेध इति तयोरुत्तरवेदेर्विकल्पः ।

* मुपवपन्ति,—इति सो॰ पुस्तके पाठ ।

विधायकत्वेन धर्मातिदेशकत्वानुपपत्तेः । न चातिदेशेनैव देवतायाः प्राप्तिसम्भवेन वक्त्रर्थलाभाय धर्मातिदेशकत्वाङ्गीकरणम् । गौणत्वे प्रमाणाभावात् । वक्त्रर्थलाभाय अघन्यदृष्टाङ्गीकारे ऽतिप्रसङ्गात् ॥ ७ ॥ १ ॥ ५ ॥

निर्मन्थ्यादिषु चैवम् ॥ अग्नौ निर्मन्थ्येनेष्टकाः पचन्ति, पशौ बर्हिषा यूपावटमवस्तृणाति, आज्येन पशुमनक्ति इति श्रुतम् । तत्र पूर्ववदेव निर्मन्थ्यशब्दो मन्थन*क्रियाविधायकत्वेन गौणत्वायोगाच्च पाशुकानां मन्थनधर्माणामतिदेशार्थः । बर्हिराज्यशब्दौ च द्रव्य विधित्वाच्च दार्शपूर्णमासिकबर्हिराज्यधर्मातिदेशार्थौ । न च त्रिकपालस्य नामातिदेशेन धर्मप्राप्त्यभावेऽपि ऐष्टिकधर्मातिदेशेन निराकाङ्क्षत्वाच्च गौणत्वाङ्गीकारः । प्रकृते तु धर्माकाङ्क्षैव गौणत्वाङ्गीकारान्नामातिदेशोपपत्तिरिति वाच्यम् । लोकतोऽपि मन्थनादिधर्मलाभेन श्रुत्यर्थत्यागे प्रमाणाभावात् ॥ ७ ॥ २ ॥ ६ ॥

सौमिकन्तु ॥ चातुर्मास्येषु वैश्वदेववरुणप्रघासमाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि । तत्र, द्वयोः प्रणयन्ति तस्माद् द्वाभ्यामेतीति श्रुतम् । तत्र भाष्यकारः सप्तभिः सूत्रैरधिकरणद्वयमेवं व्याचख्यौ । तत्राद्ये तावत्सौमिकं सधर्मकं प्रणयनमिदं, उत प्राकृतमधर्मकं गार्हपत्यादाहवनीयं प्रतीति चिन्तायाम् ।

प्राकृतस्य चोदकेनैव प्राप्तत्वेन विधिवैयर्थ्यापत्तेर्वचनार्थवत्त्वाय प्रणयतिरयं सौमिकप्रणयनपरस्तद्विधानार्थं । अतएव तथोत्तरवेदेः

* मथन,—इति सो० पुस्तके पाठः । एव परत्र सर्वत्र ।

एवौपदेशिकप्रणयनविधिसत्त्वेऽपौत्तरयोरातिदेशिकप्रणयनसत्त्वादुत्त-रवेद्यापत्तिरित्यपास्तम्। औपदेशिकप्रणयनस्य पुरःस्फूर्तिकत्वेन तत्रै-वोत्तरवेदिविधानात्। अतो भाष्यकारमतेऽपि न वार्तिकोक्त-दूषणावकाशः॥

वार्तिककारमतोपपादनं त्वेवम्। मन्नभि सूत्रैस्त्रिपक्षमेक-मधिकरणम्। तत्र प्राकृत सौमिकं वा प्रणयनमिति पूर्वं पक्षद्वयं कृत्वा। अपूर्वं प्रणयनान्तरमत्र विधीयते। न तु सौमिकम्। तस्या-नुपस्थितत्वात्। नापि प्राकृतम्। प्राकृतप्रणयनस्याहवनीयोत्पादक-त्वेनाहवनीयापादानकत्वासम्भवात्। आहवनीयाद्वावग्नी प्रणयतो-ऽध्वर्युः प्रतिप्रस्थाता चेति शाखान्तरवचने अवश्यं प्राकृतप्रणयनो-त्तरमाहवनीयापादानकप्रणयनान्तरविधानावगतेः। साकमेधेऽपि च बौधायनादिकल्पसूत्रानुसारेणैतत्समानार्थकस्याहवनीयापादानक-प्रणयनान्तरविधायकविधेः कल्पनेन प्रणयनान्तरविधानावगतेः। तदुभयसमानार्थकतया द्वयोः प्रणयन्तीत्यस्यापि आहवनीयापादान-कप्रणयनान्तरविधायकत्वस्यैव निश्चयेन प्राकृतप्रणयनानुवादकत्वानुप-पत्तेः। अत प्राकृतप्रणयनोत्तरमाहवनीयापादानकं प्रणयनान्तर-मपूर्वं विधीयते।

तच्च गत्यर्थवादान्मध्यमयोरेव। तस्य चापेक्षितो देशविशेष-उत्तरवेदिरुत्पत्तिविनियोगविधिभ्यां विधीयतइति तावपि मध्यम-विषयावेव। एवं च प्रथमोत्तमयोस्तत्प्रतिषेधोऽपि नित्यानुवाद-एव, भाष्यकारमते इवात्राप्यन्तरप्रकरणबाधार्थं इति सर्वमनाकुलम्। याज्ञिकास्तु यद्यप्यत्रसौमिकानेव धर्माननुतिष्ठन्ति। उत्तरवेदि-

दाध्यासेत्युक्त वा एतद्यज्ञस्य यद्वरुणप्रघासा साकमेधाश्चेति प्रणयनार्थवादस्तु लक्षणया प्रथमोत्तमपर इति प्राप्ते ।

लक्षणाया विकल्पस्य चान्याय्यत्वान्मध्यमविषय एवायमनुवाद उत्तरवेद्युपसंहारार्थ । एव च प्रथमोत्तमयोरुत्तरवेदिप्राप्त्यभावात्तत्र तत्प्रतिषेधो नित्यानुवाद । तत्प्रयोजन चोपात्त वपन्तीत्यादेर्वरुणप्रघासावान्तरप्रकरणबाध । एतदभावे हि तदवान्तरप्रकरणे पठिताया उत्तरवेदेस्तन्मात्राङ्गत्वप्रसक्तौ तदितरेषु त्रिषु पर्वसु नित्यानुवाद स्यात् द्वयो । अतो द्वयोर्नित्यानुवादबलादवान्तरप्रकरणबाधेन महाप्रकरणात्सर्वाङ्गत्वप्रसक्तौ द्वयो प्रणयन्तीत्यनेन मध्यमयोरुत्तरवेद्युपसंहारोऽयुच्यते ।

न चैवमपि प्रथमोत्तमयो पर्युदासवशेनावान्तरप्रकरणबाधवन्मध्यममात्रविषयत्वस्यापि उत्तरवेद्युत्पत्तिविनियोगयो सिद्धेर्द्वयो प्रणयन्तीत्यस्य वैयर्थ्यमिति वाच्यम् । उत्तरवेद्यामग्निं निदधातीत्यनेन हि न निधानानुवादेनोत्तरवेदिर्विधीयते । अतिप्रसङ्गात् । नाप्यग्निनिधानानुवादेन विशिष्टोद्देशापत्ते । नाप्यग्निमात्रोद्देशेन, गार्हपत्यादावप्युत्तरवेद्यापत्ते ।

किं तु अतिदेशप्राप्ते पूर्वं प्रकृत्या उत्तरवेदिविशिष्टप्राकृतनिधानमेवाग्न्युद्देशेन विधीयते उत्तरवेदिमात्रफलकम् । अतश्चौपदेशिकप्रणयनविध्यभावे प्रणीताग्निनिधान इव कपाल-तापार्थाग्नि निधानेऽपि तदापत्ति । औपदेशिकप्रणयनविधिसत्त्वे तु तस्यैव पुरःस्फूर्तिकस्य देशापेक्षायामातिदेशिकविधित पूर्वमुत्तरवेदिरूप देशविधानात्र तापार्थाग्निनिधाने उत्तरवेदिप्राप्त्यापत्ति । अत

स्थानेऽभिपर्याहरन्ति चयाणां सप्तदशानामनूचीनतया इति द्वयोः स्वरसाम्नोः सप्तदशस्तोमकत्वदर्शनम् । मैचावरुणामिचायाञ्च न वाजिनेन प्रचरन्तीति प्रतिषेधवचनम् । आग्रयणे द्यावापृथिव्यैक-कपालं विधाय यत्सर्वहुतं जुहोति सा लेका परिचयाहुतो हुतः पर्यावर्तते सा द्वितीया आज्यस्यैव द्यावापृथिव्यौ यजेतेति एक-कपालयागे सर्वहुतत्वादिप्रयुक्तं दोषमभिधाय वैकल्पिकाज्ययाग-विधिपरं वचनम् ।

न हि उक्तातिदेशाभावे सप्तदशस्तोमकत्ववाजिनेज्यासर्वहुत-त्वादीनां प्राप्तिः सम्भवति । तस्मादतिदेशः । अयं च तत्तद्साधा-रणधर्माणां साधारणधर्माणां च नवप्रयाजत्वप्रस्तरमयत्वादीनां चातिदेशः । मुख्यानां भूयसां च प्रधानान्तराणामनुरोधेन तु क्वचिद्विरोधे साधारणधर्माणां बाधः । याज्ञिकास्तु असाधारणा-नामेवातिदेशं मन्यन्ते ॥ ७ ॥ १ ॥ ९ ॥

कर्मजे ॥ कर्मनामधेयानामग्निहोत्रादिपदानामतिदेशकत्व-मुक्तम् । तद्वदेव च संस्कारनाम्नामपि यूपादिशब्दानां खलेवाली यूपो भवतीत्यादौ सिद्धमेवातिदेशकत्वम् । तदत्र अनोवाहः प्रभृतीनां पदानां किं तत्तदुत्पादकक्रियानिमित्तत्वमुत जातिनिमि-त्ततेति चतिदेशसिद्ध्यर्थं विचार्यते । तत्र तक्षणादिक्रियाऽभावे तत्तच्छब्दप्रयोगाभावात्तत्तत्क्रियानिमित्तका एवैते शब्दाः । निर्मथ्य-यूपादिशब्दवत् । अतश्च तदंवाणोऽददातिवाणोऽददातीत्यादौ तक्षण-वाहनरूपक्रियाविशिष्टद्रव्यस्यैव दानाङ्गतया विधानात्तक्षणं वाह च प्रयोगमध्ये कृत्वा अनोवाहश्च देयम् । अच च तत्क्रियापा वस्तुत-

आहवनीये जुहोतीत्यादिविशेषवचनानामुपलक्षणत्वे प्रमाणाभावादग्नेरस्यधिकृत इत्यस्य च होममात्रविषयत्वेऽपि सार्थक्यादुपनिधानविधेश्च लौकिकाग्निग्रहणेनापि चरितार्थतया आहवनीयादीनां, किं वा एष इन्द्रियेण वीर्येण ऋध्यते यस्याहिताग्नेरग्निरपक्षायतीति वचनेन निषिद्धस्यायतनात्स्थानान्तरस्यावेशुमशक्यत्वाल्लौकिकाग्नेरेव ग्रहणम्। अतएव धिष्ण्याग्नीनामपि व्याघारणमात्रप्रयोजनत्वादग्रहणम्। यदि परं व्याघारणोत्तरं लौकिकत्वाविशेषादुपस्थितत्वात्तेषामेव ग्रहणमित्याग्रह्येत, तदाऽस्तु नाम तत् ॥ ७ ॥ ३ ॥ ११ ॥

संस्तुतम् ॥ यूपैकादशिन्यां यूपसमीपे एकं काष्ठं स्थापनीयमिति विधायोपशयो यूपो भवतीति श्रुतम्। तत्रोपशये काष्ठे यूपधर्मान् तक्षणादीन् संस्कारनिमित्तत्वादसत्यपि स्थानापत्त्यतिदेशे यूपपदं नामातिदेशविधयाऽतिदिशेदिति प्राप्ते।

अस्य गौण्या शक्त्यैव वा धर्मविधायित्वे वाक्यभेदापत्तेरुपशयस्तुत्यर्थत्वेन तद्विध्येकवाक्यतापन्नस्य पृथग्विधित्वानुपपत्तेरर्थप्राप्तकतिपयच्छेदनादिधर्मयोगेन गौण्या वृत्त्योपशयस्तुतिरेवेदं न तु नामातिदेशकम् ॥ ७ ॥ ३ ॥ १२ ॥

कर्मणः ॥ अग्नौ पृष्ठैरुपतिष्ठत इति श्रुतम्। तत्र पृष्ठशब्देन किं विधीयत इति चिन्तायाम्। पृष्ठशब्दस्य स्तोत्रविशेषवाचकत्वात्तस्य च शक्त्याभावेन वचनाङ्गतया विधानानुपपत्तेः, प्रत्ययाभिहितभावनान्तराण्येव पृष्ठधर्मकाणि धात्वर्थसमीपावस्थानेतिकर्तव्यताकानि विधीयन्ते। पृष्ठधर्मकत्वाच्च तेषां स्तोत्ररूपतासिद्धिः।

उपदेशेऽपि अन्यत्र लोकादौ ऋताया एव विधानादतिदेशत्वव्यवहारोभाक्त इति ध्येयम्। सर्वथा तद्वणादि प्रयोगमर्थेऽनुष्ठेयमिति प्राप्ते ।

क्रियानाशोत्तरमपि जातिदृशायां प्रयोगाल्लाघवाद्यौगिकत्वाभावाच्च जातावेव शक्तिः । जातिस्तु परं क्रियाभिव्यङ्ग्या तज्जनितसंयोगविशेषादिरूपफलाभिव्यङ्ग्या वेति तदुत्तरमेव शब्दप्रयोगः । न तेनावता शब्दः क्रियावाचीति तस्या अविधेयत्वेनानङ्गत्वाल्लौकिकमेव सिद्धमतोवासस्य देयम् । निर्मन्थशब्दस्तु यौगिक इति युक्तं तस्य मथनक्रियाविधायकत्वम् । यूपशब्दे तु क्रियानाशोत्तरं प्रयोगेऽपि तज्जन्यादृष्टविशिष्टकाष्ठवाचित्वात् शुद्धजातिवाचित्वमिति* युक्त एव तत्र संस्कारातिदेशः ।

वस्तुतस्तु यूपकार्ये खलेवालीविधानाद्यूपशब्दस्य न संस्कारातिदेशकत्वम् । संस्कारातिदेशस्तु स्थाणापत्त्येति पूर्वपक्षस्†त्वोक्तयूपपदशृङ्गाभ्यासोऽप्ययुक्त एव ॥ ७ ॥ ३ ॥ १० ॥

विषये ॥ गर्गत्रिरात्रे आज्यदोहानि सामानि मरुत्याग्निमुपनिधाय स्तुवीतेति श्रुतम् । तत्राग्निः किं वैदिको लौकिको-वेति चिन्तायाम् । यद्यपि दार्शे आहवनीयादीनां योग्यतया लौकिकपाकाद्यर्थत्वं निरसिष्यते, तथापि येरप्यधिकृतोयाय शब्दे प्रयोक्तुमिति सामान्यवचनेन वैदिककर्ममात्रार्थत्वावगतेर्वैदिक एवेति प्राप्ते ।

---

* शुद्धजातित्वमिति,—इति सो० पुस्तके पाठ ।

† पूर्वपक्ष,—इति नास्ति आदर्शपुस्तके ।

मनूद्यते। पृष्ठपदेन तु श्रात्मनेपदानुरोधेन पृष्ठस्तोत्रसाधनीभूता-मन्त्रा लक्ष्यन्ते।

वस्तुतस्तु षाडहिकेषु रथन्तरादिषु षट्सु सामसु पृष्ठशब्दस्या-न्वाख्यानार्थवादवशेन निरूढलक्षणायास्त्रिवाधिकरणे कौस्तुभे व्यव-स्थापितत्वात्तान्येवाभिधानं प्रति करणत्वेन विधीयन्ते। सम्भवति च स्तोत्रे देवाभिधानं प्रति साम्नः करणत्वं ऋगक्षराभिव्यक्तिद्वारा। अतएव तदाधारभूतानां योन्यृचामप्यभिधानाङ्गत्वम्। उत्तरयोस्तु एकं साम तृचे क्रियते स्तोत्रीयमिति स्तोत्र एव विनियोगा-न्नाभिधानाङ्गत्वप्रसक्तिः। अतश्च योन्याधाररथन्तरादिषाडहिक-सामविशिष्टाभिधानमेवात्र स्थण्डिलसंस्कारकत्वेन विधीयत इति सिद्धम्। सामांशे उपदेशोऽयं अन्याङ्गत्वस्य पूर्वावगमसाचेपेह चिन्तितः॥ ७॥ ३॥ १४॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां सप्तमाध्यायस्य तृतीयः पादः॥

धात्वपात्तमपि च समीपावस्थानमङ्गप्रकार्यत्वात्कर्माकाराङ्गमेव। अथ-वा पाशाधिकरणन्यायेन बहुवचनानुरोधेन पृष्ठप्रातिपदिके गौणत्वाङ्गीकारस्यायुक्तत्वाद्बहुवचनैकत्वादि लक्षयित्वा रथन्तराङ्गतया ज्यौतिष्टोमिकपृष्ठविधिरेवायम्। समीपस्थितिस्तु पूर्ववत्पृष्ठस्तोत्रार्थैवाङ्गम्।

वस्तुतस्तु पृष्ठवत्त्वस्यापि ज्योतिष्टोमे साधितत्वात्सर्वाण्येव पृष्ठस्तोत्राणि रथन्तराङ्गतया विधीयन्ते। न तु पृष्ठमन्त्राणां रथन्तरादिसाम्नां वा विधानम्। उपक्रमस्थपृष्ठपदे लक्षणाप्रसङ्गात्। एवं च क्वचन्यमात्मनेपदस्यैव साङ्गत्वकतया साधुत्वार्थं व्याख्येयमिति प्राप्ते।

पृष्ठशब्दस्य शरीरावयवेऽपि प्रसिद्धत्वेन तत्करणकसमीपावस्थितेरपि विधिसम्भवेन स्तोत्रविधावेव नियामकाभावेन सन्दिग्धत्वाश्चिःसन्दिग्धात्मनेपदानुरोधेन पृष्ठपदस्यैवान्यथा नेतुमुचितम्। तथा हि। उपांशुमन्त्रकरण इति स्मृत्या आत्मनेपदबलात्समीपावस्थाने मन्त्रस्य करणत्वावगतेः साक्षात्मन्त्रेणाभिधानातिरिक्ते व्यापारे मन्त्रस्य करणत्वासम्भवेऽपि समीपावस्थानप्रयोजनीभूताभिधानद्वारा समीपावस्थानं प्रति करणत्वाङ्गीकारात्तदनुरोधेन पृष्ठशब्दस्य मन्त्रपरत्वावगतिः। अतएव समीपाध्यानजन्याभिधानजनकत्वसंसर्गेण मन्त्राणां समीपावस्थानं प्रति करणत्वमिति नाभिधानलक्षणाऽपि।

वस्तुतस्तु ऐन्द्राधिकरणस्थकौस्तुभोक्तन्यायेन लक्षणया अभिधानमेव मन्त्रताप्रिकर्मकं धातुना विधीयते। तत्रैव पृष्ठपदार्थस्य करणत्वम्। समीपावस्थानं परमत्र अभि नेत्याद्दिमन्त्रलिङ्गादेव प्राप्त-

यत्तु पौर्षाटी, प्रयाजे कृष्णलं जुहोति, ऐन्द्रवायवे अर्धं बर्हिषो लुनाति, पितृयज्ञे न होतारं वृणते, अश्वमेधीये आज्यभागौ यजति इत्यादि लिङ्गदर्शनम्। तदत्र नित्यानुवादवचनानि भूरित्येवं परिहर्त्तव्यम्। तथा हि। यत्र प्रयाजा दर्शपूर्णमासादौ तत्र कृष्णलहोमविधिरिति तन्त्ररत्नकारः।

वस्तुतस्तु प्रयाजोद्देशेन कृष्णलहोमान्तरविधावारादुपकारकत्वेन सर्वप्रयाजार्थं तन्त्रेणानुष्ठानापत्तेः प्रयाजे प्रयाजे इति वीप्सानुवादानुपपत्तिः। प्रयाजीयहोमोद्देशेन कृष्णलमात्रविधौ विशिष्टोद्देशः। होममात्रोद्देशेन तद्विधावतिप्रसङ्गः। अतः प्रयाजोद्देशेन कृष्णलमात्रं पूर्वपक्षे आज्येन सह विकल्पेन प्रतिनिधित्वेन वा विधीयते। सिद्धान्ते तु तद्बाधकत्वेन। प्रयाजाश्च पूर्वपक्षे दर्शपूर्णमासीयाः सिद्धान्ते सौर्यीया इत्येतावान्विशेषः। जुहोतिस्तु संस्कारकत्वेन प्राप्तोऽनूद्यते।

अत एव भाष्यकारोक्तमस्य वचनोदाहरणत्वमपि पञ्चमविधिप्रकारापत्तेरयुक्तम्। याज्ञिकास्तु आज्येनैव प्रयाजहोमे कृष्णलप्रक्षेपमधिकं कुर्वन्ति। एव अर्धं बर्हिष इत्यत्रापि यत्र दर्शादौ बर्हिर्लवनं तत्र लवनानुवादेनार्धत्वविधिः। न होतारमिति तु नित्यानुवादः। आज्यभागविधिस्तु अपूर्वविधितया वचनमिति द्रष्टव्यम्। यत्र हि गुणोपादानं भवेत्तत्र सर्वत्र तृतीयविधिप्रकारत्वेन यत्रेत्यस्यैवोदाहरणं भवेन्न वचनस्य। अस्तु वा तत्र* प्राकरणिक-

---

* इत्यमेव पाठः सर्वत्र। यत्र,— इति तु भवितुमुचितम्।

# अथ सप्तमाध्यायस्य चतुर्थः पादः ।

इतिकर्तव्यता ॥ नद्देवं सप्रसङ्गेनामातिदेशो निरूपितः । इदानीं कल्पितवचनातिदेशो निरूप्यते । यत्र उद्भित्सौर्यादौ नैवेतिकर्तव्यताऽऽम्नाता, यत्र वा द्रव्यदेवतोपहोमादिरूपा समाम्नाताऽपि न निराकाङ्क्षीकरणसमर्था, तत्र भावनास्वाभाव्येन तस्याः करणानुग्राहकव्यापाररूपेतिकर्तव्यताकाङ्क्षायां वक्ष्यमाणसादृश्येन प्रकृतिभावनोपस्थितौ तदङ्गत्वस्याप्युपस्थितेः, तत्र च फलकरणयोरनपेक्षितत्वादिनाऽतिदेशस्य निराकरिष्यमाणत्वादितिकर्तव्यतैव प्रकृतिवदित्येव कल्पितेन विकृतिवाक्यशेषरूपातिदेशेन विकृत्यङ्गतया विधीयते । न च प्रबलप्रमाणेन प्रकृत्यङ्गतयाऽवगतायाः कथं विकृत्यङ्गत्वमिति वाच्यम् । प्रबलस्यापि विकृतिविधेरितिकर्तव्यताकाङ्क्षायामन्यभावेनानर्थक्यप्रसङ्गाद्दुर्बलप्रमाणबाधकत्वानुपपत्तेः ।

अतः सर्वत्रानाम्नातेतिकर्तव्यताकस्थले आम्नातेतिकर्तव्यताया अतिदेशः । आम्नातेतिकर्तव्यताकाश्च सोमदर्शपूर्णमासादयः श्रौताः श्रौताग्निसाध्याः । पार्वणस्थालीपाकादयश्च स्मार्ताग्निसाध्याः । त एव सूत्रे लौकिकपदेनोच्यन्ते । तत्राविशेषात्सौर्यादावुभयोरप्यतिदेशः । यदि तु प्रकृतावेकैकस्याः प्रत्येकं निराकाङ्क्षीकरणसमर्थाया इह समुच्चयेन मिलिताया निराकाङ्क्षीकरणसामर्थ्यकल्पने प्रमाणाभावादेकस्या एवातिदेश इत्याशङ्क्येत । ततोऽस्तु लौकिक्या एवातिदेशः । तस्याः कल्पसूत्रकारादिवचनैरायपौर्णमासीकर्मादावतिदेशस्य क्लृप्तत्वेन दृष्टप्रवृत्तिकतया सौर्यादावपि तस्या एवातिदेशात् ।

दादशाहिकातिदेशेनैव तद्धर्मप्राप्तिरावश्यकी। तत्तद्वहत्यन्ति-वाक्येष्वेव भावनाया इतिकर्त्तव्यताकाङ्क्षायाङ्गणान्तर्गततया दृशेन धातुर्मात्यान्तर्गताग्नेयादिवत्प्रत्येकमेवातिदेशकल्पनेन ज्योतिरादौ नामातिदेशबलेन चोदनालिङ्गातिदेशस्यैवाकल्पनात्। न च लाघ-वाद्गवामयने एक एवातिदेशः। गवामयनत्वस्य प्रत्येकवृत्तित्वेन प्रत्येकमेव फलसम्बन्धात्साधनानां समुच्चयेऽपि तत्तत्साधनानां प्रत्येक-मेवेतिकर्त्तव्यताकाङ्क्षायां प्रत्येकमेव तत्कल्पनात्। अतो ज्योति-रादौ नैव चोदनालिङ्गातिदेशः।

न चैवं तेषु व्युपसत्त्वस्यैव प्राप्तेर्दाभ्यां लोमावद्यति द्वाभ्यां मांस-मित्यादिषट्दिकान्यनुक्रम्य यद्द्वादशोपसदो भवन्तीति दादशाहिक-द्वादशोपसत्त्वदर्शनानुपपत्तिः। तस्य भूयोऽहरन्तरानुरोधेन नामा-तिदेशप्रापितत्त्वबाधकत्वोपपत्तेः। द्वादशसु तिसृणामप्युपकारक-त्वोपपत्तेश्च। तस्मात्तत्तत्तुल्यकालीनाङ्गानामन्येषां वा त्रित्वातति-रिक्तानामेव नाम्नाऽतिदेश इति सिद्धम्।

नन्वेवमप्येकादशिन्या विहारदर्शनानुपपत्तिः। तथा हि। ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी एकादशिनी समाम्नाता। तस्याश्च द्वादशाहे विहारः श्रुतः। तस्यातिदेशेन गवामयने एकपश्वधिकशतत्रयसंख्यात्मके प्राप्नाविद श्रुतम्। यस्यातिरिक्त-मेकादशिन्यामालभेरन्नपि भ्रातृव्यमतिरिच्येताथ यद्वौ द्वौ पशू समस्येयुः कनीय आयुः कुर्वीरन्यदेते प्राजापत्या नवपशव आल-भ्यन्ते नास्येयं भ्रातृव्यमतिरिच्यते न कनीय आयुः कुर्वत इति। गवामयने हि सम्पूर्णैकादशिन्याः द्वात्रिंशदारभ्यास्तौ दिवसाश-

गुणावरुद्धे गुणान्तरस्य प्रतिनिधित्वादिनापि कथञ्चित्रिवेशासम्भव-त्वदर्शनोदाहरणम्। सर्वथातिदेशाभावेऽपि लिङ्गोपपत्तिरितिभाष्ये।

स्वप्रत्यक्षपठितवैदविहितत्वसादृश्याद्वैतानिकाग्निसाध्यत्वसादृश्याच्च वैदिक्या एवातिदेश। अतिदेशाभावेऽपि हि सौर्यादीनां गृह्य-सूत्रेष्वनुक्तत्वाच स्मार्ताग्निसाध्यत्वम्। अत सामान्यविहिताहव-नीयादिसाध्यत्वे बाधकाभावात्सादृश्योपपत्ति। अत एवजातीयकेषु दर्शपूर्णमासादिधर्माणामेवातिदेश इति सिद्धम्। लिङ्गान्यप्येव सत्युपपन्नानि भवन्ति। इतरथा प्रकरणबाधो वाक्यानर्थक्यं वा प्रसज्येत ॥ ७ । ४ ॥ १ ॥

द्वादशाह्निकम् ॥ तदेव निरूपितस्त्रिविधोऽतिदेश। तत्र प्रत्यक्षवचनातिदेशस्य द्विविधाद्यतिदेशाभावस्य धर्माणामुपात्तत्वा-दाकाङ्क्षावैयर्थ्यापत्तेश्च पूर्वमेव प्रसङ्गादुपपादितम्। अतस्सादृश्यविषये चोदनालिङ्गातिदेशस्य नैव कल्पना। नाम्नस्तु यदि समानविषयत्व तदा प्रत्यक्षवचनापादितसिद्धसादृश्यमादायैव नाम्नो गौणत्वोपपत्ते-र्नातिदेशकत्वम्। यदि तु भिन्नविषयत्वेन सादृश्यसम्पत्तिस्तदा नाम्नोऽप्यविरुद्धधर्मातिदेशकत्वमवधेयम्। एवं नामातिदेशस्तेऽपि समाने असमाने वा विषये चोदनालिङ्गातिदेशस्य नैव कल्पनम्। नाम प्रत्यक्षत्वेन तेनैवेतिकर्तव्यताकाङ्क्षाशान्ते। अतएव गवा-मयने ज्योतिर्गौरायुरित्येवमादिष्वहःसु एकाहकाण्डपठितज्योति-रादिधर्माणां नाम्ना प्राप्तिः। न तु गणत्वसादृश्याद्वादशाह-धर्माणाम्।

न च अहरन्तरार्थमवश्यकल्प्येन गणत्वसादृश्याद्गवामयननिष्ठ-

## अथ अष्टमाध्यायस्य प्रथमः पादः।



अथ विशेष ॥ तदेवं त्रिविधोऽतिदेशो निरूपितः। तत्रापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन चिन्ता वृत्ता। चोदनालिङ्गातिदेशस्य सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थमष्टमआरभ्यते। तत्रैकस्मिन् सौर्यादौ एकविध्यन्तेनैव निराकाङ्क्षत्वात्सर्वविध्यन्तसमुच्चयायोगेऽपि नियामकाभावात् अनियमेनानेकप्रकृतिकविध्यन्तप्राप्तिरितिप्राप्ते।

अष्टदोषदुष्टविकल्पापत्तेर्यस्यैव सादृश्यविशेषेण श्रौतोपस्थितिस्तत एव धर्मातिदेशः। तच्च सादृश्यं शब्दघटितमर्थघटितं चोत्तरत्र प्रपञ्चयिष्यते। अत एव यत्र कथमपि न सादृश्यस्य नियामकता, यथा द्यावापृथिव्यैकादशकपाले, तत्राग्नीषोमीयैन्द्राग्नयोर्विकल्पेनैव प्रकृतित्वम् ॥ ८ ॥ १ ॥ १ ॥*

प्रवृत्तत्वात् ॥ यच द्रव्यदेवतादिषत्रिपत्त्योपकारकाङ्क्षासामग्रीसाकाङ्क्षाथामरूप इत्तं विधान, तथाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादौ न परस्परं धर्मातिदेशः समविधौ यावदाम्नातैरङ्गैरेवेतिकर्तव्यताकाङ्क्षाशान्ते। सादृश्यस्यापि सादृश्यस्य नियामकस्याभावाच्च। ज्योतिष्टोमे तु तत्थैकात प्रयाजानूयाजा इति प्रकृतिप्राप्तप्रयाजाद्यनुवादेन शतमण्यविधानलिङ्गाद्दीक्षणीयादिषु दार्शिक-

---

* भाष्यकारेणात्र द्वे अधिकरणे लिखिते।

दधिकशततत्रयमहानि पूर्यन्ते । अवशिष्टानि नव । तत्र पुनरेका-दशिनीकरणे अतिरेकः समासो वा आपद्येत । अतो ब्राह्मण-वतां तेषु विधानम् । तद्यदि चोदनालिङ्गातिदेशेन ज्योतिरादि-सत्यास्वपि विहारः प्राप्यते, तत एतल्लिङ्गमुपपद्यते । यदि तु नामातिदेशप्राबल्यं, तदा तद्बलेन ज्योतिरादिसत्यासु सम्पूर्णाया-एकादशिन्या एव प्राप्तेर्विहारदर्शनानुपपत्तिरिति चेत् ।

न । एकादशिनीविहारस्यानारभ्याम्नातस्य गवामयने औप-देशिकत्वेन तदंशे नामातिदेशबाधात् । तथाहि । यथाहि प्रभवः पशवः सुत्यानेताननूचीनानालभेरन्नाग्नेयमेव प्रथमेऽहन्यालभेरन्नथा-रस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये वारुणमन्ततोऽथ पुनर्ज्योति-रादीनां पर्यावर्त्तेषु आग्नेयमेव प्रथमेऽहनीत्याद्यनारभ्याधीतस्यैका-दशिनीविहारस्य प्रकृतौ ज्योतिष्टोमे द्वादशाहे वा ज्योतिराद्यहः-समूहाभावेन निवेशानुपपत्तेस्तृतीयप्रकृतौ गवामयने निवेशः । अन्ततः एकादशेऽहनि । अतश्चौपदेशिकत्वान्नामातिदेशस्तदंशे एव बाध्यत इत्युपपन्नं लिङ्गम् ॥ ७ ॥ ४ ॥ २ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
सप्तमाध्यायस्य चतुर्थः पादः ॥

सप्तमाध्यायः समाप्तः ॥

---

ऽहनि इत्यनेन औपवसथ्येऽहन्यनुष्ठानेऽवगतेऽनुष्ठानपादेशादुपहोम-न्यायेन यूपादिग्रहणेऽपि नातिदेशकल्पनाप्रतिबन्ध । एकादश-प्रयाजान्यजति, जौहव*माघारमाघार्य पशुमनक्तीत्यादिलिङ्गम-प्येवमुपपद्यते ।

अन्येषु तु सवनीयादिपशुषु† दैक्षस्यातिदेश । आलभतिचो-दनाकत्वपशुद्रव्यकत्वाद्यधिकतरसादृश्यात् । यूपाद्यधिकधर्मलाभाच्च । अतएव वपया प्रातःसवने चरन्ति, औदुम्बरो यूप इत्यादिलिङ्गम् ।

एकादशिनेषु तु सुत्यादिनस्थलस्याधिक्यात् प्रचारविप्रकर्षादि-रूपधर्माधिक्याच्च सवनीयपशुविकारत्वम् । अग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैक यूप परिव्ययतीत्येतदपि दैक्षान्यरूपसवनीयधर्मानुवादकमुपपद्यते । न ह्यय विधि । अग्नि-ष्ठाद्यूपादित्यस्याविधेयत्वाल्लिङ्गत्वोपपत्ते ।

पशुगणेषु तु सौत्येष्वसौत्येषु वा पशुगणान्तर्गतत्वसादृश्याद्गण-धर्माधिक्यलाभाच्चैकादशिनविकारत्वम । अत एवासौत्येषु प्रचार-विप्रकर्षाद्यप्राप्तावपि गणधर्मान्तरप्राप्तिरविरुद्धा । अतएव सौत्रा-मण्यां प्रतिपशु वैकल्पिके यूपानेकत्वे प्राप्ते तन्निषिध्य यूपैकत्व-नियमविधिरेकयूप आलभेतेत्ययमुपपद्यते ।

उद्भिदादिषु तु अव्यक्तत्वसादृश्यात् ज्योतिष्टोमविकारत्वम् । अव्यक्तत्वं च स्वाङ्गतयाऽविहितदेवताकत्वम् । ग्रहणाङ्गभूताया ऐन्द्र-

---

* जौव — इति सो पुस्तके पाठ ।

† पशुषु सवनीयादिषु,— इति सो पुस्तके पाठ ।

धर्माणां प्रवृत्तत्वया तन्मध्यवर्त्तिनि सोमेऽपि दार्शिकविध्यन्तप्राप्तिं मन्यमानस्योत्तरम् ।

दीक्षणीयादिषु विद्यमानानामेव प्रयाजादीनां परम्परया सोमसम्बन्धाद्वाजपेयस्य यूप इतिवत्तस्येति पश्वनुवादोपपत्तेः, प्रवृत्तत्वस्य हेतोराकाङ्क्षानिबन्धनत्वेन तदभावे असाधकत्वान्न सोमेऽतिदेशः । अत एव, वृत्रं वै देवावज्रं हत्वा सोममघ्नन् स्रुचौ बाहू तस्मात् स्रुचि सोमहविर्नासाद्यते नाज्येनाभिघारयतीति दर्शिकासादनाद्यभावानुवाद उपपद्यते । न ह्ययं पर्युदासविधिः । यदाहांशुरंशुस्ते देव सोमाप्यायतामित्येतद्विध्येकवाक्यत्वेन तदर्थवादस्यास्य स्वतन्त्रविधित्वानुपपत्तेः । किं च यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनममुष्मिन् लोके नेनीयेरन्, तस्मादुपोष्य प्रयायात् इति उपोषणविधिरप्यनतिदेश उपपद्यते । अन्यथाऽतिदेशादेव तत्प्राप्तिसिद्धेर्विधिवैयर्थ्यात् । तस्माच्च कस्याप्यतिदेशः सोमे ॥ ८ ॥ १ ॥ २ ॥

इष्टिषु ॥ सौर्यादिषु इष्टिसमाख्यातेषु इष्टिसमाख्याकत्वसामान्यात् निर्वपतिधातुमद्वाक्यसम्बन्धित्वात्तद्धितपदविहितदेवताकत्वाच्च दर्शपूर्णमासविकारत्वमेव । अतएव प्रयाजे प्रयाजे इति लिङ्गम् । एवं पश्वावप्यग्नीषोमीये दैक्षसंज्ञके, तद्धितपदविहितदेवताकत्वादेव । न च तत्र यूपादिवक्ष्यतरधर्मविधानादेव निराकाङ्क्षत्वादनतिदेशः । तथाप्यावाहनासादनस्रुग्व्यादिवक्ष्यतरदृष्टार्थधर्मानाम्नानेन साकाङ्क्षत्वात् ।

किं च क्रयप्रविधावाम्नातोनिर्धर्मकोदेशः प्रथमं तावदतिदेशं कल्पयत्येव । ततश्च प्राकृतैर्धर्मैर्निराकाङ्क्षस्य स एव औपवसथ्ये-

नाम्नैवातिदेशः। सर्वेष्वपि मुख्यत्वेन तद्गमकत्वात्। एकत्र मुख्यत्वे हि नाम्नोऽपरत्र गौणत्वे नामातिदेशः। न तु सर्वत्र प्रवृत्तिनिमित्तवत्त्वेन मुख्यत्वेऽपि। न चैवं प्रायणीयस्यस्थेऽप्येकसंज्ञायोगादतिदेशापत्तिः। तस्य प्रायण्यसिद्धार्थत्वेन द्वादशाहिकदितीयाहधर्मदर्शनेनानतिदेशकत्वात्। अतएव प्रयोजनान्तररहित एवैकसंज्ञायोगोऽतिदेशसाधकः।

अत्र च, य एव धर्मवांस्तस्याधर्मकेषु प्रवृत्तिः। स पूर्वो वा उत्तरो वा, युक्तिसाम्यात्। प्रायशः पूर्व एव तादृश इति सूत्रादौ तथोक्तिः। अतएव पूर्वपूर्वस्य किञ्चित् किञ्चिदधिकधर्मवत्त्वे उत्तरोत्तरेषु प्रवृत्तिः। अतएव पूर्वस्मिन् साहस्रे सहस्रं विधायोत्तरस्मिन् यावदस्य सहस्रस्योत्तरा गौः समाप्तिता भवति तावदस्माल्लोकादसौ लोक इति सहस्रं दक्षिणां दर्शयति। साद्यस्क्रे च पूर्वस्मिन् साण्डं सोमक्रयणं विधायोत्तरस्मिंस्तस्मात्ती स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषा स्वर्धितेत्यनेन स्त्रियो विधानं स्वर्धिताव्यावृत्त्यनुवादश्च सङ्गच्छते ॥ ८ ॥ १ ॥ ३ ॥*

कर्मणः ॥ एवं प्रकृतिविशेषे निरूपिते फलनियमकर्तृमुदाहरणांशे तेषां न प्रकृतिवमतस्तेषामनतिदेशः। तथा हि प्रकृतिफलं तावत् प्रकृतेरनतिदेश्यादेव नातिदिश्यते। न हि प्रकृतिरप्यतिदेष्टु शक्या। विकृतिभावनायाविकृतिकरणेनैव निराकाङ्क्षत्वात्। न च सौर्यादिवाक्ये द्रव्यदेवतामात्रविशिष्टभावनाविधौ कृते सादृश्येन

* भाष्यकारेणात्र दश अधिकरणानि लिखितानि।

मायवादिदेवतायाः प्रसङ्गेन सोमयागोपकारकत्वेऽपि ज्योतिष्टोमाङ्गत्वाभावात्। अतस्तात्पर्येण तदतिदेशे सिद्धे श्रातिदेशिकग्रहणाद्यङ्गभूतदेवताया उद्भिदाद्युपकारकत्वकल्पनेन रूपलाभः सुलभः। अतएव श्येने दीक्षणीयादिमासौ दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा चतुर्विंशतिमानं प्रायणीयायामिति दक्षिणादानविधिः सङ्गच्छते।

एवं गवामयनादिसत्त्रेषु द्विरात्राद्यहीनेषु च सत्यागणेषु द्वादशाहविकारत्वम्। अहोरात्रसाध्यकर्मवाचिपदवाच्यत्वसामान्यात्। अत्र हि रात्रिशब्दोऽहःशब्दश्चाहोरात्रिसाध्यकर्मविशेषपरः। सत्यागणानाम्र्त्विक्त्वसादृश्याच्च द्वादशाहविकारत्वम्। अतएव गवामयनादौ द्वाभ्यां सोमावघतीत्यादिना द्वादशोपपत्त्यानुवादोविध्यन्तरस्तुत्यर्थः सङ्गच्छते। स्थिते च द्वादशाहविकारत्वे प्रथमोत्तमौ वर्जयित्वा द्वादशाहस्यैव प्रवृत्तिरिति वक्ष्यते।

तथापि सत्त्रेषु सत्रात्मकस्याहीनेष्वहीनात्मकस्य द्वादशाहस्यावान्तरसादृश्यादित्यपि वक्ष्यते। सत्त्रेष्वपि यानि संवत्सरसाध्यानि सत्राणि तेषु संवत्सरसत्त्रत्वसामान्यादयनशब्दवत्त्वसामान्याच्च सवत्सरनियमादिधर्मलाभाय गवामयनस्य विध्यन्तः। अतएव गवामयनान्तर्गतमहाव्रतिक पत्नय उपगायन्तीति धर्मं विध्यन्तरस्तुत्यर्थं सवत्सरसत्त्रान्तरेऽनुवदति।

ये तु साद्यस्का आग्रयणा इत्येव एकसञ्ज्ञायोगिनो यागास्ते सङ्घातरूपनिकाययोगाग्निकायिन उच्यन्ते। तेषां य एवैकोधर्मवान् तस्याधर्मकेषु प्रवृत्तिः। एकसञ्ज्ञायोगित्वसादृश्यात्। न चात्र

नियमो निमित्तम्। तस्य तु विकृतिभावनया अनपेक्षितत्वा-देवानतिदेशः। न हि निमित्तमङ्गं, येन प्रयाजादिवदतिदेशो भवेत्। प्रमाणाभावात्कारकत्वाभावाच्च न तस्याङ्गत्वम्। एवं सत्यपि यदि प्रकृतिरतिदिश्येत ततो भेदनवद्विकृतावेव निमित्तसन्निपाते नैमित्तिकं विकृत्यङ्गतया प्रकृत्यनुष्ठानं प्रसज्येत। भेदनहोमानुष्ठानवत्। न त्वेतदस्ति। सर्वथा न निमित्तातिदेशो नैमित्तिकत्व वा विकृतेः।

कर्त्ता अधिकारी। तस्यापि प्रकृतावनङ्गत्वात्। अतश्च तद्विशेषणानां स्वर्गकामत्वाहिताग्नित्वादीनामनतिदेशः। अतएव स्वपतीष्ट्यादावाहिताग्निस्यानतिदेशः। राजत्वादेस्तु कर्त्तृविशेषणत्वात्तस्य च प्रकृतावङ्गत्वाद्विकृतावतिदेश इष्ट एव। न हि तत्प्रकृतावधिकारिविशेषणम्। अधिकारिणः शाब्दविधिबोधितत्वपक्षे* उद्देश्यविशेषणस्य राजत्वादेरविवक्षापत्तेः। वस्तुतस्तु प्रथमापेक्षितत्वेन स्वाराज्यकामपदस्य फलपरत्वादधिकारिपरत्वानुपपत्तेरधिकारी आर्थिकविधिबोध्य एवेति तत्र न शाब्दस्य राजत्वादेरन्वयसम्भव इति राजत्वादेः कर्त्तृविशेषणत्वमेव। अत एवाहिताग्नित्वादेर्यौगिकत्वार्थिकेऽधिकारिविधौ विशेषणत्वकल्पनम्। याज्ञिकास्तु राजत्वादेरधिकारिविशेषणत्वमङ्गीकृत्यानतिदेशं मन्यन्ते।

समुदायोऽग्नीषोमीयादिप्रधानान्तरमाग्नेयम्। तस्य प्रकृताबङ्गत्वेऽपि परप्रयुक्ताग्नीषोमीयादिप्रतियोगिकत्वात्तदभावे विकृतौ नातिदेशः॥ ८॥ १॥ ३॥

---

* शाब्दविधिबोध्यत्वपक्षे,—इति भो पुस्तके पाठः।

प्राकृतभावनोपस्थितौ तद्गतमर्थिकरणस्यैव प्रयाजादिवदतिदेशोप-पत्तिरिति वाच्यम् । अनुमितिविधानमध्ययनस्यैव सूर्यादिदेवतया यागानुमानघटितावच्छेदकतया शाब्दबोधे विजातीययागस्यापि भावनाविशेषणतया विधेरावश्यकत्वेन करणाकाङ्क्षाऽभावादतिदेशा-नुपपत्तेः ।

न च तथापि तद्देवत्यो आग्नेयभेदकल्पने गौरवात्तद्यागे आग्ने-यत्वापत्तिः । विनिगमनाविरहमहत्तविधिपुनःश्रवणेन वैजात्यानां भेदसिद्धेः । अन्यथाऽऽग्नेयेऽपि सौर्यत्वापत्तौ सूर्यादीनां माहर्या-पत्तेश्च । अतः सौर्यादीनां भिन्नानामेव करणानां भावाय तेषा-मतिदेश इति सिद्धम् । अतश्च तदभावाय तत्त्वन्यफलातिदेशः । न च तदभावेऽप्यङ्गवदितिकर्तव्यताकाङ्क्षाऽस्ति । ब्रह्मवर्चसादिश्रुतफलेनैव निराकाङ्क्षत्वात् ।

यद्यपि विश्वजिदादौ न फलश्रवणं, तथापि न तदतिदेशः । स हि अङ्गातिदेशकेन प्रकृतिवच्छब्देन भवेत्, भिन्नेन वा ? नाद्यः । एकेनैव प्रकृतिवद्विकृतिः कार्येतिवाक्येन विकृत्युद्देशेनाङ्गविधान-फलोद्देशेन विकृतिविधानमिति वैरूप्यापत्तेः । यद्यपि च प्रकृति-वच्छब्दमात्रस्य विकृतिविधिवाक्यशेषत्वकल्पनया अशाचयविशिष्ट-विकृतिभावनाविधानेनावैरूप्यमित्याशङ्क्येत । तथाप्येकप्रकृतिवच्छब्द-मात्रस्याङ्गांशे विधेयसमर्पकत्वं फलांशे उद्देश्यसमर्पकत्वमिति वैरूप्या-पत्तिस्तदवस्थैव । नान्त्यः । स्वविध्युपस्थापितविश्वजिद्याविनैव फलकल्पनोपपत्तावतिदेशकल्पने प्रमाणाभावात् । अतो न फलस्यातिदेशः ।

साधनीभूतप्रणयनत्वेनैवाश्रयत्वात्। विकृतौ तदभावेन गोदोहनानुष्ठानानुपपत्तेः। अतएव खादिरत्वादेः संयोगपृथक्त्वन्यायेन क्रत्वर्थत्वापि सत्त्वादतिदेशोपपत्तावपि अग्नीषोमीयापूर्वसाधनीभूतयूपाभावान्न तेन वीर्यादिफलोत्पत्तिः।

भाष्यकारस्य तु एतादृशविषये फलोत्पत्तिं मन्यमानस्याभिप्रायं न विद्मः। यत्र तु नाश्रयापेक्षा विजातीयप्रस्तरप्रहरणत्वादिनैव चायुरादिफलं प्रति साधनत्वम्। आयुरादिप्रकाशकमन्त्रस्य च स्वप्रकाश्यफलजनकत्वेन प्रहरणाङ्गत्वम्। तत्र भवत्येव विकृतावपि तस्मात् फलोत्पत्तिः॥ ८॥ १॥ ५॥

एककर्मणि॥ सौर्यादिरौषधद्रव्यकत्वैकदेवताकत्वाभ्यां आग्नेयविकार इति वक्ष्यते। आग्नेयवाक्ये चाग्नेयद्वयं पौर्णमास्यमावास्याकालकमित्युक्तं कौस्तुभे पौर्णमास्यधिकरणे। सौर्यश्च विनिगमनाविरहादुभयविकार इत्यप्यविवादम्। सौर्ये च य इष्टेति वचनादेकस्थिकः पौर्णमास्यमावास्याकालः। तद्वाग्नेययोः किं पौर्णमासीकालीनसौर्यप्रयोगे पौर्णमासीकालीनाग्नेयस्यामावास्याकालीनसौर्यप्रयोगे चामावास्याकालीनस्य व्यवस्थितं प्रकृतित्वमुताव्यवस्थितविकल्पेनेतिचिन्तायाम्।

तत्तत्कालत्वरूपावान्तरसादृश्यात् व्यवस्थितम्। एवं च चतुर्होत्रा पौर्णमासीमभिमृशेत्येतद्धोत्राऽमावस्यामितिविहिततत्तद्‌मन्त्रयोरपि व्यवस्था। अत्र हि पौर्णमास्यादिसंज्ञकप्रधानसम्बन्धिद्रविरेव पौर्णमास्यादिपदेन लक्षयित्वा तदुद्देशेन मन्त्रमात्रविधिः। अभिमर्शनं तु चाक्षस्यानि हवींष्यभिमृशतीति वाक्यान्तरप्राप्तं आश्रयत्वे-

गुणकामेषु ॥ ये प्रकृतौ गोदोहनादिगुणजन्याः कामास्तेषाम-नङ्गत्वादनुपकारकत्वाच्च यद्यपि नातिदेशस्तथापि तज्जनकीभूत-गोदोहनादिगुणानां प्रणयनोपकारकत्वेनातिदेशे विकृतावपि काम-नायां सत्यां फलोत्पत्तौ न किं चिद्बाधकम्। न चाङ्गस्यैव विकृतावतिदेष्टव्यमिति नियमे प्रमाणमस्ति। करणोपकार-साकाङ्क्षाया विकृतिभावनायास्तज्जनकापेक्षायामुपकारकमात्रस्यैवाति-देशात्। न हि विकृतिभावनाऽङ्गमपेक्षते। प्रमाणाभावात्। अतः खादिरत्वादिवदेव गोदोहनादीनामप्यतिदेशः फलोत्पत्ति-श्चेति प्राप्ते।

सत्यम्। विकृतिभावनोपकारकमेवापेक्षते, तथापि सादृश्यात् प्रकृतिचोदना तदर्थ एव वा प्रथमत उपतिष्ठते। पश्चाच्च तदन्वित-मुपकारकम्। तदत्र चोदनार्थभूतायां प्रकृतिभावनायां यदन्वितं, तदतिदिश्यते। अनन्वितस्योपस्थित्यभावेनातिदेशायोगात्। अन्वितं चापशुकामप्रयोगे चमसविशिष्टं प्रणयनम्। पशुकामप्रयोगे प्रण-यनमात्रम्। तत्प्रयोगे प्रणयनस्य परप्रयुक्तगोदोहनोपजीवित्वेन द्रव्याक्षेपकत्वेन स्वरूपेणैव प्रधानभावनान्वयात्। अङ्गस्यैव प्रधान-भावनायामन्वेतीत्यभिप्रायेण तस्यैवातिदेश इति प्रवादः। अतश्च फलार्थगुणानामनतिदेशः।

न चातिदेशाभावेऽप्याश्रयस्य प्रणयनस्य विकृतावपि सत्त्वात्तत्रैव कामनायां सत्यां गोदोहनानुष्ठानोपपत्तिः। प्रकरणपाठवैयर्थ्या-पत्तेः। गुणफलसम्बन्धविधेराश्रयप्रयोजकत्वशक्तिकल्पनागौरवप्रस-ङ्गाच्च। प्रणयनमात्रस्याश्रयस्याश्रयत्वानुपपत्तेरवश्यं दर्शपूर्णमासापूर्व-

सम्बन्धेन प्रत्येकाक्षराणामेव तदधिष्ठानतया आग्नेयेऽप्यग्नि । पर्या-
प्तिसम्बन्धावच्छिन्नाधिष्ठानत्वविवक्षायामग्नीषोमीयेऽप्यतिव्याप्तेश्च । स-
म्बन्धद्वयातिरेकेण पदमात्राधिष्ठानकत्वस्य वक्तुमशक्यत्वाच्च । तथापि
देवतात्वाश्रयप्रतिपाद्यार्थैकत्वमेवैकदेवताकत्वम् । एकत्वमेकसंख्या-
कत्वम् ।

अर्थस्य देवतात्वपक्षे तु देवतात्वाधिष्ठानैकत्वमेव तत् । अस्ति
चेदमाग्नेये सौर्ये च । प्रथमातिक्रमे कारणाभावेनैकवचनान्तेनैव
तद्धितविधानात् । अग्निमेव स्वेन भागधेयेन समर्द्धयति, अमुमेवा-
दित्यं स्वेन भागधेयेनोपधावतीत्याद्यर्थवादाच्च । अग्निर्मूर्धा, उदु त्यं
जातवेदसमिति मन्त्रवर्णाच्च । अग्नीषोमीयैन्द्राग्नयोस्तु तदभावादनेक-
देवताकत्वम् । अतएव मारुतं सप्तकपालमित्यादौ, मरुतो यस्य हि
क्षये इति मन्त्रवर्णादनेकदेवत्यत्वावगतेः सत्यपि पदैक्ये नाऽऽग्नेयवि-
कारत्वम् । अग्नये धामवते चरुमित्यादौ च सत्यपि पदभेदे प्रमाणा-
न्तरेणार्थैकत्वावगमादाग्नेयविकारत्वम् । अनेकदेवताकेषु तु अग्नीषो-
मीयैन्द्राग्नयो । तत्राप्यग्नीषोमदेवत्यस्य सोमपदघटितानेकदेवत्यस्य
चतुरक्षरानेकदेवत्यस्य वाऽग्नीषोमीयविकारत्वमेव । इन्द्राग्नीदेवत्यस्ये-
न्द्रपदघटितानेकदेवत्यस्य त्र्यक्षरानेकदेवत्यस्य चैन्द्राग्नविकारत्वमेवेति
व्यवस्था । तथैन्द्राग्ने शाखाभेदेनैकादशकपालत्वद्वादशकपालत्वयो-
र्विकल्पाद् द्वादशकपालायां तदधिकसंख्याककपालायां वा विकृता-
वैन्द्राग्नविकारत्वमेव । तन्न्यूनसंख्याककपालायामष्टाकपालभिन्नायां तु
विकल्प एव व्यवस्थापकसामान्याभावे । अष्टाकपालकायां तु सत्यप्य-
नेकदेवताकत्वे द्रव्यघटितसादृश्यस्य बलवत्त्वादाग्नेयविकारत्वमेवेत्या-

नानूद्यते इति साधितं तृतीये। अतश्च मन्त्रयोरपि व्यवस्थोपपत्तेः प्रकृतिवद्यवस्थेति भाष्ये।

भावनाया विजातीययागत्वावच्छिन्नस्य वाऽनुयाजकरूपेतिकर्त्त-व्यताकाङ्क्षा न तु प्रयोगविशेषस्य। अतश्चैकजातीयस्य सौर्यस्य वैक-ल्पिकोभयकाललादैकल्पिकोभयविकारत्वावगतेरव्यवस्थयैव तत्तदा-ग्नेयप्रकृतिकत्व मन्त्राणाञ्चाव्यवस्थेति सिद्धम्।

यत्तु पार्थसारथिना वार्त्तिककारस्याद्याग्नेयैकलमभ्युपगम्य मन्त्र-योर्दृष्टार्थत्वेन विकल्पादेकस्मिन्नाग्नेये प्रधानान्तरसाहित्यानुरोधेन प्रकृतौ व्यवस्थायामपि विकृतौ तदभावेन व्यवस्थाकारणाभावाद-व्यवस्थितविकल्पो मन्त्रयोरिति सिद्धान्तितम्। तन्मन्त्रविकल्पचिन्ता-यादाद्यप्रसक्ततया ऽतिदेशविचाराभावेनाध्यायप्रसङ्गत्वभावापत्तेराग्ने-यभेदस्य च स्थापितत्वेनैक्यानुपपत्तेरुपेक्षितम् ॥ ८ ॥ १ ॥ ६ ॥

लिङ्ग ॥ इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तम्। तथापि सौर्यादिषु औषधद्रव्यकत्वविशिष्टैकदेवताकत्वरूपविशेषसादृश्यादाग्नेय-विकारत्वम्। अत्र च साम्नाय्य*स्यैकदेवताकत्वेऽपि औषधद्रव्यकत्वा-भावादाद्य विशेषणम्। अग्नीषोमीयादेरौषधद्रव्यकत्वेऽप्यनेकदेवता-कत्वादपरम्।

अथ यद्यपि एकदेवताकत्वं नाम नैकदेवतात्वकत्वम्। अग्नी-षोमीयादावपि व्यासज्यवृत्तेर्देवतात्वस्यैकत्वेनातिप्रसङ्गात्। नाप्ये-कदेवतात्वाधिष्ठानकत्वम्। देवतात्वस्य प्रत्यनिष्ठत्वेन देवतात्वीयरूप-

---

* साम्राय,— इति सो॰ पुस्तके पाठः।

एव च धर्मानुग्रहीयाङ्गत्वेन सङ्गच्छते। इतरथा पुरोडाशादौ शाखाच्छेदादीनां बाधापत्ते। एवमन्यचाप्यन्तरङ्गत्वादिना सर्वत्र सादृश्ययोर्बलाबल द्रष्टव्यम्। यच तु न्यायेनान्यादृश्य बलाबल, कल्पसूचयाज्ञिकाचाराद्यान्यादृशास्तत्र तन्मूलभूतश्रुतिरूपवचनातिदेशेन न्यायकल्प्यातिदेशस्य बाध इत्यपि द्रष्टव्यम्। अतएव सौम्यचरित्यादौ शब्दार्थगतसमानलक्षणसादृश्यस्य निरूढैकदेवताकत्वरूपसादृश्यापेक्षया अन्तरङ्गत्वेऽपि नाग्नीषोमीयविकारत्वमपि त्वाग्नेयविकारत्वमेव। एवमाग्नेयएकादशकपालइत्यादौ देवतासामान्यस्य कपालसङ्ख्यासादृश्याद्यपेक्षया अन्तरङ्गत्वेऽपि नाग्नेयविकारत्वमपि त्वग्नीषोमीयादिविकारत्वमेव। केचित्त्वेतादृशविषये कपालैकादशत्वादीनां द्रव्यनिष्ठसाधनतावच्छेदककोटिप्रविष्टत्वात् द्रव्यसादृश्यघटकत्वमेवेत्यग्नीषोमीयविकारत्व समर्थयन्ते ॥ ८ ॥ १ ॥ ८ ॥

हिरण्य ॥ द्रव्यनिष्ठसादृश्ययो परस्परविरोधे तु देवतासादृश्योपष्टम्भस्यापि द्रव्यसादृश्यस्य श्रौतलिङ्गोपष्टम्भद्रव्यसादृश्यापेक्षया दुर्बलत्वम्। यथा प्राजापत्य इते चरु निर्वपेच्छतकृष्णलमायुष्काम इत्यच कृष्णलानान्दीसिमत्त्वलक्षणतेजस्वित्वसादृश्यस्य प्रजापतिदेवताकत्वसादृश्योपष्टम्भस्यापि कठिनत्वापरपर्यायविशदत्वसादृश्यापेक्षया दुर्बलत्वम्। तेन नाय चागस्तेजस्वित्वसादृश्यादुपांशुयाजविकारोऽपि तु कठिनत्वसादृश्यादाग्नेयविकार एव। चरुशब्दप्रयोगात्। इते श्रपयतीति श्रपणविधानाच। यद्यपि नाय विकृत्यभावेन मुख्यश्चरु। तथापि श्रपणे चरुशब्दानुवादश्चरुधर्मयोगादुपपद्यत इति चौदकधर्मप्रापक भवति लिङ्गम्।

सूक्तम्। आज्यद्रव्यकायामुपांशुयाजस्य। दधिपयोरूपसान्नाय्यद्रव्य-कायां तत्तद्रव्यकस्यैत्यादिविशेषतः प्रकृतिव बोध्यम्॥ ८॥ १॥ ७॥

विप्रतिपत्तौ॥ एवं सादृश्यनियामकत्वे निरूपितेऽधुना तयोर्विरोधे बलाबलञ्चिन्त्यते। तत्रापि द्रव्यघटितदेवताघटितसादृश्ययोर्यत्र विप्रतिपत्तिर्यथा। ऐन्द्रः पुरोडाशः आग्नेय पय इत्यादौ। तत्र कस्य बलवत्त्वमिति चिन्तायाम्। देवतायाः प्रथमोपस्थितत्वेन मुख्यत्वात् प्रधानत्वाच्च तत्सादृश्यमेव बलवत्। इस एवेनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्याद्यर्थवादवशाद्धि यागोदेवताराधनार्थः। आराधिता च सा फलं ददातीति तस्याः प्रधानत्वम्। देवतासादृश्यञ्च यद्यपि निरुक्तैकदेवताकत्वरूपं द्रव्यसादृश्याविरोधि। तथापि समानशब्दार्थकत्वरूप तद्विरोधीति तस्य बलवत्त्वमितिप्राप्ते।

प्रथमोपस्थितत्वेऽपि कर्मविध्युत्तरकालमतिदेशकल्पनात्तदा च द्रव्यस्यैव प्रत्यासन्नत्वेन शीघ्रोपस्थितेस्तत्सादृश्यस्यैव बलवत्त्वम्। यागोऽपि हि उद्देश्यवद्दारात् देवतोद्देशविशिष्टद्रव्यत्यागरूपः। तत्र द्रव्यस्य प्रधानभूते त्यागे विशेषणत्वं, देवतायास्तु विशेषणीभूते उद्देशे। अतो द्रव्यं यागप्रत्यासन्नम्। यद्यपि च देवताप्रसादस्यैवार्थवादवशाद्यागस्य फलसाधनत्वे द्वारत्व कल्प्यते। तथापि देवतायाः शाब्दबोधे याग प्रति द्रव्य प्रति वा प्राधान्ये प्रमाणाभावात् प्रत्युत द्रव्यस्यैव पार्ष्ठिकान्वये विशेष्यत्वेन प्राधान्यावगतेर्न देवतासामान्यस्य प्रबलत्वाशङ्का। वस्तुतस्तु न देवताप्रसादस्य द्वारत्वमिति जैमिनिमत वक्ष्यत एव। अतोऽन्तरङ्गत्वशादेव द्रव्यसादृश्यस्य बलवत्त्वम्।

मधूदकम्॥ त्रिविष्टावनेके यागाः इत्युक्तं चित्राधिकरणे कौस्तुभे। तत्र दधिघृतपयोधानानतण्डुलयागानामिष्टित्वेनैव प्रकृतिः। मधूदकयोस्तु वर्णसाम्यादुपांशुयाजविकारत्वम्। प्रकृतोदाहरणे देवतासामान्यस्याधिकत्वाच्च। न तु स्वाभाविकद्रवत्वसादृश्यात्पयोयागविकारत्वम्। सत्यपि सादृश्यद्वये लिङ्गविशेषस्य निर्णायकत्वाभावे बहुतराज्यधर्मानुग्रहस्यैव नियामकत्वात्। नैमित्तिकद्रवत्वस्याज्येपि सत्त्वाच्च। अतश्च सर्वयागानामेकफलकत्वेनैकतन्त्रत्वादाङ्क्ष्यसामतुपहाय त्रयाणां मधुघृतोदकानामुपांशुयाजधर्मास्तत्रानुष्ठीयमानविरुद्धधर्मविषये कार्याः। आवृत्त्यानुष्ठीयमानद्रव्यसंस्कारविषये तु तत्तद्यागीयधर्मास्तत्तद्द्रव्येषु कार्याः॥८॥१॥९॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

अष्टमस्य प्रथमः पादः॥

न चाग्नेये चरोरभावादाग्नेयधर्माणां चरुगतत्वाभावेन कथं चरुशब्दस्तत्रौषधधर्मप्रापक इति वाच्यम्। सौर्यचरोराग्नेयविकारत्वे-नाग्नेयधर्माणामपि चरुगतत्वाच्चरुशब्दस्य तत्प्रापकत्वसम्भवात्। एवं श्रपणवाक्येऽपि यद्यपि न श्रपणानुवादेन घृतविधिः। श्रपण-स्याग्नेयविकारत्वेऽपि विक्लृप्तिरूपप्रयोजनाभावेन बाधात्। घृत-स्योत्पत्तिवाक्ये प्राप्तत्वाच्च। तथाप्यग्निसंयोगमात्ररूपं श्रपणं प्रक्षया लक्षणया वा प्रतिप्रसवविधया विधीयते। तच्च घृतविशिष्टं शुद्धं वेत्यन्यदेतत्। क्व विशिष्टविधित्वमित्यत्र नियामकाभावात् उत्प-त्तिवाक्ये घृतस्य परम्परासम्बन्धेन यागान्वये तस्य विलम्बोपस्थिति-कत्वादत्रैव विशिष्टविधिरिति तु युक्तमुत्पश्याम।

यद्यपि च श्रपणस्योपांशुयाजविकारत्वेऽपि प्रतिप्रसवविधित्वं युज्यत एव। आज्येऽप्यग्निसंयोगसद्भावात्। तथापि द्रव्यान्तरसंयोग-स्यात्यन्ताप्राप्तस्योपांशुयाजविकारत्वे विधेयत्वापत्तेराग्नेयविकारत्वे द्रव्यान्तरस्य जलस्य प्राप्तौ तत्र घृतविधाने लाघवमिति लिङ्गत्वोप-पत्तिः। एतदस्वरसेनैव वा भाष्यकारेण तस्मिंश्च श्रपणश्रुतेरिति सूत्रस्य घृतद्रव्यकत्वसादृश्यादुपांशुयाजविकारत्वमाशङ्क्य घृतस्याधि-करणत्वश्रुतेः प्रदेयत्वाभावादिति व्याख्यानान्तरं कृतम्। सर्वथा श्रौतलिङ्गोपष्टब्धस्य सादृश्यस्य बलवत्त्वाद्धिरण्ययाग औषधविकार एव। एवं च यत्र हिरण्यधायागान्तरे लिङ्गाभावस्तत्र देवतासादृश्या-त्तदभावेऽपि आज्यधर्माणां भूयसामनुग्रहात्तेजस्वित्वसादृश्येनाज्य-विकारत्वमेव। चरुशब्दस्य वा स्थालीपुलाकन्यायेन गमकत्वादौषध-विकारत्वम्। हव्यत्वेष्टिविकारत्व वा ॥ ८ ॥ १ ॥ ८ ॥

यद्दपुरोडाशा ह्येते पशव इति यद्देषु पुरोडाशशब्दानुवादस्तु-मंकल्पे सङ्गच्छते ।

यद्यपि चैतेषां यद्दयागान्तराणां वार्त्तिककारमते पशुपुरो-डाशकार्यापन्नत्वस्य दशमे वच्यमाणत्वात् स्वामापत्त्यैव पुरोडाश-शब्दोपपत्तिस्तथापि स्वामापत्त्यापि तावत् पशुपुरोडाशधर्मप्राप्ति-र्लिङ्गोपपत्तिः। वस्तुतस्तु । अङ्गापेचायामङ्गघटितसादृश्यस्यैव पुरः-स्फूर्त्तिकत्वेन स्वामापत्त्यतिदेशापेचया चोदनालिङ्गातिदेशस्य बल-वत्त्वादौषधद्रव्यकत्वेन सर्वप्रकृतिभूतदर्शपूर्णमासविकारत्वमेव। अतएव,

"एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं बुधः"।

इत्यादौ चैधातव्यादीचणीयेत्यादौ च न ज्योतिष्टोमादिधर्माः। यदा तु दाशमिकसूत्रभाष्यकाररीत्या प्राकृतपशुपुरोडाशयाग एव पुरादिद्रव्यान्तरमात्रविधिरित्याश्रीयते। तदा सौमादिशब्दस्य नामातिदिशनिराकरणमात्रार्थमिदमधिकरणम्। न तु औषध-द्रव्यकत्वलिङ्गकातिदेशसिद्ध्यर्थम्। एतदभावेऽपि पशुपुरोडाशस्य दर्शपूर्णमासविकारत्वसिद्धेरिति ध्येयम् ॥ ८ ॥ २ ॥ १ ॥

पशुः॥ दैच. पशुदर्शपूर्णमासविकार इत्युक्तम्। तत्रापि कि-मग्नीषोमीयपुरोडाशविकार उत साम्नाय्यविकार इति चिन्तायां, घनत्वसादृश्यात् पुरोडाशविकारः। न च पशुप्रभवत्वसादृश्यस्य द्रव्यगतस्य साम्नाय्ये सत्त्वाद्विशेषकाभाव.। घनत्वस्य लिङ्गोपष्टब्ध-त्वात्। अग्नस्त्वौषधाभ्योऽग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षतीति हि प्रोक्षणं पुरोडाशधर्मः। तथा पशुं पर्य्यग्निं करोतीति पर्य्यग्निकरणं पुरोडाशविकारत्वे लिङ्गम्। न च पशुप्रभवत्वसादृश्य-

# अथ द्वितीयः पादः ।

वाजिने ॥ वाजिनयागस्यामिक्षाऽनुनिष्पन्नवाजिनप्रतिपत्तिकर्मणोऽप्यङ्गापेक्षायां किं सौमिकातिदेश उत दार्शिक इति चिन्त्यते । सौत्रामण्यङ्गदेवतासंस्कारार्थसुराग्रहेषु चैवमेव चिन्ता । तत्र सोमो वै वाजिनं सुरा सोम इत्यसोमे सोमशब्दः सोमधर्मातिदेशार्थः । न चोपशयो यूपो भवतीतिवदर्थवादस्थत्वादनतिदेशकत्वम् । तद्वदिह लिङ्गसादृश्याभावेन नामातिदेशावश्यकत्वात् ।

अतएवानुवषट्कारमन्त्रौ समुपहूय भक्षणमुभयत्र दर्शयति । सुरायाः सीसेन क्रयणं, कुवलसक्तुभिः श्रयणं, एका पुरोरुक्, एका याज्या, उपयामेतिमन्त्रो गृहीत्वासादनं, सोमे वासस्युपनहनं दर्शयति । ग्रहशब्दश्चैव सति सुतरामुपपद्यत इति प्राप्ते ।

आर्थवादिकस्य सोमशब्दस्य प्रत्यक्षफलवत्त्वरूपसिद्धसादृश्येनोपपत्तौ वाक्यभेदापादकविधिपरत्वे प्रमाणाभावात् । ग्रहशब्दस्य प्रायणीयवद्ग्रहणस्यौपदेशिकत्वेनैवोपपत्तेर्लिङ्गानाञ्च वाचनिकतयाप्युपपत्तावप्रतिपत्तेन चोदनालिङ्गातिदेशेन दार्शिकविध्यन्त एव । तथापि वाजिने पशुप्रभवत्वद्रवत्व*सादृश्यात्पयोयागविध्यन्तः । सुरायां पौरोडाशिक पौषधद्रव्यकत्वात् । अतएव शष्पैरेव दीक्षणीयामाप्नोतीति दीक्षणीयाभिवचनं सङ्गच्छते । इतरथा हि तस्याः प्रत्यक्षेण प्राप्तिवचनेन स्तुतिरसङ्गतैव स्यात् । तथा नैतेषां पुरोडाशविकारो,

---

* द्रवत्व-इति नास्ति ख-पुस्तके ।

वादम्। तथापि तु विशेषचिन्तायां, तप्ते पयसीत्यत्र द्वितीयानिर्दिष्टदध्न एव सा वैश्वदेवीति तच्छब्देन परामर्शो न तु सप्तम्यन्तपदनिर्दिष्टस्य पयसः। गुणभूतत्वात्। न चानयतेर्द्विकर्मकत्वात्पयसोव्याप्यमानत्वेन दध्यपेक्षयापि प्राधान्यावगतिः। द्विकर्मकधातुस्थले अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारकसम्बन्धमात्रविवक्षायां च सम्बन्धमात्रे षष्ठीप्राप्तौ अकथितं चेति सूत्रेण कर्मसञ्ज्ञाकरणात्। द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्। प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षावगतेर्द्वितीयकर्मत्वप्रसक्त्यभावाच्च। अतश्च दधिरूपत्वादामिक्षायादधियागविकारत्वमेवेति लौकिकस्य पयसोऽधिकरणत्वमिति प्राप्ते।

मधुररसमयत्वाद्दध्यभावेऽपि च अन्यान्तरेणामिक्षासम्पत्तेरन्वयव्यतिरेकाभ्यां जुष्टो युज्यं पय इति मन्त्रवर्णाच्च पयस एवावस्थाविशेषापन्नस्यामिक्षापदवाच्यत्वावगतेस्तदनुरोधेन तच्छब्दस्यापि सप्तम्यन्तपदनिर्दिष्टपयःपरामर्शित्वस्यैवावगतेः पय एवामिक्षा। अतश्च तद्यागविकारत्वमेव। एवं च तप्ते पयसीत्यत्र सप्तम्या प्राधान्यलक्षणा, द्वितीयया च सक्तुन्यायेन करणत्वलक्षणेत्यपि ध्येयम्।

अवस्थाविशेषरूपामिक्षा च न ताप विनेति तस्यापि विवक्षा। यदि तु ताप विनाप्यामिक्षा लोके सम्भाव्यते, तदा न सप्तम्या प्राधान्यलक्षणापि। तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्यैवावस्थाविशेषविशिष्टपयोरूपामिक्षोद्देशेन विधेयत्वात्। उद्देश्यवाचकपदकल्पनया च वाक्यार्थपूर्त्तिः। तस्यैव च तच्छब्देन परामर्शात् सुतरां लिङ्गोपपत्तिः। अधिकरणत्वस्यैव च दध्यानयन प्रत्यङ्गत्वेऽपि पय-

स्यापि उखादर्शनरूपलिङ्गोपष्टम्भत्वान्नियामकाभाव । तथात्वेऽपि देवतासादृश्यस्यैवाग्नीषोमीयविकारत्वे गमकत्वादिति प्राप्ते ।

देवतासामान्योपष्टम्भस्यापि द्रव्यसादृश्यस्यान्यथासिद्धलिङ्गोपष्टम्भत्वेनानन्यथासिद्धलिङ्गोपष्टम्भद्रव्यसादृश्यापेक्षया दौर्बल्यात् साद्यास्कविकार एव पशुः । तथा हि नाच प्रोक्षणानुवादेन मन्त्रो-विधीयते । येनेदं लिङ्गं भवेत् । तस्य तु लिङ्गादेव प्राप्तत्वात् प्रोक्षणभावनैवाचापूर्वा विधीयत इति विपरीतसाधकत्वम् । पर्य-ग्निकरणं तु प्रदेयपुरोडाशधर्मत्वेन प्रकृतौ क्लृप्तम् । नेह प्रदेय-प्रकृतिभूतपशुसंस्कारकतया दृश्यमानं प्राकृतम् । अपि त्वपूर्वमेवेति न तदपि लिङ्गम् । अतो घनत्वसादृश्यं न लिङ्गोपष्टम्भम् । यदि पशुरुखायां पच्यमानः स्कन्देदिति उखादर्शनं तु अनूद्यमानत्वा-दनन्यथासिद्धं लिङ्गम् । अत तदुपष्टम्भं पशुप्रभवत्वमेव बलीय ॥ ८ ॥ १ ॥ २ ॥

दध्न ॥ तत्रापि दधिविकारः पयोविकारो वेति चिन्तायां, घनत्वसादृश्याद्दधिविकारत्वमेव । न च साक्षात् पशुप्रभवत्वसादृश्येन पयोविकारत्वग्रहः । कारणत्वस्य व्याप्तिरूपतया अतीन्द्रियस्यानु-मानिकत्वेन प्रत्यक्षगम्यघनत्वापेक्षया दौर्बल्यादितिप्राप्ते । दध्या-दीनां पयसएकदिनान्तरितानां विकारदर्शनादेकदिनस्थायित्व-सादृश्य स्वतोगतिमत्त्वसादृश्य च प्रत्यक्षमेवेति तत्सचरितेन साक्षात् पशुप्रभवत्वेनैकस्य घनत्वस्यैव बाधात्पयोविकारत्वमेव ॥ ८ ॥ १ ॥ ३ ॥

आमिक्षा ॥ आमिक्षा तावत्साक्षान्नरमपि तु दधिपयोऽन्यतर-रूपमिति साधितं चतुर्थे । अतश्च तदन्यतरविकार इति तावद्वि-

च न सत्त्वम्। यद्यन्यतरतोऽतिरात्रत्वेनाहीन इति श्रुत्या अन्यतरतोऽतिरात्रत्वस्याहीनलक्षणकरणादर्थाच्चोभयतोऽतिरात्रत्वस्य सत्त्वलक्षणत्वेन पञ्चदशरात्रादौ अहीनलक्षणसत्त्वेन तदनुपपत्तेः। अतएव न सत्राहीनयोर्भवदुक्तलक्षणं, न वैकादशरात्रान्तस्यैव शुद्धाहीनत्वम् अतश्च पञ्चदशरात्रादौ अहीनात्मकद्वादशाहस्यैव प्रवृत्तिरिति प्राप्ते

अहीनत्वाभावेऽपि प्राचुर्येणाहीनेऽन्यतरतोऽतिरात्रत्वादर्शनात् पञ्चदशरात्रेऽन्यतरतोऽतिरात्रत्वेनाहीनत्वोपचारस्य स्तुत्यर्थत्वेनोपपत्तेरभियुक्तप्रसिद्ध्या निरुक्तलक्षणकस्यैव सत्त्वादेरङ्गीकारात् पञ्चदशरात्रकुण्डपायिनामयनयोरपि सत्रत्वमेव। अतएव गृहपतिर्गृहपतिरिति गृहपतिशब्दः सदैकान्तवृत्तिः कुण्डपायिनामयने। अतः सत्रात्मकद्वादशाहप्रकृतित्वमेवानयोः॥ ८॥ २॥ ६॥

इति श्रीखण्डदेवविरचितायां
भाट्टदीपिकायामष्टमस्य द्वितीयः।

सोनाङ्गत्वं कृप्तप्रयोजनत्वादिति ध्येयम् । अतः आमिक्षाया अवस्थाविशेषविशिष्टपयोरूपत्वात्पयोयागविकारत्वम् । तेन पयस्येव प्रातर्दोहधर्माः, दधि तु लौकिकमेव संस्कारकम् ॥ ९ ॥ ८ ॥ ४ ॥

सत्रमहीनश्च ॥ अहर्गणेषु द्वादशाहस्य प्रवृत्तिरित्युक्तम् । द्वादशाहे चास्ति सत्रत्वमहीनत्वं चेति धर्मद्वयम् । तत्रासीरन्, उपेयुरित्यादिचोदनाचोदिते सत्रत्वमखण्डोपाधिः । अनियतस्वामिके यजतिचोदनाचोदिते चाहीनत्वमखण्डोपाधिर्वृद्धव्यवहारात् । तत्तद्धर्मकत्वे निमित्ते च तत्र धर्मविशेषा विहिताः । तथान्येऽपि सत्रसंज्ञका अहीनसंज्ञकाश्चाहर्गणा अधर्मकाः समाम्नाताः । तत्र द्विविधेष्वपि द्वादशाहस्यैकस्य धर्मप्रवृत्तिः । अतोऽविरुद्धाः समुच्चीयन्ते विरुद्धाश्च विकल्प्यन्ते । न ह्यत्र द्वादशाहे भेदोऽस्ति । येनावान्तरसामान्यात्तत्तद्द्वादशाहवदित्यतिदेशवाक्यं कल्प्येत । भेदे प्रमाणाभावात्तु द्वादशाहवदित्येवातिदेशवाक्यकल्पनेऽव्यवस्थैव युक्तेत्येवं प्राप्ते ।

सत्यपि द्वादशाहत्वेनैवातिदेशे सत्रत्वरूपनिमित्ताभावात्तन्नैमित्तिकाधर्मानाहीने, अहीनत्वरूपनिमित्ताभावाच्च तन्नैमित्तिकाधर्मान सत्रे प्रवर्तन्ते । भेदनाभाव इव सोमपौण्डरीकयागादाविति फलतो व्यवस्थितं प्रकृतित्वम् । सत्रात्मकेष्वहर्गणेषु सत्रात्मकस्य द्वादशाहस्याहीनात्मकेष्वहीनात्मकस्येति । द्विरात्रादारभ्यैकादशरात्रान्तमहीनाः । द्वादशाह उभयात्मा । त्रयोदशरात्रादारभ्य सर्वे सत्रभूता एव । तथैवोक्तलक्षणसत्त्वात् । वृद्धव्यवहाराच्च । अतस्तेषु तेषु तत्तद्रूपस्य द्वादशाहस्य प्रवृत्तिः ॥ ८ ॥ २ ॥ ५ ॥

अन्यतरतोऽतिरात्रत्वात् ॥ पञ्चदशरात्रस्य कुण्डपायिनामयनस्य

संस्थाकत्वेनाग्निष्टोमसुखत्वस्य प्राप्तत्वात्। न चाद्येष्वेव चतुर्षु त्रिवृत्त्वविधौ प्रमाणाभावेनाग्निष्टोममुखत्वस्यापि विधिरावश्यक इति वाच्यम्। प्रथमातिक्रमे कारणाभावात्त्रयाणामन्येषां विध्यन्तरेण स्तोमविधानाच्चाद्येष्वेव चतुर्षु त्रिवृत्त्वप्राप्तेरिति भाष्यकाराभिप्रायः।

वस्तुतस्तु चतुःसंख्याकोद्देशेन त्रिवृत्त्वविधौ योग्यतया सन्नस्वप्रहःसु चाद्येषु चतुर्षु स्तोत्रेषु त्रिवृत्त्वविध्यापत्तेरहर्मात्रोद्देशेन तद्विधौ च सर्वत्र तदापत्तेः चतुःसंख्याविशिष्टाहरुद्देशे च वाक्यभेदापत्तेरयमेव संख्याभिन्नत्रिवृत्त्वविशिष्टकर्मोत्पत्तिविधिः। त्रयाणां चान्येषां विध्यन्तरेण विधिः।

सर्वेषां च फलवाक्येन सम्बन्धमात्रकरणम्। एवं चोत्पत्तिवाक्ये चतुर्णाङ्गफलप्रतीतेस्तस्योत्पत्तिगतत्ववत् त्रिवृत्त्वस्याप्युत्पत्तिगतत्वेन साम्येऽपि त्रिवृत्त्वस्याङ्गभूतस्तोत्रवृत्तित्वात् प्रधानवृत्तिगणत्वापेक्षया दुर्बलत्वेन गणत्वसादृश्येनैवाद्यानां चतुर्णामतिदेशः प्रबाध्य.। सर्वथा नाद्यस्यैव चतुर्ष्वतिदेशः। एवं चाग्निष्टोममुखानीत्यनुवादोपपत्तिः। इतरेषां त्रयाणामन्यसंस्थाकत्वात्। इतरथाऽग्निष्टोमानीत्येवावक्ष्यत्। सर्वेष्वग्निष्टोमसंस्थाकत्वस्यैवातिदेशेन प्राप्तेः॥ ८॥ १॥ २॥

कालाभ्यासे॥ षट्त्रिंशद्रात्रे षडहा भवन्ति चत्वारो भवन्तीति श्रुतम्। द्वादशाहान्तर्गतद्व्यहे चाद्य एक' षडहः सधर्मकः श्रुतः। तदिह तस्यैव वारचतुष्टयमत्र प्रवृत्तिरुत द्वादशाहस्येति चिन्तायाम्। न तावदत्र षडहशब्दो नामातिदेशकः। तस्य संख्याविशिष्टाहर्वाचकस्य गुणविशिष्टकर्मविधायित्वेन नामत्वाभावात्। सत्वेऽपि वा यौगिकत्वेनोक्तविधायित्वाच्चतेर्नामातिदेशकत्वायोगाच्च। नापि

## अथ तृतीयः पादः।



हविर्गणे ॥ आग्नावैष्णवमेकादशकपालं सारस्वतं चरुं बार्हस्पत्यं चरुं दत्यादिहविर्गणे क्रमसामान्यात् प्रथमतृतीययोः आग्नावैष्णव-बार्हस्पत्ययोराग्नेयाग्नीषोमीयविकारत्वमिति प्राप्ते। क्रमसामान्यस्या-शब्दस्यान्यापेक्षत्वेन विलम्बोपस्थितिकत्वादुत्पत्तिवाक्यगतदेवताया-दृग्द्रव्यानन्यापेक्षत्वेन यागस्वरूपपरिचायकत्वेन च शीघ्रोपस्थितिकस्य बलवत्त्वात्तेनाग्नावैष्णवस्याग्नीषोमीयविकारत्वं, बार्हस्पत्यस्य चाग्नेय-विकारत्वम् ॥ ८ ॥ ३ ॥ १ ॥

गणचोदनायां ॥ जनकसप्तरात्रे चत्वारि त्रिवृन्त्यहान्यग्निष्टोम-मुखानीति श्रुतम्। तत्र चतुर्थ्वहःस्र द्वादशाहिकदशाहान्तर्गत-प्राथमिकस्य त्रिवृत्स्तोमकस्याह्नः प्रवृत्तिः। त्रिवृत्त्वलिङ्गात्। न तु क्रमपदकृतगणत्वसामान्येनान्यापेक्षेण दशाहान्तर्गतानामाद्यानां चतु-र्णामह्नां प्रवृत्तिः। तत्तदहर्वृत्तित्रिवृत्त्वस्यान्यानपेक्षत्वेन बलवत्त्वा-दिति प्राप्ते।

स्वर्गकामो जनकसप्तरात्रेण यजेतेति वचनेनोत्पन्नानां सप्तानां कर्मणां मध्ये चत्वार्यनूद्य त्रिवृत्त्वविधानेन त्रिवृत्त्वस्योत्पन्नशिष्टत्वेन दुर्बलत्वादुत्पत्तिशिष्टेन गणत्वेनैव प्रथमस्य प्रथममित्यादिक्रमसद्-कृतेन सप्तानामप्यह्नां द्वादशाहिकदशाहान्तर्गतसप्ताहविकारत्वम्।

न च प्राप्तकर्मानुवादेन त्रिवृत्त्वविधिरग्निष्टोमसुखत्वस्य च विधिरिति वाक्यभेदः। दशाहान्तर्गतचतुर्णां मध्ये प्रथमस्याग्निष्टोम-

अथातोऽग्निष्टोमेनेत्यादौ प्राकरणिकोत्तरवेद्यवरोधेन चयनस्य विकृतौ निवेशापत्ते । अतो ज्योतिष्टोमनामाम्नानाच्च द्वादशाहप्रवृत्ति । अथवा, अग्निष्टोमादिशब्दानां नागृहीतविशेषणान्यायेन संस्थामात्रवाचित्वाज्ज्योतिष्टोमे निरूढलक्षणाऽङ्गीकारेऽपि प्रकृते तदाश्रयणे प्रमाणाभावान्नित्यकाम्यसंस्थानुवादेनैव शतावृत्तिविधि । अस्मिन्नपि पक्षे ज्योतिष्टोमस्यैवाश्रयत्वादिना सत्त्वाच्च गणातिदेश । अस्तु वेद कर्मान्तरम् । तथाप्यन्यपदार्थस्यैकवचनान्तत्वादेकमेव तत् । शतसंख्यायाश्च संख्यागतत्वेनाभेदकत्वात् । अत शतसंख्याकमभ्यस्तमेकं कर्म ज्योतिष्टोमविकार इति न गणातिदेश इति प्राप्ते ।

एकप्रसरताभङ्गापत्तेर्न तावज्ज्योतिष्टोमोद्देशेन संस्थोद्देशेन वा संख्याविधि । अतो वषट्कर्तृभक्षवदेव कर्मान्तरम् । तदपि नैकम् । तथात्वे एकस्य कर्मणोऽनेकसंस्थाकत्वस्याभ्यासमन्तरेणानुपपत्तेरश्रुताभ्यासकल्पनापत्ते । अतोऽग्निष्टोमोक्थ्यादिपदानां त्रिवृदग्निष्टुदग्निष्टोम उक्थ्योविरूपसामेत्यादौ विकृतियज्ञसामानाधिकरण्येनापि क्वाचित्कप्रयोगेण साम्प्रतिकलक्षणया तत्तत्संस्थाकयज्ञान्तरपरत्वमङ्गीकृत्य शतसंख्याभिन्नतावद्यज्ञविधिरेवायम् । एवं चान्यपदार्थो न कर्मापि तु शत उक्थ्यसंस्थाकायज्ञा करणे यस्मिन्निति व्युत्पत्त्या फलमेवेति ध्येयम् । तदपि च नोद्दिश्य यज्ञविधिरेकप्रसरताभङ्गतादवस्थ्यापत्ते । अपि तु तात्पर्यगत्या अश्वचयविशिष्टतावद्भावनाविधिरेवेति युक्ता गणस्यैवातिदेशाद्द्वादशाहमावृत्ति । द्विगुसमासत्वाद्वा न कश्चिद्दोष । *[एकवचनान्तत्वामन्तत्वे उपपत्ति-

* [ ] एतच्चिह्नद्वयान्तर्गत पाठ नास्ति सो॰ पुस्तके ।

प्राकृतषडहानुवादेन संख्याविधिः । द्वादशाहत्वानुपपत्त्या तत्सा-
न्निवेशात् । अतः कर्मान्तराण्येव संख्यया चतुर्विंशतिर्विधीयन्ते ।
न तु षडहस्य चतुरावृत्तिः । तथात्वे चतुः षडहो भवतीति क्रिया-
भ्यावृत्तिविहितसुच्प्रत्ययापत्तेः । चत्वारो भवन्तीति श्रवणात्तु पृथक्-
त्वनिवेशिन्या संख्यया भेद एव । अतश्च गणत्वसामान्याद्द्वादशाह
दिरभ्यस्तावशिष्टेषु चतुर्षु दशाहाद्यानां चतुर्णां प्रवृत्तिरिति प्राप्ते ।

यद्यपि तन्त्ररत्नरीत्या चतुर्विंशतिरेतानि कर्माणि, तथापि
षडहशब्दवत्त्वसादृश्येन तस्यैव चतुर्वारं प्रवृत्तिः । वस्तुतस्तु नात्र तावन्ति
कर्माणि, चतुर्विंशतिसंख्याया अश्रवणात् । षट्संख्यायाः चतुःसंख्याया-
श्चैकत्र द्वयमिति न्यायेन कर्मान्वयमङ्गीकृत्य भेदाङ्गीकारे कर्मदश-
कापत्तिः । षट्संख्याया समासगतत्वेन तथान्वयानुपपत्तेश्च । अत
एकविशिष्टे अपरवैशिष्ट्यमिति न्यायेनैव षट्संख्याविशिष्टे चतुः-
संख्यान्वयो वाच्यः । अतश्च सत्यप्येकवाक्यत्वे प्रयाजैकादशत्वन्यायेन
निर्ज्ञातसंख्यत्वाच्चतुःसंख्या आवृत्त्यापादिकैव । वस्तुतस्तु पृथगाख्यात-
श्रवणाच्चापि भिन्नवाक्यत्वमेव । तेन षण्णामेव कर्मणां चतुर्वारमा-
वृत्तिः । सुच्प्रत्ययाभावेऽपि च प्रमाणान्तरेणावृत्तिकल्पने न
कश्चिद्दोषः । अत सूत्रभाष्यस्वारस्येन षण्णामेवावृत्तेः षट्संख्यत्व-
सादृश्यादिना षडहस्यैव वारचतुष्टये धर्माः ॥ ८ ॥ ३ ॥ २ ॥

संख्यागणे ॥ अनारभ्य, शताग्निष्टोमं भवति शतोक्थ्यं शताति-
रात्रमिति श्रुतम् । तत्राग्निष्टोमादिशब्दानां ज्योतिष्टोम एव
प्रचुरप्रयोगात्तदनुवादेन शतसंख्याऽभ्यासापादिका विधीयते । न
त्वग्निष्टोमादिशब्दानां संस्थाविशिष्टक्रतुसामान्यवाचित्वम् । तथात्वे

स्तोत्राणामुत्पत्तिर्ज्योतिष्टोम एव। द्वादशाहे तु अतिदेशप्राप्त-स्तोत्रानुवादेन धर्मविशेषमात्रम्। अतश्च ज्यौतिष्टोमिकानामेवोप-देशेन विधानम्। अतएव रात्रिपर्यायादीनां ज्योतिष्टोमे फलार्थ-त्वस्याङ्गत्वेनेत्वानतिदेशेऽपि न काचित्क्षतिरुपदेशेनैव तद्विधानाङ्गी-कारात्॥ ८॥ २॥ ५॥

गायत्रीषु॥ वृहस्पतिसवे प्रकृतितो गायत्रत्रैष्टुभादिनानाच्छन्दःसु प्राप्तेषु छन्दोन्तरपरिसंख्यार्थं गायत्रमेतदहर्भवतीति श्रुतम्। तत्र गायत्र्यादिशब्दानां चतुर्विंशत्याद्यक्षरसंख्यामात्रवाचित्वाभ्युपगमे संख्याविशिष्टत्रिपदात्वात्वविशेषणाद्‌ऋग्लक्षणयापि क्लृप्तप्रयोगोपपत्तेस्तत्रापि न शक्तिः। अतश्च प्राकृतीष्वेव ऋक्षु अधिकाक्षरलोपं कृत्वा चतुर्विंशत्यक्षराण्येव पठनीयानि। अतएव, ये त्रिं द्वे गायत्र्यौ सैका जगतीति लिङ्ग-मपि संख्यावाचित्वपक्षे उपपद्यते न ऋग्वाचित्वपक्षे। तिस्रोऽनुष्टुभ-स्ततस्रोगायत्र्यो भवन्तीति च। अतश्च प्रताग्निष्टोमे उक्थ्यादि-स्तोत्रलोपवद्दिशाप्यधिकाक्षरलोपप्रसक्तौ,

न गायत्र्यादिशब्दानां संख्यामात्रवाचित्वम्। तथात्वे घटादि-संख्यायामपि प्रयोगापत्तेः। प्रयोगानुसारेणाक्षरसंख्यावाचित्वे तेनैव ऋग्विशेषस्य वाच्यतापत्तेः। इतरथा तावदक्षरे गद्येऽपि प्रयोगा-पत्तेः। अतोऽष्टाक्षरपादत्रयादियुक्तमन्त्रविशेष एव गायत्र्यादिपद-वाच्यः। निरूढलिङ्गेषु तु संख्यामात्रे लाक्षणिकः। तेन द्वात्रिंश-त्योऽभ्य एवोत्पत्तिगायत्र्य आनेया न त्वक्षरावलोपः। तथात्वे वाक्यार्थपरिपूर्त्यभावेनार्थप्रत्यायकत्वानुपपत्तेश्च*। पूर्वाधिकरणे

* प्रकाशकत्वानुपपत्तेश्च,—इति सो॰ पुस्तके पाठः।

क्षण)। कर्मकत्वेऽपि आहत्तेरावग्रकत्वेन सत्यागणत्वानपायाद् द्वादशाहधर्माविरोध ॥ ८ ॥ २ ॥ ४ ॥

गणादुपचय. ॥ अताग्निष्टोमादौ द्वादशाहगतद्यराचप्रवृत्ति-रित्युक्तम्। द्वादशाहे च प्रथमोत्तमावतिराचसंस्थाकौ। द्यराच-प्रथमोत्तमौ चाग्निष्टोमसंस्थाकौ। मध्यतनानि चाष्टौ उक्थ्यसंस्था-कानि। केषाञ्चिन्मतेऽक्थ्यसंस्थाकानि, एक षोडशी। तदिह अता-ग्निष्टोमे तावदतिदेशप्राप्तानामुक्थ्यादीनां बाधादग्निष्टोमसंस्थाकत्वे न कापि चति। उक्थ्यातिराचयोस्तु दिनेषु येषु* अतिदेशेनैवोक्थ्य-स्तोत्रादि प्राप्तम्, तेष्वपि न काचिच्चिन्ता। येषु तु अग्निष्टोम-संस्थाकत्वप्राप्तिस्तेषु वचनादेवोक्थ्येषु कर्त्तव्येषु द्वादशाहिकान्येवो-क्थ्यातिराचस्तोत्राण्युपस्थितत्वात्कर्त्तव्यानीति प्राप्ते।

न तावदतिदेशेन तेषामुपस्थिति। प्रथमस्य प्रथममित्येव क्रमेण प्रत्येकमेव तत्तदह स तत्तदह्नामतिदेशेन यान्यहानि उक्थ्यसंस्था-कप्राकृताहर्विकाराणि तेषु तदीयोक्थ्यप्राप्तावपि अग्निष्टोमसंस्थाक-प्राकृताहर्विकारेषु तत्प्राप्तौ प्रमाणाभावात्। प्रथमोत्तमयोरेवाति-राचसंस्थाकत्वेन तयो काप्यनतिदेशेन राचिपर्यायाणा सुतराम-प्राप्तेय। अत आतोक्थ्यादौ तेषु तेष्वह स वाचनिकानि स्तोत्राणि। न हि भिक्षुको भिक्षुकान्तर याचते इति न्यायेन ज्योतिष्टोम स्थान्येव कार्याणि। अथ च नातिदेशोऽपि तु कर्मान्तरत्वे प्रमाणा-भावाद्यचोक्थ्यप्रसिद्धिस्तद्यत्यानि वचनेन विधीयन्ते। किञ्च

* दिनेषु येषु,—इति नास्ति सो॰ पुस्तके।

## अथाष्टमाध्यायस्य चतुर्थः पादः ।

दर्विहोमे ॥ तदेव विद्धोऽतिदेशे दर्विहोमेषु तदपवादं वक्तुं दर्विहोमशब्दार्थो निरूप्यते । तत्र न तावदयं दर्व्याख्यस्य गुणस्य विधिरिति शङ्कितुं शक्यम् । सोमादिवद्विधिवाक्ये श्रवणाभावेन विधायकत्वशङ्कानुपपत्तेः । न च वास्तुहोमीयगुणविध्यर्थवादे, यदेकया जुहुयाद्दर्विहोमं कुर्यादित्यत्र श्रुतस्य दर्विहोमपदस्य घृतादिपदवत्पदान्तरकल्पनया विधायकत्वसम्भवः । पुरोऽनुवाक्यामनूच्य याज्यया यजतीति स्वरूपगुणविधेर्दर्व्यपेक्षाभावात् ।

न च विद्वद्विर्द्दर्शान्यथानुपपत्त्योपरि हि देवेभ्यो धारयतीतिवद्वाक्यान्तरकल्पनया होमोद्देशेनैव दर्विविधायकत्वम् । वास्तुहोमे तावत्स्रुवः प्रत्यक्षशिष्टत्वेन विधातुमशक्यत्वात् । होमान्तरेष्वपि स्मार्त्तेषु न्यग्विलया मूलदण्डया दर्व्या जुहोतीति स्मार्त्तवचनेनैव तत्प्राप्तेः । श्रौतेष्वपि स्रुवेण जुहोति जुह्वा जुहोतीत्यादिना तत्र तत्र पात्रान्तरसद्भावाच्च । अतश्च तत्प्रख्यन्यायेन गुणविधित्वानुपपत्तेर्दर्विशब्दं पात्रान्तरस्योपलक्षणमङ्गीकृत्यैकदेशप्रवृत्तिनिमित्तेन वा तत्साध्यहोममात्रस्येदं नामधेयम् ।

तथापि यथैव स्मार्त्तानां पार्वणस्थालीपाकादीनां कर्त्तरि दर्विहोमिक इति प्रयोगदर्शनात् प्रवृत्तिनिमित्तसद्भावाच्च तेषां नामधेयं, तथैव वास्तुहोमेऽपि प्रयोगात् श्रौतानामपि । न च वास्तु-

धिकारगमकत्व उपचर्यासन्नितस्तत्रभङ्गादिहापचर्यास्मिन्यत इति भाव तथाध्यायसंगतौ यतितव्यम् ॥ ८ ॥ ३ ॥ ६ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकाया-

अष्टमाध्यायस्य तृतीय पाद ॥

नवत्त्वेन यावदुक्तेतिकर्त्तव्यतयैव निराकाङ्क्षत्वात्सादृश्यस्य च विनिगमनाविरहेणानियामकत्वादपूर्वाः एव दर्विहोमा न प्रकृतिपूर्व्वाः।
यत्तु परिधिवेदिदर्शनं, तद्देशोपलक्षणतयाप्युपपन्नम्। एवं च त्र्यम्बकहोमेषु औचित्येन नाचेष्मावर्हिः सनह्यते न प्रयाजानूयाजा-इज्यन्ते न सामिधेनीरन्वाहेति स्तुतिरप्युपपद्यते। अतिदेशपक्षे स्वतन्त्रपर्य्युदासकल्पने विध्यन्तरैकवाक्यताभङ्गापत्तेः।

सोमयागाद्यविकारत्वे इदमपरं लिङ्गम्। औदुम्बरीहोमे घृतेन द्यावापृथिवी आपृणेति अन्तरा कर्णौ जुहोति भूमिगते चाज्ये स्वाहाकार इति। सोमयागादिविकारत्वे हि अतिदेशेन वषट्कारः प्राप्येत। तत्र स्वाहाकारस्यापि विधिरपूर्वविधिः स्यात्। अस्मन्मते तु स्वाहाकारेण वा देवेभ्यो हविः प्रदीयते वषट्कारेण वेति अनारभ्याधीतवाक्येन विहितयोः स्वाहाकारवषट्कारयोर्विकल्पेन प्रदानमात्रे प्राप्तौ याज्याया अधि वषट्करोतीति वचनेन याज्यावत्कर्मणि वषट्कारनियमात्तद्रहिते परिशेषादेव स्वाहाकारप्राप्तेस्तदनुवादेन भूमिगमनोपलक्षितकालमात्रविधानाल्लाघवम्। न चैव परिशेषादेव सर्वत्र स्वाहाकारप्राप्तौ अग्नये स्वाहेतिरित्यादौ क्वचित्पुनः स्वाहाकारपाठवैयर्थ्यम्। तस्य मन्त्रत्वसिद्ध्यर्थत्वेन सार्थक्यात्। यदि त्वतिदेशपक्षेऽपि औपदेशिकमन्त्राम्नानादेव याज्यारहितात्वषट्कारप्राप्त्यभावेन परिशेषसिद्धेः स्वाहाकारप्राप्तिरङ्गीक्रियेत, ततो नेदं लिङ्गमिति ध्येयम्। अतः सिद्धं दर्विहोमा अपूर्वा इति॥ ८॥ ४॥ १॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां अष्टमस्य चतुर्थ पादोऽध्यायश्च समाप्तः॥

— —

कथिवचणम् । प्रकृतावेव ब्रीहित्वाद्यवच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्विनयवादिवृत्तित्वात्तद्वारणाय प्रकृतिविकृतिपदोपादानम् । प्रकृतिश्वब्रीहियवापेक्षया सौर्यादिविकृतिस्थब्रीहियवानां भेदादतिदेशिकब्रीहिमत्सौर्यादावेवावघातादीनामुद्धारणार्थं यद्धर्मावच्छिन्नेति विशेषणम् । सौर्यस्थब्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदसत्त्वेऽपि ब्रीहित्वावच्छिन्नप्रतियोगिताकतद्भेदाभावात् । यवसाध्यविकृतौ तूहाङ्गीकारेऽप्यदोषः । प्रकृतौ प्रोक्षणादीनां तात्पर्यगत्या अपूर्वसाधनत्वावच्छिन्नवृत्तित्वस्यैव विवक्षितत्वेन विकृतावपि तेनैव रूपेण श्यामाकवृत्तित्वादसम्भवमपूर्वयोर्दर्शपूर्णमासीयत्वादिना भेदविवक्षायां सौर्यस्थब्रीहिष्वतिव्याप्तिमाशङ्क्य श्रुतपदं निरुक्तप्रतीयमानत्वार्थकम् । अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरुक्तश्रुतत्वाभावात् । अत्र चाग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽपि अवशिष्टमन्त्रस्य प्राकृतत्वानपायात्तल्लक्षणे तस्येति शब्दानुपपत्तिः । एवं च यत्र प्राकृतमन्त्रस्थाने मन्त्रान्तरमोहस्तत्रोहशब्दोभाक्त इति ध्येयम् । अथवाऽस्तु तदनुरोधेन तस्येति पदं प्राकृततत्कार्यापन्नान्यतरपरमिति संक्षेपः ।

स चोहः प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसम्बन्धित्वेन विधानं, तद्रूपावच्छिन्नसम्बन्धित्वेनैवातिदेशे सिद्ध्येत् । न तु स्वरूपेणैवातिदेशे । तथात्वेऽग्निपदस्यैवातिदेशेन सौर्ये तस्यैवादृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तावूहानापत्तेः । अतएवोपकारद्वारभावेन पदार्थानां विकृतावतिदेशः । प्रकृतौ निरूपितरूपाणामेव वा विकृतावतिदेश इति दशमे वक्ष्यते ।

# अथ नवमाध्यायस्य प्रथमः पादः।

यज्ञकर्म॥ तदेव सिद्धेऽतिदेशे तत्प्रापितपदार्थविषय ऊहश्चिन्त्यते। त्रिविधश्चोहो निरूप्यते। मन्त्रोह, सामोह, संस्कारोहश्च। तत्रोहोनाम प्रकृतावन्यथा दृष्टस्य विकृतावन्यथा भाव। तत्त्व च, येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्व यस्य प्रकृतौ श्रुत, तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम्।

अस्ति चेद् देवस्य त्वादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च। मन्त्राणां हि स्मारकत्वसम्बन्धेनाग्नित्वाद्यवच्छिन्नवृत्तित्व श्रुत प्रकृतौ, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात्। एव प्रोक्षणावघातादीनामपि संस्कार्यतासम्बन्धेन व्रीहित्वावच्छिन्नवृत्तित्व प्रकृतौ श्रुत, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकादिवृत्तित्वात्। एव साम्नामपि, आर्द्र भावादिरूपाणां येन सम्बन्धेन यत् स्थानगतैकारवृत्तित्व प्रकृतौ श्रुत, विकृतौ तेषां तेनैव सम्बन्धेन तत्स्थानभिन्नस्थानगतैकारवृत्तित्वादूह।

अत्र श्रुतत्व तात्पर्यमनपेक्ष्य प्रतीयमानत्वम्। तेनोक्तैकारवृत्तित्वादे शब्दादप्रतीतावपि न क्षति। अत्र च सम्बन्धैक्याविवक्षायां पशुपुरोडाशयागीयोद्देश्यांशस्य प्रकृतौ स्मारकत्वसम्बन्धेनाग्नीषोमदेवतावृत्तेर्विकृतावनुपयुक्तान्यदेवताविधानेनारादुपकारकस्य सम्बन्धान्तरेण तद्रूपकारवृत्तित्वादतिप्रसङ्गवारणाय सम्बन्धै-

अस्तु वा व्रीहिपदे लक्षणा, तथापि लाघवादुपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यतां, न त्वपूर्वसाधनत्वम्। न च यागस्यापि विज्ञातोपायत्वेन प्रोक्षणादिव्यतिरेकेणापि जायमानत्वादानर्थक्यापत्तिः। यागत्वावच्छिन्नस्यापूर्वत्वावच्छिन्नस्येव जायमानत्वेऽपि विजातीययागत्वावच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात्। न हि आग्नेयत्वावच्छिन्नं प्रति काचित्सामग्री क्लृप्ताऽस्ति, येन तज्जन्यव्यक्तौ आग्नेयत्वाभिव्यक्तिर्भवेत्। प्रोक्षणादेरेव तु विधानबलेन तत्सामग्रीत्वात्, तद्व्यतिरेकेण तदुत्पत्तौ प्रमाणाभावेन न यागस्वरूपार्थत्वे आनर्थक्यं प्रोक्षणादीनाम्। अतएवारादुपकारकाणामपि यागस्वरूपार्थत्वे नानर्थक्यमितिप्राहुः।

यद्यपि तावद्विजातीययागसाधनत्वमेव प्रोक्षणादीनामुद्देश्यतावच्छेदकं, तथापि अपूर्वसाधनत्व इव वक्ष्यमाणरीत्या न तत्र व्रीहित्वादिकं प्रविष्टमितिश्यामाकेष्वपि तत्सत्त्वादूहसिद्धिरनिवार्यैव।

वस्तुतस्तु न विजातीययागसाधनत्वं तथा। विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात्तदवच्छिन्नं प्रति द्रव्यत्वावच्छिन्नस्य लोकत एव कारणत्वावगतेः। सामग्रीवशेन व्रीह्यादिद्रव्यं विनापि द्रव्यान्तरेण कदाचिद्विजातीययागव्यक्तीनामुत्पत्तौ बाधकाभावेनानर्थक्यस्य तदवस्थत्वात्। न च सामान्यसामग्र्या विशेषसामग्रीसहिताया एव कार्यजनकत्वनियमः। अन्यत्र तथात्वेऽपि प्रकृते तथा कल्पनायां प्रमाणाभावात्। तदेव यादृक् तादृक् होतव्यमिति लिङ्गानुपपत्तेश्च। अतएवानयैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वं व्रीह्यादिविधीनामुपपाद्यते

तदिदोपोद्घाततया किं प्रोक्षणावघातादीनामप्रवे शुद्धं निर्वधा-
मीत्यादावन्यादिपदानां च प्रकृतौ व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन
विधानं, ततश्च व्रीह्यन्यादिप्रयुक्तास्तेऽथवाऽपूर्वसाधनत्वावच्छिन्नो-
द्देशेन, ततश्चापूर्वप्रयुक्ता इति चिन्त्यते। व्रीह्यादिप्रयुक्तत्वे श्यामाके
चरौ सौर्ये वा व्रीह्यादीनामभावात्प्रोक्षणादीनां लोप एव न तूहः।
अपूर्वप्रयुक्तत्वे तु श्यामाकादीनामपि तद्रूपावच्छिन्नत्वात्तेष्वप्यूहः।
तत्र यद्यपि आरादुपकारकस्थले न श्रुतमुद्देश्यतावच्छेदकम्, तथापि
करणानुग्राहकाकाङ्क्षारूपेतिकर्त्तव्यताकाङ्क्षात्मकप्रकरणेन यागाङ्ग-
तयैव प्रयाजादिविधानाद्यागत्वमेवोद्देश्यतावच्छेदकम्। न त्वपूर्वं,
गमप्राधान्यापत्तेः। न चैतावता पारिभवत्वापत्तिः। अनुवादस्य
सति सम्भवे सन्निहितगामित्वेनाग्नेयादित्वस्यैवोद्देश्यतावच्छेदकत्वात्।
न वा अतिदेशोच्छेदः। अपूर्वविशेषार्थत्व इव आग्नेयाद्यर्थत्वेऽपि
तद्वत् कुर्यादित्यतिदेशेनाग्नेयस्थानापन्ने सौर्ये धर्मातिदेशोपपत्तेः।
अतस्ते यागप्रयुक्ता एव। तदा किन्तु वक्तव्यं यद्व्रीह्यादिसंयोगेनैव
प्रोक्षणादिश्रवणाद्व्रीहित्वादिकमेवोद्देश्यतावच्छेदकमिति।

न च व्रीहियागादिस्वरूपार्थत्वे धर्माणां आनर्थक्यम्। तेषामपि
अग्निवत्फलवत्त्वेन तदभावात्। न चाग्नीनामाधानव्यतिरेकेणोत्पत्तौ
प्रमाणाभावेन तदभावेऽपि व्रीह्यादीनां प्रोक्षणादिव्यतिरेकेणापि
जायमानतयाऽऽनर्थक्यापत्तिस्तदवस्थैवेति वाच्यम्। एतादृशानर्थक्य-
परिहाराय प्रोक्षणविशिष्टव्रीहिणामेव कल्पितवाक्यान्तरेण यागा-
र्थत्वस्यापूर्वार्थत्वस्य वा बोधोपपत्तौ निषादस्थपत्यधिकरणन्यायेन
व्रीहिपदे यवादिसाधारण्येनापूर्वसाधनत्वलक्षणायां प्रमाणाभावात्।

दिशा यागत्वस्याप्यारादुपकारकस्थले निमित्तत्वं प्रत्युक्तम्। अतो-बाधकाभावात् विध्यत्वेवोह्यः। यानि चात्र मूले वर्णकान्यनेकानि कृतानि, तानि पुनरुक्तत्वादनुपयुक्तत्वाच्चोपेक्षितानि। मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानीति ध्येयम्॥ ८॥१॥ १॥

सन्नकारे॥ अथ मूले सन्निपत्योपकारकेषु पूर्वमुक्तमप्यपूर्वार्थत्वं चिभिरेभिरधिकरणैराक्षिप्य समाधीयते। तत्रेह वाक्यसंयुक्ते अधिमाधिकरणद्वये च लिङ्गश्रुतिसंयुक्तयोरिति विवेकः। तदिह दर्शपूर्णमासप्रकरणे श्रुते प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीत्यादौ प्रोक्षणं नापूर्वार्थम्। वाक्येन तस्यावघातार्थत्वावगमसेन प्रकरणमात्रादपूर्वार्थत्वकल्पनानुपपत्तेः। न च निष्ठाप्रत्ययोक्तोलूखलमुसलोद्देशेनैव प्रोक्षणस्य व्रीहीन् प्रोक्षतीतिवत् विधानात्कथं वाक्येनापि तस्यावघातार्थत्वम्। द्वितीयावच्छिष्टया कर्मत्वस्य विधेयतयाऽनुक्तेः कर्मत्वस्य द्रव्योपसर्जनत्वप्रतीत्या तयोरुद्देश्यत्वानुपपत्तेः। अतश्च प्रोक्षणस्यानर्थक्यतदङ्गन्यायेनोलूखलमुसलयोरवतारेऽपि वाक्यादवघातोद्देशेनैव विधानम्। अस्तु वा उलूखलत्वादावेवावतारे प्रमाणाभावात् प्रोक्षणस्य यदश्रुत्या तदन्वयेऽपि तृतीयया अन्यसाधनीभूतयोरेव तयोः प्रतीतेः प्रोक्षणस्यापि यदुलूखलमुसलयोः कार्यं तदर्थत्वावगतेरवघातार्थत्वसिद्धिः। सर्वथा नापूर्वार्थत्वम्। एवं च नैवारश्चरुर्भवतीत्यादावपि नैवारप्रोक्षणादीनामवघातकोलूखलमुसलयोर्वाऽभावाद-मेषु न प्रोक्षणमितिप्राप्ते।

पूर्वाधिकरणोक्तरीत्यैवाघातस्वरूपे उलूखलमुसलस्वरूपे वाऽऽसम्बन्धापत्तेरपूर्वसाधनत्वलक्षणया अपूर्वार्थत्वात्प्रमाणाद्दृष्टोपपत्तिरित्यु-

प्रतिनिधिश्च* । अतो द्रव्यतत्संस्कारविषयाः सर्वे अपूर्वसाधनीभूत-विषया एव । व्यापकीभूतापूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकतोऽक्लृप्तत्वेन निरूढप्रतिनिध्यानापत्तेः । आरादुप-कारकाणामप्यनयैव दिशा अपूर्वजननानुकूलयोग्यतासंपादकत्वं न तु यागार्थत्वम् । आनर्थक्यापत्तेः । यागनिष्ठयोग्यतासंपादकत्वाच्च न प्राधान्यापत्तिरङ्गत्वविघातो वेत्यादि बुध कौस्तुभे ।

यत्तु व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः । शाब्दबोधे लक्षणाया अनङ्गीकरणात् । पश्चात्तु निषादस्थपतिन्यायेन प्रोक्ष-णादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थत्वकल्पनमित्यु-क्तम् । तन्न प्रोक्षणादेस्तज्जन्यादृष्टस्य वा व्रीहित्वावच्छिन्नसाध्यकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वाच्छाब्दबोधस्यैवानुपपत्तेर्लक्षणाङ्गी-करणात् प्रत्युक्तम् । अतो व्रीह्यादिपदेनापूर्वसाधनत्वावच्छिन्न-लक्षणात्तदुद्देशेनैव प्रोक्षणादिविधिरिति ते अपूर्वद्वारा एवेति सिद्धं श्यामाकादावूहः । न चैवमपि धर्मानुष्ठाने व्रीहित्वादीना-मपि अनुष्ठापकतया निमित्तत्वादितरो तदभावे भेदनाभाव इव धर्मलोपापत्तिः । यच्छब्दाद्यभावेन व्रीहित्वादीनां निमित्तत्वे प्रमाणाभावात् । वक्ष्यमाणरीत्या उद्देश्यतावच्छेदककोटावप्रवेशेना-नुष्ठापकत्वस्याप्यभावाच्च । अतएवापूर्वस्यैव तत्त्वान्निमित्तत्वम् ।

वस्तुतस्तु फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धत्वस्यानुष्ठा-पकत्वे प्रमाणाभावात् फलीभूतापूर्वमपि न निमित्तम् । अनयैव च

* प्रतिनिधिश्च,—इतः नास्ति ख्या० पुस्तके ।

व्यापारवद्दिनिगमनाविरहेण साधनतावच्छेदकस्यापि विवक्षा। इतरथा यवाद्यावतिप्रसङ्गापत्तेः। अथवा साधनताया अवच्छेदकं विना निरूपयितुमशक्यत्वादेव विवक्षितं तत्। न तु व्यापारः। तं विनापि साधनतायाः सत्त्वेन निरूपयितुं शक्यत्वात्। अतश्च नखेषु अवघातत्वाद्यभावाच्च प्रोक्षणम्। एवं च यद्यपि अतश्चोलूखलत्वादेरपूर्वसाधनत्वलक्षणौपयिकतयोपयोगित्वात् अविवक्षा स्यात्, तथाप्यन्तरालिकानां साधनतावच्छेदकानां यागत्वप्रभृतीनां विवक्षा दुर्निवारैवेतिप्राप्ते।

अपूर्वनिष्ठकार्यतानिरूपितकारणतादिलक्षणायामतिप्रसङ्गपरिहारार्थं मध्यवर्त्तितया उपस्थितव्यापारस्यैव व्यापारसत्त्वे विवक्षा न तु साधनतावच्छेदकस्य, तस्य कारणतायाः पश्चादुपस्थितेः। अतएव यत्र मध्ये यागादौ न व्यापारस्तत्र कारणताया एव उद्दयादिक्रया विवक्षणम्। न तु तदवच्छेदकस्य गौरवात्। उपपादितश्चैतत् कौस्तुभे तेषामर्थाधिकरणे विस्तरेण। अतोऽवघातत्वादेरविवक्षितत्वान्नखेषु प्रोक्षणसिद्धिरिति।

। एवं वा। एवं तावदुद्देश्यस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणेत्युक्तम्। तत्र किं प्रधानजन्यापूर्वमेव लक्ष्यते उताङ्गजन्यमपीति चिन्तायां, यत्र तावदवघातपेषणादौ* न व्रीह्यादिजन्यमध्येऽपूर्वान्तरं, तत्र प्रधानजन्योत्पत्त्यपूर्वसाधनत्वलक्षणा अविवादैव। यत्र तदृष्टार्थसन्निपत्योपकारिषु प्रोक्षणदीक्षणीयादिषु स्वजन्या-

---

* प्रोक्षणादौ,–इति सो॰ पुस्तके पाठ।

त्वम्। तदनुपपन्नम्। आक्षेपप्रकारस्याधिकस्याभावेन पौनरुक्त्यापत्तेः। किञ्च प्रोक्षणं न तावदवघातोद्देशेन विधीयते। उलूखलमुसल-विशेषणत्वेनैव प्रतीतेः। न ह्यस्य प्रधानक्रियान्वयो युगपच्चोऽपि तु निष्ठाविधिक्रियान्वय एव। नाप्यवघातसाधनीभूतोलूखलमुसलो-द्देशेन, विशिष्टोद्देशापत्तेः। उलूखलमुसलयोर्विशिष्टयोः शुद्धयोर्वा उद्देश्यत्वे एकप्रसरताभङ्गापत्तेश्च। अतो नैवं पूर्वः पक्षः सम्भवी।

अपि तु विध्यन्तरप्राप्तावघातानुवादेनार्थात् सम्भवत्प्राप्तिकयो-रपि उलूखलमुसलयोः पूर्वप्रवृत्तस्वीकारेण प्रोक्षणविशिष्टयोर्विधा-नार्थिकेन विशेषणविधिनोलूखलमुसलोद्देशेन प्रोक्षणविधिर्वाच्यः। ततश्चोलूखलमुसलत्वेनोद्देश्यताऽपूर्वसाधनत्वेन वेति विचारः कार्यः। सोऽपि च तदा भवेद्यदि सकलपौरोडाशिकपात्रसाधारण्येन प्रोक्षण-विधिर्न स्यात्। न त्वेतदस्ति। उत्तानानि पात्राणि प्रोक्षतीति विध्यन्तरेण तस्य प्राप्तत्वात्। न हि मीमांसकमते पौरोडाशिक-पात्रप्रोक्षणाभावः। मन्त्राभावस्त्वेव परं तृतीये साधनात्। अतः प्रकारान्तरेण प्राप्तस्यार्थस्यायमनुवादः। अभ्युदयशिरस्त्वतयोलूख-लमुसलविधानार्थः। समासोपात्तत्वाच्च नानेकविधेयता दोषाय।

अतएव विचारोवाच्य'। पात्रप्रोक्षणविधिनैवोलूखलमुसलयोरपि प्रोक्षणम्। तत्तु पूर्वाधिकरणन्यायेनैवोलूखलमुसलनिष्ठापूर्वसाध-नत्वप्रयुक्तम्। तयोश्च तत्साधनता न साक्षादपि तु यागपुरोडाश-व्रीहितदवघातद्वारिकैव प्रयोजकत्वापरपर्याया। तत्र चातिप्रसङ्ग-परिहारार्थं साधनतावच्छेदकस्य यागत्वपुरोडाशत्वव्रीहित्वावघा-तत्वादेरपि विवक्षेत तत्तद्व्यापारकसाधनतामात्रस्यैवेति चिन्तायाम्।

पक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धवेधातव्याधर्मा एवेति प्रयोजनमुक्तम्। तन्न, पूर्वपक्षवत्सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात्। यदि तु स्थानापत्त्यतिदेशापेक्षया चिविधातिदेशस्यापि बलवत्त्वस्याश्रये साधितत्वान्नामातिदेशेन प्रसिद्धवेधातव्याधर्मा एवेत्याशङ्क्येत, ततस्तत्पूर्वपक्षेऽपि तुल्यम्।

वस्तुतस्तु नेयं वेधातव्या प्रसिद्धवेधातव्यातः कर्मान्तरम्। प्रत्ययस्त्वनुपादेययोगे आख्यातसामानाधिकरण्याभावात्। अतः प्रसिद्धायाः सधर्मकाया एव वेधातव्यायाः यजमानसंस्कारार्थत्वेन विधानाद्धर्माकाङ्क्षाविरहेण न स्थानापत्त्यतिदेशप्रसक्तिः ॥ ८ ॥ १ ॥ २ ॥

फलदेवतयोश्च ॥ पूर्वोक्ताया अपूर्वसम्बन्धित्वेनोद्देश्यतायाः कश्चित् आक्षिप्य समाधानार्थमिदमधिकरणम्। दर्शपूर्णमासयोरगन्म स्वः सुवरगन्मेति स्वर्गप्रतिपादको मन्त्रोऽग्नेरहमुज्जितिमनूज्जेषमित्यादिश्चाग्न्यादिप्रकाशको मन्त्रः श्रुतः। तयोश्च स्वर्गत्वाग्नित्वादिनैव स्वर्गाग्न्योर्लिङ्गकल्प्यश्रुत्या उद्देश्यता। उपस्थितत्वात्। न तु अपूर्वसम्बन्धित्वेन। मुख्य एवार्थे विनियोगस्यौत्सर्गिकतया साधितत्वेन तेन रूपेण स्वर्गादिपदैरनभिधानात्। न च स्वर्गादिस्वरूपे आनर्थक्यं, साध्यात्मकफलरूपस्य तस्यानिष्पन्नोपायत्वाविशेषेण* तदर्थत्वे वैयर्थ्याभावात्। मन्त्रजन्यप्रकाशनव्यतिरेकेणेतराङ्गयुक्तप्रधानप्रमाणादेवोत्पत्तिसिद्धेरानर्थक्यमपूर्वेऽपि तुल्यम्। प्रयोगविधिना सर्वाङ्गसाहित्यावगतेर्मन्त्रजन्यप्रकाशनव्यतिरेकेणापूर्वानुत्पत्तिरिति तु स्वर्गेऽपि तुल्यम्। एवं

---

* तस्य निष्पन्नोपायत्वाविशेषेण,—इति ख० पुस्तके पाठः।

द्दष्टमस्ति, तथापि तदङ्गानामुत्पवनादीनां, यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादित्यादीनां च स्वराणां, दर्शपूर्णमास-ज्योतिष्टोमाद्युत्पत्त्यपूर्वसाधनत्वलक्षणया तदर्थत्वमेव । न तु प्रोक्षण-दीक्षणीयादिजन्योत्पत्त्यपूर्वार्थत्वम् । तस्मिन्नपि फलवत्त्वाभावेनान-र्थक्यादितिप्राप्ते ।

साक्षात्फलवत्त्वाभावेऽपि परम्परयाऽग्निवत्फलवत्त्वोपपत्तेरङ्गा-पूर्वाणामप्यनिर्ज्ञातोपायत्वेन स्वाङ्गाभावे निष्पत्तौ प्रमाणाभावा-दङ्गापूर्वस्वरूपेऽप्यानर्थक्याभावेन तत्साधनत्वलक्षणायामपि बाधका-भावात् । प्रधानापूर्वार्थत्वादिनापि चाङ्गापूर्वाणामतिप्रसङ्गपरि-हारार्थं द्वारत्वस्यावश्यकत्वेन तदर्थतयैवोपपत्तौ प्रधानापूर्वपर्यन्तग-मने प्रमाणाभावाल्लक्षितलक्षणाप्रसङ्गाच्च झटित्युपस्थितदीक्षणीया-द्यपूर्वसाधनत्वमेव दीक्षणीयादिपदैर्लक्ष्यत इति ते धर्मास्तत्प्र-युक्ता एव ।

अतएवारादुपकारकाङ्गानामपि अभिक्रमणयूपादीनां प्रयाज-दैक्षादिजन्यापूर्वार्थत्वमेव न तु दर्शज्योतिष्टोमाद्यपूर्वार्थत्वम् । अव्य-हितापूर्वेऽप्यानर्थक्याभावात् । प्रयोजन, ज्योतिष्टोमविकारानङ्गभूत-पशुषु मेध्यादिद्रव्यकेयूपाकरणादीनामूहाभावादकरण पूर्वपक्षे, ज्योतिष्टोमापूर्वस्थानापन्नापूर्वाभावेन प्राकृतकार्याभावात् । सिद्धान्ते तूहइति द्रष्टव्यम् । एव दैक्षधर्मातिदेशोऽपि पूर्वपक्षप्रयोजन-मतुसन्धेयम् ।

यत्तु भाष्यकारेणाग्नेषे चेधातव्या दीक्षणीया भवतीति वच नेन दीक्षणीयाकार्यं यजमानसंस्कारे विहिताया चेधातव्यायां पूर्व

त्वादिनोद्देश्यता, अतिप्रसङ्गात्। नापि दर्शपूर्णमासफलोपहितस्वर्गत्वेन। तत्फलोपहितस्यापूर्वद्वारकत्वेन* गुरुभूतत्वात्। किं तु विजातीयापूर्वसम्बन्धित्वेनैव। अतएव सन्निपत्योपकारकत्वेऽपि स्वर्गप्रत्यासन्नत्वादपूर्वमपि परमापूर्वमेव, न त्ववान्तरापूर्वमुद्देश्यतावच्छेदककोटिप्रविष्टम्। स्वर्गत्वस्य तु व्रीहित्वादिवद्देवाप्रवेशो गौरवात्। अतएव मन्त्रलिङ्गकल्प्या श्रुतिः, अनेन मन्त्रेण शक्तिजन्यबोधद्वारा परमापूर्वसाध्यं सत्कुर्यात्,—इति। शक्तिजन्यबोधस्य वस्तुतः स्वर्गत्वप्रकारः स्वर्गविशेष्यक एव द्वारतायां शक्तिजन्यबोधत्वेन प्रविष्टः। न तु अपूर्वसम्बन्धित्वप्रकारकः। तथात्वे शक्तिजन्यत्वानुपपत्तेः।

अतएव ब्रह्मवर्चसादौ द्वाराभावात्स्वर्गपदलोपे शक्तिजन्यबोधसिद्ध्यर्थं ब्रह्मवर्चसपदोहः। इतरथा प्रकृतावेव लक्षणया स्वर्गपदेनापूर्वसम्बन्धित्वप्रकारकबोधजनने ब्रह्मवर्चसस्यापि तेनैव रूपेण बोधोपपत्तेरूहानुपपत्तिः। अत एव च पुत्राद्यर्थदर्शपूर्णमासप्रयोगेऽपि मन्त्रलोपः। तत्रापूर्वसाध्यफलस्य स्वर्गत्वेन बोधानुपपत्तेः। अत एव च मुख्ये एवार्थे मन्त्राणां विनियोग इत्यप्युपपन्नम्। शक्तिजन्यबोधेन चापूर्वसाध्ये ज्ञाततायाः आधानात्तस्य सत्कार्यत्वं उद्देश्यतापर्यायं नानुपपन्नम्। तादृशबोधस्य च स्वजन्यश्रद्धाजन्यादृष्टद्वारा परमापूर्वं एव फलोत्पत्त्यनुकूलयोग्यताजननात्फले उपयोगो न तु फलोत्पादकत्वम्। तथात्वे समप्राधान्यापत्त्या प्रकरणबाधापत्तेरित्याद्यन्यत्र विस्तरः।

* नापि दर्शपूर्णमासोद्देश्यस्वर्गत्वेन। तस्यापूर्वद्वारकत्वेन,—इति मो॰ मुद्रिते पाठः।

देवतायामपि मन्त्रार्थवादेतिहासादिवशात्तत्यपूर्वं तज्जनितदेवताप्रसादादेव फलोत्पत्त्यवगतेः प्रसादस्य च मन्त्रजन्यप्रकाशनव्यतिरेकेणोत्पत्तौ प्रमाणाभावात्तदर्थत्वम् । अतएव लिङ्गकल्प्यविनियोगविधौ उपस्थितत्वात्प्रसादाश्रयीभूताग्नेरेव तत्त्वेनोद्देश्यता न त्वपूर्वीयदेवतात्वेनेति न सौर्यादौ ब्रह्मवर्चससूर्यादिपदोद्दतिं मानं ।

न तावत्स्वर्गेषामेवावघातादीनामपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शङ्कितुं शक्यं, व्रीह्यादिपदेन प्रत्यासन्नतया तेषामर्थाधिकरणन्यायेनाग्नेयाद्युत्पत्त्यपूर्वसाधनस्यैव लक्षणात् । एवमपूर्वाङ्गीकारेण देवताप्रसादार्थत्वमवघातादीनां निराकर्त्तव्यम् । देवताप्रसादस्यापूर्वजन्यत्वेनाप्रत्यासन्नत्वात् । उदाहृतमन्त्रस्थलेऽपि च न स्वर्गमन्त्रस्य स्वर्गार्थत्वसम्भवः । नह्रि किं दर्शपूर्णमासजन्यस्वर्गव्यक्ति प्रत्येव मन्त्रजन्यप्रकाशनस्योपयोग उत स्वर्गव्यक्त्यन्तरं प्रतीति ।

नाद्यः । तयात्वे दर्शपूर्णमासाङ्गत्वाभावात् सामान्यसम्बन्धबोधकप्रमाणाभावेन लिङ्गकल्प्यश्रुतेरेवाकल्पनेन स्वर्गार्थत्व एव प्रमाणाभावात् । न च स्वर्गाधिकार एव सामान्यसम्बन्धबोधक प्रमाणम् । स्वर्गस्य यागाद्युपकरणेनैव निराकाङ्क्षतया तदधिकारस्याकल्पकत्वात् । न च मन्त्रस्य प्रयोजनाकाङ्क्षयैव लिङ्गेन श्रुतिकल्पनं, वाचस्तोमे विनियोगेन निराकाङ्क्षत्वात् । अत एव लिङ्गमात्रेणापि न श्रुतिकल्पनम् । पाके समर्थस्यापि दैवदत्तस्याकाङ्क्षाऽभावे विनियोगादर्शनात् ।

नाद्यः । तयात्वे हि दर्शपूर्णमासजन्यस्वर्गव्यक्तीनां न स्वर्ग-

भावेऽपूर्वसत्त्वे सुतरां प्रमाणाभावः। यद्यपि देवताया अभिप्रेयमाणत्वेऽप्यपि तस्य ब्राह्मणाय गां ददातीत्यादौ ब्राह्मणस्य फलदातृत्वासम्भवेन उपयोगाभावात्प्राधान्यासम्भवेन प्राधान्यव्यभिचारेण तत्कल्पनानुपपत्तिः। प्रत्युत भावार्थाधिकरणन्यायेन यागकरणिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयाद्देवताया अपि संस्कार्यत्वे उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेर्देवताया एव यागाङ्गत्वम्।

तथापि यागस्य फलजनकत्वे व्यापारापेक्षायामश्रुतापूर्वकल्पनापेक्षया राचिसत्रवदर्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्रयुक्तत्वसिद्धिः। प्रसादस्य च विग्रहभोगादिव्यतिरेकेणानुपपत्तेरर्थवादाद्यनुसारेण विग्रहभोगादिकल्पनेऽपि न दोषः इतिप्राप्ते।

प्रसादो हि यदि इच्छारूपस्तदा तत्तेच्छात्वेन तत्फलं प्रति कारणत्वे अतिप्रसङ्गापत्तेरवश्यं दर्शादिकर्तुस्तत्फलं भवत्वित्येवमाकारिकेच्छात्वेन तद्वाच्यम्। तथाच कारणतावच्छेदके गौरवम्। दर्शादिजन्यफलभोगेऽपि तत्कर्तृत्वानपायादन्यकृतदर्शपूर्णमासजन्यप्रसादादन्यस्य फलापत्तिश्च। अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तिकर्तुः सा फलव्यक्तिर्भवत्वित्येवमाकारिकेच्छात्वेन कारणत्वं वाच्यम्। तथा चानेककार्यकारणभावकल्पनं कारणतावच्छेदके गौरवञ्च। किञ्चैतादृशः प्रसादो यदि ब्राह्मणतर्पणात्, तदा यागानां नष्टत्वादेवोत्पत्त्यनापत्तिः। यदि तु तत्तद्यागेभ्योऽथवान्तरप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवत्वित्याकारकाद्व्यन्ते, तदा देवानाममोघेच्छत्वस्यार्थवादेषु प्रतिपादनाद्देवादग्नी-

एवमन्यादिप्रकाशकमन्त्रेष्वपि स्वतन्त्राग्निप्रकाशनार्थत्वस्यानुपपुक्तत्वात् सामान्यसम्बन्धबोधकप्रमाणाभावाच्च पूर्ववत्तत्कल्पनानुपपत्तेरवश्यमाग्नेयसम्बन्ध्यग्निप्रकाशनार्थत्वस्यैव कल्पनीयत्वादाग्नेयस्वरूपे चानर्थक्येन प्रत्यासन्नतया तदुत्पत्त्यपूर्वीयदेवतात्वेनैवाग्न्यादेरुद्देश्यत्वकल्पना। न तु प्रसादाश्रयत्वेन, प्रसादस्य परमापूर्वजन्यत्वेन विप्रकृष्टत्वात्तद्देव प्रयोजकत्वात्नुपपत्तेः। अतएव गाग्नित्वादेरपि उद्देश्यतावच्छेदककोटिप्रवेशो गौरवात्।

एवं च प्रसादाश्रयत्वस्याप्युद्देश्यतावच्छेदककल्पनेऽपि ऊहसिद्धिरप्रत्यूहैव। परन्तु प्रसादसामान्याश्रयत्वस्याग्निहोत्रादावतिप्रसङ्गान्नोद्देश्यतावच्छेदकत्वम्। आग्नेयापूर्वजन्यप्रसादाश्रयत्वापेक्षया तदीयदेवतात्वस्य लघुत्वाच्च। अतश्चाचायनेन मन्त्रेण शक्तिअन्वयबोधद्वारा आग्नेयोत्पत्त्यपूर्वीयदेवतां संस्कुर्यात्,—इति लिङ्गकल्प्यश्रुति कल्पयित्वा ऊहसिद्धिः पूर्ववदुपपादनीया। उपयोगोऽपि निर्वापादिमन्त्रेषु स्मृतिद्वारेण त्यागकाले झटिति देवतास्मृतिद्वारोत्पत्त्यपूर्वानुकूलयोग्यतासम्पादन एवेत्यन्यत्र विस्तरः ॥ ८ ॥ १ ॥ ३ ॥

देवतायाः॥ एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम्। इह तु तदनङ्गीकृत्य देवताप्रसाद एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गान्निराक्रियते। तत्र देवतायाः सम्प्रदानत्वात्तस्य च कर्मकारकापेक्षयाऽप्यभिप्रेयमाणत्वेन प्रधान्याद्यागस्य पूजारूपस्य तत्संस्कारत्वावगतेस्तस्याश्चोपयोगापेक्षायां स एवैनं भूति गमयति, इन्द्र एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्याद्यर्थवादानुसारात्प्रसादाया. फलदातृत्वावगतेर्यागस्यैव फलजनकत्वे प्रमाण-

तेष्वपि न स्तुतिलक्षणातोऽन्या काचिल्लक्षणा। अस्तु वा मा, तथापि विधौ गौरवापत्तेः सा न दोषाय।

न चैवं विध्यनपेक्षितत्वादार्थवादिकप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्याप्यर्थवादस्यासति प्रमाणान्तरविरोधे स्वशक्यार्थेऽपि प्रामाण्याभ्युपगमाद्विग्रहभोगप्रसादादिस्वीकारादपूर्वान्ते एव प्रसादस्वीकरणमस्त्विति वाच्यम्। अन्यतात्पर्यकस्य वाक्यस्यान्यत्र प्रामाण्यायोगात्। अन्यथा शुद्धपुरुषतात्पर्यके यष्टीः प्रवेशयेत्यादौ, परान्नभोजननिवृत्तितात्पर्यके विषं भुङ्क्ष्वेत्यादौ च प्रमाणान्तराविरोधात्स्वशक्यार्थेऽपि प्रामाण्यापत्तिः। अतः सकृदुच्चरितस्य शब्दस्यानेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां शक्यार्थे प्रामाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः। न च तथापि शक्यार्थविशिष्टप्राशस्त्ये एव लक्षणयार्थवादानां तात्पर्याद्विशेषणांशेऽपि प्रामाण्योपपत्तिः। लक्ष्यतावच्छेदकगौरवापत्तेः। अन्यथा व्रीहित्वादेरपि विवक्षापत्त्या ऊहानापत्तिः। अतः कथमपि न विग्रहादिस्वीकारः। किन्तु शब्दमात्रं देवता, अर्थस्तु प्रातिपदिकानुरोधाच्चेतनोऽचेतनो वा कश्चित्स्वीक्रियते न तु विग्रहादिमान्। उपासनादौ परं ध्यानमात्रमाहार्यमस्त्विति जैमिनिमतनिष्कर्षः। मम त्वेवं वदतोऽपि वाणी दुष्यति। तत्र हरिस्मरणमेव शरणम् ॥ ८ ॥ १ ॥ ९ ॥

द्रव्यसङ्ख्या॥ अत्र सूत्रे द्रव्यसङ्ख्याहेतुसमुदायानां यत्र श्रुत्या उद्देश्यता तत्र व्रीहित्वादिनैव न त्वपूर्वसाधनत्वेन, प्रकरणेन श्रुति-

सोमीयाचकरणेऽपि फलापत्तिः । अथैतस्यार्थवादत्वमेवाभ्युपगम्य तादृशमहाप्रमादस्य विजातीयेच्छात्वेनैवापूर्ववादिन इव विजातीय-फलत्वावच्छिन्नं प्रति कारणता । अवान्तरप्रमादानाञ्च विजातीय-गत्यादिच्छात्वेनैव महाप्रमादं फलं च प्रति कारणता । कारणता-वच्छेदकसम्बन्धश्च स्वजनकयागसमवायित्वं, कार्यतावच्छेदकसम्बन्धश्च धर्माणि समवायः । नातः कर्त्रन्तरे फलापत्तिः । अवान्तरप्रमाद-महाप्रमादयोः परस्परं कार्यकारणभावे प्रत्यासत्तिस्तु उभयत्र स्वजनकयागसमवायित्वमेव । देवतानिष्ठमेव वा तत्कार्यकारणभाव-मङ्गीकृत्य समवाय एव प्रत्यासत्तिरिति चेत् ।

सम्बन्धगौरवस्यैव दोषत्वात् । यागनिष्ठकारणतानिरूपित-कार्यताघटकसम्बन्धस्य भवता निर्वक्तुमशक्यत्वाच्च । अस्माकं तु सर्वकार्यकारणभावानां समवाय एव सम्बन्ध इति लाघवम् । एतेन प्रमादो नाम गुणविशेष इत्यपि पक्षः प्रत्युक्तः । न चास्य गौरवस्यार्थवादिके प्रमादाख्ये व्यापारे सिद्धे फलमुखत्वमिति वाच्यम् । अर्थवादस्य ज्ञापकतायामुपपत्तौ तत्कारकत्वकल्पनाभावात् । व्यापारापेक्षायां रात्रिसत्रन्यायेन तदर्थकपदान्तरकल्पनया तस्य व्यापारत्वकल्पने च व्यापारतया कारणतापरिच्छेदेन तस्य सम्बन्धान्तरपूर्वकसाक्षात्सम्बन्धगौरवस्य फलमुखत्वानुपपत्तेः । अतो-ऽपि नाकपृष्ठादिप्रतिपादकाम्नाये स्वर्गस्य नादिमत्त्वेऽपि प्रमादादिविशिष्टदेवताप्रकाशनात् स्वर्गो विशेषादि प्रकारमन्त्रा-दृष्टार्थमात्रानुपपत्तेः । वैदिकपदप्रयोगस्य तादृशार्थो वा स्वर्गो देवस्वर्गम् । अर्थवादाय तेनैव सम्बन्धेन ज्ञापकत्वम् इति

योगिशक्यप्रतिपादकत्वेनापि चरितार्थत्वान्न विवक्षा । अतएव तत्तद्व्यापारिकायाः विजातीयापूर्वसाधनताया एव लक्षणेति कौस्तुभे स्पष्टम् । तत्तद्व्यापारकसाधनतात्वावच्छिन्नसाधनताया एव लक्षणाच व्रीहियवनिष्ठकारणताया गुणादिप्रमाणेन भेदेऽपि यवसाधारण्यलाभोऽपीत्यपि तत्रैव व्यक्तम् । अतश्च व्रीहित्वादेरविवक्षितत्वाच्छुक्लनीवारादिपक्षो विकृतौ ।

एवं यद्यपि नापूर्वसाधनत्वं व्रीहीनवहन्तीतिवत्पूर्वप्रमित स्ववाक्य एव तु संस्कारविशिष्टस्य व्रीह्यादेः साधनताविधानं, यथा प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादौ तत्समानजातीयवाक्यान्तरे वा । तथापि प्रोक्षणविशिष्टस्य व्रीहित्वविशिष्टस्य च विधेयक्रियाविशेषणत्वेन विधौ कृते पश्चादरुणैकहायनीन्यायेन परस्परान्वयात्कृतौ तज्जातीयस्य प्रोक्षणेऽपि विकृतौ तज्जातीयलोपेऽपि तत्स्थानापन्नद्रव्यान्तर एव प्रोक्षणलाभात्सिध्यति प्रोक्षणं प्रति विशेषणविधिवेलायां अपूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वम् । लक्षणा परं न तथास्ति, व्रीहिपदेन व्रीहित्वस्यैवाभिधानात् । अपूर्वसाधनत्वस्य कप्रत्ययेनाभिधानात् ।

एवं यद्यपि संस्कारविध्युत्तरं तच्छब्देन संस्कृतस्य विनियोगो-यथा तप्ते पयसि इत्यादौ, तथापि संस्कारवाक्ये पयस्त्वसमानाधिकरणधर्मावच्छिन्नोद्देशेनैव दध्यानयनविधिः । न तु पयस्त्वावच्छिन्नोद्देशेन । आनर्थक्यात् । स च धर्मं उत्पत्तिवाक्ये दृष्टसामान्यमिव सामान्यत एव पयःपदेन प्रथमं प्रतीयते । पश्चाच्च तच्छब्देन पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वे प्रमिते स धर्मोऽपूर्वसाधनत्वरूप-

यद्वीचायोगादित्याशङ्क्य स्वरूपे आनर्थक्यापत्तेरपूर्वसाधनत्वेनेति सिद्धान्तितम् । तत्र व्रीहीन् प्रोक्षतीति द्रव्योदाहरणस्य चतुर्होता पौर्णमासीमिति समुदायोदाहरणस्य च कथञ्चित्सम्भवेऽपि मन्त्रोदाहरणस्य चैनं परिधीनिति मन्त्रस्यागन्म सुवरिति मन्त्रवदपूर्वसाधनीभूतपरिधीयत्ताप्रकाशनार्थत्वस्य सिद्धत्वादनुदाहरणत्वमिति वार्त्तिककारेणैवोक्तम् ।

तथा हेतूदाहरणेऽपि । यत्तु शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति अन्नकरणहेतुना तस्य व्याप्यत्वावगमाद्भाव्यस्य च सर्वत्र प्राधान्यदर्शनादन्नकरणोद्देशेन होमः संस्कारकतया विधीयते इत्याशङ्क्य तृतीयया होमं प्रति शूर्पस्य करणत्वावगतेस्तेन ह्यन्नं क्रियत इत्यस्य चार्थवादत्वाद्धोमोऽयमारादुपकारकोऽपूर्वार्थ इति विचारितम् । तद्भाष्यस्यापि जुह्वादेः क्रतुं प्रति प्राधान्यादर्शनादर्थवादत्वस्य च हेत्वधिकरणे स्थापितत्वादेतद्विचारस्योदाहरणानुपयोगित्वाच्चोपेक्षितम् । किञ्च सर्वस्यैवास्य विचारस्याद्याधिकरणेन गतार्थतेत्यन्यथा वर्ण्यते ।

यद्यपि यज्ञकर्मेतिसूत्रेण सन्निपत्योपकारकमात्रे अपूर्वसाधनत्वलक्षणा सिद्धा । संस्कारे चेतिसूत्रेण चान्तरालिकानां त्यागत्वादिकारणतावच्छेदकानामविवक्षा सिद्धा । तथापि श्रुतस्य व्रीहित्वादेः कारणतावच्छेदकस्य त्यागे प्रमाणाभावः । न च युगपद्वृत्तिद्वयविरोधः । अपूर्वसाधनीभूतव्रीहित्वावच्छिन्नस्यैव लक्षणयोद्देश्यत्वाङ्गीकारात् । अतस्तादृशस्य नीवारादावसत्त्वान्नोद्देश्यसिद्धिरितिप्राप्ते ।

लक्ष्यतावच्छेदके गौरवापत्तेः श्रुतस्य व्रीहित्वस्य च लक्षणोप-

कारेण स्वराशब्दस्यैव विशेषणं यज्ञशब्दः। तथापि प्रकृतत्वाद्भागोयज्ञसम्बन्ध्येव।

आवश्यकं चेद् सिद्धान्तिनोऽपि। अग्नीषोमीयावधिकयज्ञप्राग्भागवर्तिपदार्थत्वस्यैव तन्मते उद्देश्यतावच्छेदकत्वात्। तत्र च पदार्थानामनुक्तेर्लाघवाच्चाग्नीषोमीयावधिकयज्ञप्राग्भागत्वमेवोद्देश्यतावच्छेदकम्। तदवच्छिन्नोद्देशेनोपांशुत्वविधिः। भागे चोपांशुत्वस्य साक्षात्सम्बन्धात्तदारम्भकपदार्थाङ्गमन्त्राणां द्वारत्वं योग्यताबललभ्यम्। उद्देश्यस्य च भागस्य स्वरूपे आनर्थक्ये प्रसक्ते भागजन्यापूर्वसद्भावे प्रमाणाभावाद्दीक्षणीयावाङ्नियमन्यायासम्भवेन भागसम्बन्धियज्ञजन्यपरमापूर्वसाधनत्वमेव भागनिष्ठं लक्ष्यत इति परमापूर्वप्रयुक्तमुपांशुत्वम्। एवं चोपांशुत्वस्य दृष्टार्थत्वं सम्पद्यते। अग्नीषोमीयावधि उपांशुकरणे श्रमाभावेन सौत्येऽहनि मङ्कर्तव्यपदार्थानामविशेषेण करणात्। एवं च तत्तत्पदार्थधर्मत्वाभावात्तद्भागारम्भके विकृतौ अपूर्वेऽपि पदार्थे दर्विहोमादौ उपांशुत्वस्योदः। इतरथा तत्तत्पदार्थावान्तरापूर्वप्रयुक्तत्वे अप्राकृतकार्यापत्त्वे वेदान्तरीये स्वातिदेशरहिते च तस्मिन्नुपांशुत्वस्य कथमप्राप्तेः।

यत्तु भाष्यकारेण मासाग्निहोत्रे तद्भागारम्भके उपांशुत्वस्योह इति प्रयोजनमुक्तं, तत्रामातिदेशप्रापितस्य विरुद्धस्याविरुद्धस्य वा स्वरस्य सत्त्वे चोदकाल्लिङ्गातिदेशप्रापितोपांशुत्वप्राप्त्यनुपपत्तेरुपेक्षितम्। यदपि वार्त्तिकादौ पुरस्तादुपसदां सौम्येन चरन्तीत्यादौ उपांशुत्वोह इत्युक्तम्। तदपि सौम्यमात्रपुरस्कारेण कल्पितस्यातिदेशस्य सामान्यविहितोपांशुत्वातिदेशापेक्षया प्राबल्यादुपेक्षितम्।

इति प्रतीयते। तत्र च पयःपदस्य लक्षणेति पश्चादवगम्यत इति न कश्चिद्विरोधः।

वस्तुतस्तु यद्यपि सप्तमीश्रवणात्तापविशिष्टपयोऽधिकरणकदध्यानयनस्य विहितस्य प्रयोजनापेक्षायां उद्देश्यवाचकं पदमनुमीयते, तथापि मन्त्रवर्णाद्यनुरोधादवस्थाविशेषविशिष्टपयोवाच्याभिलापदसमभिव्याहृततच्छब्दबलेन पयस एवोद्देश्यत्वावगतेस्तन्निष्ठविजातीयापूर्वसाधनत्ववाचिपदस्यैव कल्पनात् नात्र लक्षणापीति ध्येयम् ॥ ८ ॥ १ ॥ ४ ॥

देशबद्धम्॥ सोमे, क्रूरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्तीति श्रुतम्। तत्रोपांशुत्वं किं ज्योतिष्टोमसम्बन्ध्यग्नीषोमीयप्राग्भागधर्मः सन्तदीयपरमापूर्वप्रयुक्तम्, उताग्नीषोमीयप्राग्भागवर्त्तितत्तत्पदार्थधर्मः सन् तत्तज्जन्यावान्तरापूर्वप्रयुक्तमिति चिन्तायाम्।

विधेये उपांशुत्वे उद्देश्यसमर्पकस्तावत्तच्छब्द इत्यविवादम्। स च पूर्वप्रकृतम् अग्नीषोमीयप्राग्भागमेव परामृशति न तु पदार्थान्। प्राचीनशब्दस्याहृत्यधिकरणन्यायेन प्राग्भागमात्रवाचित्वात्। एकवचनप्रयोगेन भागस्यैव तदुक्तस्य तच्छब्देन परामर्शाच्च। अतएवैकेनैव तच्छब्देनोद्देश्यसमर्पणात्पूर्वपक्षे सिद्धान्ते वाऽग्नीषोमीयादेर्विशेषणत्वेऽपि न विशिष्टोद्देशः। तत्र च भागं प्रति अग्नीषोमीयोऽवधित्वेन विशेषणं, यज्ञश्च प्रयोगद्वारा सम्बन्धित्वेन। अतएव यज्ञपदं न क्रूराशब्दविशेषणम्। अप्रवृत्तिविशेषकरत्वापत्तेः। अस्तु वा तस्मात्पदेन व्यवधानाद्यज्ञस्य क्रूरागिरित्येवमर्थाग्नी-

प्रणीतादि ॥ इदमधिकरणं सूत्रकारेण पूर्वाधिकरणे मन्त्रा-
गर्भिणीत्वेन कृतमपि व्याख्यासौकार्यार्थं पृथगभिधीयते । दर्शपूर्ण-
मासयो, यज्ञान्तमिष्यन्तावध्वर्युयजमानौ वाचं यच्छेत यदध्वर्युयज-
मानौ वाचं यच्छतस्तत्प्रजापतिभूयङ्गतौ यज्ञं तन्वाते तस्मात्प्रणीता
प्रणेष्यन् वाचं यच्छति तां स हविष्कृता विसृजतीति श्रुतम् ।

तत्राय वाग्यम प्रणीताप्रणयनाङ्गमेव विधिवाक्यस्थलट्प्रत्ययेन
तन्मात्रार्थत्वावगमात् । अतो हविष्कृदाह्वानकालावधिकवाग्यमस्य
तन्मात्रार्थत्वावगमान्न भागधर्मत्वं न वा तावत्पदार्थधर्मत्वम् । यदि
तु प्रणीता प्रणेष्यन्निति वाक्यस्य वाग्यमोत्पत्तिपरत्वे उत्पत्तिशिष्ट-
कर्त्रेकत्वानुरोधेन* तत्र यजमानप्राप्त्यभावात् पूर्ववाक्यस्यार्थवादत्वा-
नुपपत्तेर्यजमानमात्रविधानस्य च सुतरामनुपपत्तेरवश्यं यज्ञं तनि-
ष्यन्ताविति वाक्यस्यैव वाग्यमविधायकत्वमुच्येत, ततोऽस्तु तत्रत्यलट्-
श्रुत्या यज्ञविस्तारार्थत्वमेव । तदा हि उत्तरवाक्याभ्यां वाग्यमानु-
वादेन प्रणीताप्रणयनहविष्कृदाह्वानयोः पूर्वोत्तरावधित्वेन विधी† ।

अतएव तत्रत्यमेकवचनमपि अनुवाद्यगतत्वाद्ग्रहं संमार्ष्टीतिवद-
विवक्षितम् । अतश्च विधेयसामर्थ्यानुसारादुद्देश्यभूतो यज्ञविस्ता-
रापरनामधेयो यज्ञभागोऽपि तदवधिक एव । यत्तु मूले पूर्व-
पक्षे यज्ञशब्दस्य विस्तारविशेषणत्वमनङ्गीकृत्य भागधर्मत्वमुक्तम् । तत्
यज्ञशब्दस्य विस्तारं विनाऽन्यत्रान्वयस्य दुरुपपादत्वाद्भागवाचक-
पदाश्रवणाच्चोपेक्षितम् । अतोऽध्वर्युयजमानकर्तृकवाग्यम एव यज्ञ-

---

* कर्त्रेकत्वावरोधेन इति सो० पुस्तके पाठ ।

† विधि,-इति आ० पुस्तके पाठ ।

न चोपांशुत्वातिदेशस्य प्रधानसम्बन्धितया प्राबल्यम् । आधानसामादाविव प्रधानसम्बन्धित्वस्याङ्गेषु दौर्बल्यप्रयोजकत्वात् । इतरथा सामाग्निहोत्रेऽपि तदापत्त्या भाष्यकारमतदूषणानुपपत्तेः । न चैवं प्रकृतावेव दीक्षणीयाद्यङ्गेषु तदनापत्तिः । औपदेशिकत्वेन तत्रोपांशुत्वस्य प्राबल्यात् । इतरथा प्रकृतावेव सामातिदेशविषये तादृशि उपांशुत्वप्राप्त्यनापत्तेः । अतः पूर्वोक्तविषय एवोपांशुत्वप्राप्तिः प्रयोजनमितिप्राप्ते ।

यत्किञ्चिच्छब्दस्य सामान्यधर्मपुरस्कारेणोक्तेषु तत्तद्विशेषधर्मपुरस्कारेणानुक्तेषु बहुषु पदार्थेष्वेव प्रयोगान्नपुंसकनिर्देशाच्चाग्नीषोमीयावधिकत्वप्राग्भागवर्त्तिकर्मत्वेनैव तत्तत्पदार्थानामुद्देश्यता । अन्यथा भागस्य पुंलिङ्गत्वान्नपुंसकनिर्देशो यत्प्राचीनमित्येतावतैव सिद्धेर्यत्किञ्चिच्छब्दस्य वैयर्थ्यं स्यात् । एकवचनं च सामान्याभिप्रायेण सङ्कलनलक्षणार्थम् । अतश्च तत्तत्पदार्थानामेवोद्देश्यत्वात्तत्स्वरूपे आनर्थक्यप्रसक्तौ तत्तद्वान्तरापूर्वसाधनत्वमेव लाघवात्कल्प्यते । इतरथा पदार्थसमुदायस्य भागस्य* साक्षाद्यज्ञापूर्वसाधनत्वे प्रमाणाभावात् पदार्थद्वारा तदाश्रयणे लक्षणावच्छेदके गौरवम् । पुनश्चोपांशुत्वस्य साक्षाद्भागे असम्भवात्पदार्थसम्बन्धेन द्वारत्वकल्पनमित्यत्यन्तगौरवम् । अतस्तावत्पदार्थधर्म एवोपांशुत्वम् । अतश्च विकृतौ तद्भागारम्भके अपूर्वे न सम्बन्धः । इदं चोपांशुत्वं विशेषविहितनिरवकाशस्वरास्वरादिक्रमायणीयादिपदार्थातिरिक्तपदार्थविषयमिति आरम्भणीयां कौस्तुभे स्पष्टम् ॥८॥१॥५॥

* यदादेशनुदायस्यम्,-इति सो० पुस्तके पाठः ।

रावयवाकर्षण यत्र वा न सन्निदर्शनं तत्रैव शरीरघटादाववयव्यन्तराभ्युपगमः। न चैकैकेष्टकाकर्षणेनेतरेष्टकाकर्षणम् सन्निश्च पुरीषच्छन्नानामपीष्टकानामनुमानेन दृश्यत एव। अतो व्यापकाभावात्पक्षासंयोगो न द्रव्यान्तरमिति। काश्यपवनाचावयव्यन्तरे प्रमाणाभावादिष्टकासंस्कारार्थमेव प्रोक्षणम्। अतश्च इष्टकालसमानाधिकरणमेवापूर्वसाधनत्वमग्निपदेन लक्ष्यत इति तस्य प्रत्येकवृत्तित्वात्प्रत्येष्टक प्रोक्षणमित्यपि सिद्धं भवति। न चैवं व्रीहिपात्रप्रोक्षणादावपि प्रत्येकं तद्रापत्तिः। न्यायतस्तथापत्तावपि अग्नये वो जुष्टं प्रोक्षामि शुन्धध्वमितिमन्त्रे बहुवचनोपादानबलेन तन्त्रत्वप्रतीतेः। प्रकृते तु तादृशगमकाभावात्प्रत्येकमेवेति प्राप्ते।

एकावयवाकर्षणेनेतरावयवाकर्षणस्य नावयविव्यापकत्वं, नापि सन्ध्यदर्शनस्य। वस्त्रपटादौ व्यभिचारात्। अतो यत्रैकाकारप्रतीतिरबाधिता तत्रैवावयविस्वीकारः। इतरथा इष्टकाया अपि स्वीकारे प्रमाणाभावः। काश्यपीयन्तु वचनं मूलाभावादनादरणीयम्। वनमित्यादौ तु बाधिता एकाकारप्रतीतिः। अतश्चाग्निपदेनावयविन एवोक्तत्वात्तदर्थमेव प्रोक्षणं, तच्च चैकत्वात्सकृदेव प्रोक्षणम्।

न चैवमग्निस्वरूपे* आनर्थक्येऽपूर्वसाधनीभूताग्न्याधारत्वलक्षणायां यथेष्टिकोत्तरेष्वामपि हिरण्मयकलशप्रोक्षणधर्मापत्तिः। इष्टकादिसम्पादितलौकिकस्वत्वविशेषे अग्न्यादिपदप्रयोगाभावेनादृष्टविशेषावच्छिन्नस्वत्वविशेषस्यैवाग्न्युत्तरवेद्यादिशब्दाभिधेयत्वात्तत्र

* न चैवमवयविस्वरूपे,—इति सो॰ पुस्तके पाठ।

विस्तारपदवाच्यभागधर्मत्वेन विधीयते । न तु पदार्थधर्मत्वेन, तद्वाचकपदाभावात् । अतश्च पूर्वाधिकरणपूर्वपक्षवदेव यज्ञापूर्वप्रयुक्तोभागधर्मस्य वाग्यम इति प्राप्ते ।

यजमानाध्वर्युकर्तृकविशिष्टवाग्यमस्य यज्ञभागार्थत्वे षष्ठविधिप्रकारापत्तेः सन्निपत्योपकारकत्वलाभाय द्वितीयविधिप्रकारलिप्सया चाध्वर्युयजमानसंस्कारकत्वेनैव वाग्यमविधिः । यथाच नैव सत्युद्देश्यानेकता तथोक्तं ग्रहैकत्वाधिकरणे कौस्तुभे । तस्य च दृष्टार्थत्वान्मनःप्रणिधानमेव संस्कारः । संस्कृतयोश्च तयोरुपयोगापेक्षायां तत्तत्प्रमाणककरिष्यमाणकर्मार्थत्वमेव क्लृप्तं न तु भागार्थत्वम् ।

न च तयोर्भागोपयोगित्वस्यापि तद्द्वारा कथञ्चित्सत्त्वाद्यज्ञ तनिष्पन्नाविति विशेषणसामर्थ्याद्यज्ञविस्तारोपयोग्यध्वर्युयजमानसंस्कारकत्वमेव वाग्यमस्य कल्प्यतामिति वाच्यम् । यज्ञ तनिष्पन्नावित्यस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात् । अतश्च हविरुभयत्ववद्यज्ञ तनिष्पन्नावित्यनुवादो वाग्यमस्तुत्यर्थः । अतो दृष्टार्थत्वलाभाय पूर्वोत्तरावधिकतावत्पदार्थधर्मत्वमेव । न च स्फ्यश्रुत्या प्रणीताप्रणयनमात्रार्थत्वमेव कल्प्यतामिति वाच्यम । हविष्कृदाह्वानावधेरदृष्टार्थतापत्तिभयेन तस्यापि कालोपलक्षणत्वात् । अतः सिद्धं वाग्यमस्यापि तावत्पदार्थधर्मत्वम् ॥९॥१॥६॥

अग्निधर्मे ॥ अग्नौ श्रुते हिरण्यशकलसहस्रेणाग्निं प्रोक्षतीत्यादौ किं अग्निशब्देन संस्थानविशेषसाधनीभूता इष्टका एवोच्यते । तदर्थं च प्रोक्षणम् । उतेष्टकारब्धमवयव्यन्तरमेव अग्निशब्देनोच्यते, तदर्थं च प्रोक्षणमिति चिन्त्यते । तत्र, यद्यैकावयवाकर्षणेनेत-

तर्हि तेनैवाक्ताः शर्करा इतिवन्निर्णयः । तद्वदिह सन्दिग्धत्वाभावेन तस्यानिर्णायकत्वात् । प्रत्युतैवं गुणफलार्थत्वेन अविशेषप्रवृत्त-विधेरर्थवादेन सङ्कोचानुपपत्तेश्च । अतश्चार्थवादोऽपि षड्दिन-साध्यत्वाभिसंख्याभिप्रायेण गौण्या वृत्त्या व्याख्येयः ।

ननु विधेरेव स्वस्य नियमविधित्वलाघवानुरोधेनोक्तमभिन्नविषयत्वं प्रतीयते । तथा हि द्वादशानामप्यह्नाम् एकफलसाधनत्वात्प्रयोगैक्य-मवगम्यते । अत एवाग्नीषोमीयान्तपदार्थानां तन्त्रेण करणम् । अवभृथान्तानां च प्रायणीयादीनाम् । अहःशब्दवाच्यसुत्यानां तु द्वादशत्वसंख्यानुरोधादावृत्तिः । अहःशब्दो हि उपांशुग्रहाभ्या-सादारभ्य हारियोजनग्रहाभ्यासपर्यन्ते प्रयोगे लक्षणया याज्ञिकानां प्रसिद्धः । अतएव तन्मध्यवर्तीनि सन्निपत्योपकारकाणि आराद्रुप-कारकाणि चाङ्गानि प्रतिसुत्यमावर्त्यन्त इति वक्ष्यते । एवञ्च एकैकमहर्यस्मिन् कस्मिंश्चिदङ्गेऽनियमेन समाप्यापरेद्युरारम्भणीय-मिति प्राप्ते ।

पशोर्भेदासाम्नायविधिरेकादशसु नियमविधिः सम्पद्यते । अभिन्ने तु सर्वस्यैव समापनीयत्वात् पशोर्भेदासाम्नायविधिरपूर्व-विधिरापद्येत । अतश्च पक्षान्तरे अपूर्वविधिनियमविधित्वैकरूप्या-पत्तेर्नियमविधित्वलाघवानुरोधेनाभिन्नविषयत्वं विधेरिति चेत् ।

द्वादशत्वसंख्यानुरोधेनाहःशब्दवाच्यसुत्यानामभ्यासप्रयोगैक्यवाचा-नीयत्वेन सङ्ख्यायाः यस्मिन् कस्मिंश्चिदहन्यपकर्षे सर्वेषा-मपूर्वविधित्वात् । पशोर्भेदासाम्नायविधेः सार्थकत्वेन सर्वाङ्गानुष्ठानाभावेन पशोर्भेदासाम्नायस्यापि अपूर्वत्वाविशेषेणापूर्व-

सामर्थ्याभावेनापूर्वसाधनत्वलक्षणाया एवाभावात् । अतश्च नाग्न्युत्तरवेदिधर्माणां सांकर्यम् । न चैवं उत्तरवेदिधर्माणां अग्नौ प्रतिदेशकथन मङ्कर्षे विरुध्येतेति वाच्यम् । दैचवदग्नौ यज्ञतरवैशेषिकधर्मास्तानेपि अपेक्षितहविर्धानपूर्वदेशवर्त्तित्वादिकतिपयधर्माणां स्थानापत्त्यतिदेशेनोत्तरवेदितः प्राप्तेरविरोधात् । उत्तरवेद्यां तु यावदपेक्षितधर्ममाकम्याच वैपरीत्याशङ्का ।

अतश्च प्रकृतौ तत्प्रोक्षणादिधर्माणामग्न्युत्तरवेदिमात्रार्थत्वेऽपि यत्र विकृतौ तदुभयकार्यापन्न उत्तपरिमाण स्वतःसिद्धभूमिक तद्वहिः खातभूमिकं स्थण्डिलं अग्न्याधारत्वेन समाम्नातं, तत्र प्रोक्षणादीनामूहसिद्धिः । मस्थानविशेषोपधायकक्रियासाधनीभूततदवयवार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभावान्न प्रोक्षणादीति ऊहविचारोपयोगित्व चास्याधिकरणस्य । यदि चैवविधविकृतिर्न समाम्नायते, तदा क्त्वाचिन्तया उदाहरणान्तरे वा ऊहोपयोगोनुसन्धेय । प्रासङ्गिक चेदमधिकरणम् ॥८॥१॥७॥

पत्नीसयाजान्तत्वम् ॥ द्वादशाहे पत्नीसयाजान्तान्यहानि सन्तिष्ठन्त असंस्थितो हि तर्हि* यज्ञ इति श्रुतम् । तत्र किं पत्नीसयाजान्तत्वं द्वादशस्वप्यहःसु विधीयते, उत उत्तमवर्ज्जमिति चिन्तायां, अहस्त्वाविशेषात् सर्वेषु । न चासंस्थाया पत्नीसयाजान्तत्वे हेतुत्वावगमात्संस्थोत्तमवर्ज्जमेव सत्त्वेन तत्रैव पत्नीसयाजान्तत्वावगमि । एतस्य, तेन ह्यत्र क्रियत इतिवद्धेत्वर्थवादत्वेनाहेतुत्वात् । न च

* तर्हि,-इति नास्ति ख्या० पुस्तके ।

एवं च निमित्तोपादानबलाद्यथैव द्वादशाहे अग्निमेऽहनि न पत्नीसंयाजान्तत्वं, तथैव पञ्चदशरात्रादौ द्वादशेऽहनि न पत्नी-संयाजान्तत्वं, द्विरात्रादौ च द्वितीयादिस्वरूपएवाग्निमे न तदित्यूहोपयोगिता बाधोपयोगितापि। अत एव प्रकृतौ तद्वि-जातीयापूर्वसाधनत्वस्यैवाहःपदेन लक्षणायामपि विकृतौ निमित्ता-भावादेव न पत्नीसंयाजान्तत्वम्, निमित्तोपादानबलेन वा प्रकृताव-संस्थावत्त्वपूर्वसाधनत्वस्यैव लक्षणाच्च कोऽपि दोषः ॥८॥१॥८॥

अभ्यासः॥ दर्शपूर्णमासयोः सामिधेन्यवान्तरप्रकरणे त्रिः प्रथमामन्वाह त्रिरुत्तमामिति श्रुतम्। तत्रानुवचनं तावत्प्रकरण-प्राप्तमनूद्यते त्रिरभ्यासमात्रं तु विधीयते प्रथमामिति चोद्देश्य-समर्पकमित्यविवादमेव। तत्र प्रथमामिति विशेष्यनिष्ठं प्राथम्य-विशिष्टमभिधत्ते। शुक्लादिपदवत्। तच्च विशेष्य स्त्रीलिङ्गनिर्देशात् सामिधेनीप्रकरणाच्च ऋगेव। प्राथम्यरूपविशेषणयोगाच्च ऋग्वि-शेषप्रतीतिरार्थिकी। न तु प्रवीवाजादित्वप्रकारिकोपस्थितिः शाब्दी, तद्वाचकपदाभावात्। अत एव प्राथम्यमेवोद्देश्यतावच्छेदकं यष्टत्वादिवत्। न तु तदुपलक्षितप्रवीवाजादित्वम्, विना कारणं लक्षणायां प्रमाणाभावादित्यविवादमेव।

इदं तु विचार्यते। प्रथमाखरूपे आनर्थक्ये प्रसक्ते अपूर्व-साधनत्वलक्षणायां अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकऋक्त्वमात्र-लक्षणे अतिप्रसङ्गापत्तेस्तन्निराकरणार्थं किमुद्देश्यतावच्छेदककोटौ ऋक्त्वविशेषणतया प्रवीवाजादित्वस्य विवक्षणमुत प्राथम्यस्येति चिन्तायाम्।

न्तेषु पक्षेपि समापनस्याप्रसक्तेश्च । अतएव शास्त्रदीपिकायान्त-न्तरत्ने च पत्नीसंयाजोत्तरत्वकथनं छार्योजनस्य निर्मूलमेव । अतएवाचत्वाहःशब्दस्य छार्योजनान्तप्रयोगवाचकस्य पत्नीसयाजान्ते प्रयोगैकदेशे लक्षणेति केषाञ्चिदुक्तमपास्तम् । स्वयमेव पत्नी-सयाजानां छार्योजनोत्तरत्वस्योक्तत्वेनैकदेशलक्षणाया अनुक्ति-सहत्वात् । अतः सर्वाण्येवाहानि पत्नीसंयाजान्तानि कार्याणि । न तु अवभृथादीनि अन्ते तन्त्रेण कार्याणि । पत्नीसंयाजा-न्तत्वविधिना तेषां पर्युदासात् । पत्नीसयाजानाञ्च तन्त्रेण प्रसक्ता-नामावृत्तिरूपफलप्रतिपादनादिति प्राप्ते ।

अथस्थितो हि तर्हि यत्र इति तेन ह्यन्नं क्रियते इति वत्त हेत्वर्थवादः । तद्वदिह हेतुविधित्वे लक्षणाऽभावात् । तत्र तु होम-कालीनवर्त्तमानाम्नकरणत्वस्य बाधितत्वाल्लटो भूतार्थकत्वे विधौ लक्षणापत्तेरगत्या हेत्वर्थवादत्वाङ्गीकरणम् । अतो न ह्यचानूयाजान् यक्ष्यन् भवतीतिवदस्य हेतुपरत्वादसत्याहेतुकपत्नीसयाजान्तत्व-विशिष्टसमापनभावनाया एवाद्दरुद्देशेन विधानादिधेयसामर्थ्यानु-रोधेनोद्देश्यानामह्नां सङ्कोचोपपत्तेः, उत्तमे चापसरस्यारूपहेत्वभावात् पत्नीसयाजान्तत्वस्याप्यभावोपपत्तेरुत्तमवर्ज्जं पत्नीसयाजान्तता ।

न च हेत्वभावेऽपि व्यापकव्यभिचारस्यादोषत्वादुत्तमे पत्नी-सयाजान्तत्वेऽप्यदोष. । विशेषणाभावप्रयुक्तविशिष्टाभावात् साधक-प्रमाणाभावेनैव तत्र तस्यासिद्धेः । अस्तु वा हिशब्दोच अव्यया-नामनेकार्थत्वाचिनिमित्तत्वपरः । तथा चान्तिमे निमित्ताभावान्नैमि-त्तिकाभाव सुलभ एव ।

तत्रान्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासा-रम्भत्वप्रसिद्धेरन्यन्वाधानमेव तत्त्वेनारम्भपदार्थः। तदर्थी चान्वारम्भ-णीया तत्कार्यप्रयुक्ता। न तु प्रथमपदार्थत्वेन रूपेण प्रथमपदार्था-ङ्गम्। येन पूर्ववदन्वाधानरहितायां विकृतावारम्भाङ्गतयोक्तेत। न चान्वाधानस्याप्रवृत्तप्रवर्त्तनविषयत्वेनैवारम्भपदवाच्यता नान्वा-धानत्वेनेति कथं न पूर्वाधिकरणविषयत्वमिति वाच्यम्। अन्वाधाने दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्त्तनविषयत्वस्य बाधितत्वात्।

तथा हि दर्शपूर्णमासविषयकप्रवृत्तिसामान्याभाववतः पुरुषस्य या दर्शपूर्णमासविषयिणी प्रवृत्तिस्तद्विषयत्वं तत्। न तु निरुक्त-पुरुषस्य यत्किञ्चिद्विषयप्रवर्त्तनविषयत्वम्। तस्याधानभोजनादावपि सत्त्वेनातिप्रसक्तत्वात्। अतश्च निरुक्तपुरुषनिष्ठदर्शपूर्णमासविषयक-कृतिविषयत्वं दर्शपूर्णमासयोरेव नान्वाधाने। अङ्गप्रधानभेदेन तत्तद्विषयत्वयोर्भेदात्। स एव दर्शपूर्णमासकरणिका भावना श्रुता। सा उपांशु कर्त्तव्या इति वह्नितीयानिर्देशेन दर्शपूर्णमास-कर्मकत्वतेरेवारम्भपदार्थघटकत्वस्य तथा वाच्यत्वात्। अन्वाधाने तस्य याधाद्याज्ञिकप्रसिद्धा रूढिरेव तत्रारम्भपदस्य। द्वितीया च षष्ठ्यर्थे भक्तौ अनुवादः। ततश्च तदर्थान्वारम्भणीया न तद्रहितायां विकृतावृहितव्या। अतोऽन्वाधानस्य प्रतिदर्शपूर्णमासप्रयोगमावृत्ते-रावर्त्तनीया चेति प्राप्ते।

वृत्तिकारेण तावदेवं सिद्धान्तितम्। नान्वाधानमारम्भपदार्थः तदभावेऽपि देवतायैवं यज्ञमारभत इति ज्योतिष्टोमे आरम्भ-शब्दप्रयोगात्। किन्तु इदं मया कर्त्तव्यमिति यदनुष्ठानपरपर्यायो-

प्राथम्यरूपस्य अतस्योद्देश्यतावच्छेदकस्य व्रीहिलादिवदपूर्वसाधनत्वलक्षणोपयोगित्वात्क्योपस्थितावुपजीव्यत्वेन निरकाङ्क्षपूर्वसाधनत्वरूपोद्देश्यतावच्छेदककोटिप्रवेशे प्रमाणाभावात्प्रवीवाजत्वमेवर्त्तुविशेषणम् । अतश्च विकृतौ यत्रतत्रस्था प्रवीवाजैव चिरस्थचितव्या न प्रथमस्थानपतित प्रयाजान्तरमिति प्राप्ते ।

अतिप्रसङ्गपरिहारार्थमवश्यकल्प्ये केनचित्तत्त्वद्व्यापारकसाधनत्वातिरिक्तेन विशेषणे उपस्थितत्वादुपजीव्येनापि प्राथम्येनैव विशेषणम्, न त्वनुपस्थितेन प्रवीवाजत्वेन । अवघातादौ तु तण्डुलनिष्पत्तिव्यापारकसाधनतामात्रेणैवोद्देश्यत्वपर्यवसानादयवानाधमाकाङ्क्षावलेन यवसाधारणकल्पनेऽपि च वाक्यवैयर्थ्याभावान्नातिप्रसङ्गपरिहारार्थं व्रीहित्वप्रवेश । प्रकृते तु अतिप्रसङ्गाङ्गीकारे प्रथमोत्तमापदघटितवाक्यद्वयवैयर्थ्यापत्तेस्ता पञ्चदश सम्पद्यन्ते इत्यर्थवादानुपपत्तेश्च विशेषणविवक्षा आवश्यकी । अतश्च या काचित प्रथमोत्तमा चिरस्थचितव्येत्यूहोपयोगोऽपि ॥८॥१॥८॥

इष्ट्यावृत्तौ ॥ दर्शपूर्णमासयोर्दर्शपूर्णमासावारप्समानोऽन्वारम्भणीयामिष्टिं निर्वपेदिति श्रुतम् । तत्र न तावदियं प्रकरणान्मयाजादिवत्साक्षात् क्रत्वर्था । दर्शपूर्णमासावारप्समान इति पदद्वयवैयर्थ्यापत्तेः । नापि वक्ष्यमाणे आरम्भे निमित्ते भेदनहोमादिवन्नैमित्तिकी । क्रियार्थोया क्रियायामुपपदे विहितेन शतृप्रत्ययेनास्या आरम्भार्थत्वप्रतीतेरिति तावदविवादम् । आरम्भशब्दार्थश्चोद्देश्यकोटिप्रविष्ट क इति चिन्त्यते । प्रतिप्रयोगमनावृत्त्यनावृत्तौ तु सूत्रकाराशुक्ते अपि फलमिति नेहाधिकरणशरीरम् । एकादशोपयुक्तत्वेनोदानुपयुक्तत्वात् ।

तथाहि उक्तविधप्रवर्त्तनविषयत्वं दर्शपूर्णमासोद्देश्यकप्रवृत्तिध्वंससमानकालीनतदुद्देश्यकप्रवृत्तिविषयत्वम्। तच्च न दर्शपूर्णमासीयप्रथमप्रयोगाद्यपदार्थभिन्ने सम्भवति। तदितरस्य सर्व्वस्य तदुद्देश्यकस्य तादृशध्वंससमानकालीनत्वात्। अतश्च दर्शपूर्णमासपदे अपूर्वसाधनत्वलक्षणायां तत्पदार्थरहितायां तादृशप्रथमप्रयोगीयाद्यपदार्थान्तरवत्यां विकृताववृत्तित्यैवान्वारम्भणीया। स्मृत्या च तादृशप्रथमपदार्थप्रागभावविधानात्प्रयोगवद्विर्भावसिद्धिः। द्वितीयादिप्रयोगे चोक्तविधधर्मावच्छिन्नपदार्थाभावादकरणम्।

अत्र हि दर्शपूर्णमासयोर्न तत्तद्व्यक्तित्वेन प्रवृत्तिं प्रत्युद्देश्यता।, येन व्यक्तित्वावच्छिन्नोद्देश्यकप्रवृत्तिध्वंससमानकालीनतद्व्यक्तुद्देश्यकप्रवृत्तिविषयत्वाद्द्वितीयप्रयोगीयाद्यपदार्थाङ्गत्वेनापि सा स्यात्। दर्शपूर्णमासाविति श्रवणात्तु दर्शपूर्णमासत्वमेवोद्देश्यतावच्छेदकम्। आवश्यकी चोभयत्रापि प्रवृत्तिनिरूपितोद्देश्यतावच्छेदकविवक्षा। इतरथा सामान्यतो विहितक्रिया मे जायतामित्याकारकोद्देश्यतया गङ्गास्नानप्रवृत्तावपि दर्शपूर्णमासोद्देश्यकप्रवृत्तित्वात्तत्रापारम्भणीयापत्तेः।

अतोदर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंससमानकालीनतदवच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेनैव प्रथमपदार्थस्य उद्देश्यता। अत्र सामान्याकारकेच्छया गङ्गास्नानानुष्ठानोत्तरमाद्यदर्शपूर्णमासप्रयोगेऽप्यन्वारम्भणीया न स्यात्। अतः प्रथमावच्छेदकविवक्षा। दर्शपूर्णमासाकरणेऽप्युक्तविधेच्छया गङ्गास्नानकरणे तदापत्तेर्द्वितीयावच्छेदकविवक्षा। वस्तुतस्तु दर्शपूर्णमासौ मे जायेतामित्याकार-

ध्यवसायविशेषः। तदर्थान्वारम्भणीयान्वाधानरहितायामपि विकृतौ सत्वात्कर्तव्यैव । प्रकृतौ चान्वाधानोत्तरं सर्वयावज्जीविकप्रयोगाणां सकृदेव सङ्कल्पकरणात् सकृदेवान्वारम्भणीयेति ।

तत्र, तत्तत्कालावस्थिततत्तज्जीवनाख्यनिमित्तवशेन तत्तन्नैमित्तिकप्रयोगाणां तत्तत्काल एवोपस्थितत्वेनाध्यवसायापत्तौ सर्वसाधारणाध्यवसाये प्रमाणाभावात् । तत्र यथैवैकस्मिन् पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मनि पुनर्निर्वापे नाध्यवसायैक्यं, तद्दिहाप्यध्यवसायभेदात् सकृत्करणानापत्तिः ।

तस्मादेवं भाष्यकारादिभिः सिद्धान्तितम् । नाध्यवसायवाच्यारम्भशब्दः । तथाप्यप्रवृत्तप्रवर्तनविषयत्वेनैवारम्भशब्दप्रयोगात् । अतोऽप्रवृत्तप्रवर्तनमेवारम्भः तद्विषयत्वात् तु पदार्थेष्वारम्भशब्दप्रयोगः । अतस्तदर्थाऽन्वारम्भणीया । सापि न साक्षादपि तु ग्रानचा कर्तृरूपात्तत्वात् लभ्यमानवत् कर्तारमारम्भयोग्य करोतीति तद्द्वारा आरम्भार्था ।

यद्यपि च दर्शपूर्णमासाविति द्वितीयायाविषयत्वार्थकत्वाद्दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य च दर्शपूर्णमासाख्यप्रधानस्यैव सम्भवात् ततः पूर्वं प्रयोगमध्ये एवारम्भणीयानुष्ठेयेत्यर्थो दर्शपूर्णमासावारप्स्यमान इत्यस्य प्राप्नोति, तथापि उक्तार्थस्य पाठादेव प्राप्तेः पदद्वयवैयर्थ्यप्रसङ्गेन द्वितीयोद्देश्यत्वपरा* । तेनाङ्गविषयप्रवृत्तेरपि प्रधानोद्देशकत्वाविघाताद्दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वं तत्प्रथमप्रयोगीयाद्यपदार्थ एवेति तदङ्गमारम्भणीया ।

* द्वितीयोद्देश्यपरा,— इति सो॰ पुस्तके पाठ ।